University of Mysore

Oriental Research Institute Publications

SANSKRIT SERIES No

GENERAL EDITOR

SRI H. DEVEERAPP

Director in charge

Oriental Research Institute, My

श्रीनृसिंहाश्रमिविरचितः

# वेदान्ततत्त्वविवेकः

स्वोपज्ञेन तत्त्वविवेकदीपनेन श्री अग्निहोत्रय ... गीतया

पूरण्याख्यव्याख्यया च समलंकृतः

# VEDĀNTA TATTVA VIVEKA

of

SRI NRISIMHĀSRAMI

with the commentary

of

Tattva Viveka Deepana of the author

and

Purani Vyakhya of Agnihotrayaj

EDITED BY

VIDWAN S. NARAYANA SWAMY SASTRY

PRINTED BY THE SENIOR ASST

University of Mysore

Oriental Research Institute Publications
SANSKRIT SERIES No 96

GENERAL EDITOR
SRI H. DEVEERAPPA, M.A.
*Director in charge*
*Oriental Research Institute, Mysore*

श्रीनृसिंहाश्रमिविरचितः

# वेदान्ततत्त्वविवेकः

स्वोपज्ञेन तत्त्वविवेकदीपनेन श्री अग्निहोत्रयज्वप्रणीतया
पूरण्याख्यव्याख्यया च समलंकृतः

# VÉDĀNTA TATTVA VIVÉKA

of

SRI NRISIMHĀSRAMI

with the commentary

of

Tattva Viveka Deepana of the author

and

Pūrani Vyākhya of Agnihotrayajwā

EDITED BY
VIDWAN S NARAYANA SWAMY SASTRY
*Pandit, Oriental Research Institute, Mysore*



MYSORE
PRINTED BY THE SENIOR ASST DIRECTOR AT THE GOVT BRANCH PRESS
1955

श्रीः

# भूमिका

इह जगत्यनादौ संसारे निरन्तर परिभ्रमणेनात्यन्तं खिन्नानां नित्यनिरतिशयानन्दानुभवमभिलषमाणानां सर्वेषां तादृशानर्थनिवर्तक-ब्रह्मज्ञानाय वेदान्तवाक्यविचारात्मकं शास्त्रं पूर्वाचार्यैः सविस्तरं निरमायि। स्वाध्यायस्य—

एकविंशाध्वसंयुक्तमृग्वेदमृषयो विदुः।
सहस्राध्वा सामवेदो यजुरेकशताध्वकम्॥
नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्।

इत्युक्तप्रकारेणानेकशाखाभेदभिन्नत्वेन, शाखाभेदेनोपनिषदां भेदे सत्यपि मुख्यतात्पर्यतया तत्प्रतिपाद्यं ब्रह्मस्वरूपमेकमेव। एवं कर्मकाण्डादि-विचाररूपाणां मीमांसादिशास्त्राणामपि तत्रैव मुख्यं तात्पर्यम्। तदुक्तम्—

शास्त्रेषु प्रक्रियाभेदादविद्यैवोपपादिता।
समारम्भास्तु भावानामनादि ब्रह्म शाश्वतम्॥

इति वैयाकरणभूषणे।

एवं ब्रह्मणः स्वरूपलक्षणप्रमाणनिरूपणपूर्वकं तत्रैव सर्वेषां "योऽयं विज्ञानमयः प्राणेषु" इत्यादीनां जीवविषयाणां "यः सर्वज्ञः सर्ववित्" इत्यादीनां विशिष्टब्रह्मविषयाणां, "तत्त्वमसि, अहं ब्रह्मास्मि" इत्यादीनामद्वैतविषयाणां च वेदान्तवाक्यानां अवान्तर-तात्पर्येण तत्स्वरूपनिरूपणद्वारा साक्षाच्च समन्वयप्रतिपादकं चतु-



*

लक्षणात्मकं शास्त्रं प्रणिनाय भगवान् बादरायणाचार्यः "अथातो ब्रह्म-जिज्ञासा" इत्यादिना "अनावृत्तिः शब्दात्" इत्यन्तेन ।

तत्र प्रथमसूत्रेणाद्वैतं ब्रह्म प्रतिज्ञाय, द्वितीयसूत्रेण तस्य जगज्जन्मादिकारणत्वरूपं लक्षणं तृतीयसूत्रेण शास्त्रप्रमाणकत्वं चोक्त्वा चतुर्थसूत्रेण सर्वेषां वेदान्तानां समन्वयः प्रतिपादितः ।

अस्य च शास्त्रस्य विवरणरूपेषु भाष्यादिषु ग्रन्थेषु *श्रीमच्छंकरभगवत्पादप्रभृतिभिराचार्यैः कृतेष्वपि तेषामत्यन्तं दुरव-गाहत्वेन तत्प्रतिपाद्यविषयाणां सुखबोधाय वादिविप्रतिपत्तिनिरासाय च श्रीमन्तो नृसिंहाश्रमिणः स्वोपज्ञेन तत्त्वविवेकदीपनेन भूषितं तत्त्वविवेकनामकमिमं ग्रन्थमरीरचन् । तदुक्तम्—

पुपुषिरे व्यथिताः सकलागमाः सुरभिणा वचसा नृहरेर्गुरोः ।

इति विश्वदेशिकविजयकाव्ये श्लो. ६८ ॥

---

* अद्वैतवेदान्तशास्त्रप्रवर्तकाचार्येषु कल्यवंश्येन श्रीलक्ष्मीनृसिंहेन स्वकीये विश्वदेशिकविजयकाव्ये—

(श्लो. ६) पुत्रतया मित्रतया इत्यनेन श्रीमन्नारायणस्य, (श्लो. ७) अभिधामियेत्यनेन पद्मभुवः, (श्लो ८) निःसीमधीमहिमेत्यनेन वसिष्ठस्य, (श्लो. ९) ब्रह्मविद्यैकनिधय इत्यनेन शक्तेः, (श्लो. १०) अन्तर्ध्वान्तमित्यनेन पराशरस्य, (श्लो. ११) काश्यां पूर्वमित्यनेन व्यासस्य, (श्लो. १३) कलये शुकयोगीन्द्रमित्यनेन शुकस्य, (श्लो. १५) नमः स्वमनुमन्यतामित्यनेन गौडपादस्य, (श्लो. १६) गोविन्दयोगीन्द्र इत्यनेन गोविन्दभगवत्पादस्य, (श्लो. १९) प्रोढिर्येत्यनेन शंकराचार्यस्य, (श्लो. ५२) प्रणौमि तमित्यनेन पद्मपादस्य, (श्लो. ५३) स हस्तामलकाचार्यः इत्यनेन हस्तामलकस्य, (श्लो. ५४) तोटकं भगवच्छिष्य इत्यनेन तोटकस्य, (श्लो. ५७) पाषण्डा-चल इत्यनेन विद्यारण्यस्य, (श्लो. ६४) नीत्वा दुश्चरभाष्येत्यनेन एतद्ग्रन्थकर्तुः श्रीनृसिंहाश्रमिणः, (श्लो. ६९) परस्परमताग्रह इत्यनेन अप्पयदीक्षितेन्द्रस्य च नाम पौर्वापर्येण संगृहीतं दृश्यते ॥

अयं ग्रन्थः नव्यनैयायिकसरण्या विवरणाचार्यमतानुसारेण रचितः वेदान्तशास्त्रघटकानां तत्त्वानां सम्यग्विविच्य बोधनेन वाचकमहाशयानां महते उपकाराय कल्पत इत्यत्र न संशयलेशः ।

परिच्छेदद्वयात्मकेऽस्मिन्ग्रन्थे प्रथमपरिच्छेदे (१–५०८तमपुटपर्यन्तं) जिज्ञासाधिकरणप्रतिपाद्यार्थस्य विवेचनद्वारा "तत्त्वमसि" इति महावाक्ये उद्देश्यभूतं त्वपदार्थमधिकारिणं निरूप्य, द्वितीयपरिच्छेदे (५०९–५८१तमपुटपर्यन्तं) जन्माद्यधिकरणप्रतिपाद्यार्थस्य, (५८२–५९९तमपुटपर्यन्तं) शास्त्रयोनित्वाधिकरणप्रथमवर्णकप्रतिपाद्यार्थस्य, (५९९–६०१तमपुटपर्यन्तं) द्वितीयवर्णकप्रतिपाद्यार्थस्य, (६०२–६१३तमपुटपर्यन्तं) समन्वयाधिकरणप्रथमवर्णकप्रतिपाद्यार्थस्य, ६१४-७४४तमपुटपर्यन्तं) द्वितीयवर्णकप्रतिपाद्यार्थस्य च विवेचनद्वारा तत्पदार्थशोधनपूर्वकं तत्त्वंपदार्थयोरैक्यं निरूप्यते । अवान्तरविषयाः अनुपदमनुक्रमण्यां विस्तरशो निरूप्यन्ते ।

अद्वैतवेदान्तशास्त्रप्रतिपाद्यानां तत्त्वानां सम्यग्विवेचकत्वादस्य ग्रन्थस्य तत्त्वविवेक इति, एवं तत्त्वविवेचने अत्यन्तमुपकारजननेन तद्व्याख्यानस्य तत्त्वविवेकदीपनमिति च नाम । अस्यैव चाद्वैतरत्नकोश इति नामान्तरं च विद्यते ।

एतस्य तत्त्वविवेकग्रन्थस्य अग्निहोत्रयज्वकृता अद्वैतरत्नकोशपूरणीति, रामाध्वरिकृता अद्वैतरत्नकोशपालिनीति, कालहस्तीश्वरकृता भावप्रकाशिकेति, अखण्डानन्दयतिकृता दीपिकेति, अद्वैतरत्नप्रकाशिकेति च पञ्च व्याख्यानानि विद्यन्ते । एतेषां सर्वेषां मुद्रणे ग्रन्थबाहुल्यसंभावनया कालविलम्बमसहमानानां केषांचिन्महाशयानामाशयमङ्गीकृत्य तेष्वन्यतमया अद्वैतरत्नकोशपूरण्याख्यया तत्त्वविवेकदीपनटिप्पणापरनामधेयया व्याख्यया सनाथीकृत्यायं ग्रन्थः संमुद्र्य प्रकटीकृतः ।

अयं ग्रन्थः (मूलमात्रं) अन्यत्र मुद्रयित्वा प्रकाशितोऽपि इदानीं तस्य दुर्लभत्वात् तदुपज्ञेनैव तत्त्वदीपनेन अग्निहोत्रयज्वकृतया पूरण्याख्यव्याख्यया च समलङ्कृत्य बह्वीभिर्मातृकाभिस्सह यथामति संशोध्य पुनर्मुद्रणे यत्न आस्थितोऽभूत् ।

एभिर्ग्रन्थकर्तृभिः प्रणीताः ग्रन्थाः—संक्षेपशारीरकव्याख्या, भेदधिक्कारः, नृसिंहविज्ञपनम्, अद्वैतदीपिका, पञ्चपादिकाविवरण-भावप्रकाशिका इत्यादयो बहवो ग्रन्थाः केचिन्मुद्रिताः अमुद्रिताश्च केचिद्विद्यन्ते ।

एतेषां नृसिंहाश्रमिणां देशकालादिकं यद्यपि सम्यङ्नोप-लभ्यते, अथापि तद्विषये यथाज्ञातं किञ्चिन्निवेदयामि—श्रीमद्भि-रप्पयदीक्षितेन्द्रैर्वाराणस्यां कस्मिंश्चिद्धार्मिके विषये दत्तायां व्यवस्थायां स्वपित्रा रङ्गराजाध्वरीन्द्रेण साकं स्वेन श्रीनृसिंहाश्रमिणां सविधे शास्त्राध्ययनं कृतमित्युक्तमिति वाराणसीस्थसंस्कृतमहाकलाशाला-प्रधानोपाध्यायैः श्रीमद्भिः सूर्यनारायणशुक्लमहोदयैः नृसिंहविज्ञपना-ख्यग्रन्थस्य भूमिकायां लेखनेन द्राविडदेशीयप्रसिद्ध्या च श्रीनृसिंहाश्रमिणः श्रीमदप्पयदीक्षितेन्द्राणां गुरव इति निश्चीयते । तेषां च वि. श. १५५८-१६२६तमाब्दपर्यन्तं जीवनकाल इत्यन्यत्र निर्धारितं दृश्यते । तदनुसारेणैतेषामपि प्रायशः वि. श. १५७०तमाब्दपर्यन्तं जीवनकालः स्यात् । श्रीदीक्षितेन्द्रैस्तत्रतत्र स्वकृतग्रन्थेषु स्वपितुरेव गुरुत्वेन निर्देशस्य स्वपितुर्महामन्त्रोपदेष्टृत्वेन कतिपयशास्त्रोपदेष्टृत्वेन वा युक्तत्वात् । श्रीदीक्षितेन्द्रविरचितस्य प्राकृतमणिदीपाख्यग्रन्थस्योपसंहारे—

गुरुणो मज्झ विज्जाण सइ सम्माणिआत्थिणो ।<br>झाआमि पाअपोम्माइ सच्चिआणंदसत्तिणो ॥

छाया—

गुरोर्मम विद्यानां सदा संमानितार्थिनः ।
ध्यायामि पादपद्मे सच्चिदानन्दशालिनः ॥

इति स्वगुरोः (न्यायकौस्तुभप्रणेता) सच्चिदानन्दशास्त्रीति नामसंकीर्तनेनास्य स्वपितुरन्यस्मादपि विद्यासङ्ग्रहणदर्शनाच्च ।

एवमेतैः स्वकृतग्रन्थेषु सर्वत्र पुनः पुनः स्वोपास्यपरदेवतारूपस्य विशेषतो नीलाचले कृताविर्भावस्य भगवतः श्रीनृसिंहस्य नाम संकीर्त्यते । नीलाचलश्च काञ्चीनगराद्विंशतिक्रोशदूरे सिंहाचलः भाषायां "चोलसिंहपुरं चोलङ्गिवरं" इति च नाम्ना प्रसिद्धो विराजते । ततश्च श्रीनृसिंहाश्रमिणस्तत्परिसरवर्तिग्रामाभिजना इति सामान्यतो निर्णेतुं शक्यते । आश्रमस्वीकरणात्पूर्वमेतेषां नाम किमिति न निर्णेतुं शक्यते । अथ वा प्राकृतमणिदीपोदाहृतश्लोकानुसारेणैषां सच्चिदानन्दशास्त्रीति नाम स्यात् ।

एतद्ग्रन्थशोधनार्थमाहृता अस्मद्विमर्शनालयस्थास्तालपत्रात्मकाः कोशाः—

(१) २८८३तमसंख्याकः आन्ध्राक्षरमयः, (२) २९७० तमसंख्याको ग्रन्थाक्षरमयः, (३) २२३३तमसंख्याकः आन्ध्राक्षरमयः, (४) ३३०९तमसंख्याकः आन्ध्राक्षरमयः, (५) ४५६४तमसंख्याकः आन्ध्राक्षरमयः, (६) ३४०७तमसंख्याकः आन्ध्राक्षरमयः, (७) ३८८तमसंख्याकः आन्ध्राक्षरमयः, (८) ३७०८तमसंख्याको ग्रन्थाक्षरमयः, (९) ३४१०तमसंख्याकः आन्ध्राक्षरमयः, (१०) ५०८ तमसंख्याको नागराक्षरमयः, (११) २२४१तमसंख्याकः आन्ध्राक्षरमयः, (१२) २१०८तमसंख्याको ग्रन्थाक्षरमयः, (१३) ३४०७ तमसंख्याकः आन्ध्राक्षरमयः ।

इत्थं त्रयोदशभिर्मातृकाभिः संशोध्य प्रकटीकृतेऽस्मिन् ग्रन्थे मनुष्यमात्रसुलभेन प्रमादालस्यादिना संभावितान् दोषानविगणय्य गुणमात्रं गृहीत्वा तत्रभवद्भिर्विद्वन्महाशयैरादरणीयोऽयं ग्रन्थ इत्यभ्यर्थयमानः,

विद्वद्वशंवदः,

सु. नारायणस्वामिशास्त्री.

# विषयानुक्रमणिका

## द्वितीयः परिच्छेदः

# शुद्धाशुद्धपत्रिका

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 3 | 3 | कुय्स्थो | कूठस्थो |
| 7 | 15 | जनकत्वेऽति | जनकत्वेऽपि |
| 11 | 3 | कमर्कृत् | कर्मकृत् |
| 37 | 9 | तत्वेऽा | तत्वेऽपि |
| 61 | 8 | नापायात् | नपायात् |
| ” | 11 | प्युयपत्तेः | प्युपपत्तेः |
| ” | 20 | श्रवणदौ | श्रवणादौ |
| ” | 21 | स्वक्षेऽपि | स्वपक्षेऽपि |
| 65 | 20 | कवायो | कवयो |
| 72 | 3 | मार्था | मर्था |
| 83 | 12 | सावधा | सविधा |
| 91 | 15 | वपरात्य | वैपरीत्य |
| 103 | 19 | तद्धृशि | तद्वैशि |
| 106 | 4 | रजतत्वामति | रजतत्वमिति |
| 111 | 15 | भाव | भावा |
| 114 | 9 | प्रमात्् | प्रमातृ |
| 119 | 8 | तद्धका | तद्धला |
| ” | 15 | स्तभावो | स्तद्भावो |
| 124 | 2 | वोत्यन्न | वोत्पन्न |
| 129 | 2 | सर्पादर्भ्रा | सर्पादेर्भ्रा |
| 144 | 24 | योगास्य | योगस्य |
| 152 | 11 | घाटदौ | घटादौ |
| 158 | 19 | च्छिनि | च्छिन्नानि |
| 175 | 2 | यागोवस | योगादस |
| 176 | 13 | योगिनो | योगिनोः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 202 | 14 | भेदेव | भेदव |
| 202 | 14 | कर्तृ | कर्तु |
| 210 | 5 | कारन्त | कारान्त |
| 212 | 8 | आत्मानो | अत्मनो |
| 213 | 11 | शान | ज्ञानं |
| 224 | 6 | सुखन्र्थी | सुखार्थी |
| 227 | 20 | चक्षुष | चाक्षुष |
| 234 | 15 | दर्शनेन वि | दर्शनेन न वि |
| 257 | 2 | मुक्ते | मुक्तौ |
| 259 | 15 | धीनया | धीनतया |
| 262 | 24 | परोक्ष | परोक्ष्य |
| 264 | 20 | विषयिये | विषयिण्ये |
| 276 | 12 | सवस्य | सर्वस्य |
| 278 | 4 | तदरिक्तं | तदतिरिक्तं |
| 280 | 23 | भेदाऽप्र | भेदोऽप्र |
| 283 | 13 | पराविष | परविष |
| 285 | 8 | राजा | गजा |
| 287 | 11 | जाग्रस्वप्न | जाग्रत्स्वप्न |
| 326 | 16 | वतत्रापि | वत्तत्रापि |
| 342 | 4 | रिति | रिति । |
| ,, | 19 | दशनात् | दर्शनात् |
| 344 | 10 | वियत्वे | विषयत्वे |
| 357 | 16 | अन्तो | अन्ततो |
| 371 | 6 | निषध | निषेध |
| 384 | 14 | हेतु | हेतुः |
| 402 | 8 | सिाीवर्द्धव | सिद्धिर्विव |
| ,, | 17 | एतन | एतेन |
| 404 | 7 | शरीरं विना विनष्टु | शरीरं विनष्टु |
| ,, | 19 | परिणान्तर | परिणामान्तर |

॥ श्रीः ॥

श्रीनृसिंहाश्रमिणा विरचितो

# वेदान्ततत्त्वविवेकः

अग्निहोत्रयज्वकृतटिप्पणीभूषितया

स्वोपज्ञदीपनाख्यव्याख्यया समलङ्कृतः

॥ श्रीः ॥

विश्वस्य योनिं विश्वेशं विज्ञानानन्दविग्रहम् ।
नरकेसरिणं वन्दे प्रत्यञ्चं पुरुषोत्तमम् ॥ १ ॥

---

॥ श्रीः ॥

## तत्त्वविवेकदीपनम्

यदालिङ्ग्य प्रमाणानि बोधयन्त्यात्मनः स्फुटम् ।
प्रमेयं प्रचुरानन्दं तं वन्दे नृहरिं गुरुम् ॥

प्रेक्षाव[1]त्प्रवृत्त्यर्थमभिधेयादि दर्शयन्नेव निर्विघ्नपरिसमाप्तिकामनया कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—**विश्वस्येति** । प्रत्यञ्चं पुरुषोत्तमं वन्दे इत्यनेन जीवब्रह्माभेदस्तत्त्वमसीति[2] वाक्यार्थः प्रकरणप्रतिपाद्यो दर्शितः । प्रतीपं जडानृताहङ्कारादिभ्यः प्रातिकूल्येन सत्यज्ञानानन्दस्वरूपतया अञ्चति प्रकाशत इति निष्कृष्टाहङ्कारचैतन्यं

---

1 प्रवृत्त्यङ्ग—च. 2 तत्त्वमस्यादि—च.

## दीपनम्

प्रत्यक् । अनेन शोधितस्त्वंपदार्थ उक्तः । **पुरुषोत्तमम्** परमात्मानं नीलगिरीशं "उत्तमः पुरुषस्त्वन्यः परमात्मे" त्यादिस्मृतेः । अनेन शोधितस्तत्पदार्थ उक्तः । अनयोः सामानाधिकरण्याच्चाभेदः ।

॥ श्रीः ॥

## पूरणी

वन्देऽहं वन्दनीयानां वन्द्यां वाचामधीश्वरीम् ।
कामिताशेषकल्याणकलनाकल्पवल्लिकाम् ॥ १ ॥
यद्वीक्षा जगदुत्पत्तिस्थितिसंहारकारणम् ।
यदात्मकमिदं वन्दे श्रीरामं तं पतञ्जलिम् ॥ २ ॥
ज्ञानेन्द्रापरनामानं दक्षिणामूर्तिदैवतम् ।
वासुदेवादिसच्छिष्यं नमामि परमं गुरुम् ॥ ३ ॥
भक्तभीतिकरं रूपं त्यक्त्वा रूपान्तरं श्रितम् ।
वासुदेवाभिधं श्रीमत्पतञ्जलिमहं भजे ॥ ४ ॥
श्रीज्ञानेन्द्रकृपापात्रं कृत्स्नतन्त्रविवेचकम् ।
श्रीमद्गुण्डनृसिंहाख्यं सूरिं संकलये गुरुम् ॥ ५ ॥
नत्वा गुरून् नयस्मर्तॄन् द्वादशाहेज्वसूनुना ।
विविच्यतेऽग्निहोत्रेण टीका तत्त्वविवेचनी ॥ ६ ॥

नृहरिमिति विग्रहविशेषोपहितस्वेष्टदेवतावाचकपदेन जगत्कारणं ब्रह्म लक्षयति । गुरुं नृहरित्वेनोपा[1]स्त इत्यर्थः । गुरौ देवतात्वभावनायाः फलवत्त्वेन श्रवणात् । यद्वा नृशब्देन पुरुषवाचिना सर्वभूतान्युच्यन्ते । तानि हरतीति नृहरिशब्देन ब्रह्माभिधीयते ।

[1] स्यमित्यर्थः–झ.

## पूरणी

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते " ॥

इति स्मृतेः । गुरुशब्देनापि शास्त्रयोनितया तदेवाभिधीयते । वस्तुतस्तु नृहरिशब्देन लक्षणया बिम्बत्वाश्रयस्वरूपचैतन्यं निर्दिशति । गुरुमित्यपि स्वगुरुवाचकेन लक्षणया प्रत्यगात्मस्वरूपम् । तेन चाद्वितीयं ब्रह्म लक्ष्यते । नच तस्य वन्दनान्वयानुपपत्तिः, बिम्बब्रह्मण एव नमस्कार्यत्वात्, अत एव 'बिम्बत्वाक्रान्तं ब्रह्म नमस्कार्य'-मित्याचार्यैरुक्तमिति वाच्यम्; अत्र वन्दतेरनुसन्धानार्थत्वात् । तेन परमतत्त्वानुस्मरणात्मकं मङ्गलमत्र निबद्धम् । तस्य स्वरूपलक्षणमाह —प्रचुरानन्दमिति । अखण्डानन्दमित्यर्थः । 'प्राचुर्यस्य किंचिद्दुःखसंभेदरूपस्य ब्रह्मण्यसंभवा' दित्यानन्दमयाधिकरणे दार्शितत्वात् । तटस्थलक्षणमाह—**प्रमाणानीति** । चक्षुरादिप्रमाणानि यद्ब्रह्म आलिङ्ग्य संबद्ध्य यदुपादानतयेति यावत्, स्वप्रमेयं घटादिकं स्फुटं प्रकाशयन्ति । शास्त्रयोनित्वाधिकरणन्यायेनोपादेयचक्षुरादिप्रमाणगतार्थप्रकाशनशक्तेरुपादानब्रह्मगतत्वात्तेन कृत्स्नप्रमेयप्रकाशनशक्तिमत्त्व लक्षणमुक्तम् । यद्यपीदं " जन्माद्यस्य यत " इति न सूत्रितं तथापि तस्य संभाविततटस्थलक्षणमात्रोपलक्षणतयेदं लक्षणमुपन्यस्तम् । केचित्तु प्रमाणोपादानत्वादिमुखेन जगदुपादानत्वं सौत्रलक्षणमेवाननोपन्यस्तमित्याहुः । यद्वा प्रमाणानि चक्षुरादिजन्यप्रमावृत्तयः यदालिङ्ग्य यत्सबन्धितयार्थं प्रकाशयन्ति, वृत्तिद्धो बोधो बोधेद्धा वा वृत्तिः प्रमेत्यभ्युपगमात् । ततश्च कृत्स्नप्रमापदाभिधेयत्वं लक्षणम् । प्रत्येकवृत्तिप्रमायाः कृत्स्नतत्पदानभिधेयत्वान्नातिप्रसङ्गः । प्रमापदलक्ष्यत्वं वा लक्षणम्; सत्यादिपदवत्प्रमापदेऽपि

## पूरणी

तल्लक्षणात् । यद्वा प्रमावृत्तयो यद्विषयीकृत्य स्वप्रमेयं घटादिकं तदवच्छेदकतया प्रकाशयन्तीति सकल[1]प्रमाणवेद्यत्वं लक्षणम् । न च नीरूपब्रह्मणश्चाक्षुषवृत्तिविषयत्वासंभवः ; रूपवद्विषयावच्छिन्नतया तदुपपत्तेः । अन्यथा घटादिवृत्तेः समानविषयत्वाभावेन तदज्ञाननिवर्तकत्वानुपपत्तेः । नीरूपस्यापि चैतन्यस्य चाक्षुषत्वं [2]वक्ष्यति । वस्तुतस्तु आत्मनः प्रमाणानि वेदान्तवाक्यानि यत्र ब्रह्मणि तात्पर्यं [3]निधाय स्पष्टं दृश्यं प्रमेयं सृष्टयादिरूपमभिदधति कृत्स्नवेदान्ततात्पर्यविषयत्वं लक्षणम् । यदिति वस्तुसामान्यापेक्षया क्लीबनिर्देशः । तत्पदे तु नृहरिपदविशेषसामानाधिकरण्यात्पुंलिङ्गनिर्देशः । विधेयप्राधान्या[4]त्पुंलिङ्गनिर्देश इति केचित् । **प्रकरणप्रतिपाद्य इति ।** अत्रापि शुद्धचैतन्यस्यानमस्कार्यत्वाद्वन्दतेरनुसन्धानार्थत्वं मन्तव्यम् । न च शुद्धस्य जगदभिन्ननिमित्तोपादानत्वाभावात्तटस्थलक्षणान्वयानुपपत्तिः ; पुरुषोत्तमशब्दवाच्यबिम्बत्वोपहितब्रह्मण्येव तदन्वयात् । नचैवं पुरुषोत्तमपदे वृत्तिद्वयापत्तिः ; सत्यादि[5]पदवदिष्टत्वात् । यद्वा परिणममानाविद्याधिष्ठानतया शुद्धचैतन्यमेव जगदुपादानं जगत्ता[6]दात्म्यात्तत्सर्वज्ञं जगत्कर्तृ च । न च जीवेश्वरानुस्यूतचैतन्यस्यैव जगदुपादनत्वे मयि सुखादिरितिवत् मयि घटादिरित्यनुभवप्रसङ्गः, [7]विभिन्नदेशत्वानुभवानुपपत्तिश्चेति वाच्यम् ; सर्वतः प्रसृतचैतन्यस्यैकदेशेऽध्यस्तान्तःकरणोपहितसाक्षिणस्तद्बहिःप्रदेशाध्यस्तघटादिना संबन्धाभावेन तथानुभवविरहोपपत्तेः । अत एव विभिन्नदेशत्वानुभवोऽपीति । [8]तेनाद्वितीयब्रह्मण

---

1 प्रमावेद्य–**ञ्ञ**. 2 वक्ष्यते–**ट**. 3 विधाय–**ञ्ञ**. 4 न्यात्तन्निर्देश–**ञ्ञ**. 5 शब्द–**ञ्ञ**. 6 दात्म्यात्सर्वज्ञ–**य**. 7 विच्छिन्न–**ञ्ञ**. 8 मनेऽद्वि–**ञ्ञ**.

**साक्षात्कृतब्रह्मभासा [1]प्रहसन्मुखपङ्कजम् ।**
**महीयांसमहं वन्दे गरीयांसं जगत्पतिम् ॥ २ ॥**

---

## दीपनम्

नरकेसरिणमिति स्वेष्टदेवतावाचकपदेन लक्षणया तन्निर्दिशति । अथ वा जीवपरयोरभेदे प्रमाणसिद्धे विरोधबुद्ध्या नासंभावनादिशङ्का[2] कार्या नरसिंहयोरिवेत्याह—**नरकेसरिणमिति** । तस्य तटस्थ-लक्षणमाहाऽऽद्यविशेषणद्वयेन । **योनिमुपादानम् । विश्वेशं** विश्वकर्तारम् । विज्ञानेत्यादिना स्वरूपलक्षणम्[3] । अनेनानन्दावाप्तिरूपं प्रयोजनमुक्तम् । अर्थाच्चानर्थनिवृत्तिः । तत्कामोऽधिकारी । संबन्धश्च प्रतिपाद्यप्रतिपादकभावः । **ब्रह्मभासा** आनन्दात्मकब्रह्म-प्रकाशेन । **महीयांसं** महान्तम् । **गरीयांसं** गुरुम् । **जगत्पतिं**

---

## पूरणी

एवेदं लक्षणम् । वस्तुतस्तु बिम्बत्वोपहितरूपेण जगदभिन्ननिमित्तोपादानत्वं तदर्थः । तच्चाद्वितीयब्रह्मान्वय्येवेति तत्त्वम् ॥

**स्वेष्टदेवतेति ।** स्वेष्टदेवतास्मरणात्मकमपि मङ्गलं सूचयितुमिति भावः । **नरसिंहयोरिवेति ।** तथा च नरसिंहवद्विरुद्धधर्माक्रान्तमिति तदर्थः । यदि च तत्र मुखाद्यवच्छेदकभेदेन काल्पनिकतद्धर्मिभेदेन वा तदुभयसत्त्वाविरोधः तत्प्रकृतेऽपि समानमिति भावः । **साक्षात्कृतेति मूलम् ।** नन्वत्राप्रतिबद्धापरोक्षज्ञानवत्त्वं विवक्षितं प्रतिबद्धापरोक्षज्ञानवत्त्वं वा । नाद्यः; असंभवात्! अन्यथा इदानीं

---

1 विलसन्मुख- क. 2 संभवशङ्का—च. 3 णमुक्तम्—ख.

गुरुणा करुणा[1]पूर्वमुपादिष्टाद्वयात्मनः ।
कुर्वे तत्त्वविवेकं तं वीक्षतां नरकेसरी ॥ ३ ॥

इह खलु कश्चित्कुतश्चिद्भाग्योदयान्निर्व्यलीकं नित्यादिभिराराधिताराध्यपादभगवदनुग्रहवशादातिविमलमानसः स्वयमेवेत्थं जगत्तत्त्वमालोचयति। ननु कर्मणां स्वतन्त्रफलसाधनानां कथं मनोवैमल्यहेतुत्वम्, तथा च संस्कारकर्मतापत्तिरिति चेत्, न

---

दीपनम्

जगन्नाथाश्रमम् । "अथातो ब्रह्मजिज्ञासे"ति सूत्रस्थाथशब्दोपात्तसाधनचतुष्टयसम्पन्नाधिकारिणो गुरूपदिष्टवाक्यार्थे मननात्मकमिदं प्रकरण कर्तुं विशिष्टाधिकारिसिध्यर्थं सोपायां चित्तशुद्धिमाह--**इहेति**। कुतश्चिदित्यादिना निष्कामनया कर्मानुष्ठानमपि पृथग्जनदुष्प्रा[2]पेश्वरप्रसादायत्तमिति कैमुतिकन्यायेन तदतिदुर्लभत्वं दर्शयति ॥

इत्थं वक्ष्यमाणरीत्या नित्यादिभिरीश्वरप्रसादद्वारा चित्तशुद्धिर्भवतीत्युक्तमाक्षिपति--**नन्विति**। अन्यहेतोरन्यत्राहेतुत्वादिति भावः। दोषान्तरमाह--**तथा चेति**। गुणकर्मतापत्तिश्चेत्यर्थः। कर्मणां शुद्धिहेतुत्वे किमर्थविरोधः प्रमाणाभावो वा। आद्य आह--**नेति**। अर्थः

---

पूरणी

सर्वमुक्तिप्रसङ्गात्, न द्वितीयः; तस्य सर्वसाधारणत्वात्, तादृशानुभवस्य मुखविकासहेतुत्वायोगाच्चेति चेन्न; प्रतिबद्धापरोक्षज्ञानविषयीभूतानन्दात्मकब्रह्मध्यानहेतुकमुखविकासस्य विवक्षितत्वात्। **उपदिष्टेति** मूलम्। श्रुतात्मनि मननात्मकमिदं प्रकरणं क्रियत इत्यर्थः। जैमिन्यभिमतकर्मप्राधान्यनिरासार्थमाह मूले--**भगवदनुग्रहवशादिति**।

---

1 पूर्ण–छ. 2 पपरमेश्वर–क.

**तावदर्थविरोधः; नित्यादीनां पापनिवर्तकस्वभावत्वात्, ब्रह्मज्ञानोपकारकत्वेऽपि गुणकर्मतानङ्गीकारेण "कर्मणा पितृलोक" इति श्रुत्यवगतस्वतन्त्रफलसाधनत्वाविरोधाच्च। नापि प्रमाणाभावः; "धर्मेण पापमपनुदति"।**

**"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये"**

---

## दीपनम्

फलम्। किं शुद्धिहेतुत्वे स्वातन्त्र्येण [1]फलसाधनत्वमनुपपन्नम्; अन्यहेतोरन्यत्र फलहेतुत्वायोगात्, उत गुणकर्मतापत्तेः संस्कारकर्मणः फलान्तराभावाद्वा। आद्य आह—**नित्यादीनामिति**। वक्ष्यमाणप्रमाणेन पापनिवृत्तिस्वभावोऽवगम्यते। तन्निवृत्तिश्च स्वर्गाद्यनुकूलेति न फलविरोध इति भावः। कर्मणां ब्रह्मज्ञान[2]कारकमनोनिष्ठवैमल्यहेतुत्वे कारकसमवेतातिशयजनकतया प्रोक्षणादिवद्गुणकर्मतापत्तिरिति द्वितीयं दूषयति—**ब्रह्मेति**। शुद्धिद्वारेति शेषः। **गुणेति**। यज्ञादीनामन्तःकरणे श्रुत्यादिविनियोजकप्रमाणाभावेन कर्मणां ब्रह्मज्ञानानुकूलसंस्कारजनकत्वेऽपि न गुणकर्मत्वम्, येन पृथक्फलं न स्यात्, यथा आधानस्याग्निद्वारा दर्शाद्युपकारकत्वेऽपि नाङ्गत्वम्, एवमिहापीति भावः। द्वितीय आह—**नापीति**।

---

## पूरणी

**स्वर्गादीत्या**दिपदेन पितृलोकसङ्ग्रहः। तेनातद्गुणसंविज्ञानबहुव्रीहिणा पितृलोकानुकूलत्वमेवोक्तमिति नित्यकर्मणां स्वर्गजनकत्वाभावेऽपि न विरोधः। यद्वा स्वर्गः पितृलोकः। आदिपदेन ब्रह्मज्ञानं गृह्यते। **यथा आधानस्येति**। न च तद्वत्स्वतन्त्रफलसाधनत्वमपि न स्यादिति

---

1 फलहेतुत्वम–ख. 2 नोपकारक–ख.

**इत्यादिश्रुतिस्मृत्योः सत्वात् । अथवा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" ति वाक्येन "खादिरं वीर्यकामस्ये" ति नित्यमिव खादिरत्वं**

## दीपनम्

एवं तावद्यावज्जीवादिविधिप्रयुक्तयानुष्ठिताग्निहोत्रादेः पापनिवृत्तिश्चित्तसंस्कारो जायते, स च देवदेहभोग्ये पितृलोकादौ श्रवणादौ सति ज्ञाने चोपकरोतीति संस्कारकर्मत्वमुक्तं यज्ञादीनाम् । इदानीं 'तमेत'मिति [1]वाक्यसामर्थ्यात् ब्रह्मज्ञानोद्देशेन तदिच्छोद्देशेन वा यज्ञादिकमनुष्ठेयम्, स्वर्गकामादिवाक्यादिव स्वर्गोद्देशेन । [2]तत्र स्वर्ग इवोद्देश्यतया ज्ञानादिकमपि ब्रह्मार्पणबुद्ध्यानुष्ठितकर्मणोऽवश्यंभावीति पक्षभेदमभिप्रेत्याह —**अथवेति** । वेदानुवचनं ब्रह्मचर्याङ्गकाध्ययनम् । कृच्छ्रचान्द्रायणादिव्यावृत्त्यर्थमनाशकेनेति तपोविशेषणम् । हितमितमेध्याशनरूपेणेत्यर्थः । नन्वधिकारान्तरसंबद्धाग्निहोत्रादेः कथं ज्ञानाधिकारसंबन्धः, विनियुक्तविनियोगविरोधादित्यत आह— **खादिरमिति** । "अग्निहोत्रं जुहोती" त्याद्युत्पत्तिमात्रसिद्धाग्निहोत्रादेः स्वर्गाद्यर्थत्ववत् ज्ञानाद्यर्थत्वेऽप्यविरोधः । यथा हि पशुप्रकरणे पठितात् "खादिरो यूपो भवती"ति वाक्यात् क्रत्वर्थमपि खादिरत्वं "खादिरं वीर्यकामस्ये"ति वचनेन वीर्यशेषत्वेन विनियुज्यते, एवमग्निहोत्रादेर्वचनबलादुभयार्थत्वमविरुद्धमि[3]त्यर्थः । नित्यमावश्यकम् । दृष्टान्तवैषम्य-

## पूरणी

वाच्यम्; तत्र स्वतन्त्रफलाश्रुतेः । अत्र तु "कर्मणा पितृलोक" इति फलश्रुतेरिति भावः । नन्वेवं नित्यकर्मणामपि स्वतन्त्रफलसाधनत्वे काम्यत्वापत्तौ नित्यकाम्यविवेकोच्छेदः स्यादिति चेन्न, फलकामनानि-

[1] विविदिषावाक्य-ख. [2] तत्र च-ख. [3] ति भावः-क.

**वीर्यायाग्निहोत्रादयो ज्ञानाय विधीयन्ते । न च व्यवहिताग्निहोत्रादयः प्रकरणान्तरन्यायेन यज्ञश्रुत्या परामृष्टुं न शक्यन्त इति वाच्यम्; आख्यातासामानाधिकरणस्य स्वातन्त्र्येण सुबन्तस्य व्यहितपरामर्शित्वसंभवात् । अन्यथा "एष वा व**

---

दीपनम्

माशङ्क्याह—**न चेति । प्रकरणान्तरेति ।** तत्र हि वाक्यद्वयमेकस्मिन्प्रकरणे श्रूयते नैवमत्र । तथा च "प्रकरणान्तरे प्रयोजनान्यत्व"-मित्यत्र यथा कुण्डपायिनामयने "मासमग्निहोत्र जुहोती" त्यनेन प्रसिद्धाग्निहोत्रमुद्दिश्य न मासगुणो विधीयते, व्यवहितत्वेन तत्प्रत्यभिज्ञानासंभवात्, किं तु मासगुणविशिष्टं तत्सदृशं कर्मान्तरमिति [1]व्यवस्थापितम्, तद्वदत्रापीत्यर्थः । **यज्ञेति ।** यज्ञादिश्रुत्या । तत्र हि न तावज्जुहोतिना तस्य परामर्शः, साध्यावस्थकर्मबोधकतया व्यक्तिवचनत्वेन सन्निहितार्थत्वेन च तस्य सिद्धव्यवहितपरामर्शित्वायोगात् । अनुपादेयगुणसमभिव्याहारादाहवनीये जुहोतीतिवत्कथंचिद्व्यवहितपरामर्शित्वकल्पनायोगाच्च । नाप्यग्निहोत्रनाम्ना, तस्य धातुसमानाधिकरणस्य तदर्थावच्छेदकत्वेन पार्थग्थ्यायोगात्, होममुद्दिश्यैकस्मिन्वाक्ये उपसदानन्तर्याद्यनेकगुणविधानासंभवात्, पूर्वकर्मासन्निधानाच्च कर्मान्तरमिति स्थितम् । न चेदं बाधकमत्रास्तीत्याह—**आख्यातेति ।** सिद्धसाध्या[2]र्थतयैकार्थ्याभावादनयो[3]रसामानाधिकरण्यमित्यर्थः । अत एव प्रवृत्तिनिमित्ताभावाच्च यज्ञादिशब्दस्य विविदिषानामत्वासंभवात्स्वातन्त्र्यमुक्तम् । **सुबन्तस्य** सिद्धावस्थार्थबोधकसुबन्तस्य । **एषः**

---

पूरणी

मित्तकानुष्ठानविषयत्वाविषयत्वाभ्यां तद्विवेकोपपत्तेरिति द्रष्टव्यम् । सुबन्तस्य व्यवहितपरामर्शित्वे हेतुं सूचयति—**सिद्धावस्थेति ।**

---

1 स्थापितम्-ख. 2 र्थकतयै-ख. 3 योर्न सामा-च.

## पूरणी

आख्यातपदस्य जुहोत्यादेः साध्यावस्थबोधकतया व्यवहितपरामर्शित्वाभावेऽपि सुबन्तस्य सिद्धावस्थबोधकतया तत्स्यादित्यर्थः । यद्वा ननु "पञ्चदशान्याज्यानी" त्यादौ सुबन्तेनाज्यपदेन न व्यवहित[1]घृतादिपरामर्शः, किं त्वव्यवहितस्तोत्रस्येति न सुबन्तत्वं तत्परामर्शित्वे हेतुरित्याशङ्कयाह — **सिद्धावस्थेति** ! आज्यपदस्य लक्षणया साध्यावस्थबोधकत्वान्नोक्तदोष इति भावः । ननु मा भूत्प्रकरणान्तरन्यायात्कर्मभेदः, "आग्नेयमष्टाकपालं निर्वपेद्रुक्काम" इतिवत् "फलं चाकर्मसन्निधा"विति न्यायेन कर्मभेदः स्यात्, तथा च "यज्ञो यज्ञाना"मिति व्यवहितपरामर्शो युक्तः, प्रकृतपरत्वेऽनन्वयात्, प्रकृते तु न तथानन्वय [2] इति चेत्, तत्र द्रव्यदेवतारव्यरूपलाभात्तुल्यवत्कर्मावगमेन विहितकर्मप्रत्यभिज्ञानात्कर्मान्तराविधिर्युक्तः । न च प्रकृते द्रव्यदेवताश्रुतिः, येन कर्मान्तरता स्यात् । रूपाभावेन कर्मान्तरत्वानिर्वाहाच्च । न चाव्यक्तत्वेन सौमिकधर्मलाभात्तन्निर्वाहः, गुणान्तराश्रुतेः सोमयागभेदानिर्वाहात् । यज्ञश्रुतेः क्रतुमात्रपरतया प्रकृतक्रतुप्रत्यभिज्ञानाच्चेति दिक् ।

ननु झटिति प्रकरणावगतस्वर्गाद्यधिकारान्तरान्वये तदवरोधान्न ज्ञानकामाधिकारान्तरनिवेशः स्यादिति चेन्न ; गुणस्य गुणान्तरावरोधकत्वं युक्तम्, पक्षप्राप्तस्य नियमनात्, अधिकारान्तरसंबन्धस्य त्वत्यन्ताप्राप्तत्वात् नाधिकारान्तरावरोधकत्वम् । अन्यथा कामपदसंबन्धेन झटित्यवगतस्वर्गाधिकारान्वये तदवरोधेन जीवनाद्यधिकारान्वयोऽपि [3] न स्यादिति न काप्यनुपपत्तिरिति स्मर्तव्यम् ।

---

[1] घृतादेः प–ट. [2] इति तत्र–झ. [3] यो न–ट.

**प्रथमो यज्ञो यज्ञाना" [1] मित्यत्रापि तन्न स्यात् । अत्र च—**

**एकवाक्यगतत्वेन वेदानुवचनादिकम् ।**
**समुच्चितं तथापीह फलैक्यान्नैक[2]कर्मकृत् ॥**

---

## दीपनम्

प्रकृतोऽग्निष्टोमः **यज्ञानां** अग्निष्टोमातिरिक्तयज्ञानाम् । नच "फलं चाकर्मसन्निधावि"ति न्यायेन कर्मान्तरत्वम्, प्रकृतिविकृतित्वासंभवेनोपदेशादिना रूपालाभात्, उत्पत्त्यादेश्च कल्पनीयतया गौरवात् । आहवनीयादिवदगत्या व्यवहितपरामर्शाऽ[3]श्रयणमिति भावः । ननु वेदानुवचनादीनां ज्ञानादौ समुच्चयो विकल्पो वा । नाद्यः; अग्नेयादिवदैककर्म्यप्रसङ्गात् । नान्त्यः; नित्यवच्छ्रवणविरोधेनाष्टदोषदुष्टविकल्पानुपपत्ते[4]रित्यत्राह—**एकेति** । श्लोके अपेक्षितार्थपूरणार्थं **अत्र चेति** । आरुण्यादिवद्वेदानुवचनादिकं समुच्चितम्, न चैककर्मतापत्तिः, न चैकफलस्वरूपं तदिष्टमिति वाच्यम्, तथा सत्याग्नेयादिवदेकप्रयोगतारूपस्यापि तस्य [5] प्रसङ्गादिति वाच्यमित्याह—**तथापीति** । "पौर्णमास्यां

---

## पूरणी

**अष्टदोषेति** । ज्ञानार्थं वेदानुवचनप्रयोगे यज्ञादेः श्रुतानुष्ठानत्यागः, अश्रुताननुष्ठानस्वीकारः, यज्ञप्रयोगे त्यक्तानुष्ठानस्वीकारः, स्वीकृताननुष्ठानत्याग इत्येकत्र चत्वारो दोषाः । एवमपरत्र वेदानुवचनपक्षेऽपीत्यष्टदोषदुष्टता विकल्पस्येत्यर्थः । **फलैक्यादिति** मूले । एकफले समुच्चितसाधन[6]त्वाद्धेतोरेकप्रयोगत्वलक्षणैककर्मतापत्तिर्नास्ति ।

---

1 मित्यादावपि—**क. छ.** 2 कां तत्—**क. छ.** 3 श्रयणात् साध्यावस्थार्थविरोध्यर्थोपस्थापककरणविभक्त्यविरुद्धत्वाच्च । तत्र चातथावादिति भावः—**ख.** 4 रिति तत्रा—**ख.** 5 प्रसङ्गः स्यात्—**च.** 6 त्वादेकप्र—**झ.**

दर्शादिवत्फलैक्येऽपि प्रयोगस्य भिदाश्रुतेः ।
भिन्नकालप्रयोगस्थमेवात्राप्युपतिष्ठते ॥

अपरे तु विविदिषा कर्मसाध्येत्याहुः । तदुक्तम्—

"यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मबृन्दं गृहीत्वा
स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये [1]व्यनक्ति ॥"

इति ।

तस्या अप्याख्यातान्तपदाभिधेयतया साध्यत्वावगमात् [2] ।

## दीपनम्

पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेते"ति प्रयोगभेद[3]श्रुतिस्तत्र, न चात्र भेदश्रुतिः[4], तत्राह—**भिन्नेति** ॥

आवश्यकत्वाद्विधिप्रत्यासन्नत्वाच्च विविदिषैव कर्मसाध्येति मतान्तरमाह--**अपरे त्विति** । विविदिषायामेव विधिपर्यवसानार्थं तस्याः स्वर्गकामादेर्विशेषमाह—**तस्या इति** । अथ वा इच्छासाध्यतया प्रधानेनैव ज्ञानेन अप्रधानानां यज्ञादीनां संबन्धो वक्तव्यः, नोपसर्जनेच्छयेत्यत आह--**तस्या इति** । यद्यप्यौपगवादिवत्सनर्थस्यान्यत्र न प्राधान्यं तथापीह तदभ्युपेयम्, विविदिषा हि वेत्तुमिच्छेति शब्देन प्राधान्येन प्रतीयत इति सा विविदिषन्तीति [5]प्रत्ययाभिधेयभावनया समभिव्याहृतयज्ञादिनिवृत्तकरणाकाङ्क्षया साध्यविशेषमाकाङ्क्षमाणया

## पूरणी

दर्शादौ तत्सत्त्वेऽप्यविच्छिन्नप्रयोगाभावेन व्यभिचारादित्यर्थः **भिन्नकालेति** मूलम् । "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत," ।

---

[1] युनक्ति—**क. छ.** [2] दिति—**क. छ.** [3] श्रुतिवदत्रापि प्रयोगभेदश्रुतिरस्तु—**च** [4] श्रुतिरिति—च. [5] न्तीत्यत्र—**ख.**

## पूरणी

" जातपुत्रः कृष्णकेशोऽग्नीनादधीते " त्यादिश्रुत्यवगतभिन्नकालप्रयोगावच्छिन्नं वेदानुवचनादिकं ज्ञानाय विधीयत इत्यर्थः।

ननु कथमेकवाक्यत्वम्, इष्यमाणज्ञानोद्देशेन वेदानुवचनादीनां विधौ विधेयभेदेन वाक्यभेदात्, न चैकविधिपदसंबंधित्वेनैकवाक्यत्वम्; विधेयान्वयभेदे वाक्यभेदस्य दुष्परि[1]हारत्वात्, अन्यथा " वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्कानि " त्यादावप्येकवाक्यतापत्तेः, यत्तु भावनाविधिपक्षे आख्यातेन तन्त्रेण भावनाचतुष्काभिधानात्तस्य च विधेयत्वान्न वाक्यभेदः, विधेयभावनास्वरूपभेदेऽपि " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ", " राजा राजसूयेन यजेत " त्यादौ तन्त्रेण यज्याख्यातो[2]पात्तानेकयागभावनानामेकवाक्यगततया विधानदर्शनेन वाक्यभेदालाभात्, ताश्च भावना वेदानुवचनादिगोचराः प्रकरणान्तरन्यायेनापूर्वाः प्रकृतपरामर्शेन पूर्वसिद्धा वा ज्ञानफलसंबन्धाय विधीयन्ते, उभयथापि न वाक्यभेद इति, तच्चिन्त्यम्; भावनाया विध्यनर्हत्वात्। किंच " षडहमुपयन्ती " त्यादौ यज्यश्रुत्या शब्दबलमतेन श्रुतभावनायाः कथंचिद्विधेयत्वाभ्युपगमेऽपि नात्र श्रुतविध्यर्हवेदानुवचनादिपरित्यागेन भावनाविधिर्युक्तः। अन्यथा सर्वत्र तथात्वे कर्मविधिव्याकोपात्। अस्तु वात्र भावनाविधिः, तथापि वाक्यभेदो दुरुद्धरः। तथा हि न भावनामात्रं वाक्यार्थः, किं तु यज्ञदानादिविषयावच्छिन्ना भावना। यज्ञादीनां च न मिलितरूपेण भावनावच्छेदकत्वम्, निरपेक्षतृतीयान्तपदैः परस्परनैरपेक्ष्येणैव [3] भावनान्वयित्वात्सापेक्षत्वे मानाभावात्। दर्शपूर्णमासाभ्यामित्यत्र तु इतरेतरयोगद्वन्द्वमहिम्ना नामद्वयावाच्छिन्नषड्यागानां परस्परसापेक्षतयैवावच्छेदकत्वेन भावना-

---

[1] हारात्-झ. [2] तोक्तानेक-ट. [3] भावनान्वयात्सा-झ.

## पूरणी

न्वयः । "राजा राजसूयेन यजेत" त्यत्रापि तन्त्रेण यज्यर्पितानेकेष्टि-पशुसोमयागसमुदायस्यैकराजसूयनामपदसंबन्धान्मिलितरूपेण भावनान्वय इति न विधेयान्वयभेदः । तद्वदिह सापेक्षत्वोपस्थापकाभावाद्वेदानुवचनेन ज्ञानं भावयेद्यज्ञेन ज्ञानं भावयेदित्येवं विधेयान्वयभेदे वाक्यभेदं को वारयेत् । नचात्रापि लक्षणया सापेक्षतोपस्थितिः ; मुख्यार्थानुपपत्तेरभावात्, नानापदलक्षणाया जघन्यत्वाच्च । न चैकवाक्यतासंरक्षणाय तल्लक्षणा, वृत्तेः प्रयोजनानुरोधित्वाभावात् । अन्यथा "वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्का" नित्यादावप्येकविधिपदसंबन्धेन प्रतीतैकवाक्यतासंरक्षणाय कपिञ्जलकलविङ्कद्रव्यकयागसमुच्चयलक्षणापत्तेः । तत्र विधिपदे तन्त्रावृत्तिकल्पनाया वाक्यभेदसिद्ध्युत्तरभावित्वात् । किं चैवं नानागुणविधौ वाक्यभेदः क्वापि न स्यात्, तन्त्रणाख्यातोपात्तनानागुणभावनानां विधेयत्वा[1]दितीयं दिक् । प्रकरणान्तरन्यायेनापूर्वभावनान्तरविधिरित्यपि न सम्यक्' सिद्धावस्थबोधकसुबन्तयज्ञादिपदेन प्रकृतप्रत्यभिज्ञानात् । यज्ञादेः प्रकृतत्वेऽपि भावनाया अपूर्वत्वमिति तु साहसम् । अवच्छेदक[2]विषयावैलक्षण्ये भावनावैलक्षण्यानुपपत्तेरित्यलं पल्लवितेन । तस्मात्कथमत्रैकवाक्यतेति ॥

अत्र प्रतिभाति—नात्र विधेयान्वयैक्यादेकवाक्यत्वम् । किं त्वेकाख्यातेन तन्त्रेणावृत्त्या वा उपस्थितेष्टसाधनत्वस्य प्रत्येकं वेदानुवचनादिनान्वयादेकविधिपदबोध्यान्वयित्वरूपं तदिहाभिमतम् । यद्यप्येवंविधैकवाक्यत्वं न समुच्चयापादकम् ; "जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वे" त्यादावेकविधिपदबोध्यान्वयपरत्वे सत्यपि समुच्चयाभावात्' तथापि वेदानुवचनादेर्ज्ञाने समुच्चयो विकल्पो वेति विचारे उक्तैक-

[1] त्वादिति दिक्-झ. [2] विधेयावै—झ.

## पूरणी

वाक्यत्वमसति विकल्पापादके बलवति प्रमाणे समुच्चयानुग्राहकं भवति। विकल्पे फलीभूतज्ञानव्यक्तिभेदापत्त्या तन्निरूपितेष्टसाधनत्वभेदेनैकविधिपदस्यानेकार्थाभिधानकल्पनाप्रसङ्गात्। समुच्चये तदभावात्। जर्तिलयवाग्वादौ निरपेक्षतयावगतैकद्रव्येण दृष्टहोमनिर्वृत्तिरूपकार्यसम्भवरूपं [1] विकल्पोपपादकं मानमस्ति। प्रकृते तु नैवम्। यज्ञादेरदृष्टद्वारा ज्ञानार्थत्वात्। अदृष्टद्वारकफलसिद्धौ च साधनेयत्तानिश्चयासंभवात्। प्रत्युतादृष्टार्थदैक्षप्राकृतवैकृतमन्त्रवत्प्रयाजानूयाजादिवच्च समुच्चयस्यैव युक्तत्वात्। किं च सम्भावितानेकप्रतिबन्धकक्षयाय दुरितनिवृत्तिद्वारकयज्ञादेः समुच्चयो युक्तः। अपि च "ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदि"ति क्रमसन्न्यासविधानादपि वेदानुवचनादेः समुच्चयो गम्यते। स्वाश्रमाचारनिरतानां वैराग्यादिमतां तद्विधानात्॥

"अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्"॥

इति स्मृतेश्च। न चैवं "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजे"दिति व्युत्क्रमसन्न्यासविधानविरोधः, तत्र यज्ञादिसमुच्चयासंभवादिति वाच्यम्; उक्तन्यायेन समुच्चये सिद्धे तत्र जन्मान्तरीययज्ञादिना समुच्चयोपपत्तेः। न च व्युत्क्रमसन्न्यासविधानबलेन विकल्प एवाद्रियतामिति वाच्यम्; तथा सति क्रमसन्न्यासविधायकवचनस्य [2] सर्वथाऽनन्वयप्रसङ्गात्। व्युत्क्रमसन्न्यासवचनस्य तूक्तरीत्योपपत्तेः। उपनीतमात्रस्य भाग्योदयेन विरक्तस्य "यदहरेव विरजेत्तदहरेव प्रव्रजे"दिति

---

[1] विकल्पापादक–झ.　[2] सर्वांशा–ट.

## पूरणी

वचनबलेन वेदानुवचनमन्तरापि सन्न्यासे जन्मान्तरीयतदनुसरण[1]स्यावश्यवाच्यत्वाच्चेति संक्षेपः।

वस्तुतस्तु तृतीयाश्रुत्या यज्ञादेर्निरपेक्षसाधनत्वावगमात् व्रीह्यादेरिव विकल्पो न समुच्चयः, अवगतनैरपेक्ष्यबाधापत्तेः। तथा च परस्परनैरपेक्ष्येण साधनतयान्वयो विकल्पबीजम्, न त्वेकैकसाधनात्कार्यसंभवरूपम्, "दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य"मिति श्रुतचित्रायागहविषामपि नैरपेक्ष्येण कार्यजननसमर्थानां विकल्पापत्तेः। प्रबलभगवदुपासनादितपसा निखिलदुरितक्षयद्वारा ज्ञानोत्पादसंभवाच्च। अत एव विवरणाचार्यैः वाचस्पत्यन्यायसङ्ग्रहे "विहितत्वाच्चाश्रमकर्मापी"त्यत्र वेदानुवचनादेर्विकल्प उक्तः। वेदान्तकल्पतरावपि "अन्तरा चापि तु तद्दृष्टे"रित्युत्तराधिकरणे विधुराधिकारसिद्धये विकल्पो दर्शितः। तदेवं न्यायतः सिद्धे विकल्पे यथाधिकारं यथासंभवं च क्वचित्समुच्चयः क्वचिद्विकल्प इति व्यवस्था आश्रीयते, उभयत्र प्रमाणसद्भावात्। तथाहि क्रमसन्न्यासवचनमविरक्ताधिकारिविषये समुच्चयमवगमयति व्युत्क्रमसन्न्यासवचनं च तद्विकल्पम्। न चात्रापि जन्मान्तरीयसमुच्चयकल्पनम्; मानाभावात्। उक्तरीत्या विविदिषावाक्यस्य [2]समुच्चयाबोधकत्वात्। अतो यथाधिकारं व्यवस्था। एवं यथासंभवमपि। अनन्तवेदोक्तेष्टिपशुसोमादिकर्मराशेरनुष्ठातुमशक्यत्वात् यज्ञत्वादिसामान्यरूपेण यज्ञादीनां ज्ञानफलसंबन्धविधानात् सामस्त्यस्य विध्यननुप्रवेशात् "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजत" इत्यश्वमेधादेः कृत्स्नदुरितनिवृत्तिसामर्थ्यावगमात् भगवदुपासनारूपतपोमात्रेणापि तत्संभवात् "तद्यथेषीकातूल-

---

[1] स्यावश्यकत्वा–ट. [2] समुच्चयबोधकत्वासम्भवात्–झ.

## पूरणी

मग्नौ प्रोतं प्रदूयेतैवमेवास्य सर्वे पाप्मानः प्रदूयन्ते सर्वे पाप्मानोऽतो निवर्तन्त" इति भगवदुपासकस्य कृत्स्नदुरितनिवृत्तिश्रुतेरिति सर्वं सुस्थम् ।

**सनर्थस्येति** । **अन्यत्र** लोके । अश्वेन जिगमिषतीत्यादाविष्यमाणगमने अश्वस्य करणत्वान्नेच्छायाः [1]कार्यान्वयत्वलक्षणं प्राधान्यमित्यर्थः । **तथापीति** । **इह** वेदे । लोकवाक्यानां विवक्षापरतन्त्रतया तत्र तथात्वेऽपि वेदेऽपौरुषेये यथाशब्दार्थप्रतीति कार्यान्वयो **युक्त** इत्यर्थः । तदुपपादयति—**विविदिषेति** । तथा च विविदिषाकामनयानुष्ठितकर्मभिर्विविदिषोत्पत्तावनन्तरमिष्यमाणज्ञानसम्पत्तये श्रवणादौ प्रवृत्तेस्तल्लाभ इति भावः । न चेच्छाया इच्छाविषयत्वासंभवः; यागादिकृतेर्व्रीह्यादिकृत्यन्तरसाध्यत्ववदिच्छान्तरविषयत्वोपपत्तेः । यद्वा दृढविविदिषायाः काम्यतादार्ढ्यं च फलजननौन्मुख्यम्, अतो ज्ञानोत्पादनगोचरा कामना पर्यवस्यतीति न काचिदनुपपत्तिः ।

वस्तुतस्तु **अन्यत्र** अर्थविषये । **इह** शब्दविषये । अर्थतः प्राधान्याभावेऽपि शब्दतो विशेष्यतया प्रतीतेः शाब्दं प्राधान्यमस्तीत्यर्थः । तथा च शब्दत इच्छायाः कर्मसाध्यतयान्वयोऽपीष्यमाणज्ञान एव पर्यवस्यति गुरुनये शब्दबलमते फलापूर्वभावनाकरणत्वमिव फलापूर्वयोः । नच पूर्वाभेदः; शाब्दान्वयप्रकारभेदमादाय तदुपपत्तेरिति ध्येयम् । ननु वेदानुवचनादर्ज्ञानोद्देशेन विधिपक्षे श्रवणेन साकं विकल्पः स्यात्, निरपेक्षतया व्रीहियववत्साधनत्वावगतेरिति चेन्न; व्रीहियववन्निरपेक्ष[2]कार्यकत्वाभावात् । ज्ञानं प्रमाणाधीनं, अतः प्रमाणकोटिनिक्षिप्तश्रवणेन विना न कर्मणां ज्ञानफलसाधनत्वं न वा कर्मभिश्चित्तशुद्धिं विना श्रवणं हेतुरिति न विकल्प इति सर्वमवदातम् ॥

---

[1] कारकान्वयत्वरूपं-ख. [2] कार्यत्वा-ट.

**ननु मुक्तिसाधनस्य कथं विविदिषासंबन्धः, न कथंचित्। कथं तर्हि कर्माणि विविदिषाहेतव इति, शृणु—कर्मणां ब्रह्मात्मैक्येऽविद्यानिवृत्तौ वाऽसमर्थत्वेन चित्तशुद्धिद्वारा विविदिषायामिष्यमाणज्ञाने वा श्रुत्यादिभिर्हेतुत्वावगमात्। प्रमाणाभावादपि न कर्मणां मुक्तिहेतुत्वम्, विविदिषावाक्यस्योक्तविधया तत्राप्रमाणत्वात्। "विद्यां चाविद्यां च" इतिवाक्यस्यापि शुद्धिमात्रहेतुत्वपरत्वात्। "नान्यः पन्था" इत्यादिना प्रतिषेधाच्च।**

---

दीपनम्

(इच्छैव) सन्निधानादेः स्वर्गादिवद्ग्राह्यतया संबध्यत इति प्रधानम्। तथा च न राजवदर्थतः प्रधानेन ज्ञानेन यज्ञादीनामन्वयः, किं तु पुरुषेणवानयनस्येच्छयेत्यर्थः।

एकदेशिमतं शङ्कते—**नन्विति**। **नेति**। ज्ञानस्य विविदिषाहेतुत्वाभावादिति भावः। अभिप्रायमजानानश्चोदयति—**कथमिति**। **ब्रह्मेति**। जीवब्रह्मभावस्य स्वाभाविकतयाऽनादित्वादविद्यायाश्च शुक्तिकादिज्ञानैकनिरस्यत्वावगमात्तत्र तदसमर्थमित्यर्थः। यथा अश्वेन जिगमिषतीत्यत्राश्वस्य ग्रामप्राप्त्युपायत्वम्, तथा विविदिषन्तीत्यत्र ज्ञानद्वारा मुक्त्युपायत्वं कर्मणां प्रतीयत इत्याशङ्क्याह—**विविदिषेति**। लोकेऽपि ह्यश्वस्य गमनं प्रत्येवोपायत्वं शब्दार्थः। ग्रामप्राप्तिस्तु गमनस्यान्वयव्यतिरेकसिद्धं फलं न शब्दार्थः। अन्यथातिप्रसङ्गात्। एवमुक्तविधया ज्ञानादिकमेव यज्ञादिफलमित्यर्थः। अविद्यापदवेदनीयकर्मणां "अविद्यया मृत्युं तीर्त्वा" इति वाक्यशेषेण चित्तशोधकत्वमेवावगम्यत इत्याह—**शुद्धीति**।

ननु जगत्तत्त्वमालोचयतीत्युक्तम्। किं तत्, उच्यते—आ मनुष्यादा ब्रह्मलोकं पुण्यकार्यं, "कर्मणा पितृलोको विद्यया देवलोक" इति श्रुतेः। विद्या चात्रोपासना। सा च विहिततया कर्तृपरतन्त्रा क्रियैव। कर्तृकार्यं च सर्वमनित्यमेव, घटादिवत्। "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इति श्रुतेश्च।

आत्मा च नित्यो मोक्षवादिभिः सर्वैरभ्युपेयः। स च परमप्रेमास्पदत्वात् "एषोऽस्य परम आनन्द" इति श्रुतेश्चानन्दः।

---

दीपनम्

वैराग्यार्थं हि विवेकोऽपेक्ष्यते, तच्च पापफलात्पुरुषस्य स्वतः सिद्धमिति पुण्यफलात्तत्सिद्ध्यर्थमाह—**आ मनुष्यादिति**। कर्मणेत्येतत् "उभाभ्यामेव मनुष्यलोक" इत्यस्याप्युपलक्षणम्। ननु मुक्तिसाधनं विद्या कथं देवलोकसाधनम्, तथात्वे वा कथं तस्य कर्मफलत्वम्, तत्राह—**विद्या चेति**। उपास्तौ बहुलं वेदेति पदश्रवणात्सापि विद्येत्युच्यत इत्यर्थः। विषयवैराग्यसिद्ध्यर्थमात्मनो नित्यपुरुषार्थतामाह—**आत्मेति**। नित्यपुरुषार्थमनाश्रित्य विषयत्यागानुपपत्तेरित्यर्थः। **मोक्षेति**। आत्मनो नित्यत्वाभावे कस्य मोक्षः स्यात्। विज्ञानवादिभिरपि सन्ताननित्यताया अभ्युपगमादात्मा नित्य इत्यर्थः।

---

पूरणी

ननु वेत्तेर्ज्ञानार्थत्वात्कथं विद्यापदेनोपासनार्थलाभ इत्यत्राह—**उपास्ताविति**। उपासनावाक्येषूपासनार्थविषये "य एवं वेद" इति

नन्वेवं स्वयमेव [1]कश्चिन्न्यायं श्रुत्यर्थं वा नानुसन्धत्ते, अन्यथा एवमितरोऽपि न्यायः श्रुत्यर्थश्च किमिति नानुसन्धीयेत। किं च "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति चातुर्मास्यफलविशेषस्याक्षय्यत्वश्रवणाच्च नैकान्ततः कर्मफलस्यानित्यत्वमिति, मैवम्; पापशताकुलमानसस्य तव नैतत्प्रतिसन्धानमिति किं नीलगिरिशिखरशिरसि विद्योतमानतेजःपुञ्जस्य श्रीभगवतः श्रीनृसिंहस्य निस्सीमकरुणाकटाक्षे[2]क्षितस्य पुरुषधौरेयस्यापि तन्न संभवेत्। न वा येनैकं ज्ञायते तेनेतरदपि ज्ञातव्यमिति नियमः। एवं सति धूमाग्निनियमविदा सर्वोऽपि नियमोऽवगत एवेति न तदर्थं वैशेषिकादिराराभ्येत[3]। कर्मफले चाक्षय्यत्वश्रुतिर्विध्यनपेक्षितत्वात्पू-

दीपनम्

इतरः ब्रह्माद्वैतविषयः। नैकान्तत इति। "तद्यथेह" इत्यादिश्रुतिः सामान्यविषया, तदितरविषयेत्यर्थः। कर्मफले अक्षय्यत्ववचनं न विशेषश्रुतिः; अर्थवादतया अतत्परत्वात्, नच सा स्वर्गार्थवादवद्विध्यपेक्षितार्थतया तत्परेति वाच्यम्; अक्षय्यत्वाभावे [4]विध्यन्यथानुपपत्तेरभावादित्याह—कर्मफले चेति।

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"

पूरणी

बहुशो दर्शनात् अनन्यथासिद्धप्रचुरप्रयोगस्य शक्तिकल्पकत्वादस्योपासनार्थत्वमपीति भावः। तद्धानादिति। तयोः मानान्तरविरोधाव-

[1] कश्चिदपिन्या क. च. [2] क्षवीक्षितस्य क. च. [3] धारभ्येत क. ख. छ.
[4] विध्यनुपपत्ते ख.

र्णाहुत्या सर्वका[1]मावाप्तिवचनवद्गुणार्थवाद एवेति न सा विशेष श्रुतिः । "एवमेवामुत्र पुण्य" इत्यादि तु श्रवणविध्यपेक्षितार्थतया स्वर्गार्थवादवद्भूतार्थवाद एवेति ततस्तत्सिद्ध्यति । यत्कृतकं तदनित्यमिति [2]न्यायानुग्रहादपीयं श्रुतिर्बलवती । ततः कर्मफलेभ्यो विरज्यते ॥

ननु प्रथममेव वैराग्यसिद्धौ किं रंहतिपादारम्भेण । तस्य हि वैराग्यं फलं "तस्माज्जुगुप्सेत"इति तत्संबान्धिश्रुतेरिति चेन्न हि तत्रानित्य[3]त्वकृतविवेककृतं वैराग्यं जुगुप्सावाक्यार्थः, किं तु [4]कर्मफलगत्यागतिविवेकफलम् । तच्चैतद्दाढर्यायेति न पुनरुक्ति-

---

दीपनम्

इत्यभियुक्तवचनादर्थवादस्त्रिप्रकारः । यथा "आदित्यो यूपः, यजमानः प्रस्तरः, अग्निर्हिमस्य भेषजम्," यथा वा स्वर्गार्थवादः "यन्न दुःखेन संभिन्नम्" । एवं च "पूर्णाहुत्या सर्वान्कामानवाप्नोति" इति वचनवदक्ष[5]य्यमितिवचनमपि न विवक्षितार्थम् । परं तु तदन्यानर्थक्यात्, इदं तु बलवद्वचनविरोधात् । अत्रापि बह्वायाससाध्यज्ञानाद्यानर्थक्यसाम्यादित्यर्थः । श्रवणेति । विवेकवैराग्यादिमदधिकारिणः श्रवणविध्यपेक्षितस्य तदधीनत्वा[6]दित्यर्थः । ततः[7] तद्यथेहे त्यादिश्रुतितः। तत् कर्मफलानित्यत्वम । ततः अनित्यत्वदोषदर्शनात् ॥

"रंहति सम्परिष्वक्त" इति सूत्रावयवेनोपलक्ष्य तृतीयप्रथमपादमाह- रंहतीति । एतद्दाढर्यायेति । आद्यसूत्रस्थाथशब्दसूचि-

---

[1] मप्राप्ति छ [2] न्यायादपीय–ग. [3] त्वविवेककृत–ग. छ. [4] कर्मफलपरलोकगत्यागतिविवेककृतम्–छ. [5] अक्षय्यवचनमविवक्षितार्थम् ख [6] दिति-भावः–ख. [7] एवमेवेत्यादिश्रुतेः–ख.

वैयर्थ्यं वा। श्रुतिरपि प्रथमं [1]वैराग्यं दर्शयति "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्" इति। ततः शरीरेन्द्रियचेष्टया मनोरथादिवृत्तेश्च निमित्ताभावाच्चित्तेन्द्रिययोर्व्यापारोपरमरूपौ शमदमौ भवतः। ततस्तितिक्षादि। ततोऽविक्षिप्तचित्तो निरस्तानर्थव्रातानतिशयानन्दगलिताखिलभेदमात्मानं वेदान्तवाक्येभ्योऽवगत्य मुमुक्षुः "ब्रह्मविदाप्नोति परम्" "तरति शोकमात्मवित्" इत्यादिश्रुत्यवष्टम्भेन जिज्ञासते ॥

---

दीपनम्

तानित्यत्वदोषदर्शनजवैराग्यदार्ढ्याय। दुःखबाहुल्यज्ञाने हि चित्तं सर्वात्मना ततो निवर्तत इति भावः। **प्रथमं** गुरूपसदनात् पूर्वम्। **ततः** वैराग्यात्। **चित्तेति**। वैराग्यहेतुको मनोविजयः शमः, विजितस्य तत्वप्रतिपत्तियोग्यता दम इत्यन्ये। **ततः** शमदमाभ्यां **तितिक्षा** द्वन्द्वसहनम्। आदिपदात् "श्रद्धावित्त" इत्यादिश्रुत्युक्तश्रद्धा। **ततः** शान्त इत्यादिवाक्यस्थसाधनसम्पत्तेः। अविक्षिप्तेति च्छेदः। मोक्षे आध्यात्मिकादितापत्रयं निरस्यति—**निरस्तेति**। न विद्यते अतिशयो यस्मान्मोक्षरूपानन्दादन्यस्येति स्वर्गादिवैषम्यमुक्तम्। गलितः सजातीयादिभेदो यस्मिन्। मुमुक्षुः सन्निति शेषः। मुमुक्षारूपेच्छाया धर्मिज्ञानसाध्यत्वाद्धर्मिज्ञानस्य चान्यतोऽभावात्कथं सेत्यत आह—**वेदान्तेति**। **श्रुत्यवष्टम्भेनेत्यादि**। श्रुतितो ज्ञानस्य मोक्षहेतुतां निश्चित्येत्यर्थः॥

---

पूरणी

धारणयोरभावादित्यर्थः। मुमुक्षायाः शमदमादिसाध्यतालाभार्थमाह—**सन्निति शेष इति** ॥

---

[1] ममेव—ग. छ.

ननु किं जिज्ञासया, वेदान्तवाक्यादेवावगतत्वात्। नच सावगतिरापातरूपैव न निश्चय इति वाच्यम्; निस्सामान्यविशेषब्रह्मबोधे सामान्यविषयतालक्षणापातताया असंभवात्। [1]वेदवाक्यात्संशयासंभवात्। अपरोक्षे ब्रह्मणि परोक्षज्ञानासंभवाच्च। तस्मा[2]त्प्रथमं ज्ञानं वेदान्तादुत्पन्नं चेदपरोक्षनिर्णय [3] एवेति न चेन्न मुमुक्षा जिज्ञासा वा, धर्मिज्ञानाभावादिति चेत्, सत्यम्, यद्यपि प्रथमं निर्विशेषब्रह्मसाक्षात्कारः [4]शब्दान्निष्पन्नस्तथापि

---

दीपनम्

ज्ञाने आपातत्व किं सामान्यविषयत्वं उत संशयत्वं परोक्षत्वं वा। आद्य आह — **निस्सामान्येति**। द्वितीय आह—**वेदेति**। तृतीय आह—**अपरोक्ष इति**। "यत्साक्षादपरोक्षात्" इति श्रुतेर्ब्रह्म नित्यापरोक्षमित्यर्थः। विचारादिसहकार्यभावे ज्ञानमेव नोदेतीत्याह— **न चेदिति**। विचारात्प्रागपि सत्यादिवाक्यानां सामानाधिकरण्येनैकार्थतात्पर्यज्ञानसंभवात्तदनुरोधेन लक्षणया निर्विशेषब्रह्मज्ञानं संभवतीति नोक्तदोष इत्याह—**यद्यपीति**। अहं ब्रह्म न वेत्यादिद्विकोटिकसं-

---

पूरणी

**अपरोक्ष इतीति**। "यत्साक्षादपरोक्षात्" इति श्रुतौ अपरोक्षमित्यर्थे अपरोक्षादिति छान्दसः सुप आदादेशः विभक्तिव्यत्ययो वा। वेदान्तवाक्यानां परोक्षज्ञानजनकत्वेन न [5]तदपरोक्षब्रह्मविषयम्, किं तु तद्व्यतिरिक्तविषयमिति ब्रह्मव्यतिरिक्तार्थे सत्यादिबोधकानां [6]तेषामप्रामाण्यं स्यादित्यर्थः। यद्वा वेदान्तवाक्यानां परोक्ष-

---

[1] वेदान्त-ख. [2] प्रथम वेदान्तादुत्पन्नं चेज्ज्ञानमपरोक्ष-ख. ग. छ. [3] एव-ग. छ. [4] शब्दादुत्पन्नः-ख. [5] तदपरोक्षज्ञानविषयम-ञ [6] तथास्यादिति तेषामप्रा-ट.

सोऽनवधारण एव, अग्रे संशय[1]दर्शनात्। नन्वेककोटिज्ञानमात्रं निश्चय एवेति न संशयः स्यादिति चेत्, न तावन्निश्चयत्वं जातिः; चाक्षुषत्वादिना साङ्कर्यात्। त्वन्मते [2]धर्मिज्ञाने तदभावप्रसङ्गाच्च। अत एव न संशयान्यज्ञानत्वम्। नापि संशयत्वानाधिकरणज्ञानत्वम्। धर्मिज्ञानस्य संशयाभिन्नत्वेन

## दीपनम्

शयदर्शनादित्याह— अग्र इति। न संशय इति। अग्र इति शेषः। तदेवेति शेषः। संशयविरोधिज्ञानस्वरूपत्वं निश्चयत्वम्, तस्यैव जिज्ञासाविरोधित्वात्, अनेवंरूपमेककोटिकमपि [3] ज्ञानमनिश्चय इत्यभिप्रेत्य निश्चयत्वं विवेचयति—न तावदिति। त्वन्मत इति। परमते व्याप्यवृत्तित्वं जातेः, एतस्य चाव्याप्यवृत्तित्वादित्यर्थः। अत एवेति। पूर्वहेतुत इत्यर्थः। न संशयेति। ज्ञानस्यैकत्वादित्यर्थः। अत्यन्ताभावस्याव्याप्यवृत्तित्वात्तद्घटितं लक्षणं धर्मिज्ञानेऽप्यविरुद्धमित्याशङ्क्याह-नापीति। संशयत्वेति। तद्धति तदभावस्यानुपपत्तेर्नोक्तदोष[4]निस्तार इत्यर्थः। एकस्मिन्नवावयविन्यंशभेदेन संयोगतदभाववत् ज्ञाने संशयत्वतदभा[5]वावविरुद्धावित्याशङ्क्य वैषम्येणोत्तरमाह— धर्मीत्यादिना।

## पूरणी

ज्ञानजननस्वभावत्वे चरममपि तथा प्रसङ्गेनापरोक्षधीजनकत्वलक्षणमपरोक्षप्रमाणत्वं त्वदभ्युपगतं न स्यादित्यर्थः। नन्वग्रेतनसंशयस्य सकलानुभवसिद्धतया तदपलापो न युक्त इत्यपरितोषादाह—तदे-

[1] यादिदर्श—छ. [2] धर्मिज्ञानांशे—ग. [3] ज्ञानं न निश्चयः-ख. [4] निरासः—च. [5] वावपि न वि—ख.

तदभावात् । अत एव न संशयत्वाभाववत्त्वम् । धर्मिज्ञानांशे तदुभय[1]मस्तीति चेत् न; ज्ञानेंऽशाभावात् । नच धर्मिविषयतावच्छेदेन तदस्तिता, ज्ञानस्वरूपविषयत्वस्य ज्ञानमात्रतया विरुद्धधर्मद्वयासंभवात् । अन्यथा संशयेऽप्येकको[2]ट्यंशे विरुद्धोभयप्रकारत्वलक्षणसंशयत्वाभावेन निश्चयत्वापत्तेः । नच स्वप्रकारी-

## दीपनम्

ज्ञानस्य गुणतया निरंशत्वादित्यर्थः । यत्त्ववच्छेदकभेदे सति निरंशेऽपि भावाभावावविरुद्धाविति धर्मिविषयत्वावच्छेदेन संशयत्वाद्यभावः स्थाणुत्वादिविषयत्वावच्छेदेन संशयत्वादिरिति, तदनूद्य निराकरोति—**नचेति**। स्यादेवं यदि विषयत्वं ज्ञानस्वरूपातिरिक्तं स्यात्, न तु तव तत्सम्प्रतिपन्नम्, न वा तत्संभवतीति वक्ष्यते । ज्ञानस्वरूपं तु विषयता अभिन्ने ज्ञाने अभिन्नैवेति नैकत्र भावाभावाविति भावः । ज्ञानेऽप्यंशाभ्युपगमे दण्डमाह—**अन्यथेति** ।

संशयत्वे सिद्धे तद्भिन्नत्वं ज्ञाने [3]निश्चयत्वमायास्यति, तदेव न सिद्ध्यतीत्याशयेन संशयत्वं दूषयति—न च **स्वप्रकारीति** । अथवा

## पूरणी

**वेति** । **अत एव न संशयत्वेति** मूलम् । न च पूर्वाभेदः, पूर्वत्र संशयत्वाधिकरणत्वाभावघटितस्योक्तत्वादिति भावः । नन्वेवं स्वाकारेत्यादिना संशयत्वे निरुक्ते निश्चयत्वं सिद्धमित्यग्रे तत्समर्थनमयुक्तं स्यादित्यपरितोषादाह— **अथ वेति** । **एकविशेष्येति** । घटपटाविति समूहालम्बने स्वाकारघटत्वविरुद्धपटत्वप्रकारकज्ञानाभिन्ने पटत्वविरुद्धप्रकारकेऽतिप्रसङ्गवारणाय एकविशेष्यकत्वविशेषणमपि देयमिति भावः ।

[1] मप्यस्ती-क. ग. छ. [2] कैकको—ख. छ. [3] निश्चयमा—ख.

**भवद्धर्मविरुद्धप्रकारकज्ञानाभिन्नत्वं संशयत्वं, तच्च तत्राप्यस्तीति वाच्यम्, संशयाभिन्नधर्म्यंश[1]ज्ञानस्यापि तत्सत्त्वात्। न च तद्विरुद्धप्रकारकज्ञानत्वे सतीति विशेषणान्नातिप्रसङ्ग इति वाच्यम्; लाघवेन स्वाकारविरुद्धाकारसमबलज्ञानाविरो[2]-धित्वस्यैव संशयशब्दार्थत्वात्॥**

## दीपनम्

न विरुद्धानेककोटिकज्ञानत्वं संशयत्वम्, यनैककोटयंशे तदभावः स्यात्, किं त्वन्यदेवेति न तत्र तदभाव इत्याशङ्क्याह—**न च स्वप्रकारीभवदिति**। स्वस्य संशयत्वेनाभिमतस्य यो धर्मः प्रकारीभवति स्थाणुत्वादि तद्विरुद्धं यत्पुरुषत्वादे[3] तत्प्रकारकज्ञानाभिन्नत्वं संशयत्वम्। तच्चैककोट्यंशेऽप्यस्तीत्यर्थः। येषां मते धर्मिज्ञानं संशयाभिन्नं तेषां धर्म्यंशेऽपि तदस्तीति दूषयति—**संशयाभिन्नेति**। **न चेति**। तथा चेदंत्वं न कस्यापि विरुद्धमिति तत्प्रकारकज्ञाने न संशयत्वमिति भावः। एकविशेष्यकत्वे सति स्वप्रकारभिवद्धर्मविरुद्धप्रकारज्ञानाभेदे सति तद्विरुद्धप्रकारकज्ञानत्वापेक्षया इदं लघुशरीरमित्येतदेव संशयस्वरूप मित्याह—**लाघवेनेति**। सोपाधिकभ्रमाविरोधिनि शङ्खः श्वेत इत्यादि-ज्ञाने अतिप्रसङ्गप[4]रिहाराय—**समबलेति**। एवं च स्वविषये स्वाकार-विरुद्धद्वयवैशिष्ट्यावगाहिज्ञानाविरुद्धत्वं संशयत्वं विवक्षितमिति नोक्त-दोषः। एवं चैककोटिकज्ञानमपि संशयः स्यादिति भावः। न चैवं धर्म्यंशज्ञानस्यापि संशयत्वापत्तिः, तस्यापि स्थाणुत्वादिप्रकारकज्ञाना-भिन्नत्वात्तदविरोधित्वाच्चेति वाच्यम्; धर्म्यंशज्ञानस्यान्तःकरणवृत्ति-रूपस्याविद्यावृत्तिरूपसंशयादन्यत्वादिति॥

## पूरणी

नन्वयं घट इति निश्चये स्वाकारघटत्वविरुद्धपटत्वाकारभिन्नविशेष्यकपट-

---

[1] ज्ञानेऽपि–ख. ग. छ. [2] विज्ञानत्वस्यैव-ग. छ. [3] तत्प्रकारकं ज्ञानं तदभिन्नत्वं-ख. [4] निरासाय-ख.

पूरणी

निश्चयाविरोधिन्यतिव्याप्तिः, किं च समबलत्वं किमप्रामाण्यशङ्काशून्यत्वेनाप्रामाण्यशङ्कास्कन्दितत्वेन वा, नाद्यः; असंभवात् संशयज्ञाने अप्रामाण्यशङ्काशून्यत्वाभावात्, न द्वितीयः; पीतभ्रमस्यापि तादृशत्वेन श्वेतनिश्चयेऽतिव्याप्तेरित्याशङ्क्याह —**स्वविषय इति**। स्वपद लक्ष्यत्वेनाभिमतज्ञानपरम्। तद्विशेष्ये स्वाकारस्ताद्विरुद्धाकारश्चेति यद्द्वयं तद्वैशिष्ट्यावगाहीत्यर्थः। घटनिश्चयविषये पटत्वानवगाहित्वात्पटानिश्चयस्य न तदविरुद्धघटनिश्चयेऽतिव्याप्तिः। न च पटनिश्चयस्य विरुद्धघटपटत्वोभयवैशिष्ट्यानवगाहितया तत एव घटनिश्चयेऽतिप्रसङ्गवारणात्स्वविषयपदं व्यर्थमिति वाच्यम्, स्थाणुपुरुषसंशयाविरोधिन्यहं पुरुषविषयनिश्चयेऽतिप्रसङ्गवारकत्वात्। पीतभ्रमस्य वक्ष्यमाणरीत्या श्वेतनिश्चयाकारश्वेत्यपीतत्वोभयवैशिष्ट्यानवगाहित्वान्न तदविरुद्धश्वेतनिश्चयेऽतिप्रसङ्गः। अविरुद्धाविशेषणाच्चैककोट्यंशे नाव्याप्तिः। नचैवं घटपटाविति समूहालम्बनेऽतिव्याप्तिः, [1]एकविशेष्यकत्वावच्छेदेन विरुद्धोभयवैशिष्ट्यावगाहित्वस्य विवक्षितत्वात्। नाप्येते आम्रा वा पनसा वेति बहुविशेष्यकसंशयेऽव्याप्तिः, तस्य प्रत्येकधर्मिणि तदुभयवैशिष्ट्यावगाहिसमूहालम्बनसंशयरूपतया उक्तार्थस्य तत्रापि सत्वात्। फलितमाह—**एवं चेति**। नचैवं वेदान्तवाक्यानां संशायकत्वापातः, एतादृशसंशयजनकत्वस्येष्टत्वादिति भावः। **तदविरोधित्वादिति**। इतिर्हेतौ। यतस्तदभिन्नत्वं ततस्तदविरोधित्वमित्यर्थः। सिद्धान्तमवलम्ब्याह—**अन्यत्वादिति**। ततश्चेदमाकारान्तःकरणवृत्तौ स्थाणुत्वादेरप्रकारतया नान्तःकरणवृत्तिरूपधर्मिज्ञाने स्वाकारविरुद्धाकारज्ञानाविरुद्धत्वलक्षणार्थत्वसंभवः। यन्मते तु धर्मिज्ञानस्य संशयाभिन्नत्वं तत्रापि स्वांशाकाराविरुद्धाकारज्ञानाविरुद्धत्वं विवक्षितमिति

---

[1] त्येक-ग्र.

यत्तु स्वसमानप्रकारकसंशयत्वं धर्म्यंशे नास्तीति स निश्चय इति, तन्न; परमते इदंत्वस्य केवलान्वयितया तत्प्रकारकसंश[1]याप्रसिद्धेः। नाप्येकविशेष्यैकप्रकारकज्ञानत्वम्, अयं [2]पटो द्रव्यमित्यादिज्ञाने तदभावात्। स्थाणुत्वस्याप्येकत्वात्।

---

## दीपनम्

स्वशब्दस्य [3]प्रकृतमात्रपरत्वमेवेति दूषयति—परमत इति। नापीति। निश्चयत्वमिति शेषः। स्थाणुत्वस्येति। [4]तथापि तदंशेऽपि

---

## पूरणी

धर्म्यंशाकारेदन्त्वविरुद्धाकारत्वाभावात्तदंशस्य नातिप्रसङ्ग इति भावः। नन्वेवं पीतः शङ्ख इति सोपाधिकभ्रमेऽतिव्याप्तिः, तस्य भ्रमविषय पीतत्वशङ्खत्वोभयाकारवैशिष्ट्यावगाहित्वात् तस्य तदविरोधित्वादिति चेन्न; शङ्खत्वस्यान्तःकरणवृत्त्याकारतया पीतत्वस्याविद्यावृत्त्याकारतयोभयाकारवैशिष्ट्यावगाह्येकज्ञानाभावात्। नन्वेवमपि पीतत्वशङ्खत्वोभयारोपेऽतिव्याप्तिः, तत्र विवक्षितार्थसत्त्वादिति चेन्न; विरुद्धपदेन स्वप्रयोज्यैकप्रवृत्तिविषयतानवच्छेदकत्वलक्षणविरोधस्य विवक्षितत्वात्। स्थाणुत्वपुरुषत्वप्रकारकप्रवृत्तेरेकत्राभावेन स्थाणुत्वादौ तथाविधविरोधसत्त्वात्। पीतार्थिनः शङ्खे प्रवृत्तिदर्शनेन पीतत्वशङ्खत्वयोस्तथा विरोधाभावादित्यवधेयम्॥

केचित्तु संशयत्वानधिकरणज्ञानत्वं निश्चयत्वमिति पूर्वशङ्कितलक्षणे उक्तधर्म्यंशाव्याप्तिवारणाय स्वसमानप्रकारकेति विशेषणं दधुः, तदनूद्य दूषयति—यत्तु स्वसमानेति मूले। प्रकृतमात्रेति। समभिव्याहृतपरत्वे तु प्रतियोगितदभावयोरेकत्रावृत्तेरुक्त एव दोष इति भावः। नाप्येकविशेष्येति मूले। एकप्रकारकत्वं घटपटाविति समूहालम्बनेऽ-

---

[1] यासिद्धेः—क. [2] घटो—ग. छ. [3] प्रकृतपरामर्शित्व—ख. [4] तथा च—ख.

एकमात्रप्रकारत्वं तु धर्मिज्ञानेऽपि नास्त्येव। तस्माद्यज्ज्ञानं यत्संशयनिवृत्त्यनुकूलस्वरूपविशेषवत् तत्तन्निश्चयः, इतरत्तु न तथेति एककोटिकमपि किंचित्पुरुष[1]दोषादनवधारणं किंचित्तु तर्कादिकारणमहिम्ना तदनतिरिक्तविषयमपि निश्चय इत्यनवद्यम्। नन्वेवं संशयनिवृत्तावननुगतो हेतुः स्यादिति चेत्, न; अनुगताभावे तस्याप्याश्रयणीयत्वात्। समानप्रकारकत्वस्यापि ज्ञानविशेषस्वरूपातिरिक्तस्यानुगतस्यासंभवात्[2]। संशयनिवृत्तेरन्यतोऽपि संभवेन तन्मात्रेऽनुगतकारणाभावाच्च॥

---

दीपनम्

निश्चयत्वं स्यादिति भावः। ननु संशयजनकज्ञानात्तन्निवर्तकज्ञानस्य विषयविशेषो वक्तव्य इति निर्विशेषज्ञानस्य न कथमपि निश्चयत्वमिति शङ्कामुपसंहारव्याजेन निरस्यति--**तस्मादिति**। **समानप्रकारकत्वस्येति**। स्वरूपसंबन्धविशेषस्यैव परैः प्रकारत्वाभ्युपगमात् तस्य तज्ज्ञानस्वरूपतयाऽननुगतत्वादित्यर्थः। **अन्यतोऽपीति**। यदि निवृत्तिरनुत्पादः तदा सामग्र्यन्तरप्रतिबन्धादपि तत्संभवः; यदि ध्वंसः तदा विरोधिगुणान्तरादित्यर्थः॥

---

पूरणी

नेकप्रकारेऽव्याप्तमतः एकविशेष्यकेति विशेषणम्। तेनैकविशेष्यावच्छेदेनैकप्रकारकत्वमर्थो लभ्यत इति विशेष्यभेदेनानेकप्रकारकस्यापि समूहालम्बनस्यैकघटविशेष्यावच्छेदेन एकघटत्वादिप्रकारकत्वान्नाव्याप्तिरिति भावः। अतिव्याप्तिमप्याह—**स्थाणुत्वस्यापीति** मूले।

---

1 दोषवशादनव-छ. 2 तासंभवे-ख. ग. छ.

पूरणी

धर्मिज्ञानेऽपीति मूले। स्थाणुत्वादेरपि प्रकारत्वात्तज्ज्ञानस्यैकत्वादित्यर्थः।

ननु ज्ञानवैलक्षण्यस्य विषयतत्त्वाधीनत्वात्तेन विना तदनुपपत्तिः। किं चानेककोटिज्ञान एव संशयव्यवहारान्नैककोटिकज्ञाने संशयत्वम्। अपि चैककोटिज्ञानस्य संशयत्वं किं प्रमाणबलादभ्युपेयते उक्तलक्षणेऽविरुद्धविशेषणेन तत्सङ्ग्रहकरणशक्तेर्वा। नाद्यः; असिद्धेः। न द्वितीयः; तस्य लक्ष्यान्तर्भावे प्रमाणमन्तरा लक्षणे विशेषणान्तरदानेन तत्सङ्ग्रहकरणस्यानुचितत्वात्। अन्यथा पृथिव्यादिलक्षणे अविरुद्धविशेषणदानेन वाय्वादिसङ्ग्रहस्यापि वक्तुं शक्यतया पदार्थव्यवस्थोच्छेदापत्तेः। न चानभ्यासदशापन्नज्ञानस्य संशयत्ववन्निश्चयकार्याकरत्वेन निश्चयत्वमपि नेति वाच्यम्; तथापि तृतीयप्रकारकल्पनापत्तेः परमते निर्विकल्पकेश्वरज्ञानयोः प्रमाप्रमाबहिर्भाववत्। किंच संशयनिवृत्त्यनुकूलस्वरूपविशेष इत्यत्र अनुकूलत्वं फलोपहितत्वं योग्यत्वं वा। आद्ये अनुत्पन्नसंशयस्थलीयनिश्चयेऽव्याप्तिः। द्वितीयेऽनभ्यासदशापन्नैककोटिकज्ञानस्यापि निश्चयत्वं स्यात्, तस्यापि तद्योग्यत्वात्। न चैवं [1]ततः संशयनिवृत्त्यापत्तिः; अप्रामाण्यशङ्काविरहलक्षणसहकारिविरहात्तन्निवृत्त्यभावोपपत्तेरित्याशङ्क्याह--**इत्यनवद्यमिति** मूलम्। अयं भावः— न तावज्ज्ञानवैलक्षण्यं विषयवैलक्षण्यनिमित्तम्; स्मृत्यनुभवयोः समानविषयप्रत्यक्षानुमित्योश्च व्यभिचारात्। किं तु तत्सामग्रीवैलक्षण्याधीनम्। तच्चेहाप्यस्ति; विशेषादर्शनतद्दर्शनघटितसामग्र्योर्वैलक्षण्यात्। तथा अनभ्यासदशापन्नैककोटिकज्ञानस्य संशयत्वे निश्चयकार्याकरत्वं

[1] तत्संशय—ड.

## पूरणी

लिङ्गविषया मानम् । अतः प्रमाणबलाल्लक्ष्यान्तर्भावे तल्लक्षणेन तत्सङ्ग्रहो युक्तः । अत एव क्लृप्तान्तर्भावे सति न तृतीयप्रकारकल्पनापि युक्ता । तथानुकूलत्वं तद्योग्यत्वमेव । न चैककोटिज्ञानेऽतिप्रसङ्गः; तादृशैककोटिज्ञानात्कदाचिदपि संशयनिवृत्त्यदर्शनेन तस्य तदयोग्यत्वात् । न चाप्रामाण्यशङ्कानिवृत्तेः सहकारित्वम्; तत्कल्पनायां मानाभावादिति । ननु कोऽसौ स्वरूपविशेषः, व्यक्तजन्यत्वं विशेषदर्शनादिजन्यत्व वा । नाद्यः; अतिप्रसङ्गात् । न द्वितीयः; निकटस्थघटज्ञानादेरनिश्चयत्वापत्तेः, तस्य विशेषदर्शनजन्यत्वाभावादिति चेन्नः; क्वचिद्विशेषदर्शनजन्यत्व क्वचिच्च भूयोवयवेन्द्रियसन्निकर्षजन्यत्वमित्यस्यैव स्वरूपविशेषत्वात् । नचैवमननुगमेऽनुगतनिश्चयव्यवहारोच्छेदः; संशयनिवृत्त्यनुकूलस्वरूपविशेषत्वेन तद्व्यवहारोपपत्तेरिति दिक् ।

वस्तुतस्तु एककोटिकज्ञानं न संशयः, तत्त्वे मानाभावेन [1]लक्षणे अविरुद्धविशेषणेन तत्सङ्ग्रहायोगात्, न चैककोट्यंशेऽव्याप्तिवारणाय तद्विशेषणमावश्यकमिति वाच्यम्; एकधर्म्यवच्छेदेन स्वाकारविरुद्धाकारावगाहित्वेन सर्वसामञ्जस्यात् । किं तूक्तसंशयत्वानधिकरणज्ञानत्वेन निश्चय एव । नच निश्चयकार्यत्वान्न निश्चयत्वमिति वाच्यम्; तादृशज्ञाने सर्वेषां संशयविलक्षणनिश्चयव्यवहारदर्शनेन तद्व्यवहारात्मकनिश्चयकार्यत्वस्य तत्रापि सत्त्वात् । लाघवेन यत्किञ्चिन्निश्चयकार्यकारित्वस्य तत्रापि प्रयोजकत्वात् । अन्यथा प्रातिभासिकरजतस्य रजतत्वं न स्यात् । कूपनिक्षिप्तकुण्डलादिवत्तत्कार्याकरत्वेऽपि तल्लक्षणलक्षितत्वेन तत्त्वस्यावश्यकत्वाच्च । न च संशय-

---

[1] लक्षणेन तत्सङ्ग्रहायोगात्-क.

पूरणी

निवृत्त्यनुकूलत्वयुक्तं लक्षणं तत्र नास्ति, तज्ज्ञानस्य संशयानिवर्तकत्वादिति वाच्यम्; विशेषदर्शनप्रभवत्वादेस्तज्जन्यतावच्छेदकविशेषग्रहाघनिग्रहत्वेन तत्र तादृशाविशेषावच्छेदकविशेषाभावेन तल्लक्षणस्यासंभव[1]दुस्थत्वात्। अवच्छेदकान्तरसत्त्वे वा तस्यैव लक्षणत्वेनैतल्लक्षणवैयर्थ्यात्। अतः संशयत्वानधिकरणज्ञानत्वं तल्लक्षणत्वं वाच्यम्। न च धर्म्यंशेऽव्याप्तिः; अस्मन्मते धर्मिज्ञानस्य संशयभिन्नत्वात्। परमतेऽवच्छेदकभेदेन संशयत्वतदभावयोरेकत्र सत्वात्। न च धर्मिविषयत्वादेर्ज्ञानस्वरूपतया न प्रतियोगितदभाववृत्त्यवच्छेदकत्वमिति वाच्यम्; स्वरूपत्वेन तेन रूपेण तदवच्छेदकत्वोपपत्तेः। त्वयापि प्रत्यभिज्ञायां तत्तेदंताविषयत्वाद्यवच्छेदेन स्मृत्यनुभवत्वस्वीकारात्। एकत्र साक्षिणि शुक्तिरजताद्यवच्छेदकभेदेन प्रमाभ्रान्तित्वाभ्युपगमाच्च। इदंविषयत्वस्य विशेषदर्शनानपेक्षित्वेन विशेषदर्शनादिप्रभवत्वलक्षणस्वरूपविशेषस्यापि रजतत्वविषयत्वाद्यवच्छेदकभेदेन वृत्तेरभ्युपगन्तव्यत्वाच्च। किं चैककोटिकज्ञानस्य संशयत्वे वेदान्तवाक्यानां संशायकत्वं निश्चायकत्वं चेति वैरूप्यं स्यात्। सर्वतन्त्रविरोधश्च स्यादित्यलमधिकेन। न चैवं प्रथमतो वेदान्तवाक्यजन्यज्ञानं निश्चयरूपमिति तत्संशयनिवृत्त्यापत्तिरिति वाच्यम्; तज्ज्ञानस्याप्रामाण्यशङ्कास्कन्दितत्वेन तन्निवर्तनाक्षमत्वात्। तच्छङ्काशून्यत्वेन तन्निवर्तकत्वस्वीकारात्। अत एव तज्ज्ञाने आपातत्वमप्रामाण्यशङ्कास्कन्दितत्वम्; तच्छङ्काशून्यनिर्णयगोचरेच्छात्मिका जिज्ञासापीति सर्वं सुस्थम्॥

संशयनिवृत्ताविति मूले। विशेषदर्शनप्रभवत्वादिस्वरूपविशेषस्य निवर्तकतावच्छेदकस्याननुगतत्वादिति भावः। **सामग्र्यन्तरेति।** व्याप्यदर्शनादिघटितनिश्चयसामग्रीप्रतिबन्धादित्यर्थः।

1 दुस्थितत्वात्—ग्र.

## निर्विकल्पकवादः

नन्वेवमपि न निर्विशेषब्रह्मजिज्ञासा भवितुमर्हति । संशयविरोधिज्ञानं हीष्यते । तच्च संशयसमानप्रकारकम्, निर्विकल्पकादिदमिति ज्ञानाच्च संशयानिवृत्तेः । निर्विशेषे च ब्रह्मणि तदभावात् । न च कल्पितः प्रकारोऽस्तीति वाच्यम्; तत्त्वावेदकश्रुतिजन्यज्ञानस्य तदविषयत्वादिति, मैवम्; ज्ञानं हि समानविषयतयाऽवधारणात्मकं संशयं निवर्तयति [1]न तु तत्समानप्रकारतया, अन्यविषयात्तददर्शनात् । समानविषयत्वमप्य[2]पेक्षितमिति चेत्, संशयादपि [3]प्रसङ्गः । निश्चयत्वमप्यपेक्षितमिति चेत्, तर्हि समानविषयो

---

### दीपनम्

एवं वेदान्तवाक्यादुत्पन्ननिर्विशेषज्ञानस्याप्यनवधारणत्वप्रतिपादनेन धर्मिज्ञानाभावप्रयुक्तो जिज्ञासाक्षेपोऽपास्तः । इदानीं प्रयोजनाभावेन निर्विशेष[4]ज्ञाने इष्टसाधनताज्ञानाभावात्तदिच्छामाक्षिपति— **नन्वेवमपीति ॥** ततः किम्? तत्राह—**तच्चेति** । **निर्विकल्पकात्** [5]निष्प्रकारकादपि, परमत एव । **संशयेति** । घटत्वादिप्रकारकेत्यर्थः । **तदभावात्** प्रकाराभावेन समानप्रकारकत्वाभावात् । तत्त्वमबाधितमर्थमावेदयतीति तत्त्वावेदिका श्रुतिः । किं ज्ञानस्य संशयनिवृत्तौ तत्समानप्रकारकत्वमात्रं तन्त्रम्, उत समानविषयत्वसहितम्, अथवा उभयविशिष्टमवधारणत्वम् । आद्य आह—**अन्येति** । द्वितीयमाशङ्क्य प्रत्याह—**समानेत्यादिना** । **प्रसङ्गः** संशयनिवृत्तिप्रसङ्गः । तृतीय-

---

### पूरणी

**इष्टसाधनतेति** । स्वविषयाज्ञानसंशयनिवृत्तिर्निर्णयफलम्, तच्च प्रकृते न संभवतीति ब्रह्मनिर्णयगोचरेच्छात्मिका जिज्ञासा न

---

1 न तु समानप्रकारत्वम्–**छ.** 2 पेक्षणीयः–**ख.** 3 प्रसङ्गात्–**ग.** 4 ज्ञानस्य–**च.**
5 निष्प्रकारकादिति.

**निश्चयो निवर्तको लाघवात् । निर्विकल्पकं तु नास्त्येव ।**

दीपनम्

माशङ्कयमत्याह—**निश्चयत्वमपीत्यादिना**। नन्वेवं पराभिमतनिर्विकल्पकादपि संशयनिवृत्तिप्रसङ्ग इत्यत आह -**निर्विकल्पकं त्विति**। नाध्यक्षेण तज्ज्ञानं नापि विशिष्टज्ञानबलात्तत्कल्प्यम्, विशिष्टज्ञानस्य विशेषण-

पूरणी

संभवतीत्यर्थः। **नाध्यक्षेणेत्यन**न्तरमतीन्द्रियत्वाभ्युपगमादिति शेषः। **नापि विशिष्टेति**। जागराद्यसविकल्पकं विशेषणज्ञानजन्यम्, विशिष्टज्ञानत्वात्, दण्डीति ज्ञानवदित्यनुमानादपि न सिद्ध्यतीत्यर्थः। **विशेषणसान्निकर्षेति**। तथा च विपक्षे बाधकाभावेन हेतोरप्रयोजकत्वमित्यर्थः॥

ननु विशेषणविशेष्यव्यवस्थानुपपत्त्या विशेषणज्ञानस्य विशिष्टधीहेतुत्वसिद्धावाद्यसविकल्पकानुरोधेन निर्विकल्पकसिद्धिः; जनकीभूतज्ञानविषयत्वातिरिक्तस्य प्रकारतानियामकस्याभावात्। न च निर्विकल्पकस्य विशेष्यविशेषणोभय[1]विषयतया जनकीभूतज्ञानविषयत्वं विशेष्येऽपि गतम्, अतः कथं तज्ज्ञानविषयत्वाविषयत्वाभ्यां प्रकारप्रकारिव्यवस्थेति वाच्यम्; यद्विषयत्वेन ज्ञानं जनकं तस्य प्रकारत्वम्, अतथाभूतस्य प्रकारित्वमित्यभ्युपगमात्। न च पक्षविषयतयानुमितिजनकज्ञानविषये पक्षे पक्षविशेष्यकानुमित्यप्रकारभूते व्यभिचारान्नायं नियम इति वाच्यम्; विशिष्टज्ञानत्वावच्छेदेन जनकीभूतधीविषयतावच्छेदकस्य प्रकारत्वमिति नियमात्। अत एव न विशेष्यज्ञानं विशिष्टधीहेतुः। अन्यथा तस्य प्रकारत्वापातात्। न च जनकीभूतज्ञानविषयः प्रकारी तदविषयः प्रकार इति वैपरीत्यं किं न

[1] विषयकतया–ट.

## पूरणी

स्यादिति वाच्यम्; अभावविशेष्यकबुद्धौ व्यभिचारेण तथा नियमासंभवात्। न च तत्राप्यभावनिर्विकल्पकं प्रथममास्तामिति वाच्यम्; प्रतियोगिज्ञानादिविशिष्टधीसामग्रीसत्त्वेन तदसंभवात्। न चाभावांशे तन्निर्विकल्पकम्; तत्र [1]पूर्वाननुभवस्याप्यभावस्वरूपस्य प्रकारत्वेन तदसंभवात्। प्रतियोगिज्ञानादिपूर्वं चाभावनिर्विकल्पकाभ्युपगमे तस्य प्रतियोगिस्मृत्यनन्तरभाविप्रतियोग्यारोपसमये विनष्टतया तदनन्तरभाविसविकल्पकानुपपत्तिः। किं च घटत्वसामान्यलक्षणया सकलघटविशेष्यकज्ञानोदयस्थले व्यभिचारान्न विशेष्यज्ञानं तद्धेतुः। न च लाघवेन यत्किंचिद्विशेष्यज्ञानं कारणम्, तत्तत्राप्यस्तीति वाच्यम्; यत्किंचित्त्वयावत्त्वाप्रवेशेन विशेष्यज्ञानत्वरूपेणैव हेतुत्वे यावद्विशेष्यं तावज्ज्ञानस्यापि हेतुत्वलाभात्। अन्यथा घटज्ञाने घटपटोभयविशेष्यकसमूहालम्बनापत्तेः[2]। न च विशेष्यान्तरगोचरं भगवज्ज्ञानं तत्राप्यस्तीति वाच्यम्; भगवज्ज्ञानस्यास्मदृष्टसामग्रीनिर्वाहकत्वाभावात्। अन्यथा प्रामाण्यादिगोचरभगवज्ज्ञान[3]महिम्नास्मदज्ञातप्रामाण्यादिविशिष्टज्ञानापत्तौ संशयाद्यनुपपत्तेः। न च वैदिकशाब्दप्रमाकूटालि[4]ङ्गजवह्निप्रमानुमित्यादौ भगवज्ज्ञानस्यापि गुणविधया दृष्टसामग्रीनिर्वाहकत्वमभ्युपेतमिति वाच्यम्; तत्र योग्यताप्रमादेरेव गुणत्वेन तदनपेक्षणात् विधान्तरेणापि भगवत्सिद्धेः। अत एव विशेष्यविशेषणोभयज्ञानमपि विशिष्टधीहेतुरिति प्रत्युक्तम्। प्रकारप्रकारिभावव्यवस्थानुपपत्तेश्चेत्यलमतिकथया। एवं च जनकधीविषयः प्रकार इति प्रकारव्यवस्थानुपपत्तिर्निर्विकल्पके मानमिति चेत्।

मैवम्; यस्य वैशिष्ट्यप्रतियोगित्वं भासते स प्रकारः। यस्य तु तदनुयोगित्वं स प्रकारीति व्यवस्थायाः विशिष्टधियो विशेषणधी-

---

[1] पूर्वानुपस्थितस्य—ग. [2] पत्तिः—ग. [3] नमादायास्मदादेरज्ञात—ग. [4] ज्वह्नि—ट.

## पूरणी

जन्यत्वमन्तरापि संभवात्। न च प्रतियोगिताभानेऽपि तद्विषयज्ञानजन्यत्वमेव नियामकमिति वाच्यम्; घटघटत्वोभयगोचरनिर्विकल्पकानन्तरं कदाचिद्घटत्वप्रतियोगितागोचरं ज्ञानं अन्यदा तु घटप्रतियोगितागोचरमित्यत्रापि नियामकाभावात्। तद्विषयत्वेन ज्ञानजनकत्वकल्पनाया अपि तज्ज्ञानाधीनत्वात्। अदृष्टविशेषादेर्नियामकत्वे तु स एव साक्षात्प्रतियोगिताभानेऽपि नियामकोऽस्तु किमन्तर्गडुना विशेषणज्ञानेन॥

[1] यत्तूक्तं समूहालम्बनव्यावृत्तानुगतहेत्वन्तरस्य विशिष्टज्ञानेऽसंभवाद्विशेषणज्ञानमेव तद्धेतुर्वाच्य इति, तन्मन्दम्; विशेषणासंसर्गाग्रहस्यैव तद्धेतोः संभवात्। असयुक्तघटपटयोरपि समूहालम्बनदर्शनेन तत्र तस्याहेतुत्वात्। यदपि विशिष्टज्ञानं वैशिष्ट्यगोचरज्ञानम्, वैशिष्ट्यं च संबन्धः, संबन्धज्ञाने च प्रतियोगिज्ञानं कारणमिति तेन रूपेण विशेषणज्ञानं हेतुः, न चानुयोगिज्ञानमपि तत्र हेतुरिति विशेष्यज्ञानमपि तद्धेतुः स्यादिति वाच्यम्; दण्डज्ञानमात्रेणापि दण्डप्रतियोगिकसंयोगग्रहदर्शनादनुयोगिज्ञानस्य नियमेन तत्राहेतुत्वात्। यत्किंचित्संबन्धिज्ञानमात्रेण ससंबन्धिकपदार्थग्रहोपपत्तेश्चेति, तदपि न [2] मनोरमम्; संबन्धतावच्छेदकप्रकारक[3]संबन्धसविकल्पकस्यैव प्रतियोगिज्ञानापेक्षणात्। अन्यथा संयोगनिर्विकल्पके[4] तदपेक्षापत्तेः। नचेष्टापत्तिः, तथा सति विशिष्टधीसामग्रीसत्त्वे नियमेन समवायाभाववत् संयोगस्यापि सविकल्पकैकवेद्यत्वापातात्। किं च लाघवेन संबन्धिज्ञानत्वेन संबन्धधीहेतुतेति विशेष्यज्ञानमपि तद्धेतुः स्यात्।

---

1 यत्तत्रीत-झ. 2 मनोहरम्-झ. 3 ससंबन्ध-झ. 4 केऽपि तदपेक्षापत्तिः-झ.

## पूरणी

दण्डपुरुषोभयग्रहानन्तरमेव तत्संयोगग्रह इति वक्तुं शक्यत्वेन तत्रोक्तव्यभिचारासंभवात्। पुरुषत्ववैशिष्ट्यावगाहिज्ञानानुरोधेन पुरुषावगाहिनिर्विकल्पकस्यावश्यवाच्यत्वाच्च। अपि चाभावस्वरूपसंबन्धगोचराभावत्वप्रकारकज्ञानेऽपि प्रतियोगिज्ञानतया तदपेक्षापत्तिः। न च स्वरूपसंबन्धज्ञानेऽपि न प्रतियोगिज्ञानापेक्षेति वाच्यम्! तथा सति घटाभावविशिष्टभूतलज्ञानादावपि तदनपेक्षापत्तेरिति दिक्॥

यत्तूपनीतसौरभादिविशिष्टप्रत्यक्षे विशेषणज्ञानस्य हेतुत्वकल्पनादन्यत्रापि विशेषणधीर्हेतुरिति, तन्न; तत्रोपनयस्य सन्निकर्षतयापेक्षितत्वेऽपि विशेषणज्ञानतया तद्धेतुत्वासिद्धेः। यदप्यारोपे आरोप्योपस्थितिर्हेतुः अज्ञातरजतस्य [1] पुंसस्तथारोपादर्शनात्, तत्र चारोप्यज्ञानत्वेनारोपज्ञानत्वेन च न हेतुहेतुमद्भावः; किं तु लाघवाद्विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन चेति विशिष्टधीमात्रे विशेषणज्ञानं हेतुरिति, तदपि न सम्यक्; रजतनिर्विकल्पकादपि तदारोपप्रसङ्गेनारोप्यज्ञानस्य विशेषणज्ञानमात्रतयारोपहेतुत्वासिद्धेः। किं त्वारोप्यसविकल्पकत्वेन पृथगेव तत्र हेतुत्वमिति विशिष्टधीमात्रे विशेषणज्ञानसामान्यहेतुत्वासिद्धेः। न च विशिष्टधीविशेषारोपे विशेषणधीविशेषारोप्यसविकल्पकस्य हेतुत्वे यद्विशेषन्यायेन विशिष्टधीमात्रे विशेषणज्ञानं हेतुरिति वाच्यम्; विपक्षे बाधकाभावेन विशेषहेतुहेतुमद्भावस्य सामान्यहेतुतानियमासिद्धेः सहचारदर्शनमात्रस्याप्रयोजकत्वात्॥

केचित्तु दण्डीति विशिष्टवैशिष्ट्यावगाहिज्ञानेऽस्ति विशेषणतावच्छेदकप्रकारकज्ञानापेक्षा, तत्र विशेषणतावच्छेदक[2]प्रकारज्ञानत्वेन विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन च न हेतुहेतुमत्ता; गौरवात्, किं तु

[1] पुनस्तदारोप-ग्र. [2] प्रकारकज्ञान-ग्र.

पूरणी

तत्तद्विशेषणज्ञानत्वेन तत्तद्विशिष्टज्ञानत्वेन चेति विशेषणधीर्विशिष्टधीमात्रहेतुरित्याहुः, तच्चिन्त्यम्; विशेषणद्वयसन्निकर्षादेव विशिष्टवैशिष्ट्यावगाहिज्ञानोपपत्तौ तत्र विशेषणतावच्छेदकप्रकारकज्ञानापेक्षाया असिद्धेः। अपेक्षायामपि भूतलस्थदण्डे दण्डत्वेन ज्ञाते देवदत्तस्थदण्डे प्रमेयत्वादिना ज्ञातेऽपि दण्डी देवदत्त इति प्रत्यक्षापत्त्या विशेषणतावच्छेदकप्रकारकज्ञानत्वेन विशेषणवृत्तिविशेषणतावच्छेदकज्ञानत्वेन वा पृथगेव तत्र हेतुताया वाच्यत्वेन सामान्यहेतुत्वा[1]सिद्धिरित्यलमतिकथया॥

वस्तुतस्तु विशिष्टज्ञाने विशेषणधीहेतुत्वे क्षणिकसुखादीनामप्रत्यक्षतापातः; निर्विकल्पकस्य विषयजन्यतया सुखाद्युत्पत्तिद्वितीयक्षणे निर्विकल्पकोत्पत्तावनन्तरं सुखादिनाशेन तद्गोचरसविकल्पप्रत्यक्षासम्भवात्। न च पूर्वक्षणे सुखादिरूपविषयसत्त्वेनानन्तरं तद्गोचरसविकल्पकोत्पत्तौ न किञ्चिद्बाधकमिति वाच्यम्; विषयस्य कार्यसहभावेनैव प्रत्यक्षहेतुत्वात्। अन्यथा विषयप्रत्यक्षान्निष्कम्पप्रवृत्त्यनापत्तेः, विषयस्य प्रत्यक्षसमयसत्त्वानियमात् वर्तमानतावगाहिप्रत्यक्षानुपपत्तेश्च। न च तत्क्षणसंबन्धो न प्रत्यक्षगोचरः; क्षणभेदस्य प्रत्यक्षेण ग्रहासंभवात्। किं तु स्थूलोपाधिसंबन्धः; न च तदन्तर्गतपूर्वक्षणवर्तमानसुखादेरप्यस्त्येवेति वाच्यम्; स्थूलोपाध्यवच्छेदरूपवर्तमानताया अपि तत्क्षणसंबन्धपर्यवसायितया प्रत्यक्षस[2]मयसत्त्व एव वर्तमानतावगमनियमात्। अन्यथा अतीतघटादावपि यत्किंचित्स्थूलोपाधिना वर्तमानतावगमप्रसङ्गात्। विषयस्य प्रत्यक्ष[3]समयसत्त्वानियमे निष्कम्पप्रवृत्त्यनापत्तेश्च।

किंचैवमपि क्षणिकान्त्यशब्दप्रत्यक्षानुपपत्तिः, निर्विकल्पकसमय एव तन्नाशेन पूर्वसत्तयापि तदनन्तरमविकल्पकं प्रति हेतुत्वासंभवात्, न च तस्यातीन्द्रियत्वम्, तथा सति तत्र मानाभावेनासिद्धिप्रसङ्गात्। न

---

1 सिद्धेरि—ट. 2 समये सत्येव—म. 3 समयासत्त्वे—ट,

**अनवधारणत्वादपि न तन्निवर्तकम् । इदमिति ज्ञानं तु**

दीपनम्

सन्निकर्षादिमात्रजन्यत्वा[1]दित्यर्थः । अभ्युपगमेऽपि तदनिश्चयत्वादेव नातिप्रसङ्ग इत्याह—**अनवधारणेति** । नन्विदमिति ज्ञानाद्घटत्वादिसंशयनिवृत्तिप्रसङ्ग इत्यत आह—**इदमिति** । समानविषय-

पूरणी

च सुखादीनां त्रिक्षणावस्थायित्वपक्षे नायं दोषः, द्वितीयक्षणे निर्विकल्पकानन्तरं तृतीयक्षणे वर्तमानसुखादिप्रत्यक्षसंभवादिति वाच्यम्; सुखाद्युत्पत्तिद्वितीयक्षणोत्पन्ननिर्विकल्पकादेस्तन्नाशकत्वेन विरोधितया विरोधिनाः सहावस्थानासंभवेनानन्तरमेव नाशस्यावश्यकतया तत्पक्षस्य मन्दत्वात् । अन्यथानन्तरमपि नाशानुपपत्तेः । त्रिक्षणावस्थायित्वेऽपि तृतीयक्षणे सुखत्वप्रकारकसुखविशेष्यकसविकल्पकसंभवेऽपि अहं सुखीत्यात्मविशेष्यकसुखविशेषणप्रत्यक्षानुपपत्तेः, चतुर्थक्षणे तदसत्त्वात् । विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुतया सुखत्वप्रकारकसुखसविकल्पकमन्तरा तदसंभवात् । न च विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन द्वितीयक्षणे सुखसुखत्वगोचरनिर्विकल्पकानन्तरं तृतीयक्षण एव सुखत्वविशिष्टसुखवैशिष्ट्यावगाहिप्रत्यक्षमस्त्विति वाच्यम्, एवमपि शिरसि सुखी पादे दुःखीति क्रमोत्पन्नसुखदुःखोभयवैशिष्ट्यावगाहिप्रत्यक्षानुपपत्तेः सुखद्वितीयक्षणोत्पन्नदुःखस्य तृतीयक्षणे निर्विकल्पके सति चतुर्थक्षणे सुखनाशात् । अपि च प्रतियोग्यभावत्वविशेषणविशिष्टज्ञाने न तद्विशेषणज्ञानं हेतुरिति अन्यत्रापि न विशेषणज्ञानापेक्षा, स्वरूपविशेषणस्यैवातिरिक्तविशेषणस्यापि पूर्वानुपस्थितस्यैव वैशिष्ट्यभानसंभवादिति संक्षेपः ॥

**अनवधारणत्वादिति** मूले । वैशिष्ट्यानवगाहित्वादिति भावः । **समानविषयत्वमिति** संशयैककोट्यन्यूनविषयत्वमभिप्रेतम् । तच्चेदं-

[1] दिति भावः च.

**घटत्वादिवैशिष्ट्याविषयत्वान्न तत्संशयं निवर्तयति । अन्यथा**

---

## दीपनम्

त्वमेव नास्तीति भावः । **अन्यथा** समानप्रकारकत्वेन तत्त्वे । न च तदनन्तरभाविसमानप्रकारकज्ञानादेव तन्निवृत्तिरिति वाच्यम्; तादृश-ज्ञानान्तरानुपलम्भात् । अन्यथा प्रागपि तत्सामग्रीसत्त्वेन तत्क्रमानुप-

---

## पूरणी

ज्ञाने नास्तीति भावः । **तद्गोचर इति** मूले । अत्र घटत्वं न वेति [1]घटप्रकारकघटत्वविशेष्यकसंशयस्य घटत्वप्रकारकनिश्चयान्निवृत्तिर्न स्यात्, भिन्नप्रकारकत्वादित्यर्थः । यथाश्रुते इदं घटत्वं न वेति संशयस्य घटत्वस्वरूपप्रकारकत्वे समानप्रकारकत्वात्संशयनिवृत्तिः स्यात् । अतिरिक्तघटत्वत्वप्रकारकत्वे तु समानविषयत्वाभावात् स्वमतेऽपि न घट-निश्चयात्संशय निवृत्तिरित्यसाङ्गत्या[2]पत्तेरित्यवधेयम् । **तस्मिन्निति** मूले । घटनिश्चये घटस्याप्रकारत्वादित्यर्थः । **तादृशज्ञानेति** । उत्तरकालमपि घटविशेष्यकनिश्चयसामग्र्याः सत्त्वेन तस्यैवो[3]त्पत्त्या घटप्रकारकघटत्व-विशेष्यकनिश्चयान्तरोत्पादायोगादित्यर्थः । ननु सामग्र्यास्तुल्यत्वा-त्कदाचित्तादृशमपि ज्ञानं स्यादित्याशङ्क्याह---**अन्यथेति** । तथा सति प्रथममेव तादृशज्ञानद्वय स्यात परस्परविरोधान्नैकमपि वा स्यादित्यर्थः । अत्रैककोट्यन्यूनविषयत्वं तदेककोटिवैशिष्ट्यावगाहित्वेन, तथा च समानप्रकारकत्वमेव लभ्यते, भासमानवैशिष्ट्यप्रतियोगिनः प्रकारत्वात्, अतस्त्वदभिमतसमानविषयत्वं समानप्रकारकत्वे पर्यवसितमिति वृथायं

---

1 घटास्तित्वादिप्रकारक—झ. 2 पात्त—झ. 3 त्पत्त्यापत्त्या—ट.

**घट इति ज्ञानात्तद्गोचरे घटत्वे इदं घटत्वं न वेति संशयो न निवर्तेत। तस्मिन् घटत्वातिरिक्त[1]प्रकारकत्वाभावात्।**

## दीपनम्

पत्तेरिति भावः। अत एव समानप्रकारकत्वाभावे कथं समानविषय-निश्चयत्वमिति निरस्तम्। प्रागुक्तनिश्चयत्वस्य तेन विनाप्युपपत्तेश्च। किंच यद्यस्मदुक्तं निश्चयत्व न भवेत्, किं तु समानप्रकारकसमान-विषयकज्ञानत्वमेव, तर्हि सन्निकृष्टे घटे घटत्वसामान्यलक्षणप्रत्यास-त्योत्पन्नज्ञानेन घटान्तरेऽपि तत्संशयो निवर्तेत। तत्रापि त्वदभिमत-

## पूरणी

भ्रम इति कैश्चिद्दूषणमुक्तं तन्निरस्तमित्याह—**अत एवेति**। घटनिश्च-यस्य घटत्वसंशयभिन्नप्रकारस्याप्युक्तरीत्या समानविषयकत्वादित्यर्थः। [2]समानविषयत्वं तद्धर्मितदेककोटिनिरूपितवैशिष्ट्यावगाहित्वम्, तच्च भिन्नप्रकारकस्याप्यस्तीति न समानप्रकारकत्वपर्यवसानमिति भावः। ननु समानविषयत्वं नाम संशयविषयीभूतधर्मसत्तावधारणत्वम्। तच्च तत्प्रकारकत्वे सत्येवेत्युक्तसमानप्रकारत्वपर्यवसानमपत्याशङ्क्याह— **प्रागुक्तेति**। यद्वा ननु निर्विकल्पकस्यानिश्चयरूपत्वेऽनवधारणत्वहेतुं ब्रुवता वैशिष्ट्यावगाहित्वं निश्चयत्वमित्युक्तम्। तच्चोक्तरीत्या समान-प्रकारकत्वपर्यवसायीत्यत आह—**प्रागुक्तेति**। तद्गोचरसंशयनि-वर्तकत्वात्मकनिश्चयत्वस्योक्तरीत्या भिन्नप्रकारकत्वेऽपि संभवादित्यर्थः। **समानप्रकारकेति**। यद्यपीदं संशयेऽतिप्रसक्तम्, तथापि ज्ञानत्वं संशयत्वानधिकरणज्ञानत्वम्। न च तावतैव सामञ्जस्ये आद्यविशेष-णद्वयवैयर्थ्यम्, संशयविरोधिरूपनिश्चयत्वस्य निर्वाच्यत्वात्। तत्र तद्द्वयस्य भिन्नप्रकारके भिन्नविशेष्यके चातिप्रसङ्गवारकत्वेन सार्थक्यात्। **सन्निकृष्ट इति**। सन्निकृष्टघटे यथा तादृशज्ञानात्संशयनिवृत्तिस्तथा

[1] प्रकाराभावात्-ग. छ. [2] एककोट्यन्यूनविषयत्वं-ट.

**अनभ्यासदशायां जले जलत्ववैशिष्ट्यविषयप्रामाण्यसंशयो[1] न स्यात्, जलज्ञानस्य निकटस्थजलज्ञानवत्तत्सत्तानिश्चयरूपत्वात्। किं चैवं प्रमेयवानिति ज्ञानादपि त्वदभिमतनिश्चयाद्घटत्वादि-**

---

दीपनम्

संशयनिवर्तकसत्त्वात्। अत्र विपक्षे बाधकान्तरमप्याह—**अनभ्यासेति**। ननु प्रागनवगतप्रामाण्यसंशये नानुपपत्तिरित्यत आह—**जलेति**। **तत्सत्ता** जलत्ववैशिष्ट्यसत्ता। जलत्वप्रकारकमिदं ज्ञानं जलत्ववति तदभाववति वा तद्वैशिष्ट्यमवगाहत इत्येवंरूपप्रामाण्यसंशयस्य जलत्वाधिकरणे तद्वैशिष्ट्यनिश्चयत्वे व्यवसायस्यानुपपत्तेः। न च तद्वद्विशेष्यकत्वस्य तदविषयतया तत्संशय इति वाच्यम्; तस्यापि स्वरूपतया तदनुपपत्तेः। न च तन्निश्चये[2] तद्वैशिष्ट्यप्रकारकत्वाभावात्तत्संशय इति वाच्यम्; संशयसाधारणसमानप्रकारकत्वस्य संशयनिवृत्तावप्रयोजकत्वेन लाघवेन समानविषयत्वस्यैव तत्प्रयोजकत्वे [3] सिद्धे तदनुपपत्तेः। अन्यथा निकटस्थजलज्ञानेऽपि सः स्यादित्यर्थः। समानप्रकारक[4]मपि निश्चयमुदाहरति—**किं चेति**। एवं समानप्रकार-

---

पूरणी

**असन्निकृष्टघटेऽपि स्यात्। ज्ञानस्योभयत्रापि त्वदभिमतनिश्चयरूपत्वादि-त्यर्थः**। वक्ष्यमाणदूषणस्य समानप्रकारकत्वविषयेऽलग्नत्वान्निश्चयत्वपरतया योजयति— **अत्रेति**। संशयत्वानधिकरणज्ञानत्वस्यैव निश्चयत्व इत्यर्थः। **तस्यापीति**। तद्वद्विशेष्यकत्वस्य ज्ञानस्वरूपत्वात्तस्य च धर्मिज्ञानानुरोधेन संशयात्पूर्वं गृहीतत्वेन तत्संशयानुपपत्तेरित्यर्थः। ननु ज्ञानस्वरूपनिश्चयेऽपि तद्वद्विशेष्यकत्वप्रकारेण तन्निश्चयाभावात्तत्संशयः स्यादित्याशङ्क्य निषेधति—**न च तन्निश्चयेति**। ननु समानप्रकारकनिश्चयत्वेन निवर्तकतास्त्वित्यत्राह—**लाघवेनेति**। एवमपि समानविशेष्य-

---

[1] योऽपि न—**क. ख च.** [2] तत्प्रकारकत्वा—**च.** [3] स्थिते—**ख. च.**

[4] मप्यनिश्चयमिति व्याख्यानुसारी पाठः। **प्रकारकं परामिमतं संशयनिवर्तकनिश्चय—ख.**

प्रकारकात्संशयनिवृत्त्यापत्तिः। तत्र सामान्यधर्मप्रकारकत्वं चेदिदमिति ज्ञानेऽपि तथा भविष्यतीति समानप्रकारकत्वं व्यर्थम्। अशाब्दनिष्प्रकारकज्ञानस्याप्रमाणत्वात्। तस्माच्छाब्दनिष्प्रकारकज्ञानात्संशयनिवृत्तिरुपपन्नेति न [1] निर्विशेषब्रह्मजिज्ञासानुपपत्तिः॥

## दीपनम्

कत्वमेव चेत्संशयविरोधीत्यर्थः। प्रमेयवानिति ज्ञानं प्रमेयप्रकारकम्-[2]घटत्वादिकमपि प्रमेयमिति भवति तज्ज्ञानं घटत्वादिप्रकारकम्। न च संशयस्ततो निवर्तते। न च घटत्वत्वेन रूपेण तत्र प्रकार इति वाच्यम्; तथापि समानप्रकारकत्वानपायात्। [3]निर्विकल्पकजन्यघटज्ञानादौ तज्ज्ञानाभावेन तत्संशयानिवृत्तिप्रसङ्गाच्चेत्यर्थः। अखण्डविषयशाब्दसाक्षात्कारस्य पराभिमतनिर्विकल्पकसदृशतया तद्व्यावृत्तय आह—अशाब्देति। अप्रमाणत्वात् [4]अप्रमाणकत्वादित्यर्थः। तथा च प्रागुक्तस्वरूपविशेष एव निश्चयत्वमिति समानविषयनिश्चयादेवाविद्यानिवृत्तिरिति प्रतिपादनफलमुपसंहरति—तस्मादिति॥

## पूरणी

कत्वं प्रवेश्यम्। भिन्नविशेष्यकज्ञानात्संशयानिवृत्तेः। तथाच लाघवेन समानविषयकत्वेनैव तत्त्वमित्यर्थः। समानप्रकारकत्वेन तत्त्वे दोषान्तरमाह—अन्यथेति। तद्वद्विशेष्यकत्वप्रकारकनिश्चयस्य तत्राप्यभावादित्यर्थः। अनिश्चयमिति। संशयानिवर्तकमित्यर्थः। निश्चयत्वाविषय एवेदं दोषान्तरमित्यर्थः। ननु संशये घटत्वत्वस्यापि प्रकारत्वसंभवेन न समानप्रकारकत्वमित्यत्राह—निर्विकल्पकेति।

[1] निर्विशेषे ब्रह्मणि जि-ग. [2] घटत्वादि—च. ख. [3] निर्विकल्पकान्यघट-च.
[4] अप्रामाणिकत्वादिति व्याख्यानुसारी पाठः।

## पूरणी

घटत्वत्वस्य निर्विकल्पकानुपस्थिततया तन्मते तत्प्रकारत्वासंभवेन तादृशज्ञानात्तन्निवृत्तिर्न स्यादित्यर्थः । **तथा भविष्यतीति** मूलम् । केवलं समान[1]विषयत्वविशेषणादेव नेदंज्ञानस्य व्यावृत्तिः, अपि तु त्वदभिमतविशेषणादपीत्यर्थः । ननु निष्प्रकारकं ज्ञानं तव नाभिमतमिति कथं तत्स्वीकार इत्यत आह—**अशाब्देति** मूले । यद्वा ननु नेदंज्ञानव्यावृत्तये समानप्रकारकत्वं विशेषणं, किं तु निर्विकल्पकव्यावृत्तय इत्यत आह—**अशाब्देति** मूले । तस्याप्रामाण्येऽपि तत्स्वरूपव्यावृत्तिर्न लभ्यत इत्यत्राह—**अप्रामाणिकत्वादिति** । ननु न समानप्रकारकज्ञानत्वं निश्चयत्वमतो निष्प्रकारकं ज्ञानं न निश्चय इत्याशङ्क्याह —**तथा पूर्वोक्तेति** । समानविषयत्वं च वृत्त्यभिप्रायेण । शुद्धचैतन्याज्ञानसंशयादिनिवर्तकस्वरूपज्ञाने तदभावात् । तस्य स्वाविषयत्वादिति ध्येयम् ॥

ननु समानविषयत्वं तद्विषयविषयत्वम्, तदन्यूनानतिरिक्तविषयत्वं वा । नाद्यः; इदमिति ज्ञाने अतिप्रसङ्गात् । न च तस्य सामान्यप्रकारकत्वान्न दोष इति वाच्यम्; तथापि तद्व्यक्त्यन्यान्यत्वेन तज्ज्ञानेऽतिप्रसङ्गात् । न द्वितीयः; स्थाणुपुरुषसंशयादेः केवलस्थाणुनिश्चयादनिवृत्त्यापत्तेः । न च संशयप्रकारीभूतधर्मवैशिष्ट्यावगाहित्वं तदर्थः; अहं पुरुष इति ज्ञानादपि तन्निवृत्त्यापत्तेः, भासमानवैशिष्ट्यप्रतियोगिनः प्रकारतया फलतस्तत्प्रकारत्वलाभाच्चेति चेत्, अत्र स्फुरति; संशयैककोट्यन्यूनविषयत्वं समानविषयत्वम्, अतो नेदंज्ञानादावतिप्रसङ्गः । न चाहं पुरुष इति ज्ञानेऽतिप्रसङ्गः, अविद्यावृत्तिरूपसंशयस्य पुरुषत्वादिवैशिष्ट्यमात्रविषयतया तद्धर्म्यविषयत्वादिति

---

[1] विषयवि—**झ.**

## पूरणी

वाच्यम् ; तद्धर्मिनिरूपितत्वेन पुरुषत्वादिवैशिष्ट्यस्य संशयविषयत्वात् । अन्यथा तद्धर्मिणि तत्संशयात्प्रवृत्त्यनुपपत्तेः । भेदाग्रहस्यास्मन्मते प्रवर्तकत्वानभ्युपगमात् । अत एव स्वविषये स्वाकारेत्यादिसंशयलक्षणमुक्तम् । एवं चाहं पुरुष इति ज्ञानस्य तद्धर्म्यविषयतया तन्न्यूनविषयत्वान्नायं प्रसङ्गः । न च फलतस्तत्समानप्रकारत्वलाभः ; अत्र पुरुषत्वमिति धर्मिप्रकारकज्ञानस्यापि धर्मिनिरूपितधर्मवैशिष्ट्यावगाहित्वेन उक्तस्य समानप्रकारकत्वापर्यवसानात् । नच भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्, तच्च तद्वैशिष्ट्यभाने न क्षतमिति वाच्यम्; भासमानवैशिष्ट्यप्रतियोगिताकस्य प्रकारत्वात्, तत्प्रतियोगितायाश्च क्वचिदेव भानात् । न च विशिष्टज्ञाने वैशिष्ट्यप्रतियोगिताभाने मानाभावः ; दण्डीति विशिष्टज्ञानस्य दण्डपुरुषसंयोगा इति समूहालम्बनाद्भेदानुपपत्त्या तद्भानसिद्धेः ॥

ननु संबन्धितावच्छेदकविषयत्वाविषयत्वाभ्यामेव तदुभयभेदसिद्धिः । न च विषयभेदादेव ज्ञानभेदः, अतः कथं प्रकारभेदमात्राद्भेद इति वाच्यम् ; संबन्धतावच्छेदकसंयोगत्वादेरतिरिक्तस्य समूहालम्बनविषयतया विषयभेदस्यैव लाभादिति चेन्न ; दण्डसंयोगी पुरुष इत्यस्याविशिष्टज्ञानत्वापत्तेः । न च तस्य न पुरुषांशे दण्डविशिष्टज्ञानत्वम्, किं तु संयोगांशे, तत्र प्रतियोग्यनुयोगितालक्षणवैशिष्ट्यं स्वरूपेणैव भासत इति नाव्याप्तिदोष इति वाच्यम् ; तज्ज्ञानात्पुरुषेऽप्य[1]दण्डिव्यावृत्तिबोधादिविशिष्टधीकार्यकरणेन पुरुषांशेऽपि दण्डविशिष्टज्ञानत्वरूपताया वाच्यत्वात् । अन्यथा पुरुषनिष्ठतया दण्डसंबन्धावगाहिज्ञानस्य दण्डतत्संबन्धाविशेष्यकतया समूहालम्बनेऽप्य-

[1] दण्डव्यावृत्ति–ट.

## पूरणी

नन्तर्भावेन तृतीयप्रकारतापत्तेः । किं च दण्डीति शाब्दज्ञानस्याविशिष्टज्ञानत्वापत्तिः, तत्र संबन्धस्य मतुपा संबन्धतावच्छेदकरूपेणोपस्थितेः । न च स्वरूपेण घटत्ववैशिष्ट्यबोधकघटादिपदवत्स्वरूपेण [1]दण्डवैशिष्ट्यबोधकमपि किञ्चित्पदमास्ति, येन तत्पदजनितमेवेदं दण्डीति विशिष्टज्ञानम् , न तु दण्डिपदजनितमिति वक्तुं शक्येतापीतीयं दिक् ॥

न च वैशिष्ट्यप्रतियोगित्वं विषयतया न ज्ञानभेदकम् , दण्डपुरुषतदुभयानु[2]योगिप्रतियोगिकसंबन्धा इति समूहालम्बनेऽतिप्रसक्तत्वादिति वाच्यम् ; समूहालम्बनस्य स्वातन्त्र्येणोभयावगाहिज्ञानरूपतया परस्परधर्मधर्मिभावगोचरैतादृशसमूहालम्बनासंभवात् । सत्त्वेऽपि भासमानवैशिष्ट्यप्रातियोगित्वेन रूपेण दण्डस्य प्रकारत्वमपीति तस्य दण्ड[3]विशिष्टज्ञानात्मकत्वात् । अत एव ततोऽप्यदण्डव्यावृत्तिबोधादिविशिष्टकार्यमिति दिक् ॥

न चैवं निष्प्रकारकब्रह्मज्ञानस्य तत्कोटिवैशिष्ट्यानवगाहनेन तन्निवर्तकता न स्यादिति वाच्यम् ; अहं ब्रह्म न वेति संशये स्वरूपस्यैव कोटितया तदन्यूनविषयत्वस्य तन्निश्चयेऽपि सत्त्वात् । यद्वा संशयकारणीभूताज्ञानान्यूनविषयत्वं विवक्षितम् । तत्र चाज्ञानस्य शुद्धचित्स्वरूपविषयतया तदन्यूनविषयत्वं तान्निश्चयेऽप्यस्तीति न काप्यनुपपत्तिः । स्थाण्वादिसंशयविषये तद्धेतुभूताज्ञानस्य तद्धर्मिनिरूपिततद्धर्मवैशिष्ट्यगोचरतया तद्धर्मिणोऽपि विषयतान्तर्भावादहं पुरुष इत्यादिभिन्नविशेष्यकज्ञानस्य तन्न्यूनविषयत्वान्नातिप्रसङ्गः । नच स्थाणौ वल्मीकभ्रमस्य स्थाणुत्ववैशिष्ट्याज्ञानसमानविषयत्वाभावेन तत्संशय-

1 दण्डविशिष्ट ट. 2 योगिकप्र ब्र. 3 वैशिष्ट्यमा ब्र.

## पूरणी

निवर्तकतानापत्तिरिति वाच्यम्, तत्र तत्संशयस्य [1] तात्कालिकोपशम-मात्रं न सर्वथा निवृत्तिरिति सर्वैरभ्युपगमात्। तस्य विरोधनिश्चयत्वेन पृथगेव तन्निवर्तकत्वाच्च। न च स्थाणुपुरुष[2]योरिमौ स्थाणू पुरुषौ वेति संशयस्यैकांशे स्थाणुत्वनिश्चयान्निवृत्तिर्न स्यात्, स्थाणुत्वपुरुषत्वाज्ञान-न्यूनविषयत्वादिति वाच्यम्, तद्धर्म्यंशे तदन्यूनविषयत्वस्य तत्र सत्त्वात्। यद्वा तत्राज्ञानद्वयस्वीकारात्। न चैवं तदुपादेयसंशयभेदापत्तिः; इष्ट-त्वात्। धर्मिणोर्भिन्नत्वेन तत्र तद्धर्माकाराविद्यावृत्तिरूपसंशययोरपि भिन्न-त्वात्। न चैवमपि स्थाणावपुरुष इति निश्चयात्संशयनिवृत्तिर्न स्यात्, तस्य स्थाणुत्ववैशिष्ट्याज्ञानन्यूनविषयत्वादिति वाच्यम्; अपुरुषत्वाज्ञान-स्यापि तत्संशयहेतुत्वात् प्रकृते च लाघवेन संशयकारणीभूतयत्किञ्चि-दज्ञानान्यूनविषयत्वस्य विवक्षितत्वादिति न किंचिदनुपपन्नम्॥

केचित्तु समानप्रकारकत्वमेव निवर्तकतावच्छेदकं लाघवात्। न तु समानविषयत्वं, गौरवात्। न च प्रकारताया विषयताविशेषरूप-त्वेन विपरीतं गौरवमिति वाच्यम्; समानविषयत्वं हि संशयहेतुभूता-ज्ञानान्यूनविषयत्वमित्यनेकपदार्थघटिततया गुरुत्वात्। न चैवमहं पुरुष इति ज्ञानात्तन्निवृत्त्यापत्तिः; धर्मिरूपसंबन्धिभेदेन प्रतिधर्मि वैशिष्ट्य-भेदात्। तद्घटितप्रकारभेदेनाहं पुरुष इति ज्ञानस्य भिन्नप्रकारकत्वात्। नच समवायरूपवैशिष्ट्यस्यैकत्वान्न भेद इति वाच्यम्; स्वरूपसंबन्ध-विशेषलक्षणवैशिष्ट्यस्य विशिष्टधीनियामकस्य प्रतिव्यक्ति भिन्नत्वात्। तस्मात्समानप्रकारकनिश्चयत्वमेव संशयविरोधिरूपमिति कल्पयन्ति, तच्चिन्त्यम्, वैशिष्ट्यभेदेन प्रकारत्वभेदेऽपि प्रकारस्वरूपस्यैक्येनाहं पुरुष इति ज्ञानस्य समानप्रकारतया अतिप्रसङ्गतादवस्थ्यात्। किं च समान-

---

[1] उत्कालिको-ट [2] वोरेव-ट.

## पूरणी

विषयकत्वस्य गुरुत्वेऽपि भिन्नप्रकारकस्याप्युक्तरीत्या समानविषयकत्वेन सामान्यरूपतया गुरोरपि तस्यादेयत्वात् सामान्यपक्षपातित्वात्प्रमाण-प्रवृत्तेः। न चैवं यत्नत्वमपहाय व्यापकत्वमाख्यातवाच्यतावच्छेदकं स्यात्, सामान्यरूपत्वादिति वाच्यम्; तत्र जातिरूपतया अखण्ड-यत्नत्वस्य सखण्डव्यापकत्वापेक्षया अत्यन्तलघुत्वात् प्रकृते चोभयोः सखण्डत्वात्। अपि च समानप्रकारकत्वेन [1]निवर्तकत्वे भूतले घट इति भिन्नप्रकारकघटज्ञानानन्तरं भूतलं घटवन्न वेति संशयनिवृत्त्यर्थं तत्समानप्रकारकज्ञानान्तरं पूर्वज्ञानस्य निश्चयसामग्रीत्वेन विरोधित्वं वा कल्प्यमिति गौरवम्। किं च विशेष्यभेदेन वैशिष्ट्यभेदमभ्युपगम्य समानप्रकारकत्वस्य नियामकत्वाभ्युपगमे फलतः समानविशेष्यकत्वमपि लब्धमिति शिष्यदण्डनमात्रमितीयं दिक्॥

ननु समानविषयनिश्चयत्वं न संशयनिवर्तकतावच्छेदकम्; निश्चयत्वस्य त्वन्मते संशयनिवर्तकतात्मकत्वेन अभेदे अवच्छेद्यावच्छेद-कत्वानुपपत्तिरिति चेन्न; समानविषयविशेषदर्शनप्रभवज्ञानत्वादेरेव तदवच्छेदकत्वादिति संक्षेपः॥

वस्तुतस्तु समानविषयनिश्चयत्वं न विरोधितावच्छेदकम्, पर्वतेतरवह्निः पर्वते नास्तीति निश्चये वह्नि[2]शून्य एव पर्वते वह्नि-संशयानापत्तेः। पर्वतेतरवह्नित्वेन रूपेण वह्निमात्राभावस्य तत्र निश्चितत्वात्। न च वह्नित्वेन रूपेण वह्न्यभावानिश्चयेन संशय इति वाच्यम्; आगतं तर्हि समानप्रकारकत्वेन निवर्तकत्वम्। न च तत्र पर्वतवृत्तिधर्मे वह्नित्वारोपात्तद्धर्मगोचरः संशयो न प्रसिद्धगोचर इति वाच्यम्; पर्वतवृत्तिधर्मे पर्वतेतरवह्नित्वं नास्तीति समानविषयविरोधि-

[1] तत्त्वे–ट. [2] शून्ये पर्वते–म.

## पूरणी

निश्चये सति तदारोपस्याप्यनुपपत्तेः। न च तत्रानिर्वचनीयवस्त्वन्तर-गोचर एव स इति वाच्यम्; संशयस्थले अनिर्वचनीयोत्पत्तेर्निरा करिष्यमाणत्वात्। तावन्मात्रं भिन्नविशेष्यकेऽतिप्रसक्तमिति समान-विषयकत्वमपि प्रवेश्यम्, तदर्थस्तु समानविशेष्यकत्वम्। निश्चयत्वं तु यथोक्ताप्रामाण्यशङ्कानास्कन्दितसंशयत्वानधिकरणज्ञानत्वम्। अतः समानविषयत्वापेक्षया गुरु[1]विशेषरूपमपि तदेव प्रयोजकम्, अनति-प्रसञ्जकत्वात्। न चैव निर्विशेषब्रह्मज्ञानात्संशयनिवृत्त्यनुपपत्तिः, तस्य निष्प्रपञ्चत्वप्रकारकत्वात्। न च तस्य ब्रह्मस्वरूपतया न तत्प्रकार-कत्वमिति वाच्यम्; अभावबुद्धावभावस्वरूपस्यैव प्रकारत्वोपपत्तेः। न च स्वरूपस्य स्ववैशिष्ट्या[2]भावेन तद्घटितं प्रकारत्वं कथमिति वाच्यम्; प्रतीत्यनुरोधेन कथंचित्स्वस्मिन्नपि स्ववृत्त्यभ्युपगमेन स्वा-त्मकवैशिष्ट्यप्रतियोगित्वेन तदुपपत्ते। न चैव भिन्नप्रकारकघटज्ञाना-दिना संशयनिवृत्त्यनुपपत्तिः; उक्तन्यायेनोक्तरूपेण विरोधित्वे स्थिते तत्र तादृशज्ञानान्तरस्य पूर्वज्ञानस्य तादृशनिश्चयसामग्रीत्वेन विरोधि-त्वस्य वा कल्प्यत्वात्। न च सामान्यप्रत्यासत्तिजन्यज्ञानेऽतिप्रसङ्गः; लौकिकत्वेन तद्विशेषणात्, तदनभ्युपगमाच्च, सामान्याप्रकारकत्व-विशेषणाच्च न प्रमेयवानयमिति ज्ञानेऽतिप्रसङ्ग इत्यस्मत्परमगुरुचरण-मतमेव सम्यक्॥

---

1 विशेषणरू—ट.　　2 भावात्—म.

## अधिकारिनिरूपणम्

अत्र चाधिकारिविशेषणं मुमुक्षैव। कामाधिकारे कामनाया एव पुष्कलाधिकारनिमित्तत्वात्। विवेकवैराग्यादिकं तु तद्धेतुतयापेक्ष्यते। न च सर्वेषां श्रुतौ सङ्कीर्तनादधिकारिनिमित्तत्वम्, मुमुक्षानु[1]माने सङ्कीर्तनस्यार्थवत्त्वात्। दृष्टद्वारा हेतुत्वे

### दीपनम्

अत्र विवेकादिषु। श्रवणादिकर्तव्यताप्रतिपत्तिनिमित्तं पुरुषविशेषणं पुष्कलं निरपेक्षम्। तत्किं विवेकादिकं नापेक्षणीयमेव, नेत्याह—विवेकेति। तथा च तदन्वयाद्यनुविधानस्यान्यथासिद्धेरिति भावः। मुमुक्षेति। "ब्रह्मवेद ब्रह्मैव भवति" इत्यादिफलवचनान्मुमुक्षा तावत्सर्वत्र कल्पनीया। अन्यथा फलवचनवैयर्थ्यात्। क्लृप्तायाश्च तस्या निरपेक्षायाः प्रवृत्तिसमर्थत्वान्न विवेकादेरप्यधिकारिविशेषणत्वं कल्प्यम्। विवेकादेश्चान्वयव्यतिरेकाभ्यां तद्धेतुत्वमेव। तथा च मुमुक्षा न सर्वत्र श्रूयत इति विवेकादिकं तां लक्षयतीति न तत्कीर्तनवैयर्थ्यम्, न वा प्रवृत्ति[2]हेतुत्वमित्यर्थः। विपक्षे गौरवमाह—दृष्टेति। दृष्टं विवेकादेरुत्तरोत्तरहेतुत्वम्। अदृष्टं साक्षाच्छ्रवणहे-

### पूरणी

ननु विवेकादिमदधिकारिकं श्रवणं नित्यम्, मुमुक्ष्वधिकारिकं च तत्काम्यमस्त्वित्यत्राह—ब्रह्मवेदेति। श्रुतिबलेन ज्ञानस्य मोक्षसाधनतावगम्यते, ज्ञानं च विचारसाध्यमिति ज्ञानसाधनीभूतविचारमात्रे मुमुक्षाया अधिकारिविशेषणत्वमवश्यकल्प्यमित्यर्थः। फलवचनेति। नित्यवत्फलश्रुत्यनुपपत्तेरित्यर्थः। ननु तर्हि समुच्चितानामधिकारिविशे[3]षणतास्त्वित्यत्राह—क्लृप्तायाश्चेति। अदृष्टमिति।

[1] मानेन—ग. छ. [2] हेतुरित्यर्थ—ख. [3] षणत्वमस्त्वि—ट.

संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् । अन्यथा सर्वविशेषणानामेकवाक्यस्थत्वासंभवेन प्रसज्यप्रतिषेधप्रसङ्गात् ॥

एवं साधनचतुष्टयसम्पन्नो जिज्ञासुः सन्न्यासस्य ज्ञानसाधनत्वमुपश्रुत्य नित्यादीनि कर्माणि सन्न्यस्यति । स च

---

दीपनम्

तुत्वम् । एकत्रवाक्येति । विवेकादि सर्वमेकत्र वाक्ये न श्रूयते, किं तु कचित्किंचित् । न च वाक्यस्य स्वार्थप्रतिपादने वाक्यान्तरापेक्षा । तथा च तत्तद्वाक्येनैकैकविशेषणविशिष्टस्य श्रवणकर्तव्यताप्रतीतिपूर्वकं सर्ववेदान्तप्रत्ययन्यायेन विशेषणान्युपसंहृत्य विशिष्टाधिकारिश्रवणकर्तव्यताप्रतिपत्तिर्वक्तव्या । तथा चैकैकवाक्यात्प्रसक्ता धीर्बाध्येतेति विधिव्यापारगौरवम् । मुमुक्षानुमाने तु सर्वत्र मुमुक्षोरेव श्रवणकर्तव्यताप्रतिपत्तिरिति नायं दोष [1] इत्यर्थः ॥

साधनेति । नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमादिसम्पत्, मुमुक्षा चेत्यर्थः । उपश्रुत्य "एतमेव

---

पूरणी

विवेकादेः साक्षाद्विचारहेतुत्वस्यान्वयव्यति[2]रेकागम्यत्वादिति भावः । ननु कृत्स्नं श्रवणविधिवाक्यजातं मिलित्वा प्रथमत एव विशिष्टाधिकारिकर्तव्यताप्रतिपादकमस्त्वित्याशङ्क्य निषेधति—**न च वाक्यस्येति** । **एकैकविशेषणेति** । निरपेक्षैकैकविशेषणविशिष्टाधिकारिण इत्यर्थः । **प्रसक्तेति** । नैरपेक्ष्यधीबाधः स्यादित्यर्थः । दोषान्तरमाह—**इति विधीति** । पूर्वं निरपेक्षतया बोधकत्वं पश्चाच्च सापेक्षतयेति विधिव्यापारवैषम्यं च स्यादित्यर्थः । यद्वा समुच्चितविशेषणविशिष्टाधिकारिकर्तव्यताबोधकत्वे तद्गौरवं स्यादित्यर्थः । **मुमुक्षानुमान इति** । विवेकादिपदैर्मुमुक्षालक्षणायामित्यर्थः । न च मुख्यार्थानुपपत्त्यभावाच्च

---

[1] इति भावः–ख.        [2] रेकगम्यत्वाभावादिति–ट.

पूरणी

लक्षणेति वाच्यम्; उक्तरीत्या साक्षाद्विवेकादेरधिकारिविशेषणत्वेनान्वयायोग्यत्वादिति भावः।

**नित्यानित्येति**। ननु विचारात्पूर्वं नैतद्विवेकसंभवः, तस्य "नित्यं," "विज्ञानमानन्दं ब्रह्म," "तद्यथेह कर्मचितो लोकः क्षीयत" इत्यादिश्रुतितात्पर्यावधारणाधीनत्वात्, तदवधारणस्यैतच्छास्त्रसाध्यत्वात्, अत एव न प्रथमतस्तद्धेतुकं वैराग्यादिकमिति चेन्न, वैशेषिकादिशास्त्राभ्यासिनोऽधीतस्वाध्यायस्याद्वैतविचारशास्त्रप्रवृत्तिमन्तरेणापि तच्छ्रुतितात्पर्यावधारणेन तद्विवेकोपपत्तेः। श्रुतितात्पर्यनिर्णायकन्यायपरिज्ञानाय मननोपयोगितया च वैशेषिकशास्त्राभ्यासस्य प्रथममावश्यकत्वात्। अतस्तद्धेतुकं वैराग्यमपि प्रथमतः रंहातिपादारम्भश्च तद्दार्ढ्यायेत्युक्तम्। ननु तथापि न मुमुक्षातः पूर्वं शमदमादिसम्पत्तिः, शमदमादेरङ्गत्वेनाधिकार्यनुष्ठेयतया मुमुक्षाधिकारानन्तरभावित्वादिति चेन्न; शमदमादेरङ्गत्वे मानाभावात्। "शान्तो दान्त" इत्यादिवाक्यस्य [1] सन्न्यासे शान्त्यादिमत्कर्तृकविचारसमुच्चयविधायकत्वस्य वक्ष्यमाणत्वात्। अस्तु वा शमादेरङ्गत्वम्, तथापि तस्य द्वैरूप्यम्, तथाहि—वैराग्ये सति रागद्वेषयोरभावात् स्वत एवान्तःकरणबाह्येन्द्रियव्यापारानुत्पत्तिलक्षणशमदमादि[2]सम्पत्। न चैतादृशशमदमादेरङ्गत्वम्; अननुष्ठेयत्वात्। किं तु मुमुक्षानन्तरं विषयचिन्तासान्निधानादिना चित्तेन्द्रियविक्षेपादिप्रसक्तौ यस्तन्निग्रहो यत्नेन क्रियते विचारोपयोगितया तादृक्शमदमादेर्यत्नसाध्यतयाङ्गत्वम्। अतो द्वैविध्याच्छमदमादेर्मुमुक्षातः पूर्वता अनन्तरता च सिद्धा। नन्वेवमपि न विवेकादेर्मुमुक्षायामुपयोगः, तस्याः स्वर्गकामनादिवदानन्दात्मकमोक्षज्ञानसाध्य-

---

[1] सन्न्यासशान्त्यादि–ट. [2] सम्पद्यते–ट.

**सन्न्यासः "अथ परिव्राडेकशाटी[1]परिवृतो मुण्डोदरपात्र्यरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सन्सार्ववार्णिकं भैक्षचर्यमाभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" इति मैत्रायणीश्रुत्या "अत**

### दीपनम्

प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति," "त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्पदं परं" [2]इत्यादिवाक्याज्ज्ञात्वेत्यर्थः। अत एव न सन्न्यासस्य श्रवणाङ्गत्वमिति भावः। ननु प्रमाणफलज्ञाने कथं सन्न्यासस्या-

### पूरणी

त्वादिति चेन्न, स्वर्गादावल्पायाससाध्ये [3]तदुत्पादेऽप्यनित्यत्वादिदोषदर्शनेन वैराग्यं विना बह्वायाससाध्यमोक्षेच्छाया अनुत्पत्तेः। स्वर्गादि[4]साधारण्येन तदुत्पत्तावपि नियतमुमुक्षाया अनुत्पत्तेः। तस्याश्च विचारहेतुत्वात्। केचित्तु वैराग्यानन्तरमेव मुमुक्षा, तदनन्तरं शमदमादिसम्पत्, मुमुक्षां विना तदयोगादित्याहुः।

**प्रव्राजिन इति**। भविष्यदर्थे णिनिः। **लोकमिति**। लोक्यते ज्ञायत इति लोकं ब्रह्म। लोकृ दर्शन इत्यस्माद्भावे [5]घञन्ततया दर्शनं वा। **अत एवेति**। स्वातन्त्र्येण ज्ञानसाधनत्वावगमादित्यर्थः। **मुण्डोदरपात्रीति मूलम्**। न विद्यते दरं भय यस्मात्तददरं मृण्मयं पात्रं तद्वान्, दरं दारुमयं विकारश्छान्दसो वा। केचित्तूदरपात्रीति छेदः। गुणश्छान्दसः। तेन उदरमेव पात्रं यस्येति पात्रान्तरसङ्ग्रहनिषेधः। अत एव बोधायनस्मृतौ 'कमण्डलु पात्रं' इति सामान्यनिषेध इत्याहुः।

---

1 परिहितो—ग 2 इत्येवमादिवाक्या—च. 3 तदुत्पत्तावप्य—ट. 4 साधारणत्वेन—ट. 5 घञन्तस्तथा च दर्शनं वा—ञ.

ऊर्ध्वं यज्ञोपवीतमासनं शिखां यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वा [1] अथ दण्डमादत्ते सखा [2] मे गोपाय" इति बौधायनस्मृत्या च विहितः परमहंस एव न त्रिदण्डः। अकर्मफलमोक्षैषिणः [3] सकर्मके तस्मिन्ननधिकारात् तत्त्यागस्यापि विहितत्वाच्च। तदुक्तं, सुरेश्वराचार्यैः—

"सर्वकर्मपरित्यागात्सन्त्यक्ताशेषसाधनः।
श्रुत्युक्तोऽत्र परिव्राट् स्यादैकात्म्यज्ञानजन्मने॥
मुण्डोऽपरिग्रहश्चेति प्रत्यक्षश्रुतिवाक्यतः।
तद्विरुद्धं स्मृतेर्वाक्यं नापेक्ष्यं दुर्बलत्वतः॥ इति॥

सन्न्यासश्च ज्ञानप्रतिबन्धककल्मषनिवृत्तिद्वारा भवति ज्ञान-

---

दीपनम्

प्रमाणस्य साधनतेत्यत आह—सन्न्यासश्चेति। तस्य ज्ञान-साधनत्वेन श्रवणात्प्रतिबन्धक[4]कल्मषनिवृत्तिरेव द्वारं, न तु यज्ञा-दिवत्कल्मषनिवृत्तिमात्रमित्यर्थः ननु शान्त्यादिवाक्ये श्रवणं न श्रूयत

---

पूरणी

तत्त्यागस्यापीति मूलम्। कर्ममात्रत्यागस्य विहिततया सकर्मकसन्न्या-सस्यासंभवादित्यर्थः। यद्वा तत्सन्न्यासाङ्गभूतशिखादित्यागस्यापि श्रुति-विहितत्वादित्यर्थः। सर्वकर्मेति मूले। सर्वकर्मणामननुष्ठेयत्वेन हेतुना त्यक्तकर्मकसाधनशिखायज्ञोपवीतादिरित्यर्थः। मुख्यार्थस्य लक्ष्यार्थसं-

---

1 अथैकं वैणवं दण्ड-ख. ग. 2 मा गोपाय-ग. 3 केऽस्मिन्न-ग.
4 कल्मषादिनि-ख.

साधनम्। स च श्रवणेन समुच्चीयते, "शान्तो दान्त" [1]इति वाक्येन तयोः समुच्चयविधानात्। शान्त्यादिपदैरेव तद्वत्कर्तृकविचारस्योपस्थितत्वात्। "वेदानिमं च लोकममुं च परित्यज्यात्मानमान्विच्छेत्" इति क्रमविधानात्प्राग्विचारात्कर्तव्य इति—

## दीपनम्

इत्यत आह—शान्त्यादीति। यथा "यस्य पर्णमयी जुहूर्भवति" इत्यनारभ्याधीतवाक्याज्जुहूद्वारोपस्थितक्रतुसंबन्धः पर्णतायाः प्रतिपाद्यते एवं शान्त्यादिपदोपस्थापितश्रवणेनोपरतिपदाभिधेयसन्न्यासस्य ज्ञाने समुच्चयः प्रतिपाद्यते। ज्ञानोद्देशेनैकवाक्ये श्रवणात्। शान्त्याद्यनेकगुणविधाने वाक्यभेदप्रसङ्गात्। नच शान्त्यादिविशिष्टज्ञानविधिः संभवति; [2]फलभूते ज्ञाने विध्यसंभवात्। अर्थप्राप्तत्वात्समुच्चयोऽपि सन्न्यासस्य न शान्त्यादिनेति भावः। ननु वाजपेयबृहस्पतिसवादिवत्सन्न्यासश्रवणयोरङ्गाङ्गिभाव एवास्त्वित्याशङ्क्य दर्शपूर्णमाससोमयागवदन्योन्यानपेक्षवाक्यान्तरोत्पन्नत्वान्नैव[3]मित्याह—क्रमेति। कर्तव्य इत्यत्र स चेत्यनुषङ्गः।

## पूरणी

बन्धविधौ दृष्टान्तमाह—यथा यस्येति। तत्र जुहूपदलक्ष्यनियोगीयजुहूसंबन्धवत् शान्तादिपदलक्ष्यविचारसमुच्चयः सन्न्यासस्य विधीयत इत्यर्थः। ननु मुख्यार्थस्य शान्त्यादेर्विध्यर्हतया अन्वयानुपपत्तेरभावान्न लक्षणेत्यत आह—शान्त्यादीति। सकृदुच्चरितविधिपदेन शान्त्याद्यनेकगुणानामन्वयानुपपत्तेर्युक्ता लक्षणेत्यर्थः। ननु सन्न्यासस्य शान्त्यादिसमुच्चयविधिरास्त्वित्यत आह—अर्थप्राप्तत्वादिति। सन्न्या-

[1] इत्यादि-ग. ङ. [2] फलीभूते-ख. च. [3] मिहेत्याह-ख.

"त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता" ॥

इति वार्तिकं क्रमपरं न विरुध्यते।

स च जन्मान्तरकृतोऽपि ज्ञान उपकरोति। तद्द्वारस्य ज्ञानप्रतिबन्धककल्मषनिवृत्तेस्ततोऽपि संभवात्। "यद्यातुरः स्यान्मनसा वाचा वा सन्न्यसेत्" इति श्रुत्या [1] आपत्सन्न्यासविधानाच्च। नचायं सन्न्यासो ज्ञानार्थो न भवतीति वाच्यम्;

---

दीपनम्

ननु सन्न्यासस्य श्रवणवत्प्राधान्याभ्युपगमे तस्याधिकारिविशेषणत्वप्रतिपादकवार्तिकविरोध इत्यत आह—त्यक्तेति। नन्वेव जनकादीनां कथं ज्ञानम्, सन्न्यासाभावादित्यत आह—स चेति। न केवलं सामर्थ्यरूपलिङ्गादेव जन्मान्तरे तस्य विनियोगः, अपि तु विध्यन्तरानुपपत्त्यापीत्याह—यदीति। न चायमिति। "सन्न्यासाद्ब्रह्मणः स्थानं" इति स्मृतेर्ब्रह्मलोकार्थो न ज्ञानार्थः, तत्साधना-

---

पूरणी

सस्याङ्गत्वप्रधानत्वाभ्यामुभयथापि श्रवणाङ्गभूतशान्त्यादिना समुच्चयसिद्धेरित्यर्थः। त्यक्ताशेषेति मूल, संसारं प्रजिहासतः ततस्त्यक्ताशेषकर्मण इत्यर्थः। वैराग्यहेतुकत्वात्कर्मत्यागस्येति मन्तव्यम्। विध्यन्तरेति। जन्मान्तरसन्न्यासस्य ज्ञानोपयोगं विना आतुर विधिवैयर्थ्यादित्यर्थः। तत्साधनेति। ज्ञानसाधनश्रवणस्याभावादित्यर्थः। ननु "सन्न्यासाद्ब्रह्मणः स्थानं" इति स्मृतेः सामान्यविषयत्वेन कथमातुरसन्न्यासपर्यवसानमिति चेन्न; अनातुरसन्न्यासस्य ज्ञानार्थ-

---

[1] आतुरस–ख.

दीपनम्

नुष्ठानाभावादिति भावः। अत्र हि "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति सन्न्यासः प्रकृतः। स च ज्ञानसाधनम्, फलान्तरस्याश्रवणात्। "विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति" इति सन्न्यासिनो धर्मान्विधाय [1] ब्रह्मभावापत्तिं च फलं श्रावयति। अतस्तदेव सन्न्यासस्यापि फलम्। श्रुत्यन्तरे च स्पष्टमेव ज्ञानं सन्न्यासस्य फलम्। अतो यद्यातुरवाक्येन स एवं परामृश्यते, आतुरस्यापि विरक्तस्यैवाधिकारात्। दध्ना जुहोति" इत्यत्रेव विहितप्रत्यभिज्ञाने सति आर्थान्तरकल्पनायोगात्। एवं सन्न्याससाधनत्वेन सिद्धयोर्वाङ्मनसयोः पुनरत्र परामर्शेनेतराङ्गव्यावृत्तिः प्रतीयते।

पूरणी

त्वेन प्रत्यक्षश्रुतिचोदिततया स्मृतेस्तद्विषयत्वानर्हत्वात्। न चैवं प्रत्यक्षश्रुतिविरोधे स्मृतेर्हानमिति वाच्यम्; आतुरसन्न्यासविषयत्वे संभवति सर्वथा तद्बाधायोगादिति भावः। ननु न फलान्तराश्रवणमात्रेण ज्ञानसाधनत्वम्; विश्वजिदादावतिप्रसङ्गादित्यत आह—**विवर्णेति**। **अतस्तदेवेति**। ब्रह्मभावस्य ज्ञानाधीनत्वात् ज्ञानमेव सन्न्यासस्य फलमित्यर्थः। **श्रुत्यन्तर इति**। "त्यजतैव हि तज्ज्ञेयं" इत्यादावपीत्यर्थः। **स एव** ज्ञानार्थसन्न्यास एव। कर्मफलविषयवैराग्यहेतुकत्वादपि न तस्य ब्रह्मलोकफलकत्वमित्याह— **आतुरस्यापीति**। नन्वविरक्तस्यैतत्सन्न्यासविधिरस्त्वित्यत आह— **दध्नेति**। वैराग्यहेतुकत्वेन प्रत्यभिज्ञायमानत्वादित्यर्थः। नन्वेवं पृथग्विधिवैयर्थ्यं स्यादित्यत्राह—**एवं सन्न्यास इति**। ननु गृहमेधीयस्य दर्शपूर्णमासविकृतितयातिदेशतः सर्वाङ्गप्राप्तावितराङ्ग-

[1] ब्रह्मभाव-च.

### दीपनम्

" आतुराणां च सन्न्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य सन्न्यासं तत्र पूरयेत् " ॥

इति स्मृतेश्च । यथा गृहमेधीये विकृतौ प्रकृतेरतिदेशेन प्राप्तयोराज्यभागयोः " आज्यभागौ यजति " इति पुनर्वचनादितराङ्गसाध्योपकारस्याज्यभागावच्छेदादर्थात्तद्व्यावृत्तिरेवमिहापि । अत्र चोपकारावच्छेदकत्वमात्रे इदं निदर्शनम् । अत एव सन्न्यासकर्मण एकत्वे कथं तस्य स्वस्थैरनुष्ठीय[1]मानस्योपकाराय सर्वाङ्गापेक्षा, आतुरैरनुष्ठीयमानस्य नेति अपेक्षातदभावयोरेकत्र विरोधादिति प्रत्युक्तम् । यथा स्वस्थैरनुष्ठीयमानस्य नित्यस्य सर्वाङ्गापेक्षायामप्यशक्तौ यत्किंचिदङ्गैरेवोपकारः, एवमिहाप्यातुरविधिसामर्थ्यात्कल्पनीयम्[2] ।

---

### पूरणी

व्यावृत्तिविधिर्युक्तः ; इह तु सन्न्यासस्यैकत्वेन प्रकृतिविकृतिभावविरहान्नातिदेशतः कृत्स्नाङ्गप्राप्तिः, येनेतराङ्गव्यावृत्तिविधिः स्यादित्यत्राह— अत्र चेति । अत्रोपदेशप्राप्ताङ्गसाध्योपकारस्याधिकारिपुरुषभेदेन वाङ्मनसाभ्यामवच्छेदेनेतराङ्गव्यावृत्तिर्विधीयते । एवं चोभयत्र प्रापकभेदेऽपि उपकारावच्छेदस्योभयत्र तुल्यत्वात्तन्निदर्शनं युक्तमित्यर्थः। [3]एककर्मण्युपकारस्याधिकारिभेदेनानियताङ्गसाध्यत्वमयुक्तमिति कैश्चिद्दूषणमापादितं, तदपि नित्यकर्मनिदर्शनेन निरस्तमित्याह—अत एवेति । ननु काम्यसन्न्यासस्य नाङ्गविकलता युक्ता ; साङ्गकर्मण एव फलोत्पादकत्वादित्यत्राह—आतुरविधीति । अविकलाङ्गा-

[1] मानस्य नित्यस्योप–ख. [2] यः, ख–घ. [3] एककरणोप–ट.

**प्रसिद्धस्यैव सन्न्यासस्य दशाविशेषे "आज्यभागौ यजति" इतिवादितराङ्गव्यावृत्त्यभिप्रायेण विधानात्। "एष पन्था ब्रह्मणा ह्यनुवित्त" इत्युत्तर[1]वाक्येन तस्यापि परामृष्टत्वाच्च॥**

---

### दीपनम्

उक्तस्मृतिश्च नान्तरीयकफलविषया. अन्यथा सन्निहितिपरित्यागोऽश्रुतकल्पना च स्यादित्यभिप्रेत्याह—**प्रसिद्धस्यैवेति। पन्थाः** मोक्षोपायः। अतोऽपि सन्न्यासो न श्रवणाङ्गमिति भावः॥

---

### पूरणी

स्काम्यात्फलसिद्धिरिति न्यायलब्धस्यार्थस्यैतद्वचनसामर्थ्याद्बाध एवेत्यर्थः। **उक्तस्मृतिरिति।** ब्रह्मलोके गत्वा ब्रह्मणा सहात्मविचारं दृढीकृत्य तत्साक्षात्कारान्मुच्यत इत्येवं परेत्यर्थः। **सन्निहितेति।** क्लृप्तज्ञानफलपरित्यागेनाक्लृप्तब्रह्मलोकफलकल्पना स्यादित्यर्थः। ब्रह्मणेति श्रुतौ ब्रह्मणा वेदेनेत्यर्थः। चतुर्मुखब्रह्मणेत्यपरे। **अतोऽपि—**स्वातन्त्र्येण मोक्षोपायत्वप्रतिपादकैतच्छ्रुतितोऽपीत्यर्थः॥

## सन्न्यासप्राधान्यप्रतिपादनम्

ननु सन्न्यासस्य प्रधानत्वेन निरपेक्षतया भिन्नवाक्यचोदितत्वेन व्रीहियववद्विकल्पः स्यत्। न च शान्तादिवाक्येनैतत्समुच्चयविधेर्नैवमिति वाच्यम्; तत्र तद्विचा[2]रोपस्थापकपदाभावात्। न च शान्तादिपदैर्लक्षणया तदुपस्थितिः; अनुपपत्तेरभावात्। न च शान्ताद्यनेकपदानामेकविधिपदेनान्वयानुपपत्तिः; आवृत्त्याप्यन्वयोपपत्त्या तद्योग्यतानुपपत्तेर-

---

[1] वाक्ये—ख. [2] रवाचक—ग.

## पूरणी

भावात्। एकवाक्यत्वासंभवे वाक्यभेदस्यादोषत्वात्। यद्वा शान्त्यादिगुणविशिष्टश्रवणस्यैवात्र विधिः। नच श्रोतव्य इति विधिवैयर्थ्यम्; अस्योत्पत्तिविधित्वात् तस्य त्वधिकारिविधित्वात्। अपि च सन्न्यासस्य प्रधानत्वे [1]("सन्न्यस्य श्रवणं कुर्यात्" इति श्रुतिविरोधः, "वाजपेयेनेष्ट्वा"इत्यादौ तस्या अङ्गत्वबोधकत्वदर्शनात्) किं च "इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत्" इति सन्न्यासिनः श्रवणाकरणप्रत्यवायोऽपि सन्न्यासस्याङ्गत्वं साधयति। तथा हि—नेयं श्रुतिः सन्ध्यावन्दनादिवत् श्रवणनित्यत्वपरा; श्रवणस्य काम्यत्वात्, किं त्वारम्भादूर्ध्वं नित्यतापरा। सा चैवं यदि सन्न्यासिनः श्रवणारम्भः स्यात्। स च सन्न्यासाङ्गत्वे, अङ्गारम्भस्यैवाङ्गिनोऽप्यारम्भरूपत्वात्। ततः प्रत्यवायश्रुत्यनुरोधेनाप्यङ्गत्वम्। न च "एतमेव प्रव्राजिन" इति श्रुत्या ज्ञानफलकत्वावगमात्प्राधान्यम्; तत्र सत्यलोकस्यैव काम्यत्वात्, योगापेक्षया रूढेर्बलवत्त्वेन लोकशब्दस्य स्थानपरत्वात्। न च आत्मायं लोक इति पूर्ववाक्योपदिष्टात्मरूपलोकस्यैव तच्छब्देन परामर्श इति न लोकपदस्य स्थानपरतेति वाच्यम्; तत्रापि किं प्रजया धनेन करिष्यामो येषा नोऽयमात्मा लोक इत्यात्मनः पुत्रसाध्यलोकरूपत्वोक्त्या लोकशब्दस्य स्थानपरत्वात्, "सन्न्यासाद्ब्रह्मणःस्थानं" इति स्मृतेश्च सत्यलोकरूपविशेषपर्यवसानात्। न चाङ्गस्य प्राधान्यविरोधः; बृहस्पतिसवादिवदुभयरूपत्वाङ्गीकारात्। यदपि जन्मान्तरसन्न्यासस्याप्युपयोग इति, तदपि न; सम्यक्पूर्वजन्मनि तदनुष्ठानसंशयेन श्रवणादौ निष्कम्पप्रवृत्त्यनुपपत्तेरिति॥

[1] कुण्डलितवाक्यस्थाने मातृकान्तरे—परित्यज्येति क्त्वाश्रुतिर्विरुध्यते। न चानन्तर्यपरत्वम्; सम्भवत्समानकर्तृकत्वलक्षणमुख्यार्थस्य त्यागायोगात्। इत्यस्ति।

## पूरणी

अत्र प्रतिभाति—सन्न्यासस्य प्रधानत्वेऽपि न विकल्पः; शान्तादिवाक्येन समुच्चयविधानात्। शान्त्यादीनामेकस्मिन्वाक्ये विध्यनुपपत्त्या तत्पदैर्लक्षणया विचारोपस्थानात्। न च वाक्यभेदेनापि विध्युपपत्तेर्न लक्षणेति वाच्यम्; [1]लक्षणामङ्गीकृत्यैकवाक्यताया बलवत्त्वात्। अत एव प्रकरणान्तरनयेऽग्निहोत्रपदलक्षणयाप्येकवाक्यतोक्ता। न च समुच्चयपरचकारादेरश्रवणान्न तद्विधिरिति वाच्यम्; द्योतकचकारादिविरहेऽपि उक्ततात्पर्यलभ्यद्योत्यार्थस्येतरेतरयोगद्वन्द्वादाविवानापायात्। नापि शान्त्यादिविशिष्टविचारविधिः; विचारपदाश्रुतेः। न च पश्येदित्यनेन तल्लक्षणा; अनुपपत्तेरभावात्, वाक्यस्य समुच्चयविधायकत्वेनाप्युपपत्तेः, विधिपदलक्षणाया अयुक्तत्वाच्च। किं च श्रोतव्य इति विधिवैयर्थ्यम्। न चास्योत्पत्तित्वं तस्यात्मज्ञानफलसंबन्धादधिकारपरत्वं चाङ्गीकार्यम्; शान्त्याद्यधिकारावीशिष्टतयात्र वाक्ये विचारविधावधिकारान्तराकाङ्क्षाविरहात्तदन्वयार्थे श्रोतव्यविधेरानर्थक्यस्य दुर्वारत्वात्। न चैवं क्त्वाश्रुतिविरोधः; "त्यजतैव हि तज्ज्ञेयं" इत्यादिश्रुत्या स्वातन्त्र्येण ज्ञानसाधनत्वावगमात्, "दर्शपूर्णमासाभ्यामिष्ट्वा" इतिवत् क्त्वाश्रुतेः क्रममात्रपरत्वात्। नापि प्रत्यवायश्रुतिबलादङ्गत्वम्; सन्न्यासश्रवणयोराग्नेयादिवत्समुच्चितप्रधानत्वेन पूर्णमासारम्भस्य दर्शारम्भतावत् सन्न्यासारम्भस्य श्रवणारम्भरूपतया तदुपपत्तेः। यच्चोक्तं जन्मान्तरसन्न्यासस्योपकारकत्वे श्रवणदौ निष्कम्पप्रवृत्तिर्न स्यादिति, तदपि चिन्त्यम्; अङ्गत्वपक्षेऽपि जनकादीनां ज्ञानानुरोधेन पूर्वजन्मसन्न्यासोपयोगस्यावश्यवाच्यत्वादिति संक्षेपः॥

---

1 लक्षणापेक्ष्यैक—झ.

## पूरणी

## सन्न्यासप्राधान्यखण्डनम्

वस्तुतस्तु सन्न्यासो न प्रधानम्, ज्ञानकारणस्य सन्न्यासस्य ज्ञानकरणविचारेण समुच्चयानुपपत्तेः। न च सन्न्यासोऽपि कल्मषनिवृत्तिव्यापारवत्तया ज्ञानकरणमिति वाच्यम्; तथा सति प्रमाणत्वेन व्यपदेशापत्तेः। किंच स्वातन्त्र्येण पृथक्तज्जातीयकार्यजननसमर्थानां तत्कार्ये समुच्चयः, यथा प्रत्येकमुत्पत्त्यपूर्वजनकानामाग्नेयादीनां परमापूर्वे। न चात्र सन्न्यासात्पृथक्किंचिदर्थप्रमितिरस्ति, येनात्मप्रमितौ समुच्चयः स्यात्। अन्यथा कर्मणामपि कल्मषनिवृत्तिद्वारा ज्ञानोपयोगित्वेन समुच्चयप्रसङ्गात्। न च तेषां कल्मषनिवृत्तिमात्रं द्वार न ज्ञानप्रतिबन्धककल्मषनिवृत्तिरिति वाच्यम्; विविदिषावाक्येनेष्यमाणज्ञानोद्देशेन कर्मविधिपक्षे ज्ञानप्रतिबन्धककल्मषनिवृत्तेरेव द्वारत्वात्। यदि च तेषां ज्ञानोद्देशेन विधावपि ज्ञानकरणत्वायोग्यतया न प्राधान्यम्, तदा सन्न्यासेऽपि तुल्यम्। न चैवं सन्न्यासवत्तेषां श्रवणाङ्गत्वापातः; विनियोजकश्रुत्यभावेनाधानवदुपकारकत्वेऽप्यनङ्गत्वात् सन्न्यासे त्वङ्गत्वबोधकक्त्वाश्रुतेः सत्त्वात्। न च कथं प्रतियोगितदभावयोरेकद्वारतेति वाच्यम्; कर्मकालीनज्ञानप्रतिबन्धककल्मषनिवृत्तेः कर्मसाध्यत्वात्। अत एव सन्न्यासोत्तरकालीनकल्मषनिवृत्त्यर्थमेकशाटीपरिधानादिनियमविधिः। अतोऽवान्तररूपभेदान्नैकद्वारतेत्ययं दिक्॥

किं बहुना मननादेरप्येवं समुच्चयः स्यात्, तस्याप्यसंभावनानिवृत्तिद्वारा ज्ञानोपयोगित्वात्। न च "त्यजतैव हि तज्ज्ञेयं" इत्यादिश्रुत्या सन्न्यासस्य ज्ञानसाधनत्वावगमात्प्राधान्यमिति वाच्यम्;

## पूरणी

कृष्या [1] जीवनमित्यादाविव तृतीयायाः प्रयोजकत्वमात्रार्थत्वात्। नन्वङ्गत्वे सिद्धे श्रुतेरन्यथा वर्णनम्, तत्सिद्धिश्च [2] क्त्वाश्रुत्या, तस्याश्चैतच्छ्रुतितुल्यतया विनिगमनाविरहेण नार्थनिर्धारकत्वम्, एतच्छ्रुत्यनुरोधेन तस्याः क्रमपरत्वस्यापि वक्तुं शक्यत्वादिति चेत्, उक्तन्यायानुगृहीतत्वेन तच्छ्रुतेर्बलवत्त्वात्। वस्तुतो ज्ञानाकरणस्य सन्न्यासस्य ज्ञानोद्देशेन स्वातन्त्र्येण विधानानर्हत्वात् श्रवणविधिमपेक्ष्य तत्सहकारितया तद्विधिर्वाच्यः। ततश्च तदधिकारप्रत्यभिज्ञानात् "समिधो यजति" इत्यादाविव न प्रधानविध्यन्तरावगम इति तदङ्गतैव। ज्ञानफलश्रुतिश्च "अङ्गेषु फलश्रुतिरर्थवादः स्यात्" इति न्यायेन पर्णतादौ दुष्कीर्तिश्रवणनिवृत्तिफलश्रुतिवत् लाङ्गलेन वय जीवाम इतिवच्च प्राशस्त्यपरा विहिताधिकारप्रत्यभिज्ञानद्वारा "समिधो यजति" इत्यादिवाक्यगतविधिप्रत्ययवदङ्गत्वपरैव वा। अन्यथा—

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः"

इत्यागमात्कर्मणामपि श्रवणसमुच्चयापत्तिरितीयं दिक्॥

अपि च सन्न्यासस्य पृथक् ज्ञानोद्देशेन विधौ व्रीहियववद्विकल्पः स्यात्। न च शान्तादिवाक्येन तत्समुच्चयविधिः; शान्तादिपदैः प्रत्येकं विचारलक्षणायां दान्तादिपदवैयर्थ्यापत्तेः। न चार्थवादन्यायेन पदसमुदाये तल्लक्षणा; समुदायलक्षणाया अत्यन्तं जघन्यत्वात्। अर्थवादस्थले प्रत्येकपदैर्गुणानवभासेन तदालम्बनप्राशस्त्याप्रतीत्या अगत्या तथा स्वीकारात्। नच प्रकृतेऽपि शान्त्याद्यनेकगुणविधौ वाक्यभेदापत्तेरस्त्यगतिरिति वाच्यम्; शान्त्यादिगुणविशिष्टविचार-

[1] जीवनमित्यादौ कृषिक्रियाया इव प्रयो-ग. [2] श्रुत्या-ग.

## पूरणी

विधाना[1]त्तदुपपत्तेः। न च विचारपदाश्रुतेर्नैवमिति वाच्यम्; भूत्वेति समानकर्तृकक्रियावाचकत्वाश्रुत्या तद्विशिष्टक्रियान्तरप्रतीतेः। तस्याश्च योग्यतया वाक्यान्तरपर्यालोचनया च विचारपर्यवसानात्। अतस्तद्विशिष्टविचारस्य "आत्मानं पश्येत्" इति विधिसमानपदोपात्ततया साध्यतयावगम्यमानज्ञानोद्देशेन तद्विधिपदसंबन्धाद्विधेयता। यद्वा पश्येदिति विचारलक्षणा, अनेकपदलक्षणापेक्षया एकपदलक्षणाया युक्तत्वात्। न च श्रोतव्य इति विधिवैयर्थ्यम्; तस्य "ब्रह्म वेद ब्रह्मैव भवति", "तरति शोकमात्मवित्" इत्यर्थवादावगतमोक्षफलसाधनद्रष्टव्यपदानूदितात्मसाक्षात्कारफलसंबन्धार्थत्वात्। न च शान्त्याद्यधिकारावगमेनाधिकारान्तरनैरपेक्ष्यम्; शान्त्यादेराहवनीयादिवदधिकारान्तरपरतन्त्रत्वेन स्वतन्त्राधिकारान्वयाविरोधात्। श्रोतव्यश्रुतेर्मननाद्यङ्गविध्यर्थत्वाच्च। न च तत्र मनननिदिध्यासनात्मकगुणद्वयश्रुतेर्वाक्यभेदापत्तितौल्येनात्र गुणविशिष्टविधिस्तत्र तदुद्देशेन गुणद्वयाविधिरित्यत्र विनिगमनाविरहेण तत्रैव गुणद्वयविशिष्टविचारविध्यापत्तेर्नात्र विशिष्टविधिनिर्वाह इति वाच्यम्; अत्र गुणचतुष्टयश्रुतेरनेकवाक्यभेदापत्तेस्तदपेक्षया वाक्यभेदद्वयस्य तत्र युक्तत्वात्। पृथग्विध्यर्थकतव्यश्रुतेश्च तत्र पृथग्गुणद्वयविधिरत्र तु विशिष्टविधिरित्यस्मत्परमगुरुचरणमतमेव सारम्॥

ननु सन्न्यासस्याङ्गत्वे तस्य प्रधानश्रवणादिसमयकर्तव्यतया जन्मान्तरसन्न्यासस्योपयोगाभावात् जनकादीनां न ज्ञानं स्यादिति चेन्न; आहवनीयादिवद्विप्रकर्षानुष्ठितस्यापि सन्न्यासस्याङ्गत्वाविरोधात्। किं च प्रधानत्वेऽपि सन्निकर्षानुष्ठानं बाधकं विना न्याय्यमिति जन्मान्तर-

---

[1] तदनु—ट.

## पूरणी

सन्न्यासस्य नोपयोगसंभवः। यदि जनकादीनां ज्ञानप्रतिपादकागमानुरोधात्, तदा प्रकृतेऽपि तुल्यम्। वस्तुतस्तु नोभयथापि जन्मान्तरसन्न्यास उपयुज्यते, तज्ज्ञाने मानाभावात् श्रवणादौ प्रवृत्त्यनुपपत्तेः। न च चित्तशुद्ध्या तदनुमानम्; तस्या दुरितनिवृत्तिरूपत्वेनातीन्द्रियत्वात् कर्मभिरपि तत्संभवाच्च। तज्जनितशुद्धिवैलक्षण्यस्य प्रत्यक्षेण ज्ञातुमशक्यत्वाच्च। न चैवं जनकादीनां ज्ञानप्रतिपादकागमविरोधः; तस्य तेषां ज्ञानोद्देशेन कर्मानुष्ठानपरत्वात्। अन्यथा सन्न्यासिनः कर्मानधिकाराद्दीर्घसत्रादिदर्शनविरोधापत्तेः। अतस्तेषामपि ज्ञानोद्देशेन सत्कर्मानुष्ठानानन्तरं तत्त्यागात्मकसन्न्यासपूर्वकविचारादेव ज्ञानम्। तन्त्रेषु जन्मान्तरसन्न्यासस्योपयोगकथनं ततोऽपि कल्मषनिवृत्त्युपपादनपरम्, न त्वैहिकसन्न्यासनैरपेक्ष्येण श्रवणानुष्ठानपरम्। न चैवं काशिमरणादिना गृहस्थानां श्रुतिसिद्धमुक्त्यनुपपत्तिः; तत्र भगवदुपदेशस्य मनननिदिध्यासनाङ्गनैरपेक्ष्यवदेतन्नैरपेक्ष्येणापि श्रुतिप्रमाणबलेन ज्ञानफलसाधनत्वोपपत्तेरिति युक्तमुत्पश्यामः।

अथ वा सन्न्यासो द्विविधः काम्यकर्मफलत्यागात्मकः सर्वफलत्यागात्मकश्च। तत्र द्वितीयो "मुण्डोऽपरिग्रह" इत्यादिश्रुत्युक्तनियमोपेतः आश्रमरूपः। आद्यस्तु निष्कामं ज्ञानोद्देशेन वा नित्यकर्मानुष्ठानसंयुतः। तदुक्तम्—

"काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥" इति॥

अयं च द्विविधोऽपि सन्न्यासः श्रवणाङ्गम्; "सन्न्यस्य

## पूरणी

श्रवणं कुर्यात्" इति सामान्यतो विधानात् । तत्र जनकादीनां द्वितीयाभावेऽपि प्रथमसन्न्यासात् श्रवणादिकं युक्तमिति सर्वं रमणीयम् ॥

न चैवमातुरसन्न्यासविध्यनुपपत्तिः ; तस्य पृथक् ब्रह्मलोकफलकत्वेन काम्यत्वात् "सन्न्यासाद्ब्रह्मणः स्थानं" इति स्मृतेः। न च तस्या नान्तरीयकफलविषयत्वम् ; ब्रह्मलोकपर्यन्तकर्मफलत्यागिनो मुमुक्षोर्ब्रह्मलोकस्यानपेक्षितत्वेन तन्नान्तरीयकफलविषयत्वस्याप्यनुपपत्तेः । न च विचारदार्ढ्याय तल्लोकगमनापेक्षा, अत एव "ते ब्रह्मलोक" इति श्रुतिस्तदर्थमाहेति वाच्यम्; ब्रह्मणो बहुव्यसनितया तन्निकटे तद्दार्ढ्यानुपपत्तेः। ब्रह्मविद्वन्तरसन्निधेरपि तल्लाभसंभवेन तदर्थं तत्प्रार्थ्यतानुपपत्तेश्च । अत एवोक्तश्रुतिरपि नोक्ताभिप्राया । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति श्रुत्या साक्षाद्ब्रह्मलोकफलकत्वश्रुतेश्च । न च तत्र यौगिकं लोकपदं ज्ञानार्थकमिति वाच्यम् ; योगाद्रूढेर्बलवत्त्वात् । न च तस्य लोकमात्रपरत्वेन कथं ब्रह्मलोकपरत्वमिति वाच्यम् ; "सन्न्यासाद्ब्रह्मणः स्थानं" इत्यादितो विशेषोपसंहारात्। नचेयं स्मृतिर्जिज्ञासासन्न्यासानन्तरमपि बाधिर्यादिदोषेण श्रवणाभावविषयेति वाच्यम् ; तत्सन्न्यासस्यातुरसन्न्यासतुल्यत्वात् , तदेकविषयत्वे नियामकाभावात्, तत्सन्न्याससमये ब्रह्मलोकस्यानाकाङ्क्षितत्वाच्च । "ते ब्रह्मलोके" इति श्रुतिरपि ब्रह्मलोकेच्छया सन्न्यस्तानां तल्लोकगतानामर्थाच्छ्रवणलाभेऽन्यस्य वा कस्यचिद्ब्रह्मसाक्षात्कारोदये मुक्तिपरा । अत एव—

"सन्न्यस्तोऽहमिति ब्रूयात्प्राणैः कण्ठगतैरपि ।
स भित्वा मण्डलं भानोर्ब्रह्मलोकमवाप्नुयात्" ॥

**एवं साधनचतुष्टयसम्पन्नो जिज्ञासुः कृतसन्न्यासः "अथातो ब्रह्मजिज्ञासा" इति सूत्रेण "आत्मा वाऽऽरे द्रष्टव्यः श्रोतव्यो मन्तव्य" इत्यादिवाक्यार्थमद्वैतात्मज्ञानसाधनवेदान्त-**

---

दीपनम्

**अद्वैतात्मज्ञानसाधनेति।** उक्तसूत्रे कर्तव्येति पदमध्याहर्तव्यम्। अन्यथा सूत्रस्य निरर्थकानुवादत्वप्रसङ्गात्। ननु ब्रह्मणो जिज्ञास्यत्वोपदेशेन सन्दिग्धत्वसप्रयोजनत्वे सूचिते इति न निरर्थकानुवाद इति चेत, किं ततः? मुमुक्षुप्रवृत्तिरिति चेत, [1] एतस्य नियमविध्यपेक्षितन्यायसूचकत्वाभावे वक्ष्यमाणविषया मुमुक्षोरन्यत्रापि प्रवृत्तिप्रसङ्गात्। अतः श्रोतव्यादिविधिसमानार्थित्वाय कर्तव्यपदमध्याहर्तव्यमेव। एवं च प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासंभावात्प्रकृत्यर्थसामान्यस्य च विचारानन्वयात् पदोपस्थापितस्यैव

---

पूरणी

इति स्मृत्यन्तरे आतुरसन्न्यासस्य ब्रह्मलोकफलकत्वं स्पष्टमिति न किंचिदनुपपन्नमिति संक्षेपः॥

**अन्यत्रापीति।** द्वैतात्मविचारेऽपीत्यर्थः। ननु कर्तव्यपदाभावेऽपीदं सूत्रं न्यायसूचकमस्त्वित्यत आह—**अत इति।** तत्समानार्थत्वं विना तन्न्यायसूचकत्वापरिज्ञानात्। अन्यथा ब्रह्मज्ञानफलत्वविषयन्यायमात्रसूचकमिदमित्यवधार्येतेति भावः। अथशब्दोपात्ताधिकार्यन्वयार्थमपि तत्पदमध्याहर्तव्यम्, विधेयान्वयित्वात्तस्येत्यपि द्रष्टव्यम्। ननु प्रकृतौ किमिति साध्यज्ञानलक्षणेत्यत आह—**प्रकृत्यर्थेति।** ज्ञानसामान्यस्य विचारपूर्वं सिद्धत्वेन तत्साध्यत्वेनान्वयायोग्यत्वादित्यर्थः। ननु तदन्वययोग्यतावशान्निर्णयात्मकं तज्ज्ञानं लभ्यत इति किं लक्षणयेत्यत आह—**पदोपस्थापितेति।** पदवृत्त्युपस्थापिते-

---

[1] ज्ञ वेदश्रुतस्य नियम—ख.

## दीपनम्

वाक्यार्थान्वयनियमाच्च ताभ्यां साध्यं ज्ञानं विचारं च लक्षयित्वा ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रार्थ इति तन्मूलस्य "आत्मा वारे" [1]इत्यादेरपि स एवार्थः। [2]तत्रत्यात्मशब्दस्य "इदं सर्वं यदयमात्मा", "आत्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं" इत्यादिपूर्वापरपर्यालोचनया अद्वितीयात्मैवार्थः, यथा "व्रीहीनवहन्ति" इत्यत्र व्रीहीणां दृष्टपुरोडाशसाधनत्वेऽप्यपूर्वजनकप्रोक्षणादिविशिष्टप्रकृतालौकिकव्रीहि[3]विशेषा व्रीहिपदस्य।

---

## पूरणी

त्यर्थः। वृत्त्यनुपस्थापितत्वे तज्ज्ञानस्य तदन्वयो न स्यादिति भावः। **आत्मा वेति**। द्रष्टव्यः साक्षात्कर्तव्य इति फलनिर्देशः। श्रोतव्य इत्यनेन आत्मसाक्षात्काराय विचारः कर्तव्य इति विधिः॥

ननु श्रुधातोः श्रौत्रज्ञानार्थत्वात्कथं विचारलाभः, नच लक्षणा; मुख्यार्थसंबन्धाभावात्, विधिलक्षणाया अयुक्तत्वाच्चेति चेन्न; लक्षणया विचारोपस्थितेः, नच संबन्धाभावः, ज्ञानविचारयोः साध्यसाधनभावसंबन्धात्। यद्यपि श्रौत्रं ज्ञानं न विचारसाध्यम्, तथापि निर्णयरूपं यत्किंचिज्ज्ञानं तत्साध्यमिति तत्संबन्धो युक्त.। विधिलक्षणापि "साम्ना स्तुवीत", "नेक्षेतोद्यन्तमादित्यं" इत्यादिवदगत्या युक्ता। यद्वा अभिधयैव तदुपस्थितिः, धातूनामनेकार्थत्वात्। प्रचुरप्रयोगमूलत्वाच्छक्तिकल्पनायाः। स्मृत्यादिषु श्रुधातोर्विचारे बहुलप्रयोगदर्शनादिति सर्वं रमणीयम्॥

**व्रीहिपदस्येति** प्रकृतमात्रपरत्वे निदर्शनम्। अतो व्रीहिपदस्य

1 इत्यस्यापि-ख. 2 तत्र त्वात्म-क. 3 विशेषार्थो व्री-क.

### दीपनम्

इमं चार्थं सूत्रकारो ब्रह्मशब्देन सूचयति। ब्रह्मशब्दस्य तत्रैव

---

### पूरणी

लक्षणया नियोगीयव्रीहिविशेषपरत्वम्। आत्मशब्दस्य त्वभिधया। नच जीवे रूढस्यात्मशब्दस्य ब्रह्मणि लक्षणैवेति वाच्यम्; वैश्वानरनये जीववद्ब्रह्मण्यप्यात्मशब्दस्य मुख्यत्वव्युत्पादनात् "आत्मानं वैश्वानरमुपास्त" इत्यत्रोपास्यो वैश्वानरो जीवो ब्रह्म वेति संशये आत्मशब्दसामानाधिकरण्याज्जीवः, आत्मशब्दस्य तत्रैव मुख्यत्वादिति पूर्वपक्षितेआत्मशब्दस्य सर्वात्मत्वविशिष्टवस्तुवाचिनो ब्रह्मण्यपि मुख्यत्वात् विश्वश्चासौ नरश्च विश्वनरः सर्वात्मकः पुरुषः स एव वैश्वानर इति वैश्वानरो ब्रह्मैवेति हि तत्रोक्तम्। तस्मादात्मशब्दस्याभिधयैव प्रकृतपरत्वमिति वैषम्यमकिंचित्करं वेदितव्यम्। वस्तुतस्तु सर्वव्यापित्वविशिष्टवाचकस्याद्वितीयात्मनि सत्यादिपदवल्लक्षणैवेति न वैषम्यशङ्केति तत्त्वम्॥

**ब्रह्मशब्दस्येति।** निरवधि बृहत्त्वं ब्रह्मशब्दार्थः। तच्च सर्वात्मकतयेत्याद्वितीयात्मनि ब्रह्मशब्दस्य वृत्तेरित्यर्थः। ननु समुदायेनैकविचारलक्षणोपपत्तौ प्रकृतिप्रत्यययोरुभयत्रापि लक्षणाद्वयगौरवम्। प्रतीतिष्यमाणज्ञानत्यागेन प्रकृत्यंशेन लक्षणया पुनस्तस्य स्वीकाराद्वान्तभोजनन्यायप्रसङ्गः। प्रत्ययांशे लक्षणाया अदृष्टत्वाच्च। किं च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमान्न प्रत्ययेन स्वतन्त्रविचारलक्षणा युक्ता। "जिज्ञासापदेन" इति विवरणग्रन्थविरोधाच्चेति।

अत्र प्रतिभाति– वक्ष्यमाणरीत्या समुदायलक्षणाया अयोगाल्लक्षणाद्वयगौरवं न दोषाय। समुदायोपात्तत्यक्तेष्यमाणज्ञानस्य पुनः

## पूरणी

प्रकृत्यंशेन स्वीकारेऽपि समुदायेन तदस्वीकारान्न वान्तभोजनन्यायप्रसङ्गः । न च प्रत्ययमात्रलक्षणा न दृष्टचरी ; "प्रयाजशेषेण हवींषि" इत्यादौ तृतीयादिप्रत्ययस्य कर्मत्वादौ लक्षणाया अभ्युपगमात् । रथो गच्छति काष्ठानि पचन्तीत्यत्र कृतिवाचकाख्यातस्य धात्वर्थानुकूलव्यापारमात्रे लक्षणाया दृष्टत्वाच्च । प्रकृतिप्रत्ययार्थयोर्विचारज्ञानयोः फलफलीभावेन परस्परमन्वयान्न प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वानियमविरोधः "जिज्ञासापदेन" इति ग्रन्थस्य सफलविचारपरत्वान्न तद्विरोधो[1]वेति सर्वं सुस्थम् ।

केचित्तु प्रकृतिप्रत्ययसमुदायेन विचारो लक्ष्यते । न च पदसमुदायलक्षणा न व्युत्पन्नेति वाच्यम् ; अर्थवादस्थले "अर्धमन्तर्वेदि मिनोति" इति वाक्ये च दृष्टत्वात् । न चान्तर्वेदीति वाक्ये लक्षणायां बीजाभावः, मुख्यार्थस्यान्तर्वेद्यर्थबहिर्वेद्यर्थद्वयस्यावटखनननान्वायनुपपत्तेरभावादिति वाच्यम् ; यूपायावटं खनतीत्यस्य प्रत्येकमर्थान्वये प्रत्युद्देशं वाक्यपरिसमाप्तिन्यायेनावटद्वयप्रसक्तौ तस्यैकयूपान्वयानुपपत्तेः सत्वात् । न च शक्यसंबन्धाल्लक्षणा, समुदायशक्यार्थस्यैकस्याभावात न तल्लक्षणेति वाच्यम् ; अर्थवादादिवत्प्रत्येकपदशक्यसंबन्धादेव तदुपपत्तेः । किंच लाघवात् ज्ञाप्यसंबन्धे लक्षणा, समुदायज्ञाप्यार्थसंबन्धश्चात्रास्ति । अत एव विषं भुङ्क्ष्वेत्यादौ लोके तादृशार्थसंबन्धाच्छत्रुगृहभोजननिवृत्तिर्लक्ष्यते । अन्यथा द्विरेफादिपदेषु भृङ्गाद्यर्थविषये न लक्षितलक्षणा स्यात् । द्विरेफपदस्य द्वौ रेफौ यस्येति बहुव्रीहितया लक्षकत्वेन तच्छ[2]क्यार्थाभावात् । अत एव द्विरेफपदलक्ष्यभ्रमरशब्देन वाच्यवाचकभावसंबन्धे भृङ्गस्येति लक्ष्यार्थसंबन्धाल्लक्षणेति लक्षितलक्षणाव्यवहारः ॥

---

[1] धोऽपीति—म. [2] क्याभावात्—म.

## पूरणी

ननु किमियं लक्षणा जहती अजहती वा? नाद्यः; इष्यमाणज्ञानत्यागे ज्ञानाय विचारः कर्तव्य इत्यन्वयानुपपत्तेः। न द्वितीयः; छत्रिणो गच्छन्तीत्यादौ गन्तृत्ववद्विचारज्ञानयोरनुगतैकलक्ष्यतावच्छेदकाभावात्। एकवृत्त्युपस्थापितयोः परस्परान्वयाव्युत्पत्तेः ज्ञानाय विचार इत्यभिमतान्वयालाभाच्चेति चेन्न; अजहत्येव। न चानुगतलक्ष्यतावच्छेदकनियमः; छात्रिणो गच्छन्तीत्यत्रापि तदभावात्। अन्यथा गन्तृत्वस्य तथात्वे गन्तारो गच्छन्तीति प्रतीत्यापत्तेः। लक्ष्यतावच्छेदकस्य शाब्दान्वयबोधे प्रकारत्वनियमात्। न चाजहल्लक्षणायामेकक्रियान्वयित्वं प्रयोजकम्, तच्चात्र नास्तीति वाच्यम्; संबन्धानुपपत्त्योरेव सर्वत्र लक्षणाबीजत्वात्। तदतिरिक्तस्य दर्शनमात्रेणाप्रयोजकत्वात्। प्रयोजकत्वेऽपि लाघवेनैकान्वयित्वं तथा, तच्चात्रास्ति ज्ञानविचारयोरेकब्रह्मान्वयित्वात्॥

नन्वजहल्लक्षणाया मुख्यार्थोपस्थित्यभ्युपगमे तस्य लक्ष्यत्वापातः, नच शक्यतावच्छेदकशून्यत्वे सति तत्पदजनितवाक्यार्थानुकूलप्रतीतिविषयत्वं लक्ष्यत्वम्, तन्न छत्र्यादाविति वाच्यम्; शक्यतावच्छेदकगोत्वादावतिप्रसङ्गात्। नच प्रतीतिविशेष्यत्व विवक्षणीयम्, गौरवात्। तस्माल्लक्षणाजनितप्रतीतिविषयत्वं लक्ष्यत्वम्, तच्च छत्र्यादावस्तीति लक्ष्यतापातः[1]। नच लक्षणया न तदुपस्थितिः, अपि तु मुख्यवृत्त्येति वाच्यम्; सकृदुच्चरितस्य शब्दस्य वृत्तिद्वयविरोधात्। नच येन रूपेण मुख्यत्वं तदन्यरूपेण लक्ष्यत्वं न विरुद्धमिति वाच्यम्; स्वस्य स्वसंबन्धाभावेन लक्षणानुपपत्तेः छत्रित्वाद्यतिरिक्तानुगतरूपान्तराभावाच्चेति चेन्न; गन्तृदेशस्थत्वाद्यनु-

[1] ताप्रसङ्गः-ब्र.

## पूरणी

गतरूपान्तरेण मुख्यार्थस्यापि लक्ष्यत्वाविरोधात् । नच संबन्धाभावः; मुख्यार्थसंबन्धित्वेनाछत्रिलक्षणायामार्थान्मुख्यार्थस्याप्यन्तर्भूततया पृथक्तत्संबन्धस्यानपेक्षितत्वात् । लाघवेन यत्किंचिल्लक्ष्यमुख्यार्थसंबन्धस्य तत्र प्रयोजकत्वात् । अस्तु वा वृत्तिद्वयम्, गङ्गायां मत्स्यघोषावित्यत्र सकृदुच्चरितगङ्गाशब्दस्य वृत्तिद्वयदर्शनात् । अत एवैकवृत्त्युपस्थापितत्वान्न ज्ञानविचारयोः परस्परमन्वयः स्यादिति दूषणं परास्तम् । न चैवं वाक्यभेदापत्तिः; वृत्तिभेदस्यान्वयभेदद्वारा वाक्यभेदापादकत्वात् । प्रकृते च फलफलिभावेनान्वयस्यैकत्वात् । न चैवमजहल्लक्षणाव्यपदेशविच्छेदः; अभिदासहकृतलक्षणात्वस्याजहल्लक्षणाव्यपदेशबीजत्वादिति वर्णयन्ति; तन्न मनोहरम्; न तावन्मुख्यार्थस्यापि रूपान्तरेण लक्ष्यत्वम्; मुख्यार्थाविनाभावात्मकलक्षणाविषयत्वस्य मुख्यार्थेऽसंभवात् । न चाभेदेऽप्यविनाभावोऽस्तीति वाच्यम्; सर्वत्र मुख्यार्थेऽतिप्रसङ्गवारणाय भेदगर्भाविनाभावस्य लक्षणारूपतया वाच्यत्वात् । अस्तु वा रूपान्तरेण लक्ष्यता, तथापि ज्ञानविचारयोरनुगतरूपाभावान्न लक्ष्यत्वम् । छत्र्यादौ गन्तृदेशविशेषस्थत्वादेरनुगतस्य सत्वात् । नापि वृत्तिद्वयम्; अव्युत्पत्तेः । गङ्गायां मत्स्यघोषावित्यादौ चावृत्त्या तत्पदान्वयात् । वृत्तिद्वयेऽप्यन्वयभेदेन तत्र वाक्यभेदस्यावश्यकत्वात् । वृत्तिद्वयेऽप्येकपदोपस्थापितयोः फलफलीभावेनान्वयादर्शनाच्चेति संक्षेपः ॥

परमगुरुचरणास्तु जिज्ञासापदं तन्त्रेणोपात्तम् । तत्रैकजिज्ञासापदेन साध्यज्ञानमपरजिज्ञासापदेन जहल्लक्षणया विचार उपस्थाप्यत इति तयोः फलफलीभावेनान्वय इत्याहुः ॥

ननु साध्यज्ञानविचाररूपार्थवैरूप्यान्न तन्त्रता । अत एव "वाजपेयेन यजेत" इत्यत्र यजेस्तन्त्रेण साध्यसाधनावस्थयागार्थकत्वं

## पूरणी

पूर्वपक्षे प्रदर्श्य तद्वैरूप्यान्न तन्त्रतेति सिद्धान्तितमिति [1] चेन्न ; तन्त्रता हि द्विविधा । अर्थतन्त्रता शब्दतन्त्रता च । एकशब्दस्यैकरूपशक्त्या नानार्थोपस्थापकता अर्थतन्त्रता । सकृदुच्चारणाच्च शब्दद्वयलाभः शब्दतन्त्रता । अत्र वैरूप्याद्वाजपेयनये अर्थतन्त्रता परिहृता । शब्दतन्त्रता तु वैरूप्येऽपि, हलन्त्यमित्यत्रार्थवैरूप्येऽपि शब्दतन्त्रताया अभ्युपगमादिति तेषामाशयः ॥

वस्तुतस्तु जिज्ञासापदेन जहल्लक्षणया विचारमात्रमुपस्थाप्यते । नच ज्ञानाय विचार इत्यन्वयानुपपत्तिः ; ज्ञानाय विचार इत्यनेन हि ज्ञानकामो विचारं कुर्यादित्यन्वयोऽभिप्रेतः । ततश्चाधिकार्यर्थं ज्ञानोपस्थापनं वाच्यम् । तच्च व्यर्थम् ; अथ शब्दोपात्तमुमुक्षोरेवाधिकारितयान्वयात् । अन्यथा अथशब्दोपादानवैयर्थ्यात् । नच ज्ञानस्य साक्षाद्विचारसाध्यतया ज्ञानकामनैवाधिकारिविशेषणं न मुमुक्षेति वाच्यम् ; इष्टसाधनत्वस्य वाक्यार्थत्वपक्षे यागकार्यतायां स्वर्गकामादेरनन्वयप्रसङ्गात् । स्वर्गस्य साक्षाद्यागसाध्यत्वाभावात् । अथशब्दस्य हेत्वानन्तर्यपरतया मोक्षसाधनीभूतज्ञानकामनायास्तद्धेतुत्वे अथशब्दात्तल्लाभसंभवाच्च । अतो जिज्ञासापदाज्ज्ञानोपस्थितिमन्तरेणापि ज्ञानकामो ब्रह्म विचारयेदित्यर्थः सम्पद्यत इति वृथा तदर्थं लक्षणाद्वयवृत्तिद्वयतन्त्रतादेराश्रयणम् । अत एव विवरणाचार्यैः कर्तव्यतयान्वययोग्यविचारलाभाय विचारलक्षणामात्रं दर्शितं न तु फलाधिकारलाभाय यत्नो दर्शितः । किं च जिज्ञासापदात्कथंचित्साध्यज्ञानोपस्थितावपि तत्कामोऽधिकारी पुरुषोऽनुपस्थित इति तदर्थं सर्वकल्पेषु पुरुषलक्षणाप्याश्रयणीयेति महत्साहसमिति युक्तमुत्पश्यामः ॥

---

[1] चेत् तन्त्र—झ.

## पूरणी

### श्रवणविधिविचारः

ननु श्रोतव्य इति ज्ञानफलश्रुतेः काम्यविधिः। स च नापूर्वः; विचारस्य विचार्यमाणार्थनिर्णयहेतुत्वेन लोकावगततया अत्यन्ताप्राप्तेरभावात्। नापि नियमविधिः; व्यावर्त्याभावात्। तथाहि—न तावद्वेदान्तवाक्यैरेवेति नियमः; वेदान्तवाक्यातिरिक्त-प्रत्यक्षस्य चक्षुरादेर्ब्रह्मज्ञानाहेतुत्वात्। नापि मनः; तस्यास्मन्मतेऽनिन्द्रियत्वेनाप्रमाणत्वात्, मनसो ब्रह्मसाक्षात्कार प्रत्युपादानतया अपेक्षणीयत्वेन व्यावर्त्यत्वानुपपत्तेश्च। नाप्यनुमानं व्यावर्त्यम्; तस्य साक्षात्काराहेतुत्वात्' "नैषा तर्केण मतिरापनेया" इति श्रुत्यैव व्यावृत्तत्वाच्च। मन्तव्य इति सहकारित्वबोधनाच्च न व्यावर्त्यत्वम्। नापि रण्डागीतं व्यावर्त्यम्; तस्य "न म्लेच्छित वा" इत्यादिना व्यावृत्तत्वात्। नापि पुराणवाक्यं व्यावर्त्यम्; पुंवाक्यानां वेदानुमापकत्वेन स्वतोऽर्थनिश्चायकत्वाभावात्,

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"

इत्यादिना सहकारित्वबोधनाच्च। तस्मान्न वेदान्तवाक्यैरेवेति नियमः। नापि विचारेणैवेति नियमः; अविचारितवेदान्तवाक्यानां निर्णयाहेतुत्वेन व्यावर्त्याभावात्। नच गुरूपदेशेनैव विचारः कर्तव्यो न स्वातन्त्र्येणेति स्वातन्त्र्यं व्यावर्त्यमिति वाच्यम्; "आचार्यवान्पुरुषो वेद" "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादिश्रुत्यैव स्वातन्त्र्यस्य व्यावृत्तत्वात्। नच "द्वा सुपर्णा" इत्यादिभिन्नात्मवाक्य-विचारो व्यावर्त्यः; तादृशवाक्यानामद्वैतपरत्ववर्णनाभावेऽद्वैतासिद्धिप्रसङ्गेन तद्विचारस्याप्यद्वैतात्मज्ञानोपयोगितयावश्यकर्तव्यत्वात्। नाप्यात्मैवेति नियमः; आत्मव्यतिरेकेण वस्तुनोऽभावात् भिन्नात्मनोऽप्रसक्तत्वाच्च।

## दीपनम्

प्रवृत्तेः। एवं तरति शोकमात्मवित्" इत्यादिवाक्यादात्मज्ञानमात्रं शोकनिवृत्तिसाधनत्वेनावगच्छतः कस्यचिद्भेदप्रवणचित्तस्य "द्वा सुपर्णा सयुजा" इत्यादिवाक्यादापातप्रतिपत्तिदशायां भेदज्ञानं मुक्तिसाधनमिति भ्रान्त्या भिन्नात्मज्ञानसाधकशास्त्रे प्रवृत्तौ मुमुक्षुमात्रस्याद्वैतात्मनि विचारो न प्राप्तः, न हि श्रोतव्य इत्यादिनियमविधिं विना विचारात्पूर्वं भिन्नात्मज्ञानस्य मुक्तिसाधनत्वभ्रमः केनचिन्निराकर्तुं शक्यत इति मुमुक्षोरद्वैतात्मज्ञानाय विचारनियमविधिर्वाच्यः। तत्र च श्रवणविध्यपेक्षिताधिकारिविषयप्रयोजनान्यथेति-

---

## पूरणी

तस्मान्न नियमविधिसंभव इत्याशङ्क्य तदुपयोगं दर्शयितुमाह—**एवं तरतीति। अद्वैतात्मेति।** मोक्षसाधनीभूतात्मज्ञानायेत्यर्थः। यथाश्रुते त्वद्वैतात्मज्ञाने द्वैतात्मविचारस्याप्रसक्तेर्नियमानुपपत्तेः। एवं च सामान्यतो मोक्षसाधनीभूतात्मज्ञाने द्वैताद्वैतात्मद्वयविचारप्रसक्तावद्वैतात्मविचारनियमेन द्वैतात्मविचारो व्यावर्त्य इति न नियमानुपपत्तिः। नच भ्रान्तिप्रसक्तिवारणाय वैदिकविधिव्यापारवैयर्थ्यमिति वाच्यम्; "शरमयं बर्हिर्भवति" इत्यादिवैकृतविशेषविधीनां सर्वेषामपि बर्हिरादिभ्रान्तिप्रसक्तिवारणार्थत्वात्। भ्रान्तिप्रसक्तिवारणस्यैव बाधत्वात्, शास्त्रप्रमितस्य बाधायोगात्, "वनिष्ठुमस्य माराविष्ट" इत्यादौ वपाभ्रान्त्या प्रसक्त[1]वनिष्ठुवदाननिषेधात् "द्वा सुपर्णा"इत्यादिश्रुत्यापि सम्यक्तात्पर्यानवधारणदशायां भ्रान्तिप्रसक्तजीवेशभेदस्य

---

[1] वनिष्ठुलवनप्रसक्तिनिषे—ख.

## पूरणी

"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं" इति श्रुत्यन्तरेण वारणाच्चेति भावः ।

नियमापूर्वस्य च साक्षात्प्रतिबन्धकदुरितनिवृत्तिद्वारा वा ब्रह्मसाक्षात्कारे उपयोगः । वस्तुतस्तु नात्र नियमादृष्टं संभवति । वास्तव[1]साधनान्तरनिवृत्तिविषय एव नियतसाधनानुष्ठानस्य तद्धेतुत्वात् । अत्र च साधनान्तरभ्रमनिवृत्तिमात्रत्वेन वस्तुतो नियतसाधनानुष्ठानात्मकहेतुविरहेण तदसिद्धेरिति तत्त्वम् ।

केचित्तु कर्मविधिसंबन्ध्यात्मविचारो व्यावर्त्यः ; लोकान्तरसंबध्यात्मनोऽभावे "स्वर्गकाम" इति श्रुतिचोदितस्वर्गसंबन्धो यागस्य न स्यादित्यादितद्विचारस्यापि प्रसक्तेः । नच स विचारो भिन्नात्मविषयत्वान्न व्यावर्त्य इति वाच्यम् ; आत्मत्वसामान्येन तत्प्रसक्तौ तद्विचारस्य व्यावर्त्यत्वात् । अन्यथा अलौकिकव्रीहिस्वरूपे नखविदलनादेरप्रसक्त्या अवघातादिनियमोऽपि न स्यादिति वर्णयन्ति । तच्चिन्त्यम् ; तद्विचारस्य कर्मविधिनिर्णयहेतुत्वेऽपि मोक्षसाधनीभूतज्ञानहेतुत्वेनाप्रसक्तेरव्यावर्त्यत्वात । प्रकृतफलतावच्छेदकरूपसंबन्धिन एव व्यावर्त्यत्वात् । अन्यथा स्वर्गादेरपि कार्यत्वेन साधनापे[2]क्षितया ज्योतिष्टोमादिक्रियाप्रसक्तेः संभवात् "ज्योतिष्टोमेन यजेत" इत्याद्यपि नियमविधिः स्यात् । नियोगापेक्षि[3]ते तुषविमोकरूपे तु नखविदलनादेः प्राप्तत्वात्तन्नियमोपपत्तिरिति दिक् ॥

अन्ये तु श्रवणविधिनियमेन तात्पर्यनिर्णयविशेषो व्यावर्त्यः । नच गुरूपदेशतस्तात्पर्यनिर्णयः । उपदेशो द्विविधः । शृङ्गग्राहिकया इमानि वेदान्तवाक्यानि सच्चिदानन्दाद्वितीयात्मपराणीत्येवंरूप एकः ।

---

[1] साधनान्तर एव-ट. [2] क्षतया-म्र. [3] नतुष-म्र.

## पूरणी

प्रतिवाक्यं पूर्वपक्षसिद्धान्तात्मकन्यायविचाररूपो द्वितीयः। तत्र गुरुवचनश्रद्धालोः कस्यचिच्छृङ्गग्राहिकोपदेशात्तात्पर्यनिर्णयो भवति। कस्यचिच्च विचारात्मकोपदेशात्। तयोर्द्वयोरपि वेदान्तवाक्यार्थाद्वैतनिर्णयहेतुत्वेन अविशेषप्रसक्तौ श्रोतव्य इति नियमविधिना शृङ्गग्राहिकोपदेशाधीनस्तात्पर्यानिर्णयो व्यावर्त्यते। न्यायविचाराधीनतात्पर्यनिर्णयादेवाद्वैतज्ञानं नान्यथेति वर्णयन्ति। तदतिचिन्त्यम्; प्रबलप्रत्यक्षमानादिना भेदनिर्णयादत्यन्तासंभाविते अद्वैते शृङ्गग्राहिकोपदेशमात्रेण तात्पर्यनिर्णयासंभवात्। नच पूर्वजन्मार्जितभाग्योदयवशेन कस्यचिदसंभावनानुदय इति वाच्यम्; तादृशस्य तन्निर्णयाद्ब्रह्मसाक्षात्कारोत्पादावश्यकत्वेन तस्याव्यावर्तनीयत्वात्। अन्यथा काशीप्रायणकालीनभगवदुपदेशाधीनतात्पर्यनिर्णयस्यापि व्यावर्तनीयत्वापत्तेः। अत एव मैत्रेयीब्राह्मणादौ जनकादीनां न्यायविचारमन्तरेणापि याज्ञवल्क्योपदेशमात्रेणाद्वैतनिर्णयः श्रूयते। अत एव च "ब्रह्मसाक्षात्कारादूर्ध्वं स्वत एव निवृत्तवासनानां न साक्षात्कारदार्ढ्याय योगाभ्यासविधिः किं त्वनिवृत्तवसनानां" इति योगपातञ्जले स्थितम्। वस्तुतस्तु असंभावनानिवर्तकभाग्योदयः जन्मान्तरश्रवणाधीन एव; कर्मान्तरसाध्यभाग्योदयस्य प्रमाणप्रमेयाद्यसंभावनानिवृत्तावनुपयोगात्। अन्यथा श्रवणाभ्यासादिवैयर्थ्यात्। तथा च जन्मान्तरीयश्रवणाभ्यासादेवेह जन्मनि शृङ्गग्राहिकोपदेशात्तात्पर्यनिर्णय इति तस्य स्वफलाय श्रवणविध्यपेक्षितत्वेनानुकूलतया न व्यावर्त्यताशङ्केति दिक्॥

वयं त्वपूर्वविधिरेवायं न नियमविधिः; वाक्यविचारस्य परोक्षनिर्णयहेतुत्वेन लोकतः प्रतीतावपि अपरोक्षनिर्णयहेतुत्वेनात्यन्ताप्राप्तत्वात्। अपरोक्षब्रह्मनिर्णयस्य च मोक्षसाधनीभूतस्य फलतया द्रष्टव्यपदेन

## पूरणी

निर्देशात् । न च निर्णयत्वसामान्यरूपेण तद्धेतुताप्रसक्तिरस्तीति वाच्यम् ; विध्यपेक्षितफलतावच्छेदकरूपेण तत्प्रसक्तेरेव विधिविरोधित्वात् । अन्यथा सुखत्वादिरूपेण स्वर्गादावपि क्रियासामान्यस्य लोकप्रसक्त्या ज्योतिष्टोमाद्यपूर्वविधेरपि विलयापत्तेः । अत एवावधातविध्यपेक्षिततुषविमोकत्वरूपेण तत्रावधातस्य लोकप्राप्तत्वात् तत्र नापूर्वविधिः किं तु नियमविधिः । प्रकृते च निर्णयत्वसामान्येन तत्प्रसक्तावपि विध्यपेक्षितफलतावच्छेदकापरोक्षब्रह्मनिर्णयत्वरूपेण वाक्यविचारस्य कथमप्यप्रसक्तेः । अतो विचारेतिकर्तव्यतोपकृतवेदान्तवाक्यरूपकरणेन मोक्षसाधनीभूताद्वैतात्मापरोक्षं निर्णयं भावयेदिति श्रोतव्यविध्यर्थ इति रमणीयम् ॥

यद्वा विचारितवेदन्तवाक्यैरेवेति वाक्यनियमविधिरेवायमस्तु । नच व्यावर्त्याभावः ; मनःप्रमाणभावस्य व्यावर्त्यत्वात् । "मनसा ह्येष पश्यति", "दृश्यते त्वग्र्यया बुद्धया" इत्यादिश्रुत्या सर्वतन्त्रप्रसिद्ध्या च तत्प्रामाण्यप्रसक्तेः । न चोपादानतया अपेक्षणीयस्य मनसो न व्यावर्त्यतेति वाच्यम् ; प्रमाणत्वरूपान्तरेणाविरोधात् । नच प्रयोजनाभावान्नियमविधिवैयर्थ्यम् ; नियमविधिपक्षे मनननिदिध्यासनानन्तरं पुनः प्रतिसंहितवेदान्तवाक्येनाप्रतिबद्धापरोक्षब्रह्मनिर्णयः, इतरथा मनननिदिध्यासनसहकृतमनसैवेति वेदान्तवाक्यप्रतिसन्धानापेक्षानपेक्षाभ्यां वैलक्षण्यस्य स्फुटत्वात् । अत एव वाचस्पतिमिश्राः वेदान्तवाक्यानां परोक्षनिर्णयैकहेतुतया मनसैव तदपरोक्षनिर्णयमभ्युपगच्छन्तः व्यावर्त्याभावेन नियमविध्यनुपपत्तेर्विध्यन्तरानवकाशाच्च श्रोतव्य इत्यादेर्विधिसरूपतामेवानुमन्यन्ते । विवरणाचार्यास्तु अपरोक्षार्थविषयकवेदान्तवाक्यानामपरोक्षनिर्णयहेतुत्वाभ्युपगमेन उक्तविषया मनःप्रामाण्यव्यावर्त्याभिप्रायेण श्रवणनियमविधिमङ्गीकुर्वन्निति युक्तमुत्पश्यामः ॥

## पूरणी

### श्रवणविधौ ब्राह्मणाधिकारनिरूपणम्

तत्र श्रवणविधौ च ब्राह्मणस्यैवाधिकारः "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इति ब्राह्मणश्रुतेः। ननु चात्र ब्राह्मणपदं ब्रह्म वेदेति व्युत्पत्त्या यौगिकं न तु रूढम्, नच श्रवणात्पूर्वं ब्रह्मज्ञानासंभवः; "गृहस्थः सदृशीं भार्यां परिणयेत्" इतिवद्भाविपरामर्शेन तदुपपत्तेः। अत एव "मौनं चामौनं च निर्विद्याथ ब्राह्मण" इति वाक्यशेषे ब्राह्मणपदस्य यौगिकत्वमेव रूढस्य तत्रानन्वयात्। पाण्डित्यबाल्यमौनरूपश्रवणमनननिधिध्यासनैर्ब्रह्मसाक्षात्कारवान्भवतीत्येवमर्थकत्वात्तस्येति चेन्न; रथकारन्यायेन रूढेर्योगापहारित्वात्। न चोपसंहारस्थब्राह्मणपदानुरोधेनोपक्रमस्थब्राह्मणपदस्य यौगिकत्ववर्णनं युक्तम्; वेदोपक्रमनयवदुपक्रमानुरोधेनैवोपसंहारस्य नेयत्वात्। नच रूढ्यनन्वयः; ब्राह्मणपदस्य रूढिपूर्वकलक्षणया ब्राह्मण्यजातिनियतफलवत्त्वार्थकत्वात् रूढिपूर्वकलक्षणाया योगापेक्षया प्रोद्गातृनयेनाभ्यर्हितत्वात्। मण्टपं भोजयेदित्यादौ लोके तथा स्वीकारात्। ब्राह्मण्यजातिनियतं च फलं समभिव्याहारवशात् ब्रह्मसाक्षात्कार एव लभ्यते, ज्योतिष्टोमादेस्त्रैवर्णिकाधिकारिकत्वेन कर्मफलस्य ब्राह्मण्यजातिनियतत्वाभावाच्च। किं च सन्न्यासस्तावद्ब्राह्मणमात्राधिकारिकः। "ब्राह्मणः प्रव्रजेत्", "ब्राह्मणः पुत्रैषणाया वित्तैषणाया दारैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति श्रुतेः, "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" इति स्मृतेः,

"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानामयं धर्मो निवर्तकः"॥

इति निषेधात्, शङ्करभगवत्पादैर्ब्राह्मणमात्राधिकारिकत्वव्युत्पादनाच्च। सन्न्यासश्च श्रवणे अङ्गं समुच्चितप्रधानं वा। उभयथापि समानाधिकारि-

## पूरणी

कत्वनियमाच्छ्रवणेऽपि ब्राह्मणाधिकारो युक्तः। न चैकजन्मन्यनुष्ठेयाङ्गाङ्ग्यादिविषये समानाधिकारिकत्वनियमः, इह तु जन्मान्तरीयोऽपि सन्न्यासः श्रवणे तत्फलज्ञाने चोपकरोतीति पूर्वजन्मनि ब्राह्मण्ये सति सन्न्यस्तानामिह जन्मनि क्षत्रियणां श्रवणाधिकारो न विरुद्धयत इति वाच्यम्; उक्तसमानाधिकारिकत्वनियमेन जन्मान्तरसन्न्यासस्याङ्गत्वादेरनभ्युपगमात्। तस्य सन्दिग्धतया क्षत्रियाणां श्रवणे निष्कम्पप्रवृत्त्यनुपपत्तेश्च। न च संशयादपि यदि स्यादिति न्यायेन प्रवृत्तिः; वैदिककर्मण्यधिकारनिश्चयस्य प्रवर्तकत्वात्। "सन्न्यस्य श्रवणं कुर्यात्" "वेदानिमं च लोकममुं च परित्यज्यात्मानमन्विच्छेत्" इति श्रुतिस्मृतिबलेनाङ्गत्वप्रधानत्वाभ्यामुभयथापि कृतसन्न्यासस्यैव श्रवणाधिकारात्। अन्यथा अधिकारसंशयादपि प्रवृत्तौ स्फ्याश्लेषज्या[1]नयविरोधात्। नन्वेवमपशूद्राधिकरणविरोधः; तत्र च "आजहारेमाः शूद्रानेन मुखेनालापयिष्यथा" इति श्रुतिबलेन शूद्रस्य श्रवणाधिकारमाशङ्क्य जानश्रुतेः प्रकरणात्क्षात्रियत्वावगमात् शूद्रपदस्य शुचा अज्ञानजनितया दुद्राव गुरुमिति व्युत्पत्त्या क्षत्रिये वृत्तेर्न शूद्राधिकारः। तस्य वेदाभावेन वेदविचारात्मकश्रवणासंभवादिति सिद्धान्तयता अर्थात्क्षत्रियाधिकाराभ्युपगमादिति चेत्, तत्र शूद्राधिकारनिरास एव तात्पर्यात्। न च तथा सति तद्वाक्यानामनन्वितार्थत्वप्रसङ्गः; मुमुक्षाधिकारिकज्ञानफलकसन्न्याससमानाधिकारिकश्रवणे क्षत्रियादेरनधिकारेऽप्यध्ययनविध्याक्षिप्तवेदान्तवाक्यविचारे बृहस्पतिसवादिवाक्यविचार इवाधिकारावारणात् तत्परत्वेनास्मदादेरिव कौतूहलार्थविचारपरत्वेन वा तदुपपत्तेः। एवं जनकादीनामपि श्रुति-

---

1 धिकरण—झ.

## पूरणी

सिद्धं श्रवणमुपपाद्यम्। ब्राह्मणाधिकारिकतयावगते श्रवणे शूद्रादेरिव क्षत्रियादेरप्यधिकारानवकाशात्। अन्यथा मैत्रेयीब्राह्मणे मैत्रेय्या ब्रह्मविचारश्रवणेन स्त्रीणामप्यधिकारप्रसङ्गात्। अत एव श्रीमद्भागवते मुचुकुन्दं प्रति भगवता "द्विजो भूत्वा विमोक्ष्यसे" इति ब्राह्मणजन्मन्येव ब्रह्मविद्याधिकारो दर्शितः। एतेन "योगेनान्ते तनुत्यजां" इति कालिदासवचनात्क्षत्रियाणामपि सन्न्यासाधिकार इति निरस्तम्; तत्र योगपदस्य चित्तवृत्तिनिरोधपरत्वात्। तस्य च वानप्रस्थाश्रमपरिपाकेनाप्युपपत्तेः। प्रबलश्रुतिविरोधे लिङ्गदर्शनमात्रस्याबाधकत्वाच्च। एवं "वेदानुवचनेन ब्राह्मणा विविदिषन्ति" "अयज्ञोपवीती कथं ब्राह्मण" इत्यादिब्राह्मणश्रुतयः सन्न्यासश्रवणादौ ब्राह्मणस्यैवाधिकारमवगमयन्तीति दिक्॥

## वर्णत्रयस्याधिकारसमर्थनम्.

वस्तुतस्तु त्रयाणामपि वर्णानां श्रवणेऽधिकारः। तथा हि—कामाधिकारः श्रवणविधिः। तत्र मुमुक्षा विविदिषा वा स्वतन्त्राधिकारिविशेषणम्। वैराग्यादेश्च दृढमुमुक्षाद्वारा वा शक्तयादिवच्छ्रवणनिष्पादकत्वेन वाधिकारनिमित्तत्वम्। ब्राह्मण्यस्य त्वनेवंविधत्वान्नाधिकारनिमित्तता। न चैवं "ब्राह्मणो बृहस्पतिसवेन यजेत", "राजा राजसूयेन यजेत" इत्यादौ ब्राह्मण्यादेरधिकारनिमित्तता न स्यादिति वाच्यम्; तेषामपूर्वविधित्वेन तत्र श्रुतब्राह्मण्यादेरधिकारनिमित्तत्वसंभवात्। यथाश्रुत्यैवापूर्वविधिनिर्वाहात्। श्रवणविधेश्च दृष्टार्थनियमविधिरूपतया न तत्र ब्राह्मण्यस्य विधेयानुपयोगिनोऽधिकारनिमित्तता। अन्यथा साधनान्तरव्यावृत्त्या श्रवणनियमोऽधिकार्यन्तरव्यावृत्त्या ब्राह्मणाधिकारनियमश्चेति विधि-

पूरणी

गौरवप्रसङ्गात्। किंचैवं देवानामप्यधिकारो न स्यात्। तथा च देवताधिकरणविरोधस्तेषां ब्रह्ममीमांसाप्रदर्शनपरवेदवाक्यानामप्रामाण्यप्रसङ्गश्च। तस्माद्ब्राह्मणश्रुतिर्हविरुभयत्ववदविवक्षितार्थानुवादो नाधिकारार्था। अनुवादे च यथाप्राप्ति तात्पर्यमिति। ब्रह्मशब्दस्य वेदार्थकतया ब्रह्म वेदेति योगाश्रयणात् रूढिपूर्वकलक्षणया वा ब्राह्मणशब्दो ज्ञातवेदार्थकः। प्राप्तवेदस्यैव वेदान्तवाक्यविचारात्मके श्रवणे अधिकारस्यार्थप्राप्तत्वात्। एवं विविदिषावाक्यादावपि ब्राह्मणश्रुतिर्नेया। न चानेकब्राह्मणश्रुतीनामनुवादताकल्पनादोषः; जनकजानश्रुतिप्रवाहणाद्यनेकक्षत्रियविषयब्रह्मविद्योपाख्यानानां विचारान्तरपरत्वकल्पनापेक्षया ब्राह्मणपदमात्रस्यानुवादत्वकल्पनाया लघीयस्त्वात्। अत एव "तद्विजिज्ञासस्व", "आत्मा श्रोतव्य" इत्यादौ न ब्राह्मणश्रुतिः। तस्मादस्ति क्षत्रियादेरधिकारः। न चैवं मैत्रेयीब्राह्मणानुरोधेन स्त्रीणामप्यधिकारप्रसङ्गः; तासां शूद्रवद्वेदाभावेन तदसंभवात्। मैत्रेय्युपदेशस्य स्वप्रव्रज्यानुमतये याज्ञवल्क्येन स्वच्छन्दतया चरणात् तस्य स्वच्छन्दचरितस्य च [1] प्रमाणतत्त्वनिर्णयानुपयोगात्। अन्यथा विश्वामित्रेण त्रिशङ्कुयाजनमाचरितमिति ब्राह्मणानामेवार्त्विज्यमिति द्वादशसिद्धन्यायस्यापि विलयप्रसङ्गात्। तदुक्तमापस्तम्बेन "दृष्टो धर्मव्यतिक्रमः, साहसं च पूर्वेषाम्।"

"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरजोऽबलः" इति॥

श्रीमद्भागवतेऽपि—

"ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्।
तेषां स्वच्छन्दचरितं बुद्धिमान्न तदाचरेत्॥ इति॥

1 श्रवण—ख.

### पूरणी

यद्वा प्राप्तवेदस्य मुमुक्षोः श्रवणेऽधिकारः। न तु पुंस्त्वमपि, अनुपयोगात् मानाभावाच्च। अपशूद्रनये वेदाभावेनैव स्त्रीशूद्रादेर्वारणात्। तथा च तपःप्रभावेन देवर्षिवन्मैत्रेय्याः प्राप्तवेदत्वात् "येनाहं नामृता स्यां किमहं तेन कुर्याम्" इति मुमुक्षावगमाच्च ब्रह्मविद्याधिकारेऽपि स्त्र्यन्तराणां [1]वेदाभावादेव नाधिकार इति दिक्॥

न च सन्न्यासे ब्राह्मणमात्रस्याधिकार इति तदङ्गिनि श्रवणे कथं त्रैवर्णिकानामधिकार इति वाच्यम्; "अथ यदि व्रती वाव्रती वा स्नातको वास्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुत्या विरक्तोपनीतस्य किंचिद्वेदाध्ययनमात्रेणापि त्रैवर्णिकसाधारण्येन सन्न्यासावधानात्,

"अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥
ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात्"।

इति स्मृतेः, "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनाच्च सन्न्यासस्य त्रैवर्णिकाधिकारिकत्वात्, निषेधस्य च—

"मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम्।
बाहुजातोरुजातानां त्रिदण्डो न विधीयते"॥

इति स्मृत्यन्तरपर्यालोचनया त्रिदण्डविषयत्वात्। एवं च क्वचिद्ब्राह्मणश्रुतिरुपलक्षणार्था। अत एव—

"स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः"

[1] वेदाभावेन—ग.

## पूरणी

इति कालिदासेन स्फुटतया क्षत्रियस्य रघोरन्त्याश्रमो दर्शितः। वस्तुतस्तु पूर्वोक्तरीत्या सन्न्यासद्वैविध्येनाश्रमरूपसन्न्यासस्य ब्राह्मणमात्राधिकारिकत्वेऽपि काम्यकर्मत्यागात्मकसन्न्यासस्य सर्वसाधारणत्वात् त्रैवर्णिकाधिकारो न विरुद्धयते।

न चैतादृक्सन्न्यासस्य गृहस्थसाधारणतया तेषामप्यधिकारप्रसङ्गे तदनधिकारव्युत्पादकतार्तीयचतुर्थपादनयविरोध इति वाच्यम्; तत्र हि स्वाश्रमविहितकर्मविक्षिप्तचित्तस्यानवकाशेन हेतुना अधिकारो वारितः, न त्वयोग्यतया, अन्यथा सन्न्यासाभावहेतोरेव तत्रोपन्यासापत्तेः। तथा च शक्तस्य स्वाश्रमविहितकर्मानुष्ठानाविरोधेन ब्रह्मविचारः संभाविता न तन्नयवारितः। अत एव जनकादीनां गृहस्थानामपि ब्रह्मविद्याश्रवणम्॥

किंच गृहस्थानां ब्रह्मविद्यानधिकारे तत्त्वविदो गृहस्थस्य परमहंसोपनिषदि विद्वत्सन्न्यासविधानमयुक्तं स्यात्। तत्र हि "असौ स्वपुत्रमित्रकलत्रबन्ध्वादीन् शिखायज्ञोपवीते स्वाध्यायं च सर्वकर्माणि सन्न्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगाय लोकस्योपकाराय च परिग्रहेत्" इति विद्वत्सन्न्यासो विहितः। न चेदं विधानं विविदिषासन्न्यासितत्त्वविद्विषयम्; पूर्वसन्न्याससमय एव स्वबन्ध्वादित्यागेन पुनः कलत्रादित्यागप्रसङ्गाभावात्। न च पूर्वत्यागस्यैवायमनुवाद इति वाच्यम्; सन्न्यस्येति ल्यपा आनन्तर्याभिधानात्। कौपीनदण्डाच्छादनादेः प्राप्ततया विध्यनुपपत्तेश्च। न च विद्वत्सन्न्यासविधानानुपपत्तिः, ब्रह्मसाक्षात्कारवतो विधिनिषेधयोरनन्वयादिति वाच्यम्; जन्मापादककर्मोपयोगिविध्यन्तराननन्वयेऽपि गार्हस्थ्यप्रापितलौकिकवैदिकव्यापार-

## पूरणी

सहसैर्विक्षिप्तचित्तस्य विश्रान्तिसिद्धये योगाभ्यासेनोत्पन्नतत्त्वज्ञानदार्ढ्याय चापेक्षितविद्वत्सन्न्यासविधिपारतन्त्र्यसंभवात्। अत एव तत्त्वज्ञानानन्तरमप्यनुस्यूतविद्यामदादिवासनानिवृत्तये योगाभ्यासविधिः सर्वसिद्धः। अत्र श्रुतौ बन्ध्वादीत्यादिशब्देन भृत्यपशुक्षेत्रादिलौकिकपरिग्रहविशेषाः परिगृह्यन्ते। स्वाध्यायं चेति चकारेण तदर्थनिर्णयोपयुक्तानि पदवाक्यप्रमाणशास्त्राणि वेदोपबृंहकाणि। सर्वशब्देन नित्यनैमित्तिककाम्यानि वैदिकानि लौकिकानि कृष्यादीनि च। पुत्रादित्यागेनैहिकभोगः परिहृतः। कर्मत्यागेनामुष्मिकभोगाशा। अयमित्यस्य विभक्तिलिङ्गव्यत्ययेन इदं ब्रह्माण्डमिति योजनीयम्। ब्रह्माण्डत्यागो नाम तत्प्राप्तिहेतो[1]र्विराडुपासनस्य त्यागः समुच्चीयते। स्वपुत्रादिहिरण्यगर्भोपासनान्तमैहिकमामुष्मिकं च सुखसाधनं सर्वं प्रेषमन्त्रोच्चारणेन परित्यज्य कौपीनादिकं परिगृण्हीयात्। आच्छादनं चेति चकारेण पादुकादीन् समुच्चिनोति।

"कौपीनयुगलं वासःकन्थां शीतनिवारिणीम्।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्" ॥

इति। स्वशरीरभोगो नाम कौपीनेन लज्जाव्यावृत्तिः। दण्डेन गोसर्पाद्युपद्रवपरिहारः। आच्छादनेन शीतादिपरिहारः। लोकस्योपकारो नाम दण्डादिलिङ्गेनैतदीयमुत्तमाश्रमं ज्ञात्वा अभिवन्दनभिक्षाप्रदानादिना सुकृतसम्पादनम्। चकारेणाश्रममर्यादायाः शिष्टाचारप्राप्तायाः परिपालनं समुच्चीयत इति। तथा बृहदारण्यके मैत्रेयीब्राह्मणस्याद्यन्तयोर्गृहस्थस्य याज्ञवल्क्यस्य विद्वच्छिरोमणेर्विद्वत्सन्न्यासः श्रूयते। अथ वा "याज्ञवल्क्योन्यद्वृत्तमुपाकरिष्यन् मैत्रेयीमिति होवाच याज्ञवल्क्यः

[1] हिरण्यगर्भोपासनस्य—ग.

## दीपनम्

सूत्रं न्यायतः प्रतिपादयति। तत्र चाथशब्देन साधनचतुष्टया-नन्तर्याभिधायिना विशिष्टोऽधिकारी सूच्यते। अतःशब्देन वैराग्यादेः स्वरूपासिद्धिं परिहरति। ब्रह्मजिज्ञासेत्यनेन ब्रह्मणोऽज्ञाततया विषयत्वं ज्ञानद्वारा अज्ञाननिवृत्तिं प्रयोजनं च दर्शयतीत्यवगच्छतीत्यर्थः। श्रवणादीत्यादिपदेन मननादि। श्रवणं च

---

## पूरणी

प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि एतावदरे खल्वमृतत्व'मिति होक्त्वा याज्ञवल्क्य प्रवव्राज'' इति। तस्मादस्त्युक्तसन्न्यासवतां गृहस्था-नामपि श्रवणेऽधिकारः। मुचुकुन्दं प्रति भगवदुपदेशस्तु मुचुकुन्दस्य तज्जन्मनि बहुहिंसादिदोषदूषितचित्ततया गलितवयस्कतया च श्रवणा-योग्यत्वात्तत्प्रारब्धबलेनावश्यंभाविजन्मान्तरापेक्षया वा। अत एव तत्र मृगयादिदोषोपन्यासः न तु क्षत्रियस्य सर्वथा श्रवणानधिकारात्। अत एव वसुदेवस्य तज्जन्मनि मुक्तिमभिप्रेत्य भगवता श्रीकृष्णेन नारदमुखेन ब्रह्मज्ञानायोपदेशः कारितः। तस्मात्त्रैवर्णिकाधिकारिकः श्रवणवि-धिरिति सर्वं सुस्थम्।

**अथशब्देनेति।** [1]अथशब्दस्य हेत्वानन्तर्ये मुख्यत्वाद्वैरा-ग्यादेश्च विचारहेतुत्वात्तदानन्तर्यपरेणाथशब्देन वैराग्यादिसम्पन्नो मुमुक्षुरधिकारी सम्पन्न इत्यर्थः। **अतः शब्देनेति।** कर्मणा नित्यमोक्ष-फलासिद्धिं ब्रुवता अतःशब्देनानित्यकर्मफलवैराग्यादिसंभवप्रदर्शनद्वारा विशिष्टाधिकारिसंभव एव दर्शित इत्यर्थः। एवं च कर्मणा नित्यफला-सिद्धिप्रतिसन्धानहेतुककर्मफलवैराग्यादिसम्पन्नो मुमुक्षुर्ब्रह्मविचारं

---

1 तस्य हेत्वा—ट.

**श्रवणादिकर्तव्यत्वं निश्चित्य तस्य "आचार्यवान्पुरुषो वेद", "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" इत्यादिवाक्यादाचार्याधीनत्वमवगत्य करतलीकृतब्रह्म [1]तत्त्वमाचार्यमुपसर्पति। ततस्तत्प्रधानेऽद्वै[2]तब्रह्मणि तत्त्वमस्यादिवेदान्ततात्पर्यं निश्चित्य तदर्थमित्थं मनुते। तदेव वादिप्रतिवा[3]दिविचाररूपेण प्रदर्श्यते ॥**

---

### दीपनम्

वेदान्तानामद्वैते ब्रह्मणि तात्पर्यावधारणानुकूलो व्यापारविशेषः। मननं नामावधृततात्पर्याद्वाक्यादवगतार्थस्य युक्तिभिः पर्यालोचनम्। निदिध्यासनं विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणम्। **तस्य** श्रवणस्य। अन्यथा गुरूपसदनस्य दृष्टार्थता न स्यादिति भावः ॥

---

### पूरणी

कुर्यादिति सूत्रार्थ इति भावः ॥ **तात्पर्यावधारणेति**। अवधारणस्य ज्ञानात्मकस्य कृत्यविषयतया विध्यनर्हत्वात् तदनुकूलश्चेतोव्यापार इत्युक्तम्। एवमुत्तरत्रापि तदनुकूलव्यापारविशेषो मननशब्दार्थो द्रष्टव्यः। निदिध्यासनं तूपासनात्मको मानसक्रियाविशेषो न तु ज्ञानम्; क्लृप्तप्रमाणाजन्यत्वात्। मनःप्रामाण्यस्य च निराकरिष्यमाणत्वात्। अत एव "निष्कलं ध्यायमान" इत्यादौ ध्यानमुपासनैवेत्युक्तम्। अतो ज्ञानाभासरूपोपासनाया विध्यधीनपुरुषेच्छासाध्यत्वात्साक्षादेव ध्यानं विधेयम्। ननु "तद्विज्ञानार्थं" इति श्रुत्या विचारस्याचार्याधीनत्वं नावगम्यते, गुरूपसदनस्य प्रयाजादिवदारादुपकारकाङ्गतया तद्विध्युपपत्तेरित्यत आह—**अन्यथेति**। तथा सत्य-

[1] तत्त्वं गुरुमुप—**क.**　[2] ते ब्रह्मणि—**ग.**　[3] दिविप्रतिपत्त्या—**ख.**

**ननु त्वंपदार्थस्य कर्तृत्वभोक्तृत्वविशिष्टस्य तद्विपरीतब्रह्मणा कथमभेदः, न हि बाधितमर्थमागमोऽपि [1] बोधयेदिति चेन्न; प्रमातृत्वादिधर्मिणोऽहंकारस्यात्मनि कल्पितत्वात् तदधिष्ठानस्यात्मन एव श्रुत्याऽभेदप्रतिपादनात्। तथा हि— अस्ति तावच्छुक्ताविदं रजतमिति ज्ञानम्। तन्न तावज्ज्ञानद्वयम्। ततो रजतार्थिप्रवृत्त्यनुपपत्तेः। न चेदमिति [2] ज्ञाना-**

दीपनम्

बिम्बप्रतिबिम्बयोर्विरुद्धधर्मवत्तया भेदे प्रतीयमानेऽपि प्रत्यभिज्ञया मुखादिम्वरूपैक्यं सिद्धयति, एवमत्रापीत्याभिप्रेत्याह —**प्रमातृत्वादीति। आत्मनि** प्रतिबिम्बात्मनि। तथा च यस्य कर्तृत्वादिकं तस्य नाभेदः शास्त्रप्रतिपाद्यः, यस्य चाहंकाराध्यासाधिष्ठानचैतन्यस्य शास्त्रेणाभेदः प्रतिपाद्यते तस्य न कर्तृत्वादिकं स्वाभाविकमिति न विरोध इति भावः। अहंकारोऽध्यस्तः, दृश्यत्वात्, शुक्तिरजतवदित्यभिप्रेत्य दृष्टान्तं साधयितुमाह—**तथाहीत्यादिना।** प्रथममख्यातिपक्षं दूषयित्वा भ्रान्तिमानयति—**तदिति।** अनुभवस्मृत्यात्मकमित्यर्थः। ननु [3] ज्ञानं न प्रवर्तकं, किं त्वन्यदेवेति न

पूरणी

दृष्टार्थता स्यात्। दृष्टद्वारोपयोगे सम्भवति नादृष्टकल्पनं युक्तमित्यर्थः॥

ननु प्रमातृत्वादेरध्यस्तत्वेऽपि बिम्बत्वप्रतिबिम्बत्वविरुद्धधर्माक्रान्तयोः कथमैक्यं स्यादित्यत्राह- **बिम्बप्रतिबिम्बयोरिति।** ननु रजते नेदं रजतमिति ज्ञानात्प्रवृत्त्यापत्तिः, अन्यथाख्यातिभिया तत्र

[1] बोधयतीति—**ग—ङ.** [2] ज्ञानात्तत्प्रवृत्तिः—**ख. ग.** [3] रजतज्ञान—**ख.**

त्प्रवृत्तिः; अतिप्रसङ्गात्। रजतज्ञानं च शुक्तिविषयत्वं विना तत्र न प्रवर्तकम्, अन्यविषयादन्यत्र प्रवृत्त्ययोगात्। न चोपस्थितेष्टभेदाग्रहात्प्रवृत्तिः लाघवेनोपस्थितेरेव प्रवर्तकत्वात्। रजतज्ञानं च शुक्तिविषयं [1]तद्गोचरप्रवृत्तिहेतुत्वात्,

## दीपनम्

दोष इत्याशङ्क्याह—न चेति। स्वतन्त्रोपस्थितेत्यर्थः। लाघवेनेति। भेदज्ञानदशायां शुक्तिविषयरजतज्ञानाभावान्न प्रवृत्तिरिति भावः। रजतज्ञानं विप्रतिपन्नं, शुक्तौ प्रवर्तकज्ञानत्वादिति हेत्वर्थः। अतो

## पूरणी

तद्भेदाग्रहादित्यत्राह—स्वतन्त्रेति। स्वातन्त्र्यमन्याविशेषणत्वम्। तत्र भेदविशेषणत्वेन रजतोपस्थितेर्न प्रवृत्तिप्रसङ्ग इति भावः। नन्वेवमिदं रजतं गृहनिष्ठभेदप्रतियोगीति ज्ञानात्प्रवृत्तिर्न स्यात्, तत्रापि भेदविशेषणतया रजतस्योपस्थितेरिति चेत्, पुरोवर्त्यगृहीतासंसर्गभेदाविशेषणत्वस्य विवक्षितत्वात्। तत्र भेदस्य गेहागृहीतासंसर्गत्वेऽपि प्रवृत्तिविषयरजतागृहीतासंसर्गत्वाभावात्। असंसर्गाग्रहश्च प्रवृत्तिविषयेष्टे भिन्नत्वव्यवहारप्रयोजको विवक्षितः। अतः शुक्तौ नेदं रजतभिन्नमिति ज्ञानान्न प्रवृत्त्यनुपपत्तिः। तत्रान्यथाख्यातिभिया रजतभेदासंसर्गाग्रहे सत्यपि तदसंसर्गाग्रहस्य शुक्तौ तदानीं रजतभिन्नत्वव्यवहाराप्रयोजकत्वात्। एवमसंसर्गाग्रहान्तरमपि हेतुरिति नातिप्रसङ्ग इत्यन्यत्र विस्तरः। ननु भेदाग्रहस्याप्रवृत्तिहेतुत्वे भेदग्रहदशायामपि सा स्यादित्यत आह—भेदज्ञानेति। ननु रजतज्ञानमात्रस्य पक्षत्वे सत्यरजतज्ञाने अंशतो बाधः स्यादित्यत आह—विप्रतिपन्नमिति।

[1] शुक्तौ प्रवर्तकत्वात्—क.

**शुक्तिज्ञानवदिति सिद्धं तावच्छुक्तिरजतविशिष्टं ज्ञानम् । न च तत्तत्रास्ति, शुक्तौ रजतं नास्तीति त्रैकालिकतदभावस्यानुभवसिद्धत्वात् । तर्ह्यन्यत्रास्तु दोषवशाच्छुक्तिकाया देशान्तरीयरजतात्मना ग्रहोपपत्तेरित्यन्यथाख्यातिरिति चेत्, तत्र न तावदिदं ज्ञानं परोक्षम्; पुरोदेशे रजतं साक्षात्करोमीत्यनुभवात् । [1]नापीन्द्रियजन्यं तत्; रजतज्ञानं नेन्द्रियजन्यं, तत्सन्निकर्षाजन्यत्वात्, अनुमितिवत् । न चाप्रयोजक[2]त्वम्; क्लृप्तसहकारिणं विनेन्द्रियस्य कार्याजनकत्वात् । विशेष्यसन्नि-**

## दीपनम्

न कालादौ व्यभिचारः । सत्ख्यातिनिराकरणेन भ्रमविषयरजतस्यानिर्वचनीयत्वमानयति—**न चेत्यादिना** । तत् रजतं अबाधितं नेत्यर्थः । तद्विद्यमानतामात्रस्य सिद्धान्त्यभिमतत्वात् सद्रजतं भासत इति मते किं तत्रैव सत् देशान्तरे वेति विकल्प्याद्यं शङ्कते—**तर्हीति । रजतज्ञानं** भ्रमरूपमित्यर्थः । क्लृप्तत्वमेवाह—**विशेष्येति ।**

## पूरणी

शुक्तिविषयप्रवृत्तिजनकमित्यर्थः । ननु शुक्तिविषयप्रवृत्तिजनकत्वं हेतुः, तदेव पक्षतावच्छेदकमिति हेतुपक्षतावच्छेदकाभेदनिबन्धनसिद्धसाधनदोषः स्यादिति चेत् न; रजतविषयत्वस्य तदतिरिक्तस्य पक्षतावच्छेदकप्रवेशेन तदभावात् । ननु शुक्त्यभिन्नं सदेव रजतमुत्पद्यताम्, न च कारणाभावः; अदृष्टाकृष्टपरमाणूनां प्रकृतेर्वा संभवात्, न च सत्त्वे बाधानुपपत्तिः; प्रमाणबलेन सद्भावस्याप्यभ्युपगन्तव्यत्वात्, इति मतमाशङ्क्याह—**न च तत्तत्रास्तीति** मूले । **त्रैकालिकेति** मूले । सतो बाधसंभवेऽपि स्वकाले तदयोगात् त्रैकालिकनिषे-

1 न वा इन्द्रिय—ग. 2 कम्—क.

**कर्षविशेषणज्ञानादिविशिष्टधीसामग्र्यां सत्यामपि विशेषण-सन्निकर्षाभावे विशिष्टधियोऽदर्शनात् । किं चैवं पर्वते वह्नि-विशिष्टप्रत्यक्षमेव स्यान्न त्वनुमितिः, विशेषणसन्निकर्षाति-रिक्तविशिष्टप्रत्यक्षसामग्रीसत्त्वात् । प्रत्यक्षसामग्र्याश्च संशया-**

---

## दीपनम्

**विशिष्टधियः** प्रमाया इत्यर्थः । [1] उष्णीषाद्यवच्छिन्नकुण्डलादाविति शेषः । अन्यथा विशेष्यसन्निकर्षोऽपि न हेतुः स्यात् । किं च लाघवाद्विषयसन्निकर्षत्वेन कारणं न तु विशेष्यसन्निकर्षत्वेन ; गौरवात् । तत्रापि यावद्विषयसन्निकर्षः कारणम् । अन्यथा एकसम्प्रयोगादप्यनेक-गोचरसमूहालम्बनप्रसङ्ग इति विशेषणसन्निकर्षोऽपि कारणमिति भावः । एवमन्वयव्यतिरेकाभ्यां विशेषणसन्निकर्षस्य हेतुत्वं प्रसाध्य विपक्षे दण्डमाह—**किंचेति** । **एवं** विशेषणसन्निकर्षस्याहेतुत्वे । यत्तु पराम-र्शाद्यनुव्यवसायसामग्र्यां सत्यामप्यनुमितिदर्शनेन तत्सामग्री प्रबलेत्य-नुमितिरेव स्यादिति, अस्तु तथा विशेषदर्शनरूपपरामर्शे सत्यपि संशयानन्तरं प्रत्यक्षोत्पत्तेरेकविषये [2] वैपरीत्यामित्याह—**प्रत्यक्षेति** । न

---

## पूरणी

घप्रमानुपपत्तेरित्यर्थः । ननु विशेषणसन्निकर्षं विना विशिष्टभ्रमस्य पराभ्युपगमेन कथं विशिष्टधीमात्रनिषेध इत्यत आह—**प्रमाया इति** । तथा चान्यत्र क्लृप्तत्वाद्भ्रमेऽपि स हेतुरिति भावः । ननूष्णीषाद्याच्छ-न्नकुण्डलादौ विशेषणासंसर्गाग्रहविरहादेव न विशिष्टप्रत्यक्षम्, तत्सत्त्वे तदभ्युपगमादित्यपरितोषादाह—**किंचेति यावदिति** । ननु याव-द्विषयसन्निकर्षत्वेन हेतुत्वे गौरवं समानमिति चेन्न ; विषयसान्निकर्ष-

---

1 उष्णीषाद्याच्छादितकुण्डल—ख. 2 वैपरीत्यादित्याह—ङ.

**नन्तर[1]मेवानुमितिसामग्रीतो बलवत्त्वात्। न च प्रमायामेव विशेषणसन्निकर्षः कारणम्; लाघवेन विशिष्टप्रत्यक्षमात्रे तस्य हेतुत्वात्।**

## दीपनम्

च तत्र पक्षताविरहादेवानुमित्यभावः; उभयत्रापि तुल्यत्वात्। साधकमानाभावघटितायास्तस्या उभयत्राप्यसत्त्वात्। सिद्ध्यभावघटितायाः उभयत्रापि सत्त्वात्। न चानुमित्सयैवानुमितिः; तदभावेऽप्यनुमितिदर्शनादिति भावः। **विशिष्टेति**। जन्यविशिष्टेत्यर्थः।

---

## पूरणी

त्वेनैव हेतुत्वे यो यो विषयस्तत्तत्सन्निकर्षः सर्वोऽपि हेतुर्लभ्यत इति फलतो यावत्त्वमुक्तं न च तस्यावच्छेदकप्रवेश इति भावः। **उभयत्रापीति**। प्रकारभेदेन सत्त्वासत्त्वाभ्यामिति शेषः। संशयोत्तरप्रत्यक्षस्थले साधकप्रत्यक्षमानवदनुमितिविषयेऽपि लिङ्गपरामर्शात्मकसाधकमानसत्त्वेन तदभावघटितायास्तस्या असंभवदुस्थत्वादित्यर्थः। यद्वा विशेषणसन्निकर्षस्य प्रत्यक्षाहेतुत्वे तदतिरिक्तप्रत्यक्षसामग्रीरूपसाधकमानस्य पर्वतवह्न्यादावपि सत्त्वेन तदभावघटितायाः पक्षतायाः संशयोत्तरप्रत्यक्षस्थले अनुमितिविषये चासत्त्वादित्यर्थः। अतो लाघवाच्च सिद्ध्यभावघटितैव पक्षताऽऽस्थेया। सा च तत्राप्यस्तीत्याह—**सिद्ध्यभावेति**। नन्विच्छाघटितसामग्र्याः सर्वतो बलवत्त्वात्सत्यामपि प्रत्यक्षसामग्र्यामनुमित्सयानुमितिः स्यादित्याशङ्क्य निषेधति—**न चानुमित्सयेति**। **तदभावेऽपीति**। गर्जितादिश्रवणेन झटित्यननुमित्सितघनाद्यनुमानं न

---

[1] रमिव—ख. ग.

## ज्ञानप्रत्यासत्तिखण्डनम्

**नच ज्ञानं संस्कारो वा प्रत्यासत्तिरिति वाच्यम्; ज्ञानस्य [1]प्रत्यासत्तेरन्यत्र निरस्तत्वात् ।**

### दीपनम्

अन्यथा सत्यप्रवृत्तिरेव स्वविषयज्ञानजन्या स्यादिति भ्रान्तिरेवं न स्यादिति भावः ।

विशेषणसन्निकर्षस्य हेतुत्वमाशङ्क्याह—**न चेति । ज्ञानस्येति ।** संस्कारस्येत्यपि द्रष्टव्यम् । **अन्यत्रेति ।** यद्यन्यत्रेन्द्रियसम्प्रयोगाद्यजन्ये ज्ञाने साक्षात्करोमीत्यनुभवः स्यात् तदा ज्ञानं प्रत्यासत्तिः स्यात् । न चैतदस्ति । न ह्यतीते दण्डे दण्ड्ययमासीदित्यनुभवेऽपि दण्डामिदानीं

### पूरणी

स्यादिति भावः । ननु यत्र व्याप्यदर्शनघटिता प्रत्यक्षसामग्री तत्र तस्या अनुमितिसामग्रीतो बलवत्त्वम्, अन्यथा पर्वतांशे प्रत्यक्षसामग्रीसत्त्वादनुमित्यनापत्तेः न चात्र वह्निप्रत्यक्षे व्याप्यदर्शनं हेतुः, अतो न सा बलवतीति चेन्न; वह्निसंशयोत्तरं वह्निप्रत्यक्षे व्याप्यदर्शनस्य हेतुतया तद्घटितप्रत्यक्षसामग्र्या बलवत्त्वेनानुमित्यनापत्तेर्वज्रलेपत्वादिति ध्येयम् । ईश्वरज्ञानव्यावर्त्यमाह--**जन्यविशिष्टेति । सत्यप्रवृत्तिरिति ।** संवादिप्रवृत्तौ भिन्नविषयकमपि ज्ञानं हेतुः स्यादिति न भ्रान्तिः सिद्ध्येदित्यर्थः । यदि लाघवात्प्रवृत्तित्वावच्छेदेन समानविषयज्ञानस्य हेतुता तर्ह्यत्रापि विशिष्टप्रत्यक्षमात्रे तथास्त्विति भावः ।

**यद्यन्यत्रेति ।** क्लृप्तसन्निकर्षाविषयवस्तुगोचरज्ञाने साक्षात्त्वानुभवोऽतिरिक्तसन्निकर्षकल्पकः यथा इन्द्रियासंयुक्तशब्दादिगोचरज्ञाने शब्दं साक्षात्करोमीत्यनुभवात्समवायादिसन्निकर्षः । न चात्र तथा, येन ज्ञानं सन्निकर्षः स्यादिति भावः । **अनुभवेऽपीति ।** दण्ड्य-

1 प्रत्यासत्तित्वस्य–ग.

### दीपनम्

साक्षात्करोमि पश्यामीति वा कश्चिदनुभवति । प्रत्यभिज्ञानादा तत्ताद्यंशे

### पूरणी

यमासीदित्यत्र दण्डाभाव एव तथा पुरोवर्तिनिष्ठतया अनुभूयते न तु पूर्वकालदण्डवैशिष्ट्यमिति । परमार्थतस्तदनुभवो नास्त्येव । तदभ्युपगमेऽपीत्यर्थः । यद्वा दण्डत्रयमिति वर्तमानदण्डानुभव इव दण्डत्रयमासीदित्यतीतदण्डत्र्यनुभवविषयेऽपि न कस्यचिद्दण्डं पश्यामीत्यनुभवोऽस्ति, येन तदंशे ज्ञानमासत्तिः स्यादित्यर्थः । **तत्ताद्यंशे चेति** । चकारेणाभावस्यैन्द्रियकत्वेऽपि अभावज्ञानं प्रतियोग्यंशे, दण्डत्रयमासीदित्यनुभवोऽपि दण्डवैशिष्ट्यांशे स्मृतिरेवेति दर्शयति । नच तामिमं पश्यामीति तत्तांशेऽपि प्रत्यभिज्ञायाश्चाक्षुषत्वानुभवात्कथं तदंशे स्मृतिरूपत्वमिति वाच्यम् ; तमिममित्यैक्यांश एव चाक्षुषत्वानुभवात् अन्यथा तत्तां पश्यामीत्यनुभवापत्तेः । तद्देशकालसंबन्धं स्मरामीत्यनुभवाच्च । यद्वा तदंशे तज्ज्ञानं परोक्षानुभवरूपं, इन्द्रियसन्निकर्षाजन्यानुभवत्वात् । परोक्षत्वापरोक्षत्वयोरपि स्मृतित्वानुभवत्ववदंशभेदेनोपपत्तेः । वस्तुतस्तु तज्ज्ञानं तत्तांशेऽप्यध्यक्षमेव ; लाघवेन यत्किंचिद्विषयेन्द्रियसन्निकर्षजन्यत्वस्य सर्वांशेऽपि तज्ज्ञानापरोक्षत्वप्रयोजकत्वात् । न चैवं घटेन्द्रियसन्निकर्षे घटपटोभयगोचरप्रत्यक्षापत्तिः ; विशेषणविशेष्यभावस्य नियामकत्वात् पटांशज्ञानहेतुसहकारिविरहाच्च । इतरांशयत्किंचिज्ज्ञानसहकारिसमवहितस्यैव तथात्वात् । तत्तांशे च संस्कारस्य तद्धेतोः सत्त्वात् स्मृतिहेतोरपि संस्कारस्य प्रमाणान्तरसहकारेण तज्जातीयकार्यजननसामर्थ्यस्य फलबलेनाभ्युपगमात् । व्याप्तिसंस्कारजन्यानुमित्यादौ तथा कल्पनाच्च । अत एव संस्कारजन्यत्वेऽपि तज्ज्ञानं तत्तांशे न स्मृतिः ; प्रमाणान्तरासहकृतसंस्कार-

**शुक्तौ रजतस्य पूर्वमननुभूतत्वेन तत्र ज्ञानस्य प्रत्यास-**

## दीपनम्

च ज्ञानं स्मृतिरेव । तत्र तदंशे संस्कारातिरिक्तकारणाभावात् प्रमात्वाप्रमात्ववदनुभवत्वस्मृतित्वयोरप्येकवृत्तितासंभवात् । अनुव्यवसायश्च विप्रतिपन्न इति न ततोऽपि ज्ञानस्य प्रत्यासत्तित्वम् । किं चैवमपि पर्वतादावप्यनुमितिर्न स्यात्, प्रत्यक्षसामग्र्याः सत्त्वात् । नच लौकिकसामग्री बलवती; लाघवेन प्रत्यक्षसामग्रीमात्रस्य बलवत्त्वात् । संशयानन्तरं भ्रमरूपविशेषदर्शनेन भ्रमप्रत्यक्षस्यैव दर्शनाच्चेति । **अन्यत्रेति**—विवरणटिप्पण्यादावित्यर्थः । अन्यत्र ज्ञानप्रत्यासत्तिमभ्युपेत्याह—**शुक्तावित्ति** । यत्र हि यदनु-

## पूरणी

जन्यत्वस्य तत्त्वे प्रयोजकत्वात् । न चैवं रजतसंस्कारसहकृतशुक्तीन्द्रियसन्निकर्षादेव रजतविशिष्टशुक्तिप्रत्यक्षोपपत्तेरन्यथाख्यातिः सिद्ध्येदिति वाच्यम्; तदिन्द्रियसन्निकर्षजन्यत्वस्य स्वातन्त्र्येण तदंशापरोक्षताव्यञ्जकतया रजतेन्द्रियसंन्निकर्षं विना रजतं पश्यामीत्यनुभवानुपपत्तेरिति संक्षेपः ॥

**तदंश इति** । संस्कारमात्रासाधारणकारणत्वस्य च स्मृतित्वप्रयोजकत्वादिति भावः । ननु घटं पश्यामीति मानसानुव्यवसाये घटज्ञानं सन्निकर्षः, मनसो बाह्यघटादिना सन्निकर्षान्तराभावादित्यत्राह—**अनुव्यवसायश्चेति** । स एव नास्तीत्यर्थः । ज्ञानस्य प्रत्यासत्तित्वाभ्युपगमे दण्डमाह—**किंचैवमिति** । वह्निज्ञानसन्निकर्षघटितप्रत्यक्षसामग्र्याः सत्त्वात्तत्प्रत्यक्षमेव स्यादित्यर्थः । लौकिकसामग्र्याः प्राबल्ये दोषान्तरमाह—**संशयेति** । तत्र पुरुषत्वज्ञानसन्निकर्ष-

## दीपनम्

भूतं तत्रैव ज्ञानं प्रत्यासत्तिर्भवदपि भवेत् न ज्ञानमात्रम् । पूर्वमदृष्टदण्डे देवदत्ते दण्ड्ययमासीदिति प्रतीत्यदर्शनात् । अन्यथा तत्र तत्संशयायोगात् । न च दोषात्सः; ज्ञानवैशिष्ट्ये तददर्शनेन तदज्ञा-

## पूरणी

घटितप्रत्यक्षसामग्र्या अलौकिकत्वेन लौकिकानुमितिसामग्र्यास्ततो बलवत्त्वात्तत्प्रत्यक्षभ्रमो न स्यादित्यर्थः । ननु दोषघटिततया तत्प्रत्यक्षसामग्र्याः प्राबल्यम्, दोषस्य सर्वप्रतिबन्धकत्वादिति चेत्, एवं सति भ्रान्तानुमितिर्न स्यात् । तत्रोक्तरीत्या दोषघटिततत्सामग्र्याः सत्त्वात् । न च दोषविशेषघटिततया प्राबल्यम्; उभयत्र लिङ्गभ्रमस्य दोषत्वेन तद्विशेषस्य दुर्निरूपत्वादिति संक्षेपः । **ज्ञानवैशिष्ट्य इति** । दण्डवैशिष्ट्यज्ञाने च तदज्ञानात्मकदोषाभावादाच्छादितानुभूतदण्डवति देवदत्ते तत्संशयो न स्यादित्यर्थः । ननु यत्र यदनुभूतमित्यादिनियमेऽपि अन्यावच्छेदेन तदनुभवे अवच्छेदकान्तरेण तद्धर्मिज्ञानेऽपि तत्सन्निकर्षमादाय तद्विशिष्टप्रत्यक्षं स्यात्, नच तदस्ति; चन्दनत्वावच्छेदेन सौरभग्रहे पश्चाद्द्रव्यत्वावच्छेदेन तद्ग्रहे सुरभि चन्दनमिति [1]प्रत्यक्षापत्तेः; यदवच्छेदेनेत्यवश्यं वाच्यम्, तथा च लाघवाद्यदवच्छेदेन यदनुभूतं तदवच्छिन्नतद्धर्मिकतत्प्रत्यक्षे तज्ज्ञानं सन्निकर्षो वाच्यः, एवं च चाकचक्यावच्छेदेन रजतत्वानुभवात्तदवच्छिन्नप्रत्यक्षे तज्ज्ञानं सन्निकर्षोऽस्तु, न च यत्रेत्यस्याप्रवेशे पीता पृथिवीति सामान्यतोऽनुभवानन्तरं विशेषतोऽननुभूतघटे पीतोऽयमिति प्रत्यक्षं स्यात्, तत्प्रवेशे तु पूर्वं

---

[1] प्रत्यक्षानुपपत्तेः—क.

## दीपनम्

नातिरिक्तदोषाभावात् । अपि च यदि ज्ञानमात्रं प्रत्यासत्तिस्तदा इच्छाघटितसामग्रीप्राबल्यात् पर्वते चाक्षुषज्ञानेच्छायां प्रसिद्धानुमितिर्न स्यात् । नचानुमित्यादिसामग्र्यसमवहितमेव ज्ञानं प्रत्यासत्तिरिति वाच्यम् ; भ्रमरूपविशेषदर्शनस्थले तदभावात् । न चानुमितौ प्रमात्वं विशेषणम् ; भ्रमानुमित्युच्छेदप्रसङ्गात् । चन्दनत्वादौ तत्र सौरभादिव्याप्तौ च संशयदशायां सुरभि चन्दनमिति प्रत्यक्षासंभवेन तस्यैव

---

## पूरणी

तद्धर्मिणि तदननुभवान्नायं प्रसङ्ग इति वाच्यम् ; तत्र पृथिवीत्वावच्छेदकधर्मदर्शनेऽपि तत्त्वासंसर्गाग्रहे च तत्प्रत्यक्षस्येष्टत्वात् तद्धर्मादर्शने तु विशेषतः पीततयानुभूतघटादावपि न तत्प्रत्यक्षमित्यपरितोषादाह—**अपि चेति** । तथापि धूमवत्त्वावच्छेदेन वह्निमत्त्वानुभवाद्वह्निज्ञानसन्निकर्षमादाय तद्विशिष्टप्रत्यक्षं स्यादिति यत्रेत्यवश्यमिति भावः । ननु प्रत्यासत्तितावच्छेदकाभावान्न वह्न्यादिज्ञानं प्रत्यासत्तिरित्याशङ्क्य निषेधति—**नचानुमितीति** । ननु प्रमानु[1]मितिसामग्र्यसमवहितत्वेन ज्ञानमासत्तिरित्याशङ्क्य निषेधति—**न चानुमिताविति** । ननु तत्र दोषविशेष एव नियामक इत्यापाततोऽनुशयादाह—**चन्दनत्वादाविति** । सौरभव्याप्तचन्दनत्वादिग्रहे सति सौरभप्रत्यक्षं नान्यथेति अनुमितिसामग्रीसमवहितस्यैव प्रत्यासत्तित्वम् । अतो न तदसमवहितत्वमासत्तितावच्छेदकमित्यर्थः । यद्वा ननु यत्र यदनुभूतमिति नियमाभ्युपगमे चन्दनत्वावच्छेदेनैकत्र सौरभग्रहे चन्दनखण्डान्तरे तत्प्रत्यक्षं न स्यात् । अतो यदवच्छेदेनेत्यादिनियम एव स्वीकर्तव्य इत्याशङ्क्याह—**चन्दनत्वादाविति**। चन्दन-

---

1 मितेःसा.

## दीपनम्

प्रत्यासत्तित्वाच्च। न च शुक्तौ रजतं प्रागनुभूतमिति नात्र ज्ञानं प्रत्यासत्तिः। किंच ज्ञानप्रत्यासत्तिजन्यत्वेऽस्य लौकिकसाक्षात्कारत्वं न स्यात्, तथा च रजतं पश्यामि साक्षात्कारोमीत्यनुव्यवसायः प्रवृत्तिर्वा न स्यादिति भावः। दोषस्य प्रत्यासत्तित्वे अप्रामाण्यपर-

---

## पूरणी

खण्डान्तरे त्वदभिमतसौरभप्रत्यक्षं सौरभव्याप्तचन्दनत्वादिग्रहाधीन-मिति तत्सत्त्वे तदनुमितेरेव तत्रोत्पत्तेः पूर्वानुभूतदेशीयज्ञानस्यैवा-सत्तित्वमित्यर्थः। ननु स्वायोग्यावर्तमानविषये ज्ञानस्य प्रत्यासत्तित्वम्, पर्वते वह्नेर्वर्तमानत्वान्न तज्ज्ञानमासत्तिः, शुक्तौ रजतत्वादेरवर्त-मानत्वात्तज्ज्ञनमासत्तिः स्यादित्यनुशयादाह—**किं चेति। प्रवृत्ति-र्वेति।** अलौकिकज्ञानस्याप्रवर्तकत्वात्। अन्यथा व्यवहितातीता-दावपि सा स्यादिति भावः॥

ननु पश्यामीत्यनुभवे न लौकिकत्वं प्रयोजकम्, किं तु योग्यवर्त-मानतागोचरत्वम्, अतो न सौरभं पश्यामीत्यनुव्यवसायः; अयोग्यत्वात्, दण्ड्ययमासीदित्यनुभवे दण्डं पश्यामीति नानुभवः; तदनुभवस्य दण्डातीततागोचरस्य वर्तमानविषयत्वाभावात्, नापि प्रवृत्त्यनुपपत्तिः; रजतांशालौकिकस्यापि शुक्त्यंशे लौकिकत्वेन तत्र प्रवृत्त्युपपत्तेरिति चेत्, अत्र ब्रूमः—सन्निकर्षः प्रत्यासत्तिः संबन्ध इत्यनर्थान्तरम्। अतो ज्ञानं न चक्षुरर्थसन्निकर्षः। ज्ञानमादायेन्द्रियार्थयोर्विशिष्टबुद्ध्य-दर्शनेन तदसंबन्धरूपत्वाद्विशिष्टधीनियामकस्य च संबन्धत्वात्। अत एव न सामान्यादिकमिन्द्रियार्थसन्निकर्षः। अनेवंविधस्यापि सन्नि-कर्षत्वे तद्विरुम्बेन किंचिदपि वस्तु नाप्रत्यक्षं स्यात्। पर्वतवह्न्यादावपि

## पूरणी

धूमादेः प्रत्यासत्तित्वस्य वक्तुं शक्यत्वात् । सन्निकर्षविभागनियमोऽपि न स्यात्; घटादेरपि सन्निकर्षत्वसंभवात् । न च फलबलेन सन्निकर्षकल्पनम्, वह्न्यादौ च पश्यामीति व्यवहाराभावात् अनुमिनोमीति विलक्षणव्यवहाराच्च न धूमादेः सन्निकर्षतेति वाच्यम्; तर्हि सौरभं पश्यामीत्यनुभवासिद्ध्या ज्ञानादिकमपि नासत्तिः स्यात् । किं चेन्द्रियव्यापारानन्तरमेव इदानीं घटः नीलं नभः वायुर्वहतीति प्रत्ययात् अत्र नीलं नभः पश्यामीत्यादि व्यवहारदर्शनादनुमिनोमीति तत्र विपरीतव्यवहारादर्शनाच्च सत्तादियत्किंचिद्धर्मप्रत्यासत्त्या केवलकालादिगोचरज्ञानमपि प्रत्यक्षं स्यात् । न च रूपशून्यत्वात्कालादीनां न प्रत्यक्षता, विषयगतोद्भूतरूपस्य तद्धेतुत्वादिति वाच्यम्; संयोगादिषोढासन्निकर्षजनितप्रत्यक्ष एव तद्धेतुत्वात् । अन्यथा प्रमेयत्वादिसामान्यप्रत्यासत्त्या गगनादिगोचरप्रत्यक्षानापत्तेः । मनो वा यत्किंचिद्धर्मप्रत्यासत्त्या कालादिप्रत्यक्षं जनयेत् । बहिरिन्द्रियप्रत्यक्षतायामेवोद्भूतरूपवत्त्वस्य प्रयोजकत्वात् । अन्यथा ज्ञानसन्निकर्षेण मानसगगनादिप्रत्यक्षानापत्तेः । तस्मात्संयोगसमवायविलक्षणसन्निकर्षेण न वस्तुग्रहः; अतिप्रसङ्गादिति न ज्ञानादिकमासत्तिः । अत एवोक्तसन्निकर्षाभावादभावो नेन्द्रियगोचरः । किं त्वनुपलब्धिगम्यः । अस्तु वाभावोऽपीन्द्रियविषयः; स्वरूपसंबन्धवादिनां विशेषणताया विशिष्टधीनियामकत्वेन संबन्धकल्पत्वात् । ज्ञानादौ तु नासत्तिताशङ्कापि । न च ज्ञानस्यापि विषयतारूपसंबन्धत्वमस्तीति वाच्यम्; स्वरूपसंबन्धस्य निराकरिष्यमाणत्वात् । स्वरूपस्य संबन्धत्वेऽपि तस्येन्द्रियसन्निकर्षत्वे सत्सामान्यमित्यादौ सत्तास्वरूपस्यापि विशिष्टधीनियामकत्वेन संबन्धतया गगनादेस्तेन संबन्धेन प्रत्यक्षतापत्तेश्चेति संक्षेपः ॥

## दीपनम्

तस्त्वं न स्यात्; प्रत्यक्षसामान्यप्रयोजकातिरिक्तकारणाभावात्,

## पूरणी

किं च चक्षुरसंबन्धित्वान्न ज्ञानं चक्षुस्सन्निकर्षः। न च चक्षुर्जन्यतया तत्संबन्धित्वम्; घ्राणजसौरभादिज्ञानस्य चक्षुस्सन्निकर्षत्वानापत्तेः। न च चक्षुस्संयुक्तात्मसमवेततया तत्संबन्धित्वम्; तत्समवेतसुखेच्छादेरपि प्रत्यासत्तित्वप्रसङ्गात्, विषयचन्दनादिसंबन्धस्यापि सुखादौ सत्वात्, स्वचक्षुस्संयुक्तपरात्मसमवेतज्ञानस्यापि प्रत्यासत्तित्वप्रसङ्गात्, चक्षुस्संयुक्तस्वात्मसमवेतत्वेन तत्सबन्धितया तत्सन्निकर्षत्वकल्पनायां गौरवात् सुखादावतिप्रसङ्गात्, कथंचित्संबन्धेन सन्निकर्षत्वे वोक्तदोषानतिवृत्तेर्मानाभावाच्च। न च सुरभि चन्दनमिति प्रत्यक्षानुरोधेन तदावश्यकता; स्मृत्यनुभवरूपतयापि तदुपपत्तेः। न च स्मृतित्वानुभवत्वयोर्विरोधेनैकत्रासंभवः; प्रमात्वाप्रमात्ववदुपपत्तेः। न च प्रमात्वाप्रमात्वयोरुपाधिरूपत्वादस्त्वेकत्र समावेशः, उपाधिसङ्करस्यादोषत्वात्, स्मृतित्वानुभवत्वयोस्तु जातिरूपतया नैकत्र समावेशः, जातिसाङ्कर्यस्य दोषत्वादिति वाच्यम्; तयोर्जातित्वासिद्धेः। जातित्वेऽप्यव्याप्यवृत्तित्वादविरोधः। एकावच्छेदेनैव तत्सङ्करस्य दोषत्वादिति दिक्॥

न च मनसो ज्ञानं सन्निकर्षः; चक्षुस्सन्निकर्षत्वाभावेन रजतादिप्रत्ययस्य चाक्षुषत्वानुपपत्तेः, मनस्सन्निकर्षजन्यत्वेन मानसत्वापत्तेः, तत्तद्विषयसन्निकृष्टस्य चक्षुषस्तदंशज्ञानजनकतया तत्सन्निकर्षं विना तद्विषयज्ञानजनकत्वानुपपत्तेश्च। तस्मान्न भ्रमविषये रजतादौ ज्ञानमासत्तिरिति सर्वं सुन्दरम्॥

**प्रत्यक्षसामान्येति।** ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीप्रयोज्यत्वं परतस्त्वम्। दोषस्य प्रत्यासत्तित्वे सामान्यसामग्र्यन्तर्भावा-

**त्तित्वायोगाच्च। नापि दोष एव प्रत्यासत्तिः; तस्य यथार्थविशेषणांशज्ञानाजनकत्वात् ॥**

---

### दीपनम्

दोषान्वयव्यतिरेकयोश्च तत्प्रत्यासत्तिविषयत्वेन दोषविधया कारणत्वे प्रमाणाभावादिति दोषे सत्येव दोषान्तरमाह—**तस्येति**। भ्रमो हि परमते धर्म्यंश इव धर्मांशेऽपि यथार्थ एवेति तदंशेऽपि दोषाजन्य एवेत्यर्थः।

---

### पूरणी

दतिरिक्तकारणप्रयोज्यत्वाभावेनाप्रमायाः परतस्त्वं न स्यादित्यर्थः। ननु दोषस्य प्रत्यक्षभ्रमे प्रत्यासत्तिविधया हेतुत्वम्, अप्रमात्वावच्छिन्नं प्रति दोषविधया च हेतुत्वम्, अतः प्रत्यासत्तिरूपेण सामान्यसामग्र्यन्तर्भावेऽपि दोषविधया तदतिरेकात्तत्प्रयोज्यतया परतस्त्वं स्यादित्यत्राह—**दोषान्वयेति**। यद्यप्यप्रमात्वावच्छिन्नकार्येऽनुगतहेत्वन्तराभावेन तदाकस्मिकत्वापत्तिः दोषविधयापि हेतुत्वे मानमस्ति, तथापि प्रमातृकरणदोषस्य विषयासंबन्धित्वेन इन्द्रियार्थोभयानिरूपितत्वेन न तत्सन्निकर्षरूपत्वमिति मन्तव्यम् ॥

ननु दोषवशादसन्निकृष्टस्यापि भानमस्तु, दोषस्य क्लृप्तसामग्र्यनपेक्षणात्, अन्यथा त्वन्नयेऽपि क्लृप्तरजतादिसामग्रीविरहान्नानिर्वचनीय[1]तदुत्पत्तिरपि स्यादिति चेन्न; तथा सति ज्ञानस्य समानविषयत्वमन्तरापि दोषादेव विसंवादिप्रवृत्तिसंभवादन्यथाख्यात्यभ्युपगमोऽपि निर्बीजः स्यात्। यदि दोषाणां कार्यविसंवादमात्रे प्रयोजकत्वं न तु क्लृप्तसामग्रीविनाभाव इति मन्यसे तदा प्रकृतेऽपि तुल्यम्। न चैवमनिर्वचनीयरजतादेरनुपपत्तिः; भावकार्यक्लृप्तहेतोरुपादानादेरज्ञानादिरूपस्यात्रापि परिपूर्णत्वेन तदुपपत्तेरिति संक्षेपः ॥

---

1 तदुपपत्ति.

**किं च ज्ञानस्य स्वविषय एव प्रवर्तकत्वात्** [1]**अन्यत्रैवास्मिन्मतेऽपि प्रवर्तेत । रजतज्ञानविषयरजतस्यान्यत्रैव सत्त्वात् ॥**

**ननु न रजतं विषयः, शुक्तिरेवेति चेत् (न) अन्याकारज्ञानस्यान्यालम्बनत्वे संविद्विरोधात् । ननु रजतत्ववैशिष्ट्यं शुक्तौ विषयीकरोति ज्ञानमिति नानुभवविरोधो न वा प्रवृत्त्यनुपपत्तिः, यत्रेष्टतावच्छेदकवैशिष्ट्यं विपयीक्रियते तत्र ज्ञानस्य प्रवर्तकत्वादिति चेत्, न ; इदं रजतमिति ज्ञानं हि पुरो**[2]**वर्तिनि** [3]**रजतत्वविशिष्टाभेदं विषयीकरोति न तु पुरोवर्तिनि रजतत्वसंसर्गम्,** [4]**रजतस्मृतावुपसर्जनस्य तस्यारोपासंभवात् । आरोपे चारोप्यस्य स्वतन्त्रोपस्थितिर्हेतुः । अन्यथा संसर्गा-**

दीपनम्

अख्यातािवान्यथाख्यातावपि प्रवृत्त्यनुपपत्तिं बाधकमाह—**किं चेति । रजतेति** । इदं रजतमिति ज्ञानं हि रजतविषयं सद्रजतार्थिनं पुरोदेशे प्रवर्तयति । न त्विदमंशविषयतामात्रेण ; अतिप्रसङ्गात् । तथा च यद्विषयं सत्प्रवर्तकं तद्देशान्तर एवेति तत्रैव प्रवृत्तिः स्यादिति भावः ॥

उक्तदोषपरिहारार्थं रजतज्ञानमपि पुरोवर्तिविषयमेवास्त्वित्याशङ्क्य दूषयति—**नन्वित्यादिना** । एवमपि देशान्तरीयरजते प्रवृत्तिः स्यान्न पुरोवर्तिनीत्यभिप्रेत्य शुक्तौ रजतत्वारोपं दूषयति—**इदमिति** । न चोपस्थितिमात्रमारोपहेतुरित्याह—**आरोपे चेति** ।

पूरणी

**अतिप्रसङ्गादिति** । इदंज्ञानमात्रात्प्रवृत्तिः स्यादित्यर्थः । **अन्याकारेति** मूलम् । रजतत्वरूपेण रजतगोचरस्य तेन रूपेण शुक्तिगोचरत्वायोगादित्यर्थः । ननु प्रतियोग्यारोपादीनामैच्छिकतया

1 अन्यत्रेवा—**ग.** 2 वर्तिनो—**ख. ग. छ.** 3 रजतत्ववैशिष्ट्यात्तदभेदं—**ग.**
4 रजतमिति स्मृत्या उपसर्जनस्य—**ख.**

**भावधीनियामकप्रतियोग्यारोपसमये तादात्म्यारोपप्रसङ्गात् । स्वतन्त्रोपस्थितरजतारोपसामाग्र्यां सत्यामुपसर्जन[1]स्यैवारोप इति नियन्तुमशक्यत्वात् । न चोभयारोपे प्रमाणमस्ति ।**

## दीपनम्

**तादात्म्येति ।** तदा प्रतियोगितावच्छेदकरूपतादात्म्यस्यापि प्रतियोगिविशेषणतयोपस्थितत्वात् अन्योन्याभावधीरेव स्यान्न संसर्गाभावधीः । न च तत्रेच्छैव नियामिकेति वाच्यम्; देशविशेष घटादिवैशिष्ट्यज्ञानस्येच्छाधीनतया प्रागनुपस्थितस्य तस्येच्छानुपपत्तेः । यत्र कुत्रचिद्वैशिष्ट्यज्ञानेच्छा तु नाभावस्थलीयवैशिष्ट्यज्ञानहेतुः । किं चैवमिच्छयैवाभावविशेषज्ञानोपपत्तौ किमारोपेणेति भावः। यथाकथंचिदुपस्थितिमात्रस्यारोपहेतुत्वमभ्युपेत्याह—**स्वतन्त्रेति। नचोभयेति ।** अनुभवान्यथानुपपत्तेरिति भावः । किं च रजतत्वमिहेति प्रत्यक्षं न कस्यचिदस्ति, न वा संभवति; रजतमिति धीसामग्र्याः सत्वात् । युगपदेकस्य विशेषणविशेष्यभावायोगात्,

## पूरणी

तत्तदिच्छैव नियामिकेत्याशङ्क्य निषेधति—**न च तत्रेति । यत्र कुत्र चिदिति ।** देशान्तरघटादिवैशिष्ट्यानुभवेऽपि तदिच्छानिवृत्तेरित्यर्थः । यद्वा आरोपानुरोधेन प्रतियोगिस्मरणस्य वाच्यतया तस्य यत्किंचिद्वैशिष्ट्यगोचरत्वेन तद्वैशिष्ट्यज्ञानसामान्येच्छानुपपत्तेरित्यर्थः । ननु घटादिवैशिष्ट्यज्ञाने देशविशेषविषयकत्वेच्छैव तन्नियामिका, घटादिवैशिष्ट्यज्ञानं सामान्यतः प्रसिद्धमित्यपरितोषादाह—**किं चैवमिति ।** तत्तदभावप्रतीतीच्छाया एवाभावविशेषप्रतीतिहेतुत्वे आरोपवैयर्थ्यं स्यादित्यर्थः । ननु रजतरजतत्वोभयविशेष्यकं ज्ञानमिदं रजतं इह रजतत्वमित्याकारमस्त्वित्यत आह—**युगपदिति ।**

[1] स्यारोप—**ख. ग.**

## दीपनम्

अप्रतीतेश्च । अत एव भूतलं घटवदिति प्रत्यक्षज्ञानेऽपि घट-निरूपितवैशिष्ट्यमेव भूतलविशेषणमिति प्रतीत्यनुरोधात्स्वीकर्तव्यम् ।

---

## पूरणी

पुरुषे दण्डः दण्डी पुरुष इति ज्ञानद्वये एकस्यापि विशेषणविशेष्य-भावोऽस्तीत्यत उक्तं—युगपदिति । नन्वयं घटः इदं घटवदित्येव-माकारकं भूतलं घटवदिति ज्ञाने एकघटस्य विशेषणविशेष्यभावोऽ-नुभूयते । नच तत्र घटो विशेषणमेव न विशेष्य इति वाच्यम् ; तद्विशेष्यकधीसामग्रीसत्त्वेन तदावश्यकत्वात् । अन्यथा पूर्वमपि घटविशेष्यकज्ञानानुदयप्रसङ्गेन विशेषणतावच्छेदकघटत्वप्रकारकज्ञान-विरहाद्भूतलं घटवदिति ज्ञानाभावप्रसङ्गादित्यत आह—**अत एवेति** । एकस्य विशेषणविशेष्यभावायोगादेवेत्यर्थः । **प्रत्यक्षेति** । घटवदिति शाब्दज्ञाने मतुबर्थसंबन्धस्य विशेषणत्वं सिद्धम् । प्रत्यक्षेऽपि तथे-त्यर्थः । ननु वैशिष्ट्यसंबन्धाप्रतीत्या कथं तद्वैशिष्ट्यस्य विशेषणत्वम्, भासमानवैशिष्ट्यप्रतियोगिनः प्रकारत्वादित्यत आह—**प्रतीत्यनुरोधादिति** । घटस्य विशेष्यत्वप्रतीत्यनुरोधात्तद्वैशिष्ट्यसंबन्ध-भानमपि स्वीकर्तव्यमित्यर्थः । यद्वा ननु तत्र घटो विशेषणमेवास्तु न विशेष्य इत्यत्राह—**प्रतीत्यनुरोधादिति** । भूतले घट [1] इत्यत्रे-वात्राप्यपरतन्त्रस्वभावतया प्रतीत्यविशेषादित्यर्थः । यद्यप्येकापेक्षयैकस्य विशेषणविशेष्यभावो विरुद्धः, इह घटस्य घटत्वापेक्षया विशेष्यता भूतला-पेक्षया विशेषणतेति न विरोधः, तथापि प्रकारत्वं प्रकारित्वं च ज्ञाननिरू-पितो विषयताविशेषः । तत्रैकज्ञाने एकस्य प्रकारत्वं प्रकारित्वं च विरुद्ध-

---

1 इत्यत्रैवापरतन्त्र–झ.

**न च रजतत्वमिति स्मरणं भ्रमपूर्वं नियमेन कल्पयितुं शक्यम्। तस्माद्रजतत्ववैशिष्ट्यं रजत एव विषयीक्रियत इति तत्रैव**

---

### दीपनम्

न चात्र तथा, रजतत्वादेः तद्वत्पृथग्ज्ञानाभावादिति रजतत्वमिति स्मरणं नैव भवति। क्वचिदभ्युपेत्याप्याह—**न च रजतत्वमिति**।

---

### पूरणी

मित्यभिप्रेत्यैवमुक्तम्। यद्वा भूतले घटः भूतलं घटवदित्येव युगपत्प्रतीयते, सामग्र्याः सत्त्वात्। तत्र चैकस्य एकभूतलं प्रति विशेषणविशेष्यभावो विरुद्ध इत्याशङ्क्येत्थं वर्णनं द्रष्टव्यम्। यत्तु युक्तं चैतदित्याह—**अत एवेति**। भूतलं घटसंयोगवत् भूतले घटसंयोग इति धीद्वयसामग्रीसत्त्वेऽप्येकदा संयोग एव विशेषणतया भाति न भूतलम्, न वा संयोगो विशेष्यतया, उक्तविरोधादित्यर्थ इति, तन्न; घटवद्भूतलं भूतले घट इति घटविषयेऽप्येवं वक्तुं शक्यतया संयोगपर्यन्तवैयर्थ्यात्। संयोगविशेषणताप्रतीतिसमये न तद्विशेष्यतावगम इत्यत्रोक्तविरोधस्यैव हेतुतया प्रतीत्यनुरोधादिति हेत्वन्तरानन्वयप्रसङ्गात्, अस्यार्थस्य परमतसिद्धतया न्यायसम्पाद्यत्वाभावेन स्वीकर्तव्यमिति निर्देशानुपपत्तेश्चेति दिक्॥

नन्वत्रापि रजतत्ववैशिष्ट्यं विशेषणं रजतत्वं विशेष्यतया भासतामित्यत्राह—**न चात्रेति**। **रजतत्वादेरिति**। घटस्य पृथक् स्वातन्त्र्येण ज्ञानात्तत्सामग्रीसत्त्वेन तद्विशिष्टभूतलधीदशायामपि घटस्य विशेष्यतया भानमावश्यकमिति तद्वैशिष्ट्यं विशेषणमभ्युपगम्यते। न च रजतव्यक्तिं विना रजतत्वजातेः पृथग्ज्ञानमस्ति, येन तथा स्यादित्यर्थः। ननु यत्र रजतत्वमिति स्मरणं तत्रैव संसर्गारोपः

प्रवृत्तिः। रजतज्ञानं शुक्तिमपि विषयीकरोतीति चेत्, अन्याकारं ज्ञानमन्यालम्बनमिति संविद्विरोधः। एवमसतो

---

### दीपनम्

यत्रापि रजतत्वमिति स्मृतिस्तत्रापि रजतविषयत्वनियमेन यथाकथंचिदुपस्थितस्यारोपे रजतमेवारोप्येत। तत्र रजतत्वप्रतीतेरन्यथासिद्धत्वादिति भावः। निरुद्धगतिकस्य शङ्कामनूद्य प्रागुक्तं स्मारयति—**रजतज्ञानमिति**। तथा च शुक्तौ रजतमेवारोप्यत इति न रजतत्ववैशिष्ट्यावगाही भ्रमः। नच रजतमेवेष्टतावच्छेदकमिति वाच्यम्; शुक्तौ रजतार्थिष्टताया अभावात्। रजतं तु न रजतवृत्तीष्टतावच्छेदकमिति भावः। **एवमिति**। विशिष्टज्ञानं हि विशेषणविशेष्यनिरूपितवैशिष्ट्यमेव विषयीकरोति, न तु विशेष्येऽन्यनिरूपितवैशिष्ट्यम्; तस्यैव संसर्गमर्यादया प्रतीतेः। भ्रमेऽपीदं रजतमितीदंत्वस्य रजते

---

### पूरणी

स्यादित्यत्राह—**यत्रापीति**। पौनरुक्त्यं परिहरति—**निरुद्धेति**। शुक्तिवृत्तिरजतार्थिष्टतायां रजतमवच्छेदकम्, रजतवृत्तितदिष्टतायां वा। नाद्य इत्याह—**शुक्ताविति**। रजतं मे भूयादितीच्छाविषयताया रजतनिष्ठत्वेन शुक्तिनिष्ठत्वाभावादित्यर्थः। यद्यपीदं रजतं मे भूयादिति व्यधिकरणप्रकारकेच्छाविषयता शुक्तिनिष्ठा, तथापि तत्र रजतं नेति न तदवच्छेदकमित्यर्थः[1]। न द्वितीय इत्याह—**रजतं त्विति**। रजते रजतस्याभावादित्यर्थः। ननु विशेषणनिरूपितं वैशिष्ट्यं विशेष्ये भासते, ततश्च रजतत्ववैशिष्ट्यस्यान्यत्र सतोऽत्र भानात् नासद्गोचरत्वं भ्रमस्येत्याह—**न त्विति**। **संसर्गेति**। उभयनिरूपितवैशिष्ट्यस्य स्वरूपेण भानं युक्तम्। अन्यत्र प्रसिद्धविशेषणवैशिष्ट्यभाने तु पूर्वो-

---

1 मिति भावः–ग्र.

## दीपनम्

रजतत्वेनेव सामानाधिकरण्यमनुभूयते । अन्यथा तद्व्यवहारायोगात् । न च तत्क्वचिदस्तीत्यत्यन्तमसदेव भ्रमविषयो वक्तव्यः । न च तत्संभवति ; असतः संवित्तादात्म्यादेरसंभवात् यत्तु सदुपरक्त[1]मसदप्यपरोक्षमिति, तन्न ; असतः केनचिदुपरागस्यैवासंभवात् । किं चास्य रूप्यस्य देशान्तरस्थत्वेन विना अन्यथाख्यातिर्न [2] सिद्ध्यति । तच्च न तावत्प्रकृतभ्रान्त्या सिद्ध्यति, तस्याः पुरोवर्तिमात्रविषयत्वात् । नापि [3] तदन्यथानुपपत्त्या ; तेन विना अनुपपत्त्यभावात् । न हि

## पूरणी

पस्थिततया वैशिष्ट्यस्य प्रकारतापत्तेर्विशेषणविशेष्यान्यतारूपसंसर्गमर्यादया भानं न स्यादित्यर्थः । **तद्व्यवहारेति** । सामानाधिकरण्याभिलापादिव्यवहारायोगादित्यर्थः । **असत इति** । सत्संबन्धित्वेऽसत्त्वानुपपत्तेरित्यर्थः । एतच्च शुक्तिरजततादात्म्यं भ्रमविषय इति प्राचीनमते दूषणम् । इतरमते तु शुक्तिरजततादात्म्यानां त्रयाणां पारमर्थिकानामेव भ्रमविषयत्वात् । न चान्यत्र प्रतीतवैशिष्ट्यभाने वैशिष्ट्यस्य प्रकारतापातः ; तद्विषयत्वेन ज्ञानस्यारोपाजनकत्वात्, पूर्वप्रतीतत्वमात्रेण प्रकारत्वे विशेष्यस्यापि तत्त्वापातात्, वैशिष्ट्यस्य भासमानवैशिष्ट्याप्रतियोगित्वाच्च । नच प्रतीतस्य संसर्गमर्यादया भानानुपपत्तिः ; धारावाहनबुद्ध्यादौ प्रतीतस्यापि तथा दर्शनादिति ध्येयम् ॥

यत्तु विशेषणविशेष्यानुयोगिकप्रतियोगिकत्वेन तत्संबन्धो विशिष्टधीविषयः, तथा च रजतत्ववैशिष्ट्यस्य शुक्तिनिष्ठत्वमसदेव भासत इति भ्रमोऽसद्विषय इति, तन्न ; शुक्तिसंबन्धादौ सत एव शुक्त्यनुयोगित्वस्य रजतत्ववैशिष्ट्ये भानेनासद्विषयत्वालाभादिति ॥

1 सदसपि भासत इति-ख. 2 संभवति-च. 3 तदनुपपत्त्या-च.

## दीपनम्

देशान्तरस्थत्वमपि भ्रान्तौ कारणम्। न च भ्रान्तिः प्रमाजन्या, सा चात्र न संभवतीति देशान्तरविषया। यद्यपि पूर्वानुभवमात्रं भ्रमेऽपेक्षितम्, लाघवात्, न तु प्रमा, तथाप्यनुभवोऽपि देशान्तर एव वाच्यः। न हि शुक्तौ रजतं पूर्वमनुभूतमिति तस्य देशान्तरस्थत्वसिद्धिरिति वाच्यम्, समानप्रकारकादन्यविषयादप्यनुमितिवद्भ्रान्तेरप्युपपत्तेः। परमते सामान्यलक्षणाप्रत्यासत्त्यभ्युपगमेन

---

## पूरणी

**देशान्तरेति**। तद्देशस्थत्वे व्यधिकरणप्रकारकत्वायोगादित्यर्थः। ननु देशान्तरस्थत्वस्य भ्रान्तिहेतुत्वाभावेऽपि तत्प्रयोजकत्वमस्ति; भ्रान्तिहेतुभूतानुभवविषयत्वात्तस्येत्याशङ्क्य निषेधति—**नच भ्रान्तिरिति**। **समानप्रकारकेति**। त्रप्वादौ रजतारोपादपि शुक्तौ तदारोपोपपत्तेर्न भ्रान्तिहेतुभूतानुभवविषयरजतस्य देशान्तरस्थत्वं नियमेन सिद्ध्यति। नच रजतविशेष्यकानुभवादेव तदारोपो न त्रपुविशेष्यकादिति वाच्यम्; भ्रमसमानप्रकारकत्वेनैवानुभवस्य भ्रान्तिहेतुत्वात्। सामान्यलक्षणानभ्युपगन्तॄणां वह्नित्वधूमत्वरूपेण महानसीयधूमवह्निगोचरव्याप्तिग्रहस्य पक्षधर्मताधीसमानप्रकारकत्वेन वह्न्यन्तरगोचरवह्निज्ञानस्य समानविशेषणतावच्छेदकत्वेन वा पर्वतादौ वह्न्यनुमितिहेतुतावदित्यर्थः। ननु सामान्यप्रत्यासत्त्यभ्युपगमाद्व्याप्तिग्रहस्य पक्षधर्मताधीसमानविशेष्यकत्वमप्यस्तीत्यत्राह—**परमत इति**। यद्वा ननु भ्रान्तिहेतुभूतानुभवविषयमात्रस्य देशान्तरस्थत्वं भ्रान्त्यनुपपत्त्या सिद्ध्यतीत्यत्रापि भ्रमविषयत्रप्वादौ देशान्तरस्थत्वमस्त्येवेत्यत्राह—**परमत इति**। पुरोवर्तिशुक्तिकादेरपि पूर्वानुभवविषयत्वसंभवेन

**वैशिष्ट्य[1]स्य प्रतीत्यनुपपत्तिः । अत्रापरोक्षज्ञानविषयस्य**

दीपनम्

पूर्वानुभवस्य पुरोवर्तिविषयत्वसंभवाच्च । नापि बाधबलाद्रजतस्य देशान्तरस्थत्वं सिद्ध्यति; बाधस्य पुरोदेशे रजताद्यभावमात्रविषयतयान्यत्र तत्सत्त्वाविषयत्वात् । न चान्यत्र सदेवान्यत्र प्रतिषिद्ध्यत इति तदन्यथानुपपत्त्या [2]तत्सिद्धिरिति वाच्यम्; स्वाश्रय एव विनष्टस्य प्रतिषेधदर्शनात् । न चासतो निषेधानुपपत्तेः पुरोदेशे [3]च सत्त्वे त्रैकालिकनिषेधासंभवात् देशान्तरे सत्त्वं सिद्ध्यतीति वाच्यम्; पुरोदेश एव सदसद्विलक्षणस्यापरोक्षप्रतीतिबलादभ्यु[4]पगमे तदुपपत्तेर्वक्ष्यमाणत्वात् । अतो न देशान्तरस्थस्य भ्रमविषयत्वे किंचिन्मानमस्तीत्याह—**अत्रेति** । तथा च नान्यथाख्यातिरिति भावः । अत एवानुभूयमा-

पूरणी

नानुभवविषयस्य देशान्तरस्थत्वमपि भ्रान्तिलभ्यं व्यभिचारादिति भावः । यद्यपि रजतत्वसामान्यजनितज्ञानस्य न पुरोवर्तिविषयकत्वम्; शुक्त्यादेस्तत्सामान्यानालिङ्गितत्वात्, तदनालिङ्गितस्य तज्ज्ञानविषयत्वेऽतिप्रसङ्गात्, तथापि यत्र सर्वं द्रव्यं रजतमिति द्रव्यत्वसामान्यप्रत्यासत्त्या सर्वद्रव्ये रजतारोपस्तत्र तद्विषयत्वं पुरोवर्तिनोऽप्यस्तीति भावः । इदं चापाततः, अनुभवस्य यद्विषयतया भ्रान्तिहेतुत्वं तस्य भ्रान्तिहेत्वनुभवविषयतावच्छेदकस्य भ्रान्त्यनुपपत्त्या देशान्तरस्थत्वमित्यभ्युपगमात् । न हि पुरोवर्तिविषयत्वेन तदनुभवस्य भ्रान्तिहेतुता । किं तु रजतरजतत्वविषयत्वेन । तच्च सर्वभ्रमविषये सर्वत्र देशान्तरस्थमेवेति मन्तव्यम् । नन्वत्यन्ताभावात्मकनिषेधानुपपत्त्या तत्सिद्धिरित्याशङ्क्य निषेधति—**न चासत इति** । ननु परम्परासंबन्धेन लौहित्यस्य

1 स्वाप्यपरोक्षप्रती-**ख. ग. च.** 2 तत्सिद्ध्यतीति-**च.** 3 चासत्त्वे-**ख.**
4 गमेन-**छ.**

**देशान्तरसत्त्वे प्रमाणाभावाच्च। अस्तु तर्हि भ्रमविषयोऽत्यन्तमसदेव, देशान्तरसत्त्वे प्रमाणाभावात्। [1]अत्रापि बाधविरोधेन सत्त्वायोगात्। अत एवासदेव रजतमभादित्यनुभव इति [2]चेत्,**

## दीपनम्

नारोपस्थले सामग्र्याः सत्त्वात् अन्यथाख्यातिः [3]सिद्ध्यतीत्यपास्तम्। स्फटिके लौहित्यादिवैशिष्ट्यस्यासतो भानानुपपत्तेः। परम्परासंबन्धविषयत्वं च तद्वैशिष्ट्यबुद्धेरग्रे निरसिष्यते; [4]तथा भ्रान्तित्वानुपपत्तेश्च। किं चेदं रूपमत्र नास्तीत्यपरोक्षप्रमादशायामपि स्फटिके लौहित्यभ्रमदर्शनेन न सन्निकृष्टं रूपमारोप्यते। तदसंसर्गापरोक्षप्रमायास्तदारोपविरोधित्वात्। तस्मादुपाधिसन्निधानं [5]दोषतया सत्तयैवोपयुज्यत इति सोऽपि संस्कारजन्य एवेति भावः। असदेव रजतमभादित्यत्र सदन्यत्वमात्रं यदि विवक्षितं तदिष्टमेव। यदि नरशृङ्गव्यवहारकल्पत्वं

## पूरणी

स्फटिके सत्त्वान्न भानानुपपत्तिरित्यत आह—**परम्परेति**। लौहित्याश्रयसंयोगपरम्परासंबन्धेन स्फटिके लौहित्यप्रतीत्यभ्युपगमे सन्निहितकुड्यादावपि रक्तं कुड्यमिति प्रतीत्यापत्तिरित्यर्थः। **तथेति**। तेन संबन्धेन तत्र तस्य सत्त्वेन तद्बुद्धेः प्रमात्वादित्यर्थः। ननु विशेषणवैशिष्ट्यमात्रं विशिष्टबुद्धिविषयः, नोभयनिरूपितवैशिष्ट्यम्; अतः सन्निकृष्टानुभूयमानलौहित्यारोपेन न किंचिद्बाधकमित्यस्वरसादाह—**किंचेदमिति**। नन्वेवं जपाकुसुमाद्यन्वयानुविधानं न स्यादित्याशङ्क्याह—**तस्मादिति**। **सत्तयेति**। न त्वारोप्यस्य लौहित्यसमर्पकतयेत्यर्थः। **संस्कारेति**। लौहित्यदर्शनेन स्मर्यमाणतत्सजातीयलौहि-

[1] तत्रापि—ग. [2] चेन्न—ग. छ. [3] सेत्स्यतीत्य—च. [4] तदा—क. ख. ग. [5] दोषायैवोप—ग.

**असतो ज्ञानविषयत्वानुपपत्तेः। न ह्यसतः केनचिदिन्द्रियेण संबन्धोऽस्ति । न वा संविदभिन्नत्वम्, तस्य रजतत्वादिविशेषाभावाच्च । एवमसतो बाधायोगाच्च । न ह्यसतोऽ-**

---

## दीपनम्

रजतव्यवहारस्य, तदाह—**असत इति**। असतो ज्ञानेन सह कथमपि संबन्धो न संभवति। पराभिमतस्वरूपसंबन्धस्यापि निःस्वरूपे तस्मिन्नयोगात्। अपरोक्षज्ञानविषयत्वं तु सुतरां न संभवतीत्याह—**न हीति**। इन्द्रियं हि विषयसंयुक्तमेवापरोक्षज्ञानं जनयति। न चासत इन्द्रियेण संबन्धोऽस्तीति नासदिन्द्रियजन्यापरोक्षज्ञानविषयः। न वा सिद्धान्तरीत्या अपरोक्षज्ञानविषयत्वम्; संवित्तादाम्यादेरसंभवादित्याह—**न वेति**। रजतत्वादीत्यादिपदेन रूपपरिमाणादिविशेषा गृह्यन्ते। न हि निःस्वरूपस्यासत इदं संभवतीत्यर्थः। कुतस्तस्या बाधः, तत्राह—**न हीति**॥

यत्तु सर्वदेशीयसार्वकालिकात्यन्ताभावप्रतियोगित्वमसत्त्वमित्यस्त्येवासतोऽप्यत्यन्ताभावादिरिति, तन्न; प्रतियोगित्वाश्रयस्य भाव-

---

## पूरणी

त्यान्तरस्यारोप इति सर्वोऽपि स्मर्यमाणारोप एवेति भावः। इदं च समाधिसौकर्यादुक्तम्। वस्तुतस्तु, अनुभूयमानारोपपक्षेऽपि नान्यथाख्यातिसिद्धिः; लौहित्यस्य जपाकुसुमघटितेन्द्रियसन्निकर्षसत्त्वेऽपि स्फटिकघटितेन्द्रियसन्निकर्षाभावात् तदधिकरणघटितसंयुक्तसमवायादेरेव तत्प्रत्यक्षहेतुत्वात्। अन्यथा अतिप्रसङ्गादिति ध्येयम्। **विषयसंयुक्तमिति**। विषयसंयुक्तं सदित्यर्थः॥

**सर्वदेशीयेति**। सार्वकालिकात्यन्ताभावप्रतियोगित्वं घटादावतिव्याप्तमिति सर्वदेशीयविशेषणम्। तावन्मात्रं परमाणुष्वति-

## दीपनम्

भावरूपत्वे[1] द्रव्याद्यन्यतमत्वं स्यात् । तथा च स्वोक्ताभावो न स्यात् । अभावरूपत्वे च तस्याभावाभावरूपत्वानुपपत्तेर्भावरूपस्तदत्यन्ताभावो वाच्यः । न हि तत्संभवति, सर्वदेशीयसार्वकालिकगगनादेरात्मनो वा तदभावत्वायोगात् । गगनाद्यभावस्यासत्त्वानुपपत्तेश्च । किं च तदन्यन्ताभावस्य वृत्तिमत्त्वाभावेन सर्वदेशीयत्वाद्यसंभवः, किं च न

---

## पूरणी

प्रसक्तम् ; तेषां क्रियावत्त्वेन सर्वदेशीयात्यन्ताभावप्रतियोगित्वात् । अतः सार्वकालिकविशेणम् । तेन च सर्वसमयावच्छेदेन सर्वदेशयियात्यन्ताभावप्रातियोगित्वं लभ्यते । परमाणूनामतथात्वान्नातिप्रसङ्गः । अत्यन्तपदं तु स्पष्टार्थम् । कालस्य जगदाधारतया कालान्योन्याभावस्य कालेऽपि वृत्तेस्तस्य सर्वदेशीयसार्वकालिकाभावप्रतियोगितया कालेऽतिप्रसङ्गवारणायात्यन्तपदमित्याहुः । **भावरूपत्व इति** । प्रतियोगिनो भावाभावान्यतरत्वनियमादिति भावः । **स्वोक्तेति** । द्रव्याद्यभावस्य सर्वदेशीयसार्वकालिकत्वाभावादित्यर्थः । **तस्येति** । अभावप्रतियोगिकाभावान्तराभावान्निष्प्रतियोगिकतदभावासंभवाच्च नाभावरूपत्वमित्यर्थः । **गगनादेरिति** । तस्य शशशृङ्गाद्यभावत्वाननुभवादित्यर्थः । ननु यदभावत्वेन गगनादेरनुभवस्तदेवासदास्त्वित्यत आह— **गगनादीति** । एवमपि त्वदभिमतशशशृङ्गादेरसत्त्वालाभाच्चेति द्रष्टव्यम् । ननु व्यापितया सद्रूपगगनादेस्तदभावस्यासत्त्वमित्यनुशयादाह—**किं चेति** । **तदत्यन्ताभावस्य** गगनादिरूपस्येत्यर्थः । ननु सत्प्रतियोगिनो भावाभावान्यतरत्वानियमः, अतस्तदुभयविलक्षणत्वेऽपि प्रतियोगित्वं स्यादित्यनुशयादाह—**किं चेति** । ननु सद्रूद्वय-

---

1 सद्रूप्या.

त्यन्तमभावोऽस्ति । न वा असन्नाम किंचिदस्तीत्युक्तमन्यत्र ॥

## अध्यस्तत्वविवेचनम् ।

किं तर्हीदं रजतमिति । अध्यस्तमिति ब्रूमः । ननु किमिदमध्यस्तत्वं रजतादेः । न तावद्दोषजन्यत्वम्; भवन्मतेऽविद्या[1]दावसंभवात् । दोषोऽपि न तावदुपादानम्; प्रमातृकरण-

### दीपनम्

तावत्प्रत्यक्षमत्र प्रमाणम्; अननुभवात् । नाप्यनुमानं; तद्व्याप्यलिङ्गाभावात् । न च विमतं सर्वदेशीयसार्वकालिकात्यन्ताभावप्रतियोगि, असत्वात्, व्यतिरेकेण घटादिवदिति वाच्यम्; साध्याविशेषात् । न च सत्त्वानधिकरणत्वं हेतुः; सत्त्वे व्यभिचारात् । साध्याप्रसिद्धेर्व्याप्तिग्रहासंभवाच्च । अत्यन्ताभावप्रतियोगित्वादिधर्माभ्युपगमे घटादेरवि[2]शेषादसादिति नाममात्रमेव स्यादिति । तस्मादसन्नाम किंचिन्नास्तीत्याह—**न वेति** । **अन्यत्र** ग्रन्थान्तर इत्यर्थः ॥

एकत्र सदस[3]तोर्निषेधासंभवं मन्वानः शङ्कते—**किमिति** । वक्ष्यमाण प्रमाणमभिसन्धायाह—**अध्यस्तमिति** । ननु शुक्तिरजतादेरध्यस्तस्य दोषसंस्कारसम्प्रयोगजन्यत्वात्तदेव लक्षणमिति चेत् किं प्रत्येकदोषादिजन्यत्वम्, उत समुदितजन्यत्वम् । तत्राद्यं दूषयति—**न तावदीत्यादिना** । अविद्यादीत्यादिपदेन तत्संबन्ध-

### पूरणी

विषयत्वं हेतुरित्यनुशयादाह—**साध्याप्रसिद्धेरिति** । **एकत्रेति** । तथाचानिर्वचनीयख्यातेरप्रसङ्ग इत्यर्थः ।

[1] दावभावात्—**ग. छ.** [2] शेषेणास—**ख. छ.** [3] सत्त्वयोः—**ख.**

**दोषयोर्बाह्यार्थं प्रति तदनुपपत्तेः। नापि सादृश्यमुपादानम्, गुणाद्यात्मनस्तस्य[1] द्रव्योपादान[2]त्वायोगात्। इतरव्यावृत्तजन्य-विशेषज्ञानमन्तरेण तदुपादानत्वग्रहासंभवाच्च। दोषस्यावश्यकज्ञानं प्रत्येव हेतुत्वेनार्थं प्रत्यहेतुत्वाच्च। अत एव न दोषस्य तत्र निमित्तत्वम्। नापि संस्कारजन्यत्वम्; स्मृतावतिव्याप्तेः; भाव-नासंस्कारस्यार्थाहेतुत्वाच्च। नापि सम्प्रयोगजत्वम्; अनुभवेऽति-**

## दीपनम्

जीवत्वादयो गृह्यन्ते। तेषामध्यस्तत्वेऽप्यनादित्वान्न तत्रोक्तलक्षण-मित्यर्थः। प्रमातृदोषो रागादिः, करणदोषः काचादिः। [3]सादृश्यं-तर्हि विषयदोषः कारणमिति नेत्याह—**नापीति**। ननु बाह्यरजतस्यापि शुक्त्यवच्छिन्नान्तःकरणावच्छिन्नचैतन्योत्पाद्यमान-त्वाद्दोषजन्यत्वमुपपन्नमित्यत आह—**जन्येति**। जन्ये विशेषोऽ-वच्छेदकः। अन्वयव्यतिरेकाभ्यां हि दोषजन्यत्वं ग्राह्यम्। व्यतिरेकश्चानतिप्रसक्तधर्मपुरस्कारेणैव ग्राह्य इति न तेन विना तद्ग्रहः संभवति। न च तत्र तादृशधर्मोऽस्ति। रजतत्वादि त्वतिप्रसक्तम्। न च प्रातिभासिकरजतत्वं काचादिजन्यतावच्छेदकम्; स्वप्ने तदभावेऽपि तत्सत्त्वात्। न च निद्राकाचादावनुगतं दोषत्वमिति भावः। अत एव ज्ञाने दोषान्वयव्यतिरेकयोरन्यथासिद्धिरेवेत्यर्थः। संप्रयोगः अधिष्ठा-

## पूरणी

**न च निद्रेति**। तथा च हेत्वननुगमान्न दोषजन्यत्वग्रहसंभव इत्यर्थः। **अधिष्ठानेन्द्रियेति**। अधिष्ठानसामान्यज्ञानमादिपद-

---

1 द्रव्यं प्रत्युपादा—**ग**. 2 त्वासंभवात्—**क**. 3 सादृश्य तु विषयदोषस्तर्हि कारण—**ख**.

**व्याप्तेः। स्वस्य परस्य वेन्द्रियसम्प्रयोगेणार्थस्याजन्यत्वाच्च। स्वप्नाद्यध्यासाव्याप्तेश्च। मनसोऽनिन्द्रियत्वादन्तःकरणाध्यासात्पूर्वं [1] मनसः सम्प्रयोगाभावाच्च। अत एव संप्रयोगसंस्कारदोषजन्यत्वमध्यासलक्षणमिति प्रत्युक्तम्॥**

**नापि भ्रमविषयत्वम्; तत्र भ्रान्तिर्यदि दोषजन्यज्ञानत्वम् अविद्याभ्रान्त्यादावव्याप्तेः, रजतादिभ्रमस्यापीन्द्रियाद्यजन्यस्य**

दीपनम्

नेन्द्रियसम्प्रयोगादिः। **स्वस्येति**। स्वानिरूपितेन्द्रियसंयोगात्पूर्वं स्वसत्ताया वक्तव्यत्वेन तदजन्यत्वात्। न चाधिष्ठानेन्द्रियसंयोगो रजताद्यर्थे कारणम्; अन्यत्र तददर्शनात् तस्य ज्ञाने उपक्षीणत्वाच्चेत्यर्थः। **स्वप्नेति**। तदानीं चक्षुःसंयोगादेरभावादित्यर्थः। मनस इन्द्रियत्वाभ्युपगमेनाप्याह—**अन्तःकरणेति**। द्वितीय आह—**अत एवेति**॥

साद्यनाद्यध्याससाधारणं लक्षणान्तरमाशङ्क्याह—**नापीति**। **भ्रान्तिः** भ्रान्तित्वम्। अतो न दोषजन्यज्ञानत्वमिति विरुध्यते। **अव्याप्तेरिति**। अविद्याभ्रान्तेर्नित्यसाक्षिमात्रत्वादित्यर्थः। असंभवमप्याह—**रजतादीति**। रजतादिकं प्रतिभासमात्रशरीरतया न स्वविषयज्ञानाभावकालेऽस्ति, तत्र मानाभावात्, तथात्वे तज्ज्ञानस्य

पूरणी

ग्राह्यम्। **स्वसत्ताया इति**। संयोगस्योभयजन्यत्वेन तत्पूर्वं तत्संयोगासंभवादित्यर्थः। **अन्तःकरणाध्यासेति** मूलम्। तथा चेन्द्रियसम्प्रयोगजन्यत्वं प्रातीतिकाध्यास एवाव्याप्तमिति भावः। यद्यपि घटाद्यध्यासेऽप्युक्तलक्षणासंभवः, तथापि प्रातीतिकाध्यासस्येदं लक्षणमिति न तत्राव्याप्तिरुद्भावितेति मन्तव्यम्। **तथात्व इति**। अर्थजन्यतया तज्ज्ञानस्य प्रमात्वापातादित्यर्थः।

[1] मनस्सम्प्र—**ग.**

**तद्दोषजन्यत्वानुपपत्तेश्च । नापि संस्कारजन्यानुभवत्वम् ; प्रत्यभिज्ञायामतिव्याप्तेः । अभिज्ञायां तु न क्वापि संस्कारो हेतुः । नाप्यसद्विषयकज्ञानत्वं भ्रमत्वम् ; असत्ख्यात्यनभ्युपगमात्, अतीतादिज्ञाने प्रत्यभिज्ञातत्तांशज्ञाने चातिव्याप्तेः । नापि**

---

## दीपनम्

दोषजन्यत्वासंभवाच्च । तथा च रजतादिसमानकालीनं तज्ज्ञानं नेन्द्रियसम्प्रयोगजन्यम् । नाप्यधिष्ठानसम्प्रयोगाज्जायते, अन्यसंप्रयोगस्यान्यज्ञानाहेतुत्वात् । अत एव नेन्द्रियमपि तत्र हेतुरिति न तद्दोषस्तत्र कारणमित्यर्थः । **प्रत्यभिज्ञाया**मित्युपलक्षणं व्याप्तिसंस्कारजन्यानुमितावित्यपि द्रष्टव्यम् । तथा च प्रत्यभिज्ञायां तत्तांश स्मृतित्वेऽपि न कश्चिद्दोषः । ननु तत्रानुभवपदस्थानेऽभिज्ञापदमस्त्विवति, तत्राह— **अभिज्ञायामिति** । एकदेशकालमात्रावच्छिन्नविषयानुभवे अभिज्ञाप्रत्यक्ष इत्यर्थः । **अतीतेति** । अतीतत्वं वर्तमानध्वंसप्रतियोगित्वम् ।

---

## पूरणी

**व्याप्तिसंस्कारेति** । परामर्शजनकत्वेनानुमितिकरणत्वपक्षे व्याप्तिसंस्कारस्यापि तेन रूपेण क्वचिदनुमितिहेतुत्वात् । यद्वा अनुमितौ लिङ्गपरामर्शो न हेतुः ; तृतीयज्ञानकल्पने मानाभावात् । नापि व्याप्तिधीः ; अनुभवरूपायास्तदानीमसंभवात् । स्मृतिरूपत्वे च लिङ्गज्ञानानन्तरोद्बुद्धसंस्कारजनितस्मृतिसमये लिङ्गज्ञाननाशेन तदनन्तरमनुमित्यनापत्तेः । अतो लिङ्गज्ञानसहितव्याप्तिसंस्कार एवानुमितिहेतुरिति सिद्धान्तावष्टम्भेनेदमुक्तम् । **स्मृतित्वेऽपीति** । तत्रातिव्याप्त्यभावेऽप्युक्तानुमितावतिप्रसङ्गादित्यर्थः । ननु प्रत्यभिज्ञायामिदमंशाभिज्ञारूपायां संस्कारो हेतुरित्यत उक्तम्—**मात्रावच्छिन्नेति** । तस्या देशकालद्वयवैशिष्ट्यावगाहितया न विवक्षिताभिज्ञारूपत्वमित्यर्थः । **अनुभव** इति स्मृतिव्यावृत्तिः । व्याप्तिसंस्कारजन्यानुमितिव्यावृत्त्यर्थमाह—**अभिज्ञा-**

**व्यधिकरणप्रकारकज्ञानत्वम्; अन्यथाख्यात्यनभ्युपगमात्, घटे**

## दीपनम्

न च तद्घटादेर्धर्मः; तस्य तदानीमभावात्, घटकाले चातीतत्वाद्यभावात्, कादाचित्कधर्मस्याश्रयं विनासंभवाच्च। तस्मादतीतत्वादिकमप्यसदेव प्रतीयते। एवं तत्ताप्यसत्येव। आदिपदेनानागतत्वं वर्तमानप्रागभावप्रतियोगित्वं गृह्यते। **व्यधिकरणेति।**

## पूरणी

**प्रत्यक्ष इति।** घटत्वादिजातेर्घटाश्रयमन्तरा प्रलयेऽवस्थानमस्तीत्यत [1]उक्तम्——**कादाचित्केति।** आगन्तुकेत्यर्थः। **तत्तापीति।** अतीतदेशकालवैशिष्ट्यं तत्ता। यदा देशकालवैशिष्ट्यं न तदा तयोरतीतत्वम्, यदा तयोरतीतता न तदा तद्वैशिष्ट्यं देवदत्तादेरिति तदप्यसदित्यर्थः॥

इदं च प्रौढिवादेनोक्तम्। वस्तुतस्तु नातीतत्वादिकमत्यन्तासत्; ध्वसंप्रतियोगित्वादेर्ध्वंसप्रतियोग्युभयस्वरूपत्वात्। उभयोश्च कालभेदेन सत्त्वात्। अन्यथा अतीतत्वानागतत्वयोरसत्त्वे घटादेः सर्वदा वर्तमानत्वप्रसङ्गात्। अतीतत्वानागतत्वशून्यस्यात्मादिवत्सदातनत्वनियमात्। एवं तत्ता पूर्वानुभूतदेशकालवैशिष्ट्यमात्रम्, न त्वतीतत्वविशिष्टदेशादिवैशिष्ट्यम्; पूर्वाननुभूतेदानींविद्यमानदेशगुणादेरपि तत्तारूपत्वात्। संस्कारजन्यत्वमात्रस्य तत्तोल्लेखप्रयोजकत्वेनातीतत्वस्यानुपयोगात्। अतीतत्वस्य पूर्वाननुभूतत्वेन तद्गोचरप्रत्यभिज्ञानुपपत्तेश्च। अनुभवस्य स्वविषय एव संस्कारजनकतया देशादिवैशिष्ट्यानुभवेनातीतत्वगोचरसंस्कारानुपपत्तेः, इदानीं च तदतीतत्वग्राहकाभावात्। अतः पूर्वानुभूतदेशादिकमेव तत्ता। तच्च सदेवेति न तत्ताप्यसतीति दिक्॥

---

[1] आह—झ.

रूप[1]मिति ज्ञाने घटप्रकारकेऽतिव्याप्तेश्च। न च तत्र घटरूपत्वमेव प्रकारो न घट इति वाच्यम्; रूपे घटवैशिष्ट्यस्य प्रकाशमानत्वाद्घटस्य पूर्वमुपस्थितत्वाच्च । घटरूपत्वस्यापि घटघटितत्वात् । स्वरूपसंबन्धवादिनो रजतादेरवैयधिकरण्याच्च ।

## दीपनम्

[2] विषयतया व्यधिकरणो यो धर्मस्तत्प्रकारकज्ञानत्वं विशेष्यावृत्तिप्रकारकज्ञानत्व[3]मिति यावत् । **घटरूपत्वमेवेति** । तच्च रूपेऽस्तीति नोक्तदोष इति भावः । **घटवैशिष्ट्यस्येति** । तथा च भासमानवैशिष्ट्यप्रतियोगितया घटोऽपि प्रकार एवेति दूषणं तदवस्थमिति भावः । यत्तु जनकज्ञाने प्रकाशमानस्यैव जन्यज्ञाने प्रकारत्वमिति, तदप्यनुमोदते—**घटस्येति** । परमते भ्रमस्य व्यधिकरणप्रकारकत्वमसंभवि चेत्याह–**स्वरूपेति** । स्वरूपसंबन्धेन घटोऽपि तत्रास्तीति वाशङ्क्याह–**स्वरूपेति** । तथा च तद्वदेव तन्मते रजतत्वादिकमपि [4]शुक्तिवृत्ति स्यादिति भावः । ननु शुक्तौ रजतत्वस्य

## पूरणी

मूलग्रन्थस्त्वित्थं योजनीयः—असद्विषयकज्ञानत्वमित्यत्र असत्त्वमत्यन्तासत्त्वं चेदसंभवः, तत्ख्यात्यनभ्युपगमात् । यद्यविद्यमानत्वमात्रं तदातीतादिज्ञानेऽतिव्याप्तिः, तस्याप्यविद्यमानत्वादिति । घटत्वादेः पटत्वादिव्यधिकरणतया घटादिप्रमायामतिप्रसङ्गादाह—**विषयतयेति** । अतिरिक्तविषयतानभ्युपगमेन लक्षणमाह—**विशेष्यावृत्तीति** । स्वविशेष्यावृत्तीत्यर्थः । अन्यथा यत्किंचिद्विशेष्यपटावृत्तिप्रकारकघटादिप्रमायामतिप्रसङ्गात् । **तदपीति** । तस्मिन्नपि पक्षे घटप्रकारकत्वं स्यादित्यर्थः । **परमत इति** । तथा च प्रसङ्गात्परमतसि-

1 मित्यादिज्ञाने–क. च. 2 विषयताव्यधि–ख. 3 मित्यर्थः-च. 4 शुक्तौ–च.

**बाधस्य समवायविषयतयाऽप्युपपत्तेः। एवं च सर्वप्रत्यययाथार्थ्यं सिद्ध्यति। अत एव न तदभाववति तत्प्रकारकज्ञानत्वम् ॥**

---

## दीपनम्

बाधान्न रजतत्वस्य स्वरूपसंबन्धस्तर्हि रूपे घटो नास्तीति बाधान्न तस्यापि तत्र स्वरूपसंबन्धः। यद्ययं बाधः समवायसंबन्धेन तद्विषयस्तर्हि प्रकृतेऽपि तथास्त्वित्याह—**बाधस्येति**। घटादिमत्तया प्रतीयमानेऽपि भूतले परैः समवायसंबन्धेन घटाभावो यथाभ्युपेयते एवं स्वरूपसंबन्धेन शुक्तौ रजतत्वे प्रतीयमानेऽपि समवायविषयतया बाधोपपत्तेर्न तद्बलाद्व्यधिकरणप्रकारकत्वं भ्रमस्य कल्पनीयमित्यर्थः। ननु यत्संबन्धो भ्रमविषयस्तेनैव तदभावो बाधविषयः, न संबन्धान्तरेण, उपस्थितसंबन्धव्यतिरिक्तसंबन्धकल्पने प्रमाणाभावादिति, तत्राह—**एवं चेति**। प्रत्ययानां प्रामाण्यमौत्सर्गिकं, तच्चासति बाधके न त्याज्यमिति रूपे घटस्येव संबन्धान्तरेणैवाभावः कल्पयितुमुचितः। किंच भ्रमेऽपि हृदंत्वरजतत्वयोः सामानाधिकरण्यमनुभूयते, तच्च तव मते अप्रसिद्धम्, अतस्तभावो न बाधेन विषयीकर्तुं शक्यत इति भावः ॥

---

## पूरणी

द्भ्रान्तिनिरास इति भावः। ननु प्रतियोगिमति कथं तदभावस्स्यात्, विरोधादित्याह—**घटादीति**। येन संबन्धेन प्रतियोगी तदितरसंबन्धेन तदभावस्य तदधिकरणे सत्त्वं न विरुद्धमिति परैरभ्युपगमादित्यर्थः। ननूपस्थितपरित्यागे गौरवमित्याशङ्क्य तत्त्यागस्त्वत्पक्षेऽप्यावश्यक इत्याह—**किंच भ्रम इति**। इदं चापाततः। संबन्धान्तरमन्तरा विशिष्टप्रमितिजननयोग्यतालक्षणस्वरूपसंबन्धस्य रजतत्वादेश्च शुक्त्यादिना सममसंभवात्। न हि शुक्तौ रजतज्ञानं प्रमा, तथा सति शुक्तौ रजतात्मकतया तत्कार्यकरत्वप्रसङ्गात् बाधानुपपत्तेश्च। नच बाधः

**नन्वर्थस्य मिथ्यात्व[1]मध्यस्तत्वमिति चेत्, किमिदं मिथ्यात्वम्, न तावदत्यन्ताभावस्य स्वसंसृज्यमानाधि[2]करणवृत्त्यत्यन्ताभावस्य वा प्रतियोगित्वम्; संयोगादावतिव्याप्तेः। नाप्येकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियो-**

---

## दीपनम्

मिथ्यात्वमेव दुर्निरूपमित्याह—**किमिदमित्यादिना**। अत्यन्ताभावस्य प्रतियोगित्वमित्यनुषङ्गः। **स्वसंसृज्यमानेति**। स्वेन मिथ्यात्वधर्मिणा संसृज्यमानेत्यर्थः। एतच्च समयभेदेन स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगिघटादावतिव्याप्तिवारणाय। संसृज्यमानपदेन संसर्गवर्तमानताया विवक्षितत्वात्। **संयोगादाविति**। संयोगादिसमयेऽपि तदधिकरणैकदेशेऽत्यन्ताभावसत्त्वादित्यर्थः। **नाप्येकेति**। तथा च संयोगतदभावयोरवच्छेदकभेदेनैव वृत्तेर्नोक्तदोषः। शुक्तिरज-

---

## पूरणी

समवायविषयः; घटे रूपमिति प्रतीतिदशायां रूपे घटो नास्तीति संबन्धान्तरनिषेधप्रतीतिवदिदं रजतमिति धीदशायामपि बाधप्रतीतिप्रसङ्गात्। प्रतियोगिधीसमयनिषेधप्रतीतेरेव संबन्धान्तरविषयत्वात्। अन्यथा सर्वत्र निषेधप्रतीतेः संबन्धान्तरविषयत्वसंभवेन प्रतियोग्यसमानाधिकारणनिषेधप्रमायाः क्वाप्यनुदयप्रसङ्गात्। उपस्थितसंबन्धपरित्यागायोगाच्च। यत्तु भ्रमोपस्थितपरित्यागः परमतेऽपीति, तन्न; शुक्तिरजततादात्म्यानां प्रत्येकं प्रसिद्धानामेव भ्रमविषयत्वमित्युक्तत्वात्। तेषां च निषेधविषयत्वादिति ध्येयम्। **संसर्गवर्तमानताया इति**। स्वसंसृज्यमानेत्यभावविशेषणमधिकरणविशेषणं वा, उभयथापि स्वसमयावच्छेदेन स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमर्थ इति भावः।

---

1 त्वमेवाध्यस्त- ग.घ. 2 करणनिष्ठात्यन्ता—ख.ग.छ.

गित्वम्; विरोधेनासंभवात्। नापि ज्ञाननिवर्त्यत्वम्; घटादावतिव्याप्तेः। नापि जडत्वम्; सत्यत्वाविरोधिमिथ्यात्वस्यानिवार्यत्वात्। नाप्यनिर्वचनीयत्वम्; तच्च सदसद्विलक्षणत्वमिति वाच्यम्। यदि प्रत्येकं विलक्षणत्वं, असति ब्रह्मणि चातिव्याप्तिः। यदि समुदितविलक्षणत्वं तदा प्रतियोग्यप्रसि-

---

## दीपनम्

तादेस्त्वेकावच्छेदेनाभावोऽपि प्रतीयत इति [1] भावः। **विरोधेनेति**। भावाभावयोरेकावच्छेदेनैकत्र वृत्तेरदृष्टत्वादित्यर्थः। **ज्ञाननिवर्त्यत्वमिति**। शुक्तिरजतादेर्ज्ञाननिवर्त्यत्वदर्शनात् घटादेश्च तददर्श[2]नात्तदेव मिथ्यात्वमिति भावः। **घटादाविति**। अस्मदादिप्रतियोगिप्रत्यक्षं हि घटादिध्वंसे कारणम्, अतीन्द्रियद्व्यणुकादेरस्मदादितो ध्वंसादर्शनात्। अन्तत ईश्वरप्रत्यक्षस्य कार्यमात्रहेतुत्वेन घटादिध्वंसं प्रत्यपि हेतुत्वात्, घटादेः सत्यत्वेऽपि ज्ञाननिवर्त्यत्वमुपपन्नमित्यर्थः। जडत्वं ज्ञानान्यत्वं ज्ञात्रन्यत्वं वा, उभयमपि परस्य न विरुद्धमित्याह—**सत्यत्वेति**। नन्वनिर्वचनीयं रजतमित्यादिशब्दैर्निरुच्यमानस्य कथमनिर्वचनीयत्वं, तत्राह—**तच्चेति**। **समुदितेति**। सदसदात्मकाद्विल-

## पूरणी

**एकत्र वृत्तेरिति**। एकदेत्यपि द्रष्टव्यम्। **घटादेश्चेति**। कपालज्ञाननिवर्त्यत्वा[3]भावदर्शनादित्यर्थः। **अस्मदादित इति**। अस्मदादिकर्तृकध्वंसाभावादित्यर्थः। तेन हस्त[4]चालनादिना परमाणुक्रियाद्वारा द्व्यणुकादिनाशेऽपि न कश्चिद्दोषः। ईश्वरप्रत्यक्षमादायाप्यतिप्रसङ्गमाह—**अन्तत ईश्वरेति**। समुदितशब्दस्योभयार्थत्वे वक्ष्यमाणप्रतियोग्यप्रसिध्यसंभवमाशङ्क्याह—**सदसदात्मकादिति**॥

---

1 अर्थः—ख. 2 नादेतदेव—च. 3 भावादित्यर्थः—ट. 4 चलना—ञ.

द्वेरसंभवः। विरुद्धोभयवैलक्षण्यस्यापि विरुद्धत्वात्। अत एव न सत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वम्। निर्धर्मके ब्रह्मण्यतिव्याप्तेश्च ॥

नाप्यध्यस्तत्वादौ प्रमाणं पश्यामः। प्रत्यक्षेणाननुभवात्। नच दृश्यत्वादिना तदनुमानम्; दृष्टान्ताभावात्। न चासच्चेन्न प्रतीयेत सच्चेन्न बाध्येत, इदं च प्रतीयते बाध्यते

---

दीपनम्

क्षणमित्यर्थः। न च सद्विलणत्वे सत्यसद्विलक्षणं तदित्याह—विरुद्धेति। सत्त्वासत्त्वयोः परस्परविरहात्मकत्वेन तदुभयान्यत्वस्य विरोधान्नैकत्र संभव इत्यर्थः। अत एव विरोधादेव ॥

दृष्टान्ताभावादिति। शुक्तिरजतादेरध्यस्तत्वादिसिद्धेः प्राक् क्वापि न तत्सिद्धमिति व्याप्त्यग्रहान्नानुमानात्तत्सिद्धिरित्यर्थः। नच ब्रह्मणि व्यतिरेकप्रसिद्धेर्व्यतिरेक्यनुमानम्; अध्यस्तत्वादिग्रहणं विना तद्व्यतिरेकग्रहस्यापि दुःशकत्वादिति भावः। न प्रतीयेतेति बाधाभावस्याप्युपलक्षणम्। सच्चेन्न बाध्येतेत्यत्रापि सत्ताजातिमत्सत्, किं वा असदन्यत्। नोभयथाप्ययं नियमः; तादृशस्यापि प्रपञ्चस्य बाध्यमानत्वात्, निर्धर्मके ब्रह्मणि तदुभयाभावाच्चेत्यभिप्रेत्य नियमान्तरं

---

पूरणी

ननु स्वप्नप्रपञ्चो दृष्टान्तः स्यादित्यत आह—शुक्तिरजतादेरिति। निर्धर्मक इति। तथा च यत्सत् तन्न बाध्यमिति व्याप्तिग्रहासंभवः। नन्वेवमपि प्रतीयमानत्वहेतोर्व्यभिचार इत्यत आह—

**चेति तदुभयाविलक्षणमिति वाच्यम्; असतः प्रतीतिबाधयोरभावे इदमसन्न भवतीति प्रतीतिबाधयोरभावप्रसङ्गात्। असतोऽपरोक्षज्ञानं [1]नेति चेत् यदसत्तन्नापरोक्षमिति [2]व्याप्तिज्ञानस्यैवापरोक्षत्वादिति चेत्, नैवम्; न तावदध्यासलक्षणानिरूपणम्। स्मृतिरूपत्वे सति पूर्व [3]दृष्टजातीयत्वस्य तल्लक्षणत्वात्। स्मृतिः स्मर्यमाणम्, तद्रूपत्वं च तत्सदृशत्वम्। तच्च प्रमाणाजन्यज्ञानाविषयत्वम्। इदं च [4]प्रातिभासिकाध्यासलक्षणमिति न घटादावव्याप्तिर्दोषः। अध्यासमात्रलक्षणं तु परत्रावभासत्वम्।**

---

## दीपनम्

दूषयति—**असत इति**। इदं शुक्तिरजतम्। **असतोऽपरोक्षेति**। तथा चापरोक्षधीविषयो रजतं नासदिति भावः। **अपरोक्षत्वादिति**। तस्य लिङ्गादिप्रतिसन्धानं विनैवोत्पत्तेरित्यर्थः। 'स्मृतिरूपः परत्र पूर्वदृष्टावभास' इति भाष्यकारीयाध्यासलक्षणैकदेशेन प्रातिभासिकाध्यासलक्षणं तावदाह—**स्मृतिरूपत्व इति**। अभिनवोत्पन्ने रजते पूर्वदृष्टत्वासंभवेन तत्पदं तज्जातीयपरमिति [5]जातीयत्वस्येत्युक्तम्। तच्च वक्ष्यमाणाभिप्रायं द्रष्टव्यम्। स्मरणसादृश्यभ्रमं वारयति—**स्मृतिरिति**। रूपपदस्य स्वरूपार्थत्वं व्यावर्तयति—**तद्रूपत्वं चेति**। **तच्चेति**। तथा च भ्रान्तिः केवलसाक्षी अविद्यावृत्तिर्वेति मतद्वयं संग्रहीतं भवति।

---

## पूरणी

**अपरोक्षधीति**। अपरोक्षधीविषयत्वं हेतुरिति भावः॥

---

1 न भवतीति—**ग.** 2 व्याप्तिग्रहस्यैवा—**ग. छ.** 3 दृष्टसजातीयस्यैव-**ग. छ.**
4 प्रातीतिक—**ख. ग. छ.** 5 जातीयस्य—**च.**

## दीपनम्

संस्कारमात्रजन्यस्मृतिविषये अभिनवोत्पन्नघटादौ चातिव्याप्तिवारणाय विशेषणद्वयम् ॥

नन्वत्र ज्ञानं यदि वृत्तिस्तर्हि साक्षिमात्रभास्यं रजतमिति मते असंभवः। अथ चैतन्यम्, तर्हि तद्भास्ये घटादावतिव्याप्तिः। प्रमाणमपि नानधिगतार्थबोधकं विवक्षितम्; सिद्धान्ते घटादेर्भावरूपाज्ञानविषयत्वेनातिव्याप्तेरपरिहारात्। ज्ञानाभावरूपाज्ञातता त्वदृश्ये चैतन्येऽपि नास्ति। नाप्यबाधितार्थबोधकम्; घटादेर्बाध्यत्वात्। नच श्रुत्यतिरिक्तप्रमाणेन बाधो नास्तीति वाच्यम्; प्रपञ्चो मिथ्या, दृश्यत्वादित्यनुमानेनापि तस्य बाधसंभवात्। चन्द्रप्रादेशिकत्वादौ प्रत्यक्षबाधा-

---

## पूरणी

**संस्कारमात्रेति**। स्मृतेः प्रमाणाजन्यत्वप्रदर्शनार्थं मात्रपदम्। अनधिगतत्वं भावरूपाज्ञानविषयत्वं ज्ञानाविषयत्वं वा, नाद्य इत्याह—**घटादेरिति**। तथा च घटादिबोधकचक्षुरादेरज्ञातबोधकत्वाभावेन तज्जन्यवृत्तेः प्रमाणाजन्यत्वात्तद्विषयत्वेन घटादावतिव्याप्तिरित्यर्थः। न द्वितीय इत्याह—**ज्ञानाभावेति**। चैतन्यस्य वृत्तिविषयत्वेन ज्ञानाविषयत्वरूपमज्ञातत्वं तत्र नास्ति सुतरां घटादाविति घटचैतन्यबोधकचक्षुरादेरुक्तविधयाऽप्रमाणत्वात्तत्रातिव्याप्तिरित्यर्थः। नच पूर्वकालीनज्ञानाविषत्वं विवक्षितम्, तद्घटचैतन्यादावस्तीति वाच्यम्; शुक्तिरजतादेः पूर्वकालीनज्ञानाविषयत्वेन तद्बाधकस्याप्युक्तरीत्या प्रमाणत्वेनासंभवः स्यादिति भावः। प्रत्यक्षाबाध्यत्वं विवक्षितमित्यत्राह—**चन्द्रेति**। नच श्रुत्यनुमानातिरिक्तप्रमाणाबाध्यत्वं तदर्थः, चन्द्रप्रादेशिकत्वादौ ज्योतिश्शास्त्रादिबाध्ये तदतिरिक्तप्रमाणाबाध्यत्वं नास्तीति

### दीपनम्

भावेन प्रत्यक्षेणाबाधितत्वविवक्षायां तत्राऽव्याप्तेः । नच [1] तस्य साक्षिमात्रभास्यत्वात् प्रमाणाजन्यज्ञानविषयत्वमस्तीति वाच्यम्; अज्ञातताग्राहकसाक्षिविषयघटादावेवमप्यतिव्याप्तेः। नच तत्र प्रमाणजन्यज्ञानविषयत्वाभावो लक्षणार्थः, स च कदाचित्प्रमीयमाणघटादौ नास्त्येवेति वाच्यम्; पूर्वदृष्टपदवैयर्थ्याऽदिति चेदुच्यते—अज्ञातबोधकमेव प्रमाणम् । घटादिवृत्तिरपि तदवच्छिन्नाज्ञातचैतन्यगोचरा । अन्यथा ततो-

### पूरणी

नाव्याप्तिरिति वाच्यम्; एवं सति नभोनीलिमादावनुमानबाध्येऽव्याप्तिप्रसङ्गात् पूर्वदृष्टपदवैयर्थ्यापत्तेश्च । स्मर्यमाणगङ्गादेः श्रुत्यनुमानातिरिक्तप्रमाणाबाध्यत्वेन तद्बोधकस्याप्युक्तरीत्या प्रमाणत्वेन तत्रातिव्याप्तेरभावादिति मन्तव्यम् । ननु ज्ञानपदेन साक्षिचैतन्यमभिप्रेतम्, नच तद्भास्यघटादावतिव्याप्तिः; वृत्त्यद्वारकसाक्षिभास्यत्वस्य तदर्थत्वात्, शुक्तिरजतादौ तद्वृत्त्यनभ्युपगमादित्याशङ्क्य निषेधति—**नच तस्येति**। **अज्ञाततेति** । घटं न जानामीत्यज्ञाततया साक्षिभास्येऽतिप्रसङ्गः, तत्र घटादिवृत्त्यभावादित्यर्थः । **तदवच्छिन्नेति** । नच रूपशून्यस्य चाक्षुषवृत्तिगोचरत्वासंभवः; रूपवद्धटाद्यवच्छेदात्तदुपपत्तेः । नचैवमुद्भूतरूपवज्जलाद्यवच्छेदात्तत्रवारिस्थतेजोवाय्वादेरपि प्रत्यक्षता स्यादिति वाच्यम्; मूर्तप्रत्यक्षतायां स्वातन्त्र्येणोद्भूतरूपवत्त्वस्य प्रयोजकत्वात् । त्वयाप्यात्मप्रत्यक्षानुरोधेन तथा नियमस्याभ्युपगन्तव्यत्वात् । अतोऽमूर्तचैतन्यस्य रूपशून्यत्वेऽपि रूपवद्धटावच्छेदाच्चाक्षुषवृत्तिगोचरत्वे न कश्चिद्विरोधः। अत एव रूपशून्यामूर्तकालादेरपि रूपवदवच्छेदादिदानीं घट इत्यादिचाक्षुषवृत्तिविषयत्वमित्येषा दिक् ॥

[1] तत्र—च.

## दीपनम्

ऽज्ञाननिवृत्त्ययोगात् । एवं च प्रमाणाजन्यज्ञानविषयत्वपदेनाज्ञातगोचरवृत्त्यनुपहितविशेषनिश्चयविषयत्वं विवक्षितम् । तेन न व्यर्थविशेष्यता, स्मर्यमाणस्य ज्ञातगोचरज्ञानविषयत्वात् । न चासंभवः; इदमाकारवृत्त्युपहितरजतस्फुरणस्य वक्ष्यमाणविधयाऽज्ञातत्वाभावात् ।

## पूरणी

वस्तुतस्तु द्रव्यप्रत्यक्षतायामेव रूपवत्त्वं प्रयोजकम् । अन्यथा रूपादेरप्रत्यक्षताप्रसङ्गात् । नच चैतन्यस्य परमतासिद्धगुणाश्रयतारूपद्रव्यत्वमिति रूपशून्यमपि चैतन्यं रूपादिगुणवच्चक्षुरादिप्रत्यक्षगम्यमिति तत्त्वम् । वस्तुतो घटादिवद्रूपादिकमपि चैतन्येऽध्यस्तमिति तस्यापि रूपवत्त्वमस्त्येव । नच धर्मिसमानसत्ताकरूपवत्त्वं प्रत्यक्षताप्रयोजकम्; लाघवेन रूपाधिष्ठानतामात्रस्य तत्प्रयोजकत्वात् । न चैवं नीरूपवाय्वाद्यवच्छेदेनापि चैतन्यस्य प्रत्यक्षतापातः; तदवच्छेदेन रूपवत्ताविरहात् । न चाज्ञानस्यापि रूपोपादानतया अध्यक्षता स्यादिति वाच्यम्; जडो घट इत्यादिप्रतीत्या रूपवद्घटावच्छेदेनाज्ञानस्यापि चाक्षुषादिवृत्तिविषयताया इष्टत्वादिति संक्षेपः ॥

ननु ज्ञान[1]पदे वृत्तिचैतन्यविकल्पस्तदवस्थ इत्याशङ्क्याह—**एवं चेति** । इदमाकारवृत्त्युपहितनिश्चयविषयतया शुक्तिरजतादेरव्याप्तिवारणाय अज्ञातगोचरेति विशेषणम् । तादृशनिश्चयविषयत्वेनेदंत्वसामान्यांशे तद्वारणाय विशेषपदम् । घटं न जानामीत्यज्ञातताग्राहकसाक्षिभास्ये घटादौ तद्वारणाय निश्चयविशेषणम् । तत्साक्षिणोऽज्ञातघटादिनिश्चयरूपत्वाभावात् । निश्चयात्मकसाक्षिव्यावृत्त्यर्थं विषयविशेषणम् । स्वस्य स्वाविषयत्वात् । **न व्यर्थेति** । स्मर्यमाणेऽप्युक्तार्थसत्त्वादित्यर्थः । तत्संभवं दर्शयति—**स्मर्यमाणस्येति** । ज्ञातगोचरवृत्त्युपहितनिश्चयविषयत्वादित्यर्थः । अज्ञातगोचरविशेषणस्य प्रयोजनमाह—**न चासंभव इति । वक्ष्यमाणेति । इदमंशे संशयविपर्ययोर**-

[1] पदेन—ख.

### दीपनम्

नाप्यनुभूयमानेऽभिनवघटादौ इदंत्वसामान्यांशे केवलसाक्षिभास्ये चाज्ञाते स्वप्रकाशसाक्षिणि चातिव्याप्तिः। अत्र चाज्ञानान्तःकरणबुद्धिसुखदुः-

---

### पूरिणी

दर्शनेन तदवच्छिन्ना[1]ज्ञानाभावात् वृत्तेरज्ञातगोचरत्वाभावादित्यर्थः। वृत्त्यनुपहितविशेषनिश्चयविषयविशेषणानां क्रमेण व्यावर्त्यमाह—**नाप्यनुभूयेति**। ननु यदि यत्किंचिदज्ञातवृत्त्यनुपहितत्वं तदा घटादिवृत्त्यनुपहितनिश्चयविषयघटादावतिव्याप्तिः, तादृशवृत्तिमात्रानुपहितत्वं चेत्पीतः शङ्ख इत्यादिसोपाधिकपीतत्वाध्यासेऽव्याप्तिः; तस्याज्ञातशङ्खत्वादिगोचरवृत्त्युपहितनिश्चयविषयत्वात्। नच स्वहेत्वज्ञानगोचर[2]विषयकवृत्त्यनुपहितत्वं तदर्थः, पीतत्वहेत्वज्ञानसमानविषयश्चैत्यवृत्त्यनुपहिततद्विषयत्वं तत्राप्यस्तीति वाच्यम्; एवं सति घटादिनिमित्तमूलाज्ञानसमानविषयचरमवृत्त्यनुपहितनिश्चयविषयतया घटादावतिव्याप्तेर्वज्रलेपायमानत्वात्। तथा विशेषपददानेऽपि इदंत्वसामान्यांशेऽतिव्याप्तिः; तस्य विशेषरजतनिश्चयविषयत्वात्। नच विशेषरूपत्वे सति निश्चयविषयत्वं तदर्थः; पीतः शङ्ख इति शङ्खत्वांशेऽतिव्याप्तितादवस्थ्यादिति चेदत्र ब्रूमः—

तद्विषयावच्छिन्नतद्दशावर्तिविश्चयकालीनप्रमाणवृत्त्यविषयत्वमनेन विवक्षितम्। घटादेर्वृत्तिद्वारकनिश्चयविषयत्वेन तद्विषयावच्छिन्ननिश्चयकालीनवृत्तिविषयतया तदविषयत्वाभावान्नातिव्याप्तिः। प्रमाणपदेन शुक्तिरजतादेरविद्यावृत्तिविषयत्वेऽपि नासंभवः; प्रमाणवृत्तीत्यनेनानुभवरूपान्तःकरणवृत्तेर्विवक्षितत्वात्। तद्दशावर्तिविशेषणादग्रिमस्मृति-

---

1 ज्ञानविरहात्-ञ. 2 विषयवृ-ञ.

### दीपनम्

स्वेच्छादिकं प्रतीतिनियतसत्ताकतया लक्ष्यमेवेति नातिव्याप्तिशङ्का । न चाज्ञानादेरर्थक्रियाजनकस्य व्यावहारिकत्वमेव न प्रातीतिकत्वमिति

---

### पूरणी

समयवर्तितद्विषयनिश्चयकालीनप्रमाणवृत्त्यविषयत्वस्य तत्र कदाप्यभावेनाभिनवोत्पन्ने नातिप्रसङ्गः, वर्तमानतत्समयवर्तिनिश्चयकालीनतद्वृत्तिविषयतासत्त्वात् । अत एव स्मर्यमाणस्य स्मृत्युपहितनिश्चयसमानकालीनप्रमाणवृत्त्यविषयत्वात्तत्रातिप्रसङ्गवारणायोत्तरविशेषणमर्थवत् । नच स्मर्यमाणदशायां पुरुषान्तरीयवृत्तिविषयत्वसंभवान्नातिप्रसङ्ग इति वाच्यम्; स्वमात्रानुभूतस्मरणेऽतिप्रसङ्गवारकत्वात् । नच स्वप्नप्रपञ्चेऽव्याप्तिः, तन्निश्चयसमानकालीनप्रमाणवृत्तेरप्रसिद्धेरिति वाच्यम्; पुरुषान्तरस्य तत्प्रसिद्धेः । एवं च शङ्कत्वाद्यंशे नातिव्याप्तिशङ्कापीति सर्वमवदातम् ॥

**प्रतीतीति** । यदा स्वसत्ता तदा स्वप्रतीतिरिति प्रतीतिव्याप्यसत्ताकत्वमित्यर्थः । ननु घटादिगोचरब्रह्मप्रकाशस्य घटादिसत्ताव्यापकतया तत्रातिप्रसङ्गः । नच जीवप्रकाशव्याप्यत्वं तदर्थः; जीवन्मुक्तिदशायामुत्पन्नघटादेर्जीवेन सर्वज्ञेन यावत्सत्त्वमनुभूयमानतया तत्रातिप्रसङ्गादिति चेत्, न; तद्दशायां तस्य सार्वज्ञ्ये मानाभावेन घटादेस्तेन यावत्सत्त्वमनुभूयमानत्वासिद्धेः, स्वकर्मादिज्ञानमात्रस्य कायव्यूहादावप्युपयोगात्, सामग्रीविरहाच्च तस्य सकलवस्तुसाक्षात्कारानुपपत्तेः । योगजधर्मप्रत्यासत्तेर्ज्ञानसामान्यासत्तिन्यायेन निरस्तत्वात् । किं च तत्प्रत्यासत्त्या सकलवस्तुगोचरचाक्षुषवृत्तिसंभवेऽपि वृत्तिव्यवधानेन वस्तुभानं न वस्तुसत्ताव्यापकमिति घटादौ नातिव्याप्तिशङ्कावकाशः । वस्तुतस्त्वस्मदादिप्रतिभासव्याप्यत्वं विवक्षितम् । तथा च स्वविषयास्मदादिप्रतिभासव्याप्यसत्ताकजडत्वं लक्षणमिति तत्त्वम् ॥

## दीपनम्

वाच्यम्; शुक्तिरजतरज्जुसर्पा[1]दभ्रान्तिभयाद्यर्थक्रियाजनकत्वात्। न च तत्र ज्ञानमेवार्थक्रियाजनकम्, तच्च व्यावहारिकमिति वाच्यम्; ज्ञानमात्रस्य जनकत्वे घटादिज्ञानादपि भयादिप्रसङ्गात्, रजतादिविषयत्वेन जनकत्वे [2] चागतमेवार्थस्यापि प्रयोजकतयार्थक्रियाकारित्वम्। स्वप्नकल्पित[3]घटादिना स्नानपानाक्रियादर्शनाच्च। न च तत्र क्रियाप्यसत्येवेति वाच्यम्; तदवस्थायां सुखादिजनिकायास्तस्या घटादि[4]क्रियातोऽविशेषात्। अवस्थान्तरे मृषात्वबुद्धिस्तु घटादिक्रियादावपि तुल्या।

## पूरणी

ननु तज्जातीयदृष्टार्थक्रियाकारित्वमभिप्रेतम्। शुक्तिरजतादेस्तज्जातीयकरजतादिसाध्यकङ्कणाद्यर्थक्रियाकारित्वाभावान्न तथात्वमित्यपरितोषादाह—**स्वप्नकल्पितेति**। यद्वा ननु तत्तद्विषयतया कारणतामात्रेण न तद्विषयस्य हेतुता, अतीतादिज्ञानस्यातीतादिविषयकव्यवहारहेतुत्वेऽपि अतीतादेस्तत्राहेतुत्वात्। न च तज्ज्ञानं तद्विषयमेव न भवतीति वाच्यम्; सर्वथा तद्गोचरत्वाभावे तद्विषयकव्यवहारानुपपत्त्या भासमानत्वलक्षणविषयतायास्तत्रावश्यकत्वादित्युक्तत्वात्। व्याघ्रयादिविषयत्वेन जनकत्वेऽपि तज्ज्ञानस्य व्याघ्रयादेरनुमित्यहेतुत्वाच्चेत्यनुशयादाह—**स्वप्नकल्पितेति**। इदं चोपलक्षणम्—स्वप्नकल्पितव्याघ्रादेर्व्यावहारिकभयाद्यर्थक्रियाकारित्वाच्चेत्यपि द्रष्टव्यम्। असत्यत्वं व्यवहाराप्रयोजकत्वं बाध्यत्वं वा। नाद्य इत्याह—**तदवस्थायामिति**। द्वितीये त्वाह—**अवस्थान्तर इति**। न च व्यवहारकाले बाध्यत्वं तदर्थः; घटादिक्रियायास्तत्काले बाधाभावात् शुक्तिरजताद्यर्थक्रिया-

---

[1] देरपिभ्रा--च. [2] चावगत--च. [3] तटाकादिना--ख. [4] क्रियाविशेषात्-च.

पूरणी

याश्च संसारदशायामेव बाधादिति वाच्यम्; बाध्यत्वं यदि सविलास-स्वोपादानाज्ञाननिवृत्तिः, तदा स्वप्नप्रपञ्चस्य मूलाज्ञानकार्यतया ब्रह्मा-परोक्षज्ञानं विना व्यवहारकाले तद्बाधाभावेन तत्प्रपञ्चस्य व्यावहारि-कत्वप्रसङ्गः। तथा हि—स्वप्नप्रपञ्चस्यानावृतनिष्कृष्टाहंकारबहिःप्रसृत-साक्षिरूपप्रत्यगात्मचैतन्यमधिष्ठानं न तु किंचिद्विषयावच्छिन्नम्। येन तद्गोचरावस्थाज्ञानमुपादानं स्यात्। न च गजाद्यभाववद्देशावच्छिन्न-चैतन्यमेवाधिष्ठानमस्त्विति वाच्यम्; बाह्यदेशस्य तदिन्द्रियासंबन्धेन ग्रहणासंभवेन तदवच्छिन्ने स्वप्नाध्यासायोगात्। ननु तदा बाह्यदेश-स्मरणसंभवाल्लाघवेन धर्मिधीमात्रस्यारोपहेतुत्वाच्च बाह्यदेशावच्छिन्नमेवा-स्त्वाश्रयः। न चाननुभूतकाशीप्रदेशाधिकरणस्वप्नानुपपत्तिः; तत्रापि शाब्दानुभवादेः सत्त्वात्। अन्यथा आरोपस्य समानविषयकानुभवहेतु-कतया भवत्पक्षेऽपि तद्देशकत्वारोपानुपपत्तेः। न च स्वप्नारोपस्य नानुभव-पूर्वकतानियमः, निजकरार्पितखण्डितनिजशिरसः स्वनयनदर्शनादिस्वप्ने तदसंभवादिति वाच्यम्; तत्रापि निजकरशिरोनयनखण्डनादेः प्रत्येक-मनुभवात्। अन्यथा शुक्तिरजतादेः पूर्वमननुभवेन आरोपमात्रस्यानु-भवनैरपेक्ष्यप्रसङ्गादिति चेन्न; विषयदेशस्थान्तःकरणवृत्तेस्तदवच्छिन्ना-ज्ञानक्षोभकतया तत्राध्यासहेतुतया स्मृतिरूपान्तःकरणवृत्तेर्विषयदेश-स्थत्वाभावेन स्मृतदेशावच्छिन्नस्य स्वप्नाधिष्ठानत्वासंभवात्। अत एव स्मृतपर्वतादौ[1] भ्रान्तिवह्न्याद्यनुमितिविषये उक्तसामग्रीविरहेणानिर्वच-नीयवह्न्याद्युत्पत्तेरसंभवात्परोक्षे नानिर्वचनीयख्यातिरिति सिद्धान्तः। किं च देशावच्छिन्नचैतन्यस्याधिष्ठानत्वे स्वप्नगजादेर्बाह्यदेशाभेदेनानु-भवो न स्यात्। किं त्विदं रजतमितीदंतादात्म्येन रजतानुभववत्त-

[1] भ्रान्त—ख.

## दीपनम्

किंच रजतादिकमपि स्वध्वंसं जनयतीति नार्थक्रियाकारित्वं व्यावहारिकत्वप्रयोजकम् ॥

---

## पूरणी

देशतादात्म्येनैव तदनुभवः स्यात्। अत एव नाहमवच्छिन्नमपि स्वप्नाधिष्ठानम्; अहं गज इत्यप्रतीतेः, नाहं गज इति प्रतीतेश्च, अहमवच्छिन्नाद्विच्छिन्नदेशानुभवाच्चेत्यविद्याप्रतिबिम्बसाक्षिवादिनां मतम् ॥

अपरं मतम्—अन्तःकरणोपहितचैतन्ये साक्षिण्येव स्वप्नाध्यासः। अन्तःकरणस्योपाधिमात्रतया कार्यानन्वयित्वान्नाहं गज इति तादात्म्यप्रतिभासः। न च शुक्तिरजतादावपीदमंशोपहितचैतन्यमेवाधिष्ठानं न तु तद्विशिष्टम्; इदमंशस्यानुपादानत्वात्, अतस्तत्रापीदंतादात्म्यावभासो न स्यादिति वाच्यम्; तत्र रजतादाविदंत्वसंसर्गारोपेण तथावभासात्। यद्वा स्वप्नविषये अन्तःकरणावच्छिन्नभेदारोपान्नाहं गज इति प्रतिभासः। विच्छिन्नदेशत्वादिकं च तत्रारोपितमेवेति दिक् ॥

मतद्वयेऽपि मूलाज्ञानमेव स्वप्नोपादानमिति स्वप्नार्थक्रियायाः व्यवहारकाले स्वोपादानाज्ञानेन सह निवृत्तिरूपबाधाभावात्स्वप्नप्रपञ्चस्य व्यावहारिकत्वं स्यात्। यत्तु स्वप्नकल्पिताविद्यैव स्वप्नोपादानमिति, तन्न; जाग्रद्बोधेन तदविद्यानाशे मुक्तिप्रसङ्गात्। प्रतिदिनं नानाविद्याकल्पनायां मानाभावाच्चेति दिक्।

न च बाध्यत्वं व्यवहारकाल एव किंचिदवस्थायामव्यवह्रियमाणत्वम्, तच्च स्वप्नप्रपञ्चेऽप्यस्ति, जाग्रद्दशायां तस्यार्थक्रियाविरहादिति वाच्यम्; व्यावहारिकघटाद्यर्थक्रियायाः स्वप्नदशायामसत्त्वेन घटादेरपि प्रातिभासिकत्वापातात्। ननु मिथ्यात्वनिश्चयो बाधः, तद्विषयत्वं स्वप्नेऽप्यस्तीति चेत्, वियदादिप्रपञ्चस्यापि तथात्वादिति संक्षेपः। सकलप्रातीतिकसाधारणमर्थक्रियामाह—**किं चेति**। **नार्थक्रियेति**। **किं तु** प्रतीतिपूर्वसत्ताकत्वं व्यावहारिकत्वप्रयोजकमिति भावः ॥

## दीपनम्

नन्वेवमप्यनाद्य[1]विद्यायां कथं पूर्वदृष्टत्वानधिकरणत्वमिति चेन्न; पूर्वदृष्टत्वं हि न पूर्वकालीनदर्शनविषयत्वमात्रम्; अनादिसाक्षिभास्य-रजतादेरपि तदनधिकरणत्वाभावात्। किं त्वतीतज्ञानविषयत्वम्; तच्च नित्यसाक्षिभास्येऽनाद्यज्ञाने नास्त्येवेति नाव्याप्तिः। नन्वज्ञानमप्यतीता-विद्यावृत्त्यवच्छिन्नचैतन्यगोचरं, अन्यथा सुषुप्तिकालीनाज्ञाने उत्थितस्य स्मृत्यभावप्रसङ्गात्. तच्चानित्यमित्यव्याप्तिरिति चेन्न; पूर्वदर्शनपदेन विषयसत्ताप्रयोजकदर्शनस्य विवक्षितत्वात्। [2]तच्चाज्ञाने नित्यसाक्षि-

## पूरणी

**अन्यथेति।** अनुभवनाशजन्यत्वादस्मन्मते संस्कारस्य नित्यचैतन्यस्य नाशायोगेनाविद्यावृत्तेरवश्यस्वीकर्तव्यत्वादित्यर्थः। **विषयसत्तेति।** ननु तत्सत्ताप्रयोजकत्वं तत्साधकत्वं तन्नियतत्वं वा। आद्ये अज्ञानेऽव्याप्तिः, अविद्यावृत्त्यवच्छिन्नस्यापि तद्बोधकत्वात्। द्वितीये स्मर्यमाणेऽतिप्रसङ्गः; तत्पूर्वानुभवस्य तत्सत्तानियतत्वाभावादिति चेन्न; विषयस्फुरणव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्य विवक्षितत्वात्। अविद्यावृत्तिं विनाप्यज्ञानस्फुरणान्न तज्ज्ञानस्योक्तप्रयोजकत्व-मिति नाव्याप्तिः। स्मर्यमाणस्य तु पूर्वानुभवं विनास्फुरणात्तदनुभव-स्तत्सत्ताप्रयोक इति न तत्रातिव्याप्तिः। एवं च तत्सत्तानिश्चयसमान-कालीनप्रमाणवृत्त्यविषयत्वे सति विषयसत्तास्फुरणव्यतिरेकप्रयोजकव्यति-रेकप्रतियोग्यतीतदर्शनविषयत्वानधिकरणत्वे सति निश्चयविषयत्वम्। अतो न साक्षिण्यतिव्याप्तिः। परोक्षस्थलेऽन्यथाख्यात्यभ्युपगम्येऽपि [3]भ्रान्तानुमितिविषयवन्ह्यादेः पूर्वदृष्टत्वान्न तत्रातिव्याप्तिरिति सर्वं सुन्दरम्॥

[1] विद्यायाः--ख. [2] तच्च ज्ञाने--ख [3] भ्रान्त्यनु--ग.

## पूरणी

नन्वज्ञानस्य प्रातीतिकत्वे तदुपादेयवियदादिप्रपञ्चस्य प्रातीतिकत्वप्रसङ्गः; परिणामस्य परिणामिसमानसत्ताकत्वनियमात्। परिणामिसमानसत्ताकान्यथाभावस्यैव परिणामत्वात्। अन्यथा प्रपञ्चस्य ब्रह्मपरिणामत्वापातात। तथाच अज्ञानं व्यावहारिकं, व्यावहारिकपरिणामोपादानत्वात्, तन्त्वादिवदित्यनुमानात्तत्सिद्धिः। न चैवं व्यावहारिकाज्ञानोपादेयतया शुक्तिरजतादेरपि व्यावहारिकत्व स्यात्, उक्तनियमादिति वाच्यम्; तदुपादेयाज्ञानस्यापि प्रातीतिकत्वात्। न चैकाज्ञानवादे तदनुपपत्तिः; अत एव मूलाज्ञानावस्थाज्ञानभेदपक्षस्य सम्यक्त्वाभ्युपगमात्। यद्वा स्वतः स्वसमानसत्ताकपरिणामहेतोरप्यागन्तुकदोषबलेन प्रातीतिकपरिणामहेतुत्वम्। अत एव मूलाज्ञानकार्यस्यापि स्वप्नप्रपञ्चस्यागन्तुकनिद्रादिदोषवशेन प्रातीतिकत्वम्। दोषाणां विचित्रकार्यकरतायाः सर्वसंमतत्वात्। प्रातीतिकशुक्तिरजतादौ चन्द्रप्रादेशिकत्वनभोनीलिमादौ सर्वत्रागन्तुकदोषसत्त्वात्, गन्धर्वनगरादावदृष्टविशेषादेर्दोषत्वात्। अतः आगन्तुकदोषासध्रीचीनाज्ञानोपादेयपरिणामस्यैव परिणामिसमानसत्ताकत्वनियमः। प्रमाणबलेन गुर्ववच्छेदकस्याभ्युपगन्तव्यत्वात्। न चैवमपि शुक्तिरजतादेः परिणामात्मकत्वं न स्यात्; तत्त्वतोऽन्यथाभावस्यैव परिणामरूपत्वादिति वाच्यम्; व्यावहारिकप्रातीतिकसत्तयोर्जडसत्तात्वेन बाध्यसत्तात्वेन वानुगमे सत्ताद्वयस्यापि समानजतीयतया प्रातीतिकराजतादेरपि व्यावहारिकाज्ञानसमानरूपसत्ताकत्वानपायात्। न चैवं सत्तात्वेन सत्तामात्रानुगमे प्रपञ्चस्यापि ब्रह्मसमानरूपसत्ताकतया ब्रह्मपरिणामत्वप्रसङ्गः, तथा च ब्रह्मणोऽपि परिणाम्युपादानत्वेनाज्ञानं प्रपञ्चोपादानं न स्यात्, ब्रह्मणः परिणाम्युपादानत्वासंभवहेतुकत्वात्तदुपादनत्वकल्पनाया इति वाच्यम्;

## दीपनम्

मात्रम् । यदि पुनरविद्यान्तःकरणादेर्लौकिकमिथ्याबुध्यगोचरत्वेन प्रातिभासि[1]कत्वं न परितुष्यसि, तर्हि तथैवास्तु । न चैवमपि प्रातिभासिकाध्यासलक्षणे अज्ञानादावतिव्याप्तिः । शुक्तिरजतं हीदमा-

## पूरणी

प्रपञ्चे व्यावहारिकसत्ताकत्वस्याकस्मिकत्वापत्त्या तादृशाज्ञानोपादानकत्वस्यावश्यकत्वात् । शुक्तिरजतादेरपि प्रातीतिकसत्त्वमागन्तुकदोषापेक्षमित्युक्तमिति न दोषः । न चैवमपि प्रपञ्चे ब्रह्मपरिणामव्यवहारः स्यात्, तत्समानरूपसत्ताकत्वस्य त्वदुक्तव्यवहारोक्तनिमित्तस्योक्तविधया तत्र सत्त्वादिति वाच्यम्; ब्रह्मातिरिक्तपरिणाम्युपादानस्योक्तविधयावश्यवाच्यत्वे विवर्तपरिणामव्यवस्थान्यथानुपपत्त्या गुरुणापि ब्रह्मविलक्षणसत्ताकत्वेन रूपेण समानरूपसत्ताकत्वस्य तद्व्यवहारनिमित्तत्वाभ्युपगमात् । तस्मादज्ञानप्रातीतिकत्वपक्षो मन्द एवेत्यस्वरसात्तद्बीजान्तरं दर्शयन् प्रकारान्तरमाह—**यदि पुनरिति** । ननु लौकिकी लोकमानजनिता या मिथ्याबुद्धिः तदगोचरत्वं यद्यर्थः, तदा लोकमानान्तर्गतमिथ्यात्वानुमानजनितमिथ्यात्वबुद्धिगोचरत्वादज्ञानादेरसिद्धिः । न च लोकपदं प्रत्यक्षमानपरम्; चन्द्रप्रादेशिकत्वादेरेतादृशबुध्यगोचरत्वेऽपि व्यावहारिकत्वाभावेन तत्र व्यभिचारात् । न च श्रुत्यनुमानातिरिक्तमानाबाध्यत्वं तदर्थः, चन्द्रप्रादेशिकत्वादेस्तदुभयातिरिक्तज्योतिरागमबाध्यत्वान्न व्यभिचार इति वाच्यम्; एवमपि प्रातीतिकनभोनीलिमादावनुमानबाध्ये तदतिरिक्तमानाबाध्यत्वेनानैकान्त्यात् । अत एव लौकिकानामनिश्चितवस्तुतत्त्वानां या मिथ्याबुद्धिः तदविषयत्वमिति परास्तम्; चन्द्रप्रादेशिकत्वनभोनीलिमादावेव व्यभिचारादिति चेत्, न; लोकपदं

1 त्वेन न—**ख.**

### पूरणी

श्रुतिप्रमाणातिरिक्तमानपरम्। तथा च श्रुतिप्रमाणातिरिक्तप्रमाणाबाध्यत्वं हेतुः। न च प्रपञ्चमिथ्यात्वानुमानबाध्यत्वादसिद्धिः; अस्मन्मते तस्य श्रुत्यनुग्राहकमात्रत्वेनास्वतन्त्रत्वात्। अतः श्रुत्येकबाध्ये अज्ञानादौ नासिद्धिः। न वा तदतिरिक्तज्योतिरागमानुमानबाध्ये चन्द्रप्रादेशिकत्वनभोनीलिमादौ व्यभिचारः॥

## वेदपौरुषेयत्वमते वेदलक्षणम्

ननु ज्योतिरपि श्रुतिरेव, श्रुतिसङ्गृहीतार्थपरत्वात्। अत एव "श्रोत्रियं छन्दोऽधीते" इति छन्दःपदव्युत्पन्नश्रोत्रियपदं "साङ्गवेदाध्यायी श्रोत्रिय" इति व्युत्पादयद्भिर्वेदशब्दपर्यायेण छन्दःपदेनाङ्गानामपि सङ्ग्रहः स्मृतः। न च पौरुषेयत्वप्रसिद्धिविरोधः; काठकादिवत्प्रवचनपरत्वेनाप्युपपत्तेः। किं च स्वयंभुवा सृष्टमिति वेदतुल्यतया ब्रह्ममुखविनिस्सृतत्वोक्तज्योतिर्वेद एवेति चेन्न; ज्योतिर्व्याकरणादीनां श्रुत्यर्थनिर्णयोपयोगितया तदङ्गत्वेऽपि श्रुत्यनन्तर्भावात्. अन्यथा अङ्गाङ्गिभावानुपपत्तेः। अत एव साङ्ग वेदमित्यादावङ्गानां पृथङ्निर्देशः, "अङ्गानि वेदा" इत्यादौ पृथग्विद्यात्वेन परिगणनं च। नचैवं तत्राध्ययननियमादेरनुपपत्तिः; साङ्गवेदाध्ययने तन्नियमविधानात्तदुपपत्तेः, अश्रुतित्वेऽपि कल्पसूत्रेऽध्ययननियमादेर्दर्शनाच्च। "श्रोत्रियं छन्दोऽधीते" इत्यत्र तु छन्दःपदेनाजहल्लक्षणया अङ्गसङ्ग्रहो दर्शितः। साङ्गवेदाध्यायीति तैरेव पृथक्कृत्रोक्तेः। न च श्रुतिसङ्गृहीतार्थपरत्वेन तेषां श्रुतित्वमिति वाच्यम्; न हि तावन्मात्रं श्रुतित्वं; व्रीहयः पक्वा इत्यादिवाक्यस्यापि "व्रीहिभिर्यजेत" इत्यादिश्रुतिसङ्गृहीतार्थकत्वेन तत्त्वापातात्। किं तु शब्दतदुपजीविप्रमाणा-

## पूरणी

तिरिक्तप्रमाणजनितप्रमितिविषयत्वायोग्यार्थकत्वे सति शब्दजन्यवाक्यार्थविषयकज्ञानाहेतुकप्रमाणशब्दत्वम् । अत्र प्रत्यक्षमानपूर्वके घटोऽस्तीति लौकिकवाक्येऽतिप्रसङ्गवारणाय सत्यन्तं विशेषणम् । असंभववारणाय शब्दतदुपजीविप्रमाणातिरिक्तेति । नच शब्दपदस्य वेदपरत्वे आत्माश्रयः, शब्दमात्रपरत्वे च तेनैव स्मृतिसङ्ग्रहे वेदातिरिक्तस्मृतिप्रमाणजनितप्रमितियोग्यार्थकत्वेनासंभवाप्रसङ्गात्तदुपजीविपदवैयर्थ्यमिति वाच्यम्; यागः इष्टसाधनम्, अविगीताचारविषयक्रियात्वात्, इत्याद्यनुमानजनितप्रमितिविषयार्थकत्वेनासंभववारकत्वात्तत्पदस्य। प्रथमप्रमाणपदं तु श्रुत्यर्थज्ञानपूर्वकादृष्टद्वारा चक्षुरादिप्रमाणस्यापि स्वोत्पत्तौ श्रुत्युपजीवितया चक्षुरादिप्रमाणबोधितार्थकलौकिकवाक्ये विशिष्टाभावसत्त्वेनातिव्याप्तिवारणाय । तत्पददाने तु प्रामाण्यार्थे तदुपजीवित्वं लभ्यते । चक्षुरादेः स्वोत्पत्तौ तदुपजीवनेऽपि प्रामाण्यार्थे तदनुपजीवनान्नातिप्रसङ्गः । नच शब्दोपजीवित्वं शब्दार्थज्ञानोपजीवकत्वम्, तच्च वेदेऽप्यस्ति, शब्दार्थगोचरभगवज्ज्ञानोपजीवकत्वात्तस्येति शब्दपदं व्यर्थमिति वाच्यम्; शब्दोपजीवीत्यनेन शब्दजन्यवाक्यार्थज्ञानहेतुकत्वस्य विवक्षितत्वात् । तस्य च नित्यज्ञानपूर्वकश्रुतावभावेन तत्सार्थक्यात् । द्वितीयप्रमाणपदं तु तदुभयातिरिक्तात्ममनोयोगादिजन्यत्वाच्छ्रुत्यर्थप्रमितेरसंभववारणाय । मन्वादिस्मृतिव्यावृत्तये वाक्यार्थज्ञानाहेतुकत्वविशेषणम् । श्रुतिवाक्यार्थगोचरभगवज्ज्ञानजन्यतया असंभववारणाय जन्यत्वं ज्ञानविशेषणम् । शब्दगोचरजन्यज्ञानजन्य आधुनिकवेदेऽतिव्याप्तिवारणाय वाक्यार्थविषयकत्वं विशेषणम् । एवमपि निर्णीतवेदार्थेन पुंसा उच्चारिते वेदे स्वसामग्रीवशेन वेदवेदार्थगोचरज्ञानजन्येऽव्याप्तिवारणाय शब्दजन्येति । शब्दतदर्थगोचरज्ञानस्य

## पूरणी

स्मृतिरूपस्य शब्दजन्यत्वाभावात्। न चैवं शब्दजन्यज्ञानाहेतुकेत्येवास्तु, वाक्यार्थविषयत्वं व्यर्थमिति वाच्यम्; विषयतया वेदजनिततद्गोचरप्रत्यक्षपूर्वकगुरूच्चारितानुच्चारितवेदवाक्येऽव्याप्तिवारणार्थत्वात्। न चैवमप्युपनीतवाक्यार्थविषयकवेदजन्यवेदप्रत्यक्षपूर्वोच्चारितवेदेऽव्याप्तिरिति वाच्यम्; शब्दजन्यवाक्यार्थज्ञानत्वावच्छिन्नज्ञानाहेतुकत्वस्य विवक्षितत्वात्। तत्र शब्दतदर्थोभयगोचरज्ञानस्यास्वतन्त्रप्रणीतवेदे शब्दगोचरज्ञानत्वेनैव हेतुत्वात्। स्मृतिवाक्यवेदार्थव्याख्यानादौ स्वतन्त्रप्रणीते तेन रूपेणैव श्रुत्यर्थज्ञान हेतुरिति तद्व्यावृत्तिः। तृतीयप्रमाणपदं च विसंवादिलौकिकवाक्येऽतिप्रसङ्गवारणाय। अत एव चैत्यवन्दनादिस्मृतेरपि व्यावृत्तिः। तस्या महाजनापरिगृहीतत्वेनाप्रमाणत्वात्। शब्दपदं च वेदोपजीव्यनुमाने व्याप्तिज्ञानादिमूलके वाक्यार्थज्ञानत्वेन शब्दजन्यज्ञानाहेतुकेऽतिप्रसङ्गवारणाय। न चैवमपि याग इष्टसाधनमिति शुकाद्युच्चारितवाक्येऽतिव्याप्तिरिति वाच्यम्; अयमेव वदतीत्यनुकरणमात्रतया ततोऽर्थप्रतीत्यनुदयेन तद्वाक्यस्याप्रमाणत्वात्। यद्वा प्रमाणपदं निष्कम्पसमर्थप्रवृत्तिजनकानुभवकरणपरम्। न हि शुकाद्युच्चारितादृष्टार्थकवाक्यजनितानुभवात्कश्चिद्वैदिककर्मणि निष्कम्पं यतते। अतो न तत्रातिप्रसङ्गः॥

नन्वेवमपि सामान्यप्रत्यासत्त्यादिजनितप्रत्यक्षविषयत्वाद्यागेष्टसाधनत्वादेर्मानान्तरप्रमित्यविषयार्थकत्वमसंभवीति चेन्न; प्रमितिपदेन समर्थप्रवृत्तिजनकानुभवस्य विवक्षितत्वात्। अलौकिकप्रत्यासत्तिजन्यानुभवस्याप्रवर्तकत्वात्। नच सामान्यासत्तिजज्ञानमपि सन्निकृष्टविषयप्रवर्तकमिति वाच्यम्; तज्ज्ञानस्य तदंशे लौकिकत्वेनालौकिकत्वाभावात्। योगिज्ञानमपि न स्वस्य यागादिविषये प्रवर्तकम्। प्रवर्तकत्वे

## पूरणी

वा तद्व्यावर्तनायादृष्टद्वारकेति श्रुत्यतिरिक्तमानविशेषणम् । ननु तथापि "अग्निर्हिमस्य भेषजम्" इत्यादिमानान्तरगोचरार्थकवेदवाक्येऽव्याप्तिः। किं च हुंफडित्यनर्थकवेदभागेऽव्याप्तिः। नच मानान्तरप्रमितार्थशून्यत्वं तदर्थः। "सोमेन यजेत" इत्यादिविधिवाक्येऽपि मानान्तरप्रमितसोमाद्यर्थकेऽव्याप्तिरिति चन्न; मानान्तरप्रमितयोग्यार्थतात्पर्यशून्यत्वस्य विवक्षितत्वात। तच्च दृष्टार्थकमन्त्रार्थवादेषु दृष्टपदार्थवद्विधिवाक्येषु निरर्थकहुंफडादिस्तोभाक्षरेषु च साधारणमिति न काप्यनुपपत्तिः। एतच्च वेदपौरुषेयत्ववादिनो लक्षणम् ॥

## वेदापौरुषेयत्वमते वेदलक्षणम्

अपौरुषेयत्वे तु स्वातिरिक्तमानजनितप्रमितियोग्यार्थतात्पर्यशून्यत्वे सति प्रमाणशब्दत्वं वेदत्वम्। नच श्रुत्यतिरिक्तस्मृतिवाक्यप्रमितियोग्यार्थकत्वेनासंभव, [1]स्मृतिवाक्येभ्यो वेदमनुभूय तत एवार्थनिर्णय इत्यभ्युपगमेन स्मृतिवाक्यजनितज्ञानस्याप्रमितिरूपत्वात्, मानान्तरानपेक्षमानजनितज्ञानस्यैव प्रमितित्वात्। चरमप्रमाणपदं च विसंवादिवाक्ये अतिप्रसङ्गवारणाय। शब्दपदं चातीन्द्रियार्थगोचरानुमानव्यावृत्तये। तद्विषये मानान्तराप्रवृत्त्या तदनुमानस्यापि तथात्वादिति संक्षेपः ॥

मतद्वयेऽपि ज्योतिरादि न श्रुतिः। ज्योतिःप्रतिपाद्यकालभेदोपरागादेः प्रत्यक्षानुमानाभ्यामपि ग्रहणात्। न चैव ज्योतिरागमवैयर्थ्यम्; प्रतिपन्मासादिसंज्ञाभेदेन श्रुत्यपेक्षिततद्व्यवस्थाभेदहेतुत्वात्। नचैवं तत्संज्ञाविशिष्टकालभेदस्य मानान्तराप्रमितत्वमस्तीति वाच्यम्; संज्ञाकालभेदयोरुभयोरपि मानान्तरप्रमेयत्वात्। अन्यथा विशिष्टरूपस्य

[1] पुंवाक्ये—ट.

## पूरणी

मानान्तराप्रमेयत्वमात्रेण तदर्थकज्योतिरादेः श्रुतित्वे संज्ञाविशेषव्युत्पादकनिघण्ट्वादेरपि श्रुतित्वापातात्। मुहूर्तादिभेदस्य श्रुतिसंकीर्तितत्वेन तन्निर्णायकस्य स्मृतितुल्यत्वाच्च। नचैवं श्रुतिरेव ज्योतिर्मूलमानमिति तद्बाध्यचन्द्रप्रादेशिकत्वादेर्मन्वादिस्मृतिबाध्यार्थवच्छ्रुत्येकबाध्यत्वमेवेति वाच्यम्; मुहूर्तादिसंज्ञावच्छिन्नकालभेदमात्रस्य श्रुत्युक्तत्वेऽपि एतावान्कालो मुहूर्तादिसंज्ञीति श्रुतावप्रतिपादनेन ज्योतिषः श्रुत्येकमूलकत्वासिद्धिरिति दिक्॥

एवं व्याकरणादिव्युत्पादितसाधुछन्दोवृत्तभेदादीनां मानान्तरप्रमितत्वान्न तेषामपि श्रुतिता। कल्पसूत्रस्य मानान्तरायोग्यार्थस्याप्यवेदत्वं कल्पसूत्रनय एव सिद्धम्। अत एव ज्योतिर्व्याकरणादौ पौरुषेयत्वप्रसिद्धिरञ्जसा घटते। नच ज्योतिषो ब्रह्ममुखनिस्सृतत्वाद्वेदता; ब्रह्ममुखनिस्सृतत्वस्य वेदताप्रयोजकत्वे तत्कृतविष्णुस्तुत्यादेरपि तत्त्वापातात्। "वेदसम ब्रह्मविनिस्सृतम्" इति तस्य वेदतुल्यत्वादिस्मरणाच्च न वेदतेति संक्षेपः। तस्माज्ज्योतिराद्यङ्गानि श्रुतिबहिर्भूतानि तपोमहिमादिना श्रुत्यर्थविद्भिराधुनिकानां श्रुत्यर्थनिर्णयोपयोगितया महर्षिभिः प्रणीतानीति सिद्धम्। तथा च श्रुतिमानातिरिक्तमानाबाध्यत्वं हेतुश्चन्द्रप्रादेशिकत्वादौ न व्यभिचारीति स एव लौकिकमिथ्याबुध्द्यगोचरत्वादित्यनेनोक्त इति रमणीयम्॥

वस्तुतस्तु चन्द्रमण्डलमितोऽधिकपरिमाणवत्, दूरे प्रतीयमानपरिमाणत्वात्, गिरिशिखरवर्तिगजादिवत्। आकाशं नीलरूपशून्यम्; सन्निहितदेशे तथानुपलभ्यमानत्वादिति श्रुतिनिरपेक्षमानेनापि चन्द्रप्रादेशिकत्वबाधान्न तत्र व्यभिचारशङ्का। प्रपञ्चमिथ्यात्वानुमानस्य तु विपक्ष बाधकतयापि श्रुत्युपजीवनान्न तन्निरपेक्षत्वम्। तथा च श्रुतितदुपजीविमानातिरिक्तमानाबाध्यत्वं विवक्षितो हेतुरिति तत्त्वम्॥

## दीपनम्

कारवृत्त्युपहितसाक्षिणैव भास्यत इति वक्ष्यते । एवं [1] च ज्ञातगोचरवृत्त्यनुपहितत्वे सति वृत्त्युपहितं यद्विशेषचैतन्यं तन्मात्रविषयत्वं विवक्षितम् । अस्मिन्मते स्वप्नेऽपि स्मृत्यनुरोधेनान्तःकरणवृत्तिरस्तीति नाव्याप्तिः । अविद्यादिकं च वृत्तिं विनापि साक्षिणा भास्यत इति भवति तद्व्यवच्छेद इति । एवं चार्थादेतदन्याध्यासत्वं व्यावहारिकाध्यासलक्षणं बोध्यम् ॥

---

## पूरणी

**अस्मिन्मत इति** । अपिर्भिन्नक्रमः । अस्मिन्पक्षेऽपि । एवं विवक्षायामपि स्वापे नाव्याप्तिः । **स्मृत्यनुरोधेन** तदाकारवृत्तेरभ्युपगमेन विवक्षितार्थसत्त्वादित्यर्थः । यद्वा शुक्तिरजतस्वप्नादिप्रातीतिकविषये नाविद्यावृत्तिरस्माभिरभ्युपगता । तत्तद्विषयनाशे विषयावच्छिन्नसाक्षिनाशादेव तद्गोचरसंस्कारोपपत्तौ तत्कल्पनायां मानाभावात् । तदनभ्युपगमश्चाज्ञानादेः प्रातीतिकत्वपक्षे । तदा स्वप्ने वृत्तिविरहेऽपि पूर्वोक्तलक्षणस्य तत्र संभवात् । अज्ञानादेर्व्यावहारिकत्वे तूक्तवृत्तिघटितलक्षणं स्वप्ने वृत्तिं विना न संभवतीति तत्प्रातीतिकत्वाय तत्र वृत्तेरभ्युपगमान्नाव्याप्तिरित्यर्थः । **अन्तःकरणवृत्तिरिति** । यद्यप्यन्तःकरणवृत्तेः प्रमाणत्वनियमान्न प्रातीतिकस्वप्नगजाद्याकारता, तथापि निद्रादिदोषप्राबल्यात्तत्संभवमभिप्रेत्योक्तम् । अत एव विवरणटिप्पण्या "उत्प्रेक्षामूलं त्वविद्यावृत्तिर्मनोवृत्तिर्वा ज्ञानाभास" इत्युक्तम् । यद्वा अन्तःकरणस्य प्रमातुर्वृत्तिरविद्यावृत्तिरित्यर्थः । अतो न स्पष्ट किंचिदिति ध्येयम् । **एतदन्येति** । वस्तुतस्त्वविद्यातिरिक्तदोषजन्यत्वं प्रातीतिकत्वम् । नच जन्यतावच्छेदकापरिचये तस्य दुर्ग्रहता, प्रतीतिकजाग्रद्रजतत्वादेरेव सादृश्यादिदोषजन्यतावच्छेदकत्वात् । क्वचित्कश्चि-

---

[1] चाज्ञात--च.

**अवभास्यत इत्यवभासः । स्वाधिकरणतायोग्याधिकरणत्वमिति**

---

**दीपनम्**

असंभववारणायाह —**अवभास्यत इति ।** यदि परत्रेत्यत्र स्वस्माद-न्यस्मिन्नित्यर्थो [1]विवक्षितस्तदा न तद्व्यावर्त्यं पश्यामः । स्ववृत्ति-पदार्थस्याभावात् । नापि स्वाधिकरणादन्यस्मिन्नित्यर्थः ; यत्र प्रतीयते तस्यैव स्वाधिकरणत्वेनासंभवः अन्यथाख्यातिर्वा स्यात्, अतस्तद्व्याचष्टे—**स्वाधिकरणतेति ।** यदधिकरणत्वं हि यस्याबाधितं

---

**पूरणी**

द्दोष इत्यभ्युपगमात् । नच प्रातीतिकत्वानिरुक्तिः ; प्रतीतिनियतसत्ता-कत्वस्य तत्त्वात् । नच तदेव लक्षणमास्तामिति वाच्यम् ; तस्य लक्ष्यतावच्छेदकत्वात् व्यावहारिकसुखाद्यतिव्याप्तेश्च । न चोक्तलक्षण-स्याज्ञानादावव्याप्तिः ; तस्योक्तरीत्या व्यावहारिकत्वात् । न चैवमपि रजताद्यविद्यावृत्तौ तद्दोषजन्यायामतिव्याप्तिः ; ज्ञानपदवाच्यत्वेन विशे-षणादिति दिक् । अविद्यातिरिक्तदोषाजन्यजडत्वं व्यावहारिकत्वम् । वियदादिप्रपञ्चे अविद्याया एवानुगततया दोषत्वात् । अविद्यायाश्च ब्रह्मस्वरूपाच्छादकतया विपरीतकार्यजनकतया च दोषत्वात् । काचादेर-प्युक्तरूपेणैव दोषत्वात् । जडत्वाविशेषणान्न ब्रह्मण्यतिप्रसङ्ग इति सारम् ॥

अयमत्र निगर्वः—पारमार्थिकसत्त्व व्यावहारिकसत्त्वं प्रातीति-कसत्त्वं चेति सत्तात्रयम् । यद्यप्यधिष्ठानात्मकसत्तयैव निखिलव्यवहारो-पपत्तौ सत्तात्रैविध्ये मानाभावः, तथापि प्रतीतिका[2]वच्छिन्नसत्त्वं प्रतीति-कत्वम् । एवं व्यावहारिकसत्त्वमपि । तथा चौपाधिकसत्ताद्वयं पारमा-र्थिक[3]सत्ता त्वपरेति मिलित्वा सत्तात्रयमिति मन्तव्यम् ॥

**असंभवेति ।** अर्थाध्यासस्य लक्ष्यस्यावभासनानात्मकत्वादिति भावः । स्वानधिकरणत्वे दोषमाह—**अन्यथेति ।**

---

[1] वक्तव्यस्तदा—**ख**. [2] च्छिन्नत्वं—**ग**. [3] सत्तातः परमिति—**ग**.

**यावत्। तदत्यन्ताभाववत्त्वेन तद्वत्त्वेन वा तदाश्रयस्य तदधिकरणतायोग्यत्वम्। नच विरोधादसंभव इति वक्ष्यते। एतदभिप्रेत्य भगवता भाष्यकारेणोक्तम् "स्मृतिरूपः परत्र पूर्वदृष्टावभास" इति ॥**

## दीपनम्

तत्तद्योग्यम्, यथा घटाधिकरणत्व भूतलस्य। यत्र तु यद्बाध्यते तत्तदयोग्यमेव, योग्यत्वे बाधानुपपत्तेः। अतः सत्याधिकरणव्यावृत्त्यर्थं परत्रेति पदं नैतद्विवक्षितमिति। एवं च स्वाधिकरणताऽयोग्याधिकरणत्वे सति प्रतीयमानत्वमध्यस्तत्वम्। अन्यथा मिथ्यात्वादभेदप्रसङ्गः। प्रपञ्चस्याप्ययोग्याधिकरणत्वं वक्ष्यमाणरीत्या संभवतीति [1]नाव्याप्तिरित्यर्थः। यो यस्यात्यन्ताभावः स तदधिकरणं न भवति, अत्यन्ताभावे प्रतियोगिवृत्तिताया निरसिष्यमाणत्वात्। एवं यो यदत्यन्ताभाववान् स तदधिकरणं न भवतीत्यधिष्ठानमेवारोपितस्यात्यन्ताभावोऽन्यो वेति प्रकारद्वयेन मतद्वयमुक्त—**तदत्यन्ताभवत्वेन तद्वत्त्वेन वेति ॥**

---

## पूरणी

**सत्याधिकरणेति।** यद्यप्यध्यासमात्रस्य लक्ष्यत्वेन न सत्याधिकरणं किंचिद्व्यावर्त्यमस्ति, ब्रह्मणो निरधिकरणत्वात्, तथापि ब्रह्माधिकरणपारमार्थिकप्रपञ्चात्यन्ताभावे प्रतीयमानसत्त्वमात्रमतिप्रसक्तमिति तद्व्यावर्तनाय पूर्वविशेषणम्। तदत्यन्ताभावस्य ब्रह्मस्वरूपत्वे तत्रैवातिप्रसङ्गवारणाय तद्विशेषणमिति भावः। यद्वा प्रतीयमानत्वमात्रस्य लक्षणत्वे भूतलादाववभासमानघटादेस्तत्राध्यस्तता स्यादिति सत्यत्वविरोध्यध्या-

---

[1] नातिव्या—**क.**

अत्र केचित्स्मृतिरूपपदेन पूर्वोक्तसम्प्रयोगादिकारणत्रितयजन्य[1]त्वस्य विवक्षितत्वात्कार्याध्यासस्य लक्षणमित्याहुः। तत्र लक्षणशब्दः स्वरूपपरः। सम्प्रयोगादिविशेषणत्रयस्योपयोगाभावात्। दोषजन्यत्वे सति संस्कारजन्यत्वं वा [2]लक्षणम्। दोषत्वेन कारणत्वं न विवक्षितमिति न व्यर्थविशेष्यत्वम्। अनुमितौ न लिङ्गं कारणमिति दोषलिङ्गकानुमितौ सिध्दान्ते नातिव्याप्तिः॥

सम्प्रयोगशब्देन च तज्जन्यमधिष्ठानसामान्यज्ञानं विवक्षितम्, [3]ततश्चाधिष्ठानसामान्यज्ञानजन्यत्वे सति दोष-

दीपनम्

**केचित्** तत्त्वदीपन[4]कृतः। **स्वरूपपरः** न तु व्यावर्तकोऽसाधारणधर्मः प्रसिद्धलक्षणमित्यर्थः। तत्र हेतुः—**सम्प्रयोगेति**। **न व्यर्थेति**। अन्यथा सादृश्यप्रत्यक्षेऽतिव्याप्तेरित्यर्थः॥

न चैवमपि सादृश्यप्रत्यभिज्ञानेऽतिव्याप्तिः; एकावच्छेदेनोभयजन्यत्वस्य विवक्षितत्वात्। नच संस्काररूपदोषध्वंसेऽतिव्याप्तिः; तत्र तस्य संस्कारत्वेनाजनकत्वात्, जन्यताद्वयाभावाच्चेति लक्षणान्तरं वक्तुं अहङ्काराध्यासादावव्याप्तिं परिहरन्नाह—**सम्प्रयोगेति**। भ्रम-

पूरणी

स्तत्त्वं न सिध्येदिति तदर्थं तद्विशेषणम्। ततश्च सत्याविकरणत्वशङ्काव्यावृत्त्यर्थमित्यर्थः। ननु प्रतीयमानत्वविशेषणं व्यर्थमित्यत आह—**अन्यथेति**।

**संस्कारत्वेनेति**। तत्र प्रतियोगित्वेन जनकतया संस्कारत्वेनाजनकत्वादित्यर्थः। ननु संस्कारध्वंसं प्रति संस्कारत्वेन जनकत्वमस्त्वित्यत आह—**जन्यतेति**। एकत्रैकनिरूपितजन्यताद्वयं जन्यता-

[1] स्व विवक्षितत्वा—ख. ग. छ. [2] लक्षणमस्तु—ग. [3] तच्चाधिष्ठान—छ. [4] काराः—ख.

## दीपनम्

मात्रे सम्प्रयोगस्याननुगमादन्य[1]सन्निकर्षस्यान्यज्ञानाहेतुत्वाच्च सम्प्रयोगशब्देन तज्जन्यमधिष्ठानसामान्यज्ञानं विवक्षितम्। एवं च स्वप्न अहङ्काराध्यासे च स्वप्रकाशरूपतज्ज्ञानमस्त्येवेति नाव्याप्तिरित्यर्थः।

---

## पूरणी

वच्छेदकभेदं स्यात्. यथा परमते जन्यप्रत्यक्षे आत्ममनस्संयोगनिरूपितजन्यताद्वयं जन्यप्रत्यक्षत्वजन्यज्ञानत्वावच्छेदकभेदेन आत्ममनस्संयोगत्वेन्द्रियार्थसन्निकर्षत्वावच्छिन्नजन्यताभेदात्। न चात्र तथा जन्यतावच्छेदकान्तरमस्तीत्यर्थः। न च संस्कारध्वंसत्वं जन्यतावच्छेदकम्; ध्वंसमात्रं प्रति प्रतियोगित्वेन हेतुत्वे तत्तध्वंसं प्रति तत्तत्प्रतियोगित्वेन हेतुत्वमिति तत्प्रतियोगितावच्छिन्नजन्यतायामेव तस्यावच्छेदकत्वात्। संस्कारत्वरूपेणापि पृथग्धेतुत्वे मानाभावाच्चेति भावः। यद्वा दोषसंस्कारोभयनिरूपितजन्यताद्वयाधिकरणत्वं विवक्षितम्। दोषरूपसंस्कारध्वंसस्योभयनिरूपितजन्यताद्वयाभावान्नातिप्रसङ्ग इत्यर्थः। न चैवं भ्रमरूपस्मृतावव्याप्तिः, तत्र भ्रमानुभवजसंस्कारस्य दोषतया उभयनिरूपितजन्यताद्वयाभावादिति वाच्यम्; अर्थाध्यासस्यैव लक्ष्यत्वादिति। अधिष्ठानज्ञानविवक्षायां बीजान्तरं दर्शयति— **सम्प्रयोगस्येति**। सम्प्रयोगस्य संयुक्तसमवायादिरूपेणाननुगतत्वादित्यर्थः। असार्वत्रिकत्वादिति वा। ननु साक्षात्कारहेतुसन्निकर्षत्वेनानुगमः स्यादित्यस्वरसादाह—**अन्येति**। स्वसम्प्रयोगजन्यत्वस्याभावाच्छुक्त्यादिसन्निकर्षस्य रजतज्ञानहेतुत्वे मानाभावात्। धर्मिग्राहकमानेन सन्निकर्षस्य स्वसंबन्धिसाक्षात्कारमात्रहेतुतया सिद्धेरित्यर्थः। **तज्जन्यमिति**। अधिष्ठानज्ञानमात्रं लक्षणप्रविष्टं न तु

---

[1] सम्प्रयोगास्य—**च.**

**जन्यत्वं लक्षणान्तरम् । दोषादेरनन्यथासिद्धान्वयव्यतिरेकाभ्यां विनिगमकाभावेन चोभयत्रापि हेतुत्वमिति नासंभवः ॥**

## दीपनम्

साद्दश्यप्रत्यक्षे संस्कारा[1]दावतिव्याप्तिवारणायाधिष्ठानेत्यादिविशेषणद्वयम् । यत्तूक्तदोषादेर्ज्ञानं प्रत्येव हेतुत्वं नार्थं प्रतीति तत्राह—**दोषादेरिति** । दोषजन्य ज्ञानमङ्गीकृत्य विनिगमकाभावेनेत्युक्तम् । नन्वेवमावश्यकत्वाज्ज्ञानं प्रत्येव दोषस्य हेतुत्वं नार्थं प्रतीति चेन्न : निर्विषयापरोक्षज्ञानाभावात् । विषयस्य च तत्रान्यस्यासंभवात् दोष[2]जन्यस्यैव वक्तव्यत्वादिति दोष उभयत्रापि कारणमित्यर्थः । अत एवाननुभूतरजतस्य भ्रमासंभवात्संस्कारो भ्रम एव कारणमस्तु नार्थ इति निरस्तम् । संस्कारस्य भ्रमरूपाभिज्ञायामिवार्थं प्रत्यन्वयव्यतिरेकाभ्यां कारणत्वे बाधकाभावाच्चेति ॥

## पूरणी

सम्प्रयोगजन्यत्वम् ; प्रकाशात्मज्ञानस्य सम्प्रयोगाजन्यत्वेनाव्याप्तितादवस्थ्यात् । तज्जन्यत्वं तु सम्प्रयोगशब्देनाधिष्ठानज्ञानलक्षणायां संबन्धतयोपन्यस्तम् । संबन्धश्च शुक्तिरूपाधिष्ठानज्ञानैकदेशस्य वृत्तिरूपस्य तज्जन्यत्वे न सम्भवतीति ध्येयम् । **साद्दश्यप्रत्यक्ष इति** । तस्य साद्दश्यात्मकदोषजन्यत्वात् संस्कारस्याधिष्ठानवृत्त्यादिज्ञानजन्यत्वादित्यर्थः । **अङ्गीकृत्येति** । शुक्तिरजतादेः साक्षिमात्रभास्यतया वस्तुतस्ताद्दशाविद्यावृत्तिर्नास्तीति भावः । **अत एवेति** । निर्विषयभ्रमासंभवादेवेत्यर्थः । ननु संस्कारस्यार्थहेतुत्वं न क्वापि द्दष्टमित्यत आह—**संस्कारस्येति** । अभिज्ञायामपि तद्धेतुत्वमन्यत्राद्दष्टमिहैव कल्प्यम् । तदर्थेऽपि तुल्यमित्यर्थः ।

[1] दौ चाति—ख च. [2] जन्यस्वस्यैव—च.

**मिश्रास्तु स्मृतिरूपपदेनासन्निहितत्वं विवक्षित्वाऽसन्निहितत्वे सति परत्रावभासोऽध्यास इत्याहुः। असन्निहितत्वमपि वस्तुतोऽधिष्ठानेऽसत्त्वमिति नान्यथाख्यातिरिति तद्व्याख्यातारः। एतच्च परत्रेति पदसामर्थ्यादुक्तमिति न तद्वैयर्थ्यम्।**

---

दीपनम्

**असन्निहितत्वे सतीति।** पूर्वं माहिष्मत्यां यो दृष्टः पाटलीपुत्रे दृश्यते सोऽपि पूर्वानुभूतदेशात्परत्र प्रतीयत एवेति तत्रातिव्याप्तिपरिहाराय स्मृतिरूपपदेनासन्निहितत्वमुक्तमित्यर्थः। स्वाधिकरण एव स्मर्यमाणेऽतिव्याप्तिपरिहाराय परत्रेति। ननु यदि स्मृतिरूपपदस्यैव वस्तुतोऽधिष्ठानेऽसत्त्वमित्यर्थः कल्प्यते तर्हि स्वाधिष्ठाने वस्तुतोऽसतः प्रतीयमान[1]त्वमित्येतावतैवालम्, किं परत्रेति पदेन, तत्राह—**एतच्चेति।** लक्षणे ह्यसन्निहितत्वमिन्द्रियासान्निकृष्टत्वमेव। तद्व्याख्यातृभिस्तु तत्र विद्यमानस्य कथमिन्द्रियासान्निकृष्टत्वमिति परत्रेति पदसमभिव्याहारसिद्धं तत्स्वरूपं कीर्तितम्। [2] ततश्च प्रमाणाजन्यज्ञानविषयत्वे सति परत्राव-

---

पूरणी

**इन्द्रियेति।** वक्ष्यमाणार्थमिन्द्रियासन्निकृष्टार्थत्वमेव लक्षणे निवेशार्हमित्यर्थः। **तद्व्याख्येति।** यथाश्रुतानुपपत्तिमाशङ्क्योक्तविधान्तरं वर्णितमित्यर्थः। व्याख्यातृनिबद्धोक्तलक्षणापेक्षया मिश्रोक्तं लक्षणान्तरं संभवतीत्याह—**ततश्चेति।** मिश्रोक्तासन्निहितत्वमुक्तरूपमित्यर्थः। न च शुक्तिरजतादेरपि पूर्वानुभवदेशादन्यत्र प्रतीयमानत्वरूपपरत्रावभासशब्दार्थाभावेन नासंभव इति वाच्यम्; स्वप्रतीतिहेतुभूतानुभवदेशादन्यत्र प्रतीयमानत्वस्य विवक्षितत्वात्।

---

1 त्वमध्यस्तत्वमि—ख. 2 तच्च प्र—ख.

**नापि मिथ्यात्वस्यानिरुक्तिः; प्रतिपन्नोपाधा[1]वभावप्रतियोगित्वस्य तल्लक्षणत्वात् ॥**

**तच्चैकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभाव-**

---

## दीपनम्

भास इति लक्षणान्तरम्। तत्रादौ विवरणाचार्यसंमतं लक्षणमाह— **प्रतिपन्नेति**। प्रतिपन्नस्य रजतादेरुपाधिराश्रयोऽधिष्ठानमिति यावत् ॥

**तच्चेति**। संयोगादावतिव्याप्तिपरिहाराय एकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठत्वमभावविशेषणम्। समयभेदेन भूतलादिवृत्तितादृशात्यन्ताभावप्रतियोगिनि घटादावतिव्याप्ति[2]परिहाराय स्वसंसृज्यमानेति। यद्यपि घटादिकमपि लक्ष्यान्तर्गतमेव, तथापि प्रपञ्चमिथ्यात्वानुमानेन पराभिमतसत्यत्वविरोधी धर्म एव साध्यः, अन्यथार्थान्तरत्वप्रसङ्गादिति विशेषणद्वयमर्थवत्। संयोगस्य चाव्याप्यवृत्तित्वं पररीत्योक्तम्। सिद्धान्ते यावत्स्वाश्रयप्रदेश[3]व्यापित्वात्तदभावप्रदेशस्य

---

## पूरणी

शुक्तिरजतादेरपि भ्रान्तिहेत्वनुभवदेशादन्यत्र प्रतीयमानत्वात्। न चैवं पाटलीपुत्रे पुनरनुभवे माहिष्मत्यनुभवस्याहेतुतया तत एव तत्रातिप्रसङ्गाभावे असन्निहितत्वविशेषणवैयर्थ्यमिति वाच्यम्; सोऽयमिति प्रत्यभिज्ञारूपानुभवे पूर्वानुभवस्यापि हेतुत्वादिति भावः ॥

**यावत्स्वाश्रयेति**। मूलाग्रप्रदेशयोः संयोगतदभावाश्रयत्वम्। तयोश्च भिन्नत्वान्न संयोगस्य स्वाभावसमानाधिकरणत्वरूपमव्याप्यवृत्तित्वमित्यर्थः। ननु प्रदेशयोरन्यत्वेऽपि मूले वृक्षः कपिसंयोगवानग्रे नेत्येकत्रावयविनि संयोगतदभावयोरनुभूयमानतया अव्याप्यवृत्तिता

---

1 वत्यन्ताभाव—ग. 2 वारणाय—ख. च. 3 व्याप्यत्वात्—च.

**प्रतियोगित्वमिति केचित्। अस्ति हि शुक्तौ रजतप्रत्यक्षम्, तच्च नासद्विषयम्, देशान्तरीयरजतविषयं वेत्युक्तम्। ततश्च तत्रैव रजतमभ्युपगन्तव्यम्। [1]न ह्यत्र सत्, कालत्रयेऽपि इदं रजतं [2]न भवतीति प्रतीतेः। सा च प्रतीतिः रजत[3]प्रतीतिरिव न बाध्यत इत्यभावः परमार्थः। ततो न विरोधादसंभवः। समानसत्ता-**

---

दीपनम्

ततोऽन्यत्त्वात्, अवयविनोऽपृथक्त्वेऽपि तत्प्रदेशयोरौपाधिकभेदस्य सत्त्वात्। असंभवं परिहर्तुमाह—**अस्ति हीति**। प्रथमं पुरोदेशेऽन्यतरापलापायोगादुभयावश्यकतामाह—**तच्चेति। सत्** बाधायोग्यम्, तथात्वे त्रैकालिकनिषेधप्रमा न स्यादित्यर्थः। तत्प्रमात्वमेव साधयति—**सा चेति। समानेति**। व्यावहारिकसत्ताकयोर्हि घटतदभावयोर्भूतलादौ विरोधो दृश्यते। यद्यपि तत्र भावत्वाभावत्वप्रयुक्त एव विरोध इति वक्तुं शक्यते, तथापि प्रकृतेऽनन्यथासिद्धसमानकालीनरजततदभावप्रत्यक्षप्रमाभ्यां तयोर्विरोधो नेति समानसत्ताकयोरेव विरोधो वाच्यः। परस्याप्यसत्संसर्गविषयं भ्रममिच्छतः सतैव प्रतियोगिसंसर्गेणाभावो विरुद्ध्यत इति नास्माकमेव गौरवमिति। अन्यथाधिकरणे प्रतियोगिसंसर्गमात्रस्य तदभावविरोधितया शुक्त्यादौ रजताद्यभावो न

पूरणी

स्यादित्यत्राह—**अवयविन इति। अपृथक्त्व इति**। अवयवावच्छेदेन संयोगाद्याश्रयत्वानुभवेऽपि मूलाग्रप्रदेशावच्छिन्नवृक्षयोः काल्पनिकभेदसत्त्वान्नैकत्र प्रतियोगितदभावयोर्वृत्तिरित्यर्थः। घटवत्यपि समयभेदेन तन्निषेधप्रतीतिरस्तीत्यत उक्तं—**त्रैकालिकेति**। भावाभावत्वमात्रं परमतेऽपि न विरोधप्रयोजकमित्याह—**अन्यथेति**। शुक्तिकारजत-

1 नापि तत्र–ग.छ. 2 नेति प्रतीतेः–छ 3 प्रतीतिवन्न–ख.

**कयोरेव भावाभावयोर्विरोधात्। अयं चाभावोऽधिष्ठान एव वर्तते। अन्यत्र वर्तमानस्तु प्रतियोगिसमानसत्ताकोऽन्य एव,**

दीपनम्

स्या[1]दिति भावः। नन्वसमानसत्ताकरजताभावस्यापि घटाद्यधिकरणे अस्त्येव रजतादिना सह विरोधानुभव इति तत्राह—**अयं चेति।** कथं तर्ह्यन्यत्रानुभवस्तत्राह—**अन्यत्रेति।** घटादौ वर्तमानो हि शुक्तिरजतात्यन्ताभावो नियमेन प्रतियोग्यसमानाधिकरण एव प्रतीयते। शुक्तौ तु नैवम्। अतो विरुद्धधर्मवत्तया घटादौ वर्तमानो भिन्न एवेति भावः। **प्रतियोगिसमानसत्ताक इति।** नन्वेवं शुक्तिरजताभावस्य

पूरणी

ग्रहणं प्रकृतत्वाभिप्रायेण। संयोगेन घटवति भूतले समवायेन तदभावो न स्यादित्यर्थः। यद्वा आरोपाधिष्ठानशुक्तिकास्फटिकादावारोप्यरजत-लौहित्यादेः कथंचित्परम्परासंबन्धसत्त्वात्तत्र तदभावो न स्यात्। एकत्र प्रतियोगिसंसर्गतदभावयोर्विरोधादिति तत्र समानसंबन्धावच्छिन्नभावा-भावत्वेन विरोधस्तथात्रापि गुर्वपि प्रामाणिकतया समानसत्ताकभावा-भावत्वं विरोधप्रयोजकमिति भावः। ननु प्रतियोग्यैक्यात्कथं तदभाव-भेदः, तद्भेदस्य तद्धेतुत्वादित्यत्राह—**अतो विरुद्धेति।** एकघट-प्रतियोगिकध्वंसप्रागभाववद्विरुद्धधर्मवत्तया प्रतियोगिभेदं विनापि भेदो युक्तः। स्वरूपाभावभेद एव प्रतियोगिभेदस्य प्रयोजकत्वादिति भावः। ननु प्रतियोग्यैक्येऽप्युत्तरकालसंसर्गादिप्रतियोगितावच्छेदकभेदात्तद्भेदोपपत्ति-रिति चेत्, उत्तरकालसंसर्गादेरवच्छेदकत्वे तस्यायोग्यतया तदवच्छिन्न-प्रतियोगिकप्रागभावादेरयोग्यत्वप्रसङ्गात्। प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगियोग्यत्वस्याभावयोग्यतायां तन्त्रत्वात्। अन्यथा गुरुत्वावच्छि-

[1] दित्यर्थः—क.

## दीपनम्

प्रातीतिकत्वे शुक्तिरजतवदप्रतीतिसमये तत्र विरहः स्यादिति चेदोम्। न चैवं तदा तत्र रजतप्रसङ्गः; अधिष्ठानवृत्त्यारोपिताभावस्य परमार्थत्वेन रजतादन्यत्वात् रजतस्य तत्समानसत्ताकस्य तद्विरुद्धतया नियमेन ततो व्यधिकरणत्वात्। किं च विरुद्धोभयाधिकरणत्वयोग्ये ह्यन्यतराभावेऽन्यतरस्य नियमः, यथा भूतलादौ घटादेः। नच घटादौ शुक्तिरजताधिकरणत्वयोग्यतास्ति; तदुपादानाज्ञानाभावात्। तस्मादभावस्य स्वानधिकरणत्वेऽपि प्रतियोग्यनधिकरणत्ववद्घटादेरज्ञानदशायां रजताभावानधिकरणत्वेऽपि रजतानधिकरणत्वमुपपद्यत इति भावः॥

---

## पूरणी

न्नघटाभावस्यापि प्रत्यक्षत्वप्रसङ्गादिति दिक्। **अधिष्ठानेति**। घटादिनिष्ठस्य प्रातीतिकरजताभावप्रतियोगिकाभावस्य पारमार्थिकत्वेन रजतानात्मकतया तत्सत्त्वेऽपि न रजतापादनमित्यर्थः। इतोऽपि घटवृत्तिरजताभावविरहस्य न रजतात्मकतेत्याह—**रजतस्येति**। ननु प्रतियोग्यभावयोरन्यतरानधिकरणस्यान्यतराधिकरणत्वनियमाद्रजताभावानधिकरणत्वे घटादेः रजताधिकरणत्वं स्यादित्याशङ्क्य विरुद्धोभयाधिकरणत्वयोग्यत्वे सतीति नियमविशेषणान्नैवमित्याह—**किंच विरुद्धेति**। तद्विशेषणावश्यकतामाह—**तस्मादभावस्येति**। **अज्ञानदशायामिति**। रजताभावाप्रतीतिदशायामित्यर्थः। इदं चापाततः॥

परमार्थतस्तु—घटादिवृत्तिरजताभावो न प्रातीतिकः, शुक्तावारोप्यमाणरजतस्य घटादौ तदभावारोपमन्तरेणापि स्वतो विरहात्। नेदं रजताभाववदिति कदापि बाधविरहात्। न च चन्द्रप्रादेशिकत्वादिवदबाध्यत्वेऽपि प्रातीतिकत्वमिति वाच्यम्; तत्र दूरस्थत्वादि-

## दीपनम्

नचैवमधिकरणभेदेनाभावभेदेऽतिप्रसङ्ग इति वाच्यम् ; परैरपि प्रतियोगि-[1]समवायिवृत्त्यभावस्य तदन्यदेशीयाभावाद्भेदाभ्युपगमात्, प्रमाणस्योभयत्र

## पूरणी

दोषेण बाधसामग्रीविरहात् । सति योग्यत्वे प्रत्यक्षबाध्यत्वस्य प्रातीतिकत्व प्रयोजकत्वात्। अनेवंविधस्यापि तथात्वे घटादिप्रपञ्चस्यापि प्रातीतिकत्वप्रसङ्गात् । घटवति घटाभावारोपादौ प्रतियोगिमत्त्वज्ञानस्य प्रातीतिकाभावाध्यासहेतुत्वदर्शनेन रजतानाधिकरणघटादौ रजतत्वाज्ञानविरहेण तदभावारोपासंभवाच्च । किंचास्मन्मते अभावस्यानुपलब्धिगम्यत्वात्परोक्षस्थले चानिर्वचनीयोत्पत्तेरनभ्युपगमान्न घटादौ प्रातीतिकरजता[2]भावप्रसङ्गः। अन्यथा भ्रान्तिविषयेऽनिर्वचनीयवन्ह्याद्युत्पत्तिप्रसङ्गात्। तस्माद्भ्रान्तानुमितिवदन्यत्र विद्यमानपारमार्थिकरजताभाव एव घटादौ रजताभावप्रतीतिविषयः । यद्वा व्यावहारिकस्तद्वृत्तिरजताभावः, स्वोचितकार्यकरत्वात्, न च प्रातीतिकप्रतियोगिकस्य न व्यावहारिकत्वमिति वाच्यम् ; प्रातीतिकप्रतियोगिकस्य पारमार्थिकत्व वद्व्यावहारिकत्वस्याप्युपपत्तेः, घटवत्यारोप्यमाणप्रातीतिकघटाभावस्य व्यावहारिकघटप्रतियोगित्वदर्शनाच्च । न च प्रतियोगिभिन्नसत्ताकाभावस्य प्रतियोग्यविरोधितया रजतशून्यघटादेः रजताधिकरणत्वं स्यादिति वाच्यम् ; अविरोधमात्रस्य वस्तुप्रापकत्वे घटवद्भूतलादेः पटाद्यधिकरणत्वप्रसङ्गादिति संक्षेपः ॥

**अतिप्रसङ्ग इति** । अनन्ताभावकल्पनापत्तेरित्यर्थः । ननु तत्र घटे रूपं भविष्यति रूपं नष्टमिति प्रतियोगिसमवायिदेशे पूर्वोत्तरकालावधिकत्वेनाभावप्रतीतिः वायौ रूपं नास्तीति त्रैकालिकतयाभावप्रतीतिरिति वैलक्षण्यानुभवाद्भेदो युक्त इत्यत्राह—**प्रमाणस्येति** । इहापि

1 समवायदेशवृत्त-क. 2 संभव -ट.

**परैरपि स्वोपादानेऽन्यत्र वर्तमानाभावयोर्भेदाभ्युपगमात्। न च कल्पिताभावस्य कथं परमार्थत्वमिति वाच्यम्; प्रतियोगिनः कल्पितत्वाभावे तदधिकरणे तदभावस्य वस्तुत्वायोगात्। अतीताद्यसत्प्रतियोगिकस्येवास्यापि बाधाभावाच्च॥**

---

### दीपनम्

तुल्यत्वादित्याह—**परैरपीति** **कल्पितेति**। कल्पितप्रतियोगिकस्येत्यर्थः। **अस्यापीति**। रजतात्यन्ताभावस्य सत्यत्व इति शेषः॥

नन्वेवमपि तदधिकरणे वृत्त्यन्तरेण [1]तदभावादिदं लक्षणं न सत्यत्वविरुद्धमिति चेन्न तावदिदं रजतमिति प्रतीतिर्वृत्त्यन्तरेण

### पूरणी

शुक्तिघटादौ प्रतियोगिसामानाधिकरण्यवैयधिकरण्याभ्या तदभावानुभवेन वैलक्षण्यप्रतीतिरूपभेदप्रमाणस्योभयत्र तुल्यत्वादित्यर्थः। **अतीताद्यसदिति** मूलम्। अतीतत्वादिप्रतियोगिनोऽसत्त्वेऽपि तत्प्रतियोगिकाभावस्य पारमार्थिकत्ववत् कल्पितरजतप्रतियोगिकात्यन्ताभावस्यापि सत्यत्वे न किंचिद्बाधकमित्यर्थः। एतच्च तादृशात्यन्ताभावप्रतियोगित्वमसत्त्वमिति मतेन निदर्शनम्। अस्मन्मते तादृशात्यन्ताभावानभ्युपगमात्। न चातीतघटात्यन्ताभावो निदर्शनम्; घटादेरसत्त्वाभावात्। यद्वा असत्पदमविद्यमानार्थकम्। अतीतघटादेरविद्यमानत्वेऽपि इदानीं तत्प्रतियोगिकाभावस्य विद्यमानतावत्प्रतियोगिनः कल्पितत्वेऽपि तदभावस्य पारमार्थिकत्वं न विरुद्धमित्यर्थः॥

वस्तुतस्त्वसत्प्रतियोगिकाभाव इति व्यतिरेकदृष्टान्तः। असत्प्रतियोगिकाभावाभ्युपगमे असत्प्रतियोगिनस्तन्निषेधप्रमाविषयत्वेन प्रामाणिकत्वं असत्प्रतियोगिज्ञानासंभवात्तन्निषेधप्रमानुपपत्तिश्चेत्यादिबाधकवत्

[1] तदभावसंभवा—च.

## दीपनम्

तदभावं विषयीकरोति ; भ्रमविषयवृत्तिमुखेनैव तस्य बाधात् । नच भ्रान्तिकाले रजतं नेति प्रतीतिरस्ति, येन वृत्त्यन्तरेण तदभावं विषयीकुर्यात् । किंच घटवत्तया ज्ञायमाने भूतले घटो नेत्यप्रतीतेर्न वृत्त्यन्तरेण तदभावः संभवति । तत्रापि समवायसंबन्धेन घटो नेति प्रतीतिस्तु समवायस्य तदवच्छिन्नस्य वा अभावविषया न तु घटस्य। घटवति घटवैशिष्ट्यज्ञानस्यानारोपितत्वादपि न परस्य तत्र तदभाव-

## पूरणी

कल्पितप्रतियोगिकपारमार्थिकाभावे तद्विरहादित्यर्थ इति मन्तव्यम् । नच व्यावहारिकप्रमाणभूतप्रत्यक्षादिगम्याभावस्य कथं पारमार्थिकत्वमिति वाच्यम् ; प्रत्यक्षादिप्रमाणस्यापि श्रुतिवत्तदंशे तत्त्वावेदकत्वादिति दिक् ॥

**नच भ्रान्तीति** । प्रतियोगिधीसमये तत्र तदभावप्रतीतिर्वृत्त्यन्तरविषया, यथा घटवति तदभावप्रतीतिः समवायेन तदभावमवलम्बते, न चात्र तथेत्यर्थः । ननु बाधस्य वृत्त्यन्तरविषयत्वाभावेऽपि वृत्तिप्रयोजकान्यसंबन्धेन शुक्तिरजताभावस्य तत्र संभवादर्थान्तरता स्यादित्यस्वरसादाह—**किंचेति** । तादृशाभाव एव नास्तीति भावः । **तदवच्छिन्नस्य वेति** । संभवाभिप्रायेण । आकाशं नास्तीत्यादौ व्यधिकरणधर्मावच्छिन्नाभावापत्त्या समवायावच्छिन्नाकाशासंभवात्तत्प्रतीतेः समवायाभावविषयत्वस्यैव वाच्यत्वात् । न चाकाशसमवायरूपप्रतियोगिनोऽप्रसिद्ध्या कथं तन्निषेध इति वाच्यम् ; अकाशे भूतलादिसमवायस्य निषेधसंभवात् । घटादेस्तादृशाभावप्रतियोगित्वेऽर्थान्तरतापत्तेश्चेति ध्येयम् । परमते प्रतियोग्यारोपोऽभावप्रत्यक्षप्रमायां हेतुः । घटवति च तदारोपासंभवान्न तदभावप्रमासंभव इत्याह—**घटवतीति** ।

## दीपनम्

प्रमासंभवः। सामान्यविशिष्टबुद्ध्योर्यावद्विशेषबाधे [1] सत्येवानारोपितत्वात्। न च घटवति तत्समवायमात्रविषयविशिष्टज्ञानं भ्रमः; घटवदित्येकाकारज्ञानस्य नियामकाभावे कदाचित्समवायः कदाचित्संयोग इति नियन्तुमशक्यत्वात्। अन्यथा सर्वैव विशिष्टप्रमा भ्रान्तिरपि स्यात्। समवायसंबन्धेन घटवद्भूतलमिति धीस्तु [2]कल्पितापि समवायांश एवारोपः तदभावबुद्धावेव हेतुरिति॥

---

## पूरणी

ननु घटोऽस्तीति बुद्धेर्यत्किंचिद्घटवति घटान्तराभावादारोपता स्यादित्यत्राह—**सामान्येति। एकाकारेति।** प्रतीतिवैचित्र्यं विना विषयवैचित्र्यस्यासंभवादित्यर्थः। **अन्यथेति।** प्रतीतिवैचित्र्यं विनापि विषयवैचित्र्ये सर्वत्र विशिष्टप्रमायाः सबन्धान्तरविषयत्वसंभवेन सर्वप्रत्ययायाथार्थ्यं स्यादित्यर्थः। इदं चेत्थमपि वक्तुं शक्यत्वादुक्तम्॥

वस्तुतस्तु वृत्त्यन्तरेण तदभावस्याभ्युपगमेऽपि न क्षतिः, स्ववृत्तिप्रयोजकसंबन्धद्वारकत्वेनात्यन्ताभावविशेषणात्। नन्वेवमपि कालवृत्त्यत्यन्ताभावप्रतियोगित्वेनार्थान्तरम्। न च तदधिकरणवृत्तिप्रयोजकस्वरूपसंबन्धविशेषेण रजतात्यन्ताभावो न कालवृत्तिः, संयोगावच्छिन्नघटात्यन्ताभावस्यैव तद्वृत्तित्वात्, तावतैव सर्वाधारत्वोपपत्तेरिति वाच्यम्; इदानीं स्वरूपसंबन्धविशेषेण घटो नास्तीति प्रतीत्यनुसारेण तत्संबन्धविशेषद्वारकात्यन्ताभावस्यापि तत्रावश्यकत्वात्। किं च यत्किंचिदधिकरणे तादृशात्यन्ताभावसिद्धावप्युपादानवृत्तितदत्यन्ताभावप्रतियोगित्वालाभादर्थान्तरता, उपादानवृत्त्यत्यन्ताभावप्रतियोगित्वस्यैव सत्यत्वविरोधित्वात्। अन्यथा अधिकरणान्तरासतोऽप्यु-

---

[1] सत्येवारोपत्वात्—च. [2] तापि न सम—ख. च.

**अथ वा सत्त्वावच्छिन्न[1]प्रतियोगिताकस्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वम्। सत्त्वं चाधिष्ठानस्वरूपमेवाव-**

दीपनम्

ननु सप्रतियोगिकाभावस्य प्रतियोगिसमानसत्ताकत्वमेव वक्तुमुचितम्, प्रतियोगिसत्त्वमन्तरेण सप्रतियोगिकत्वस्याभावे असंभवात्, नच परमते शुक्ति[2]रजतसंसर्गस्यासत्त्वेऽपि तदभावस्य सत्त्वं दृष्टमिति वाच्यम्; तस्यासम्प्रतिपत्तेरित्यरुचेराह — **अथ वेति** । ननु मिथ्यारजतस्य कुतः सत्त्वं, तत्राह — **सत्त्वं चेति** ।

पूरणी

पादाने सत्त्वापातात्। न चाधिकरणपदमुपादानपरमेवेति वाच्यम्; व्यावहारिकात्यन्ताभावध्वंसादावंशतो बाधात् कपालवृत्तितत्प्रतियोगित्वेनार्थान्तरत्वापत्तेश्चैतन्यवृत्त्यभावप्रतियोगित्वस्यैवोद्देश्यत्वात्। तद्वृत्त्यभावस्यैव पारमार्थिकत्वात्। नच यावदुपादानपरं तत्पदम्; पारमार्थिकाभावस्य कपालाद्यवृत्तित्वेन बाधात्। नच कपालाद्यवच्छिन्नचैतन्यमेवोपादानं न कपालादिरिति वाच्यम्; "यथा सौम्यैकेन मृत्पिण्डेन" इत्यादिश्रुतौ मृदादेरप्युपादानत्वश्रवणात्, परिणामितया प्रत्यक्षेण तदनुभवाच्च। किं चैवमप्यविद्याया उपादानतया तद्दोषतादवस्थ्यमिति चेत्, अत्र ब्रूमः—अधिकरणपदेन स्वसत्ताव्यवहारप्रयोजकाधिकरणं विवक्षितम्। तच्च चैतन्यमेव, चैतन्यस्य तादात्म्येन प्रपञ्चसत्ताव्यवहारप्रयोजकत्वात्। तथा च स्वसत्ताव्यवहारप्रयोजकाधिकरणवृत्तिस्ववृत्त्यवच्छेदकदेशकालावच्छिन्नस्ववृत्तिप्रयोजकसंबन्धद्वारकात्यन्ताभावप्रतियोगित्वं लक्षणमिति न काप्यनुपपत्तिः॥

**सप्रतियोगिकेति**। सप्रतियोगिकत्वं प्रतियोगिनिरूप्यत्वम्। निरूपकस्य चासत्यत्वे तन्निरूपिताभावस्य सत्यता न संभवतीत्यर्थः। अत एव वक्ष्यति "निरूपकं चे"ति। **तस्येति**। शुक्त्यधिकरण-

[1] प्रतियोगिकस्वा—ग. [2] रजतत्वसं—च.

**च्छेदकं न तद्गतमिति न तत्प्रतियोगिना सामानाधिकरण्यानुपपत्तिः ॥**

---

## दीपनम्

अभावो हि संबन्धिनिरूपणाधीननिरूपणो निरूपकसमानसत्ताको वक्तव्य । निरूपकं च प्रतियोगितावच्छेदकमपीति तत्समानसत्ताक एवाभावः । अन्यथा रजताधिकरणे तत्कालीनतया प्रमीयमाणाभावस्य सत्यत्वासंभवात् । रजते च प्रतियोगितावच्छेदकमधिष्ठानचैतन्यात्मकं[1] सत्यत्वमेव । यद्यपि सत्त्वं स्वरूपेण रजतारजतसंबन्ध्यतिप्रसक्तं तथापि [2]तत्तदुपहितत्वेनानतिप्रसक्तमेवेति सत्त्वावच्छिन्नप्रतियोगिताको योऽत्यन्ताभावस्तेनैकस्मिन्काले समानाधिकरणत्वं मिथ्यात्वमित्यर्थः । एवं च सत्त्वावच्छिन्नत्वमप्यसंभववारकमिति न व्यर्थमिति द्रष्टव्यम् । ननु घटत्वादिः प्रतियोगिवृत्तिरेव धर्मः प्रतियोगितावच्छेदक इति कथं चैतन्यात्मकसत्त्वं तदवृत्ति तदवच्छेदकं स्यात्, तत्राह—**न तदिति**।

## पूरणी

रजतत्वाभावस्यैव परैरभ्युपगमादित्यर्थः । इतोऽपि निरूपकमात्रसमानसत्ताकत्वं वाच्यमित्याह—**अभावो हीति । निरूपकेति ।** प्रतियोगिसमानसत्ताकत्वापेक्षया सामान्यरूपत्वेन लघुत्वादिति भावः । **निरूपकं चेति** । तदवच्छिन्नप्रतियोगिनस्तत्संबन्धित्वादिति भावः । इतोऽपि निरूपकमात्रसमानसत्ताकत्वं वाच्यमित्याह-**अन्यथेति** । **एकस्मिन्काल इति** । कालान्तरीयतादृशात्यन्ताभावप्रतियोगित्वमादायार्थान्तरतावारणाय स्वकालीनेत्यपि विशेषणं देयमिति भावः । **असंभवेति** । यद्यपि वस्तुतोऽसंभवो नास्ति, तद्विशेषणाभावेऽपि

---

[1] सत्त्वमेव-च. [2] तदुपहित—च.

## दीपनम्

घटरूपं नास्तीत्यादिप्रतीतेर्घटोऽपि रूपे प्रतियोगितावच्छेदको वक्तव्यः। नच स तत्रास्ति। नच घटरूपत्वमेव प्रतियोगितावच्छेदकम्, तच्च तत्रास्तीति वाच्यम्; घटसंबन्धिरूपत्वमेव घटरूपत्वमिति घटोऽपि तत्रावच्छेदककोटौ प्रविशत्येव। तस्मादवच्छेदकस्यावच्छेद्यसंबन्ध एव वक्तव्यः, न तु तद्वृत्तित्वमिति चैतन्यमपि रजताधिष्ठानं तत्संबन्धीति भवत्यवच्छेदकमिति अवच्छेदकसमानसत्ताकरजताभावस्य सत्यत्वेन न मिथ्यारजतसामानाधिकरण्यानुपपत्तिः। तस्याधिष्ठानसत्तासंबन्धश्च [1]सदन्यत्वघटित इति नासंभव इति भावः।

---

## पूरणी

वस्तुतस्तादृशात्यन्ताभावमादाय लक्षणसंभवात्, तथाप्यसंभवशङ्कावारणाय तद्विशेषणमित्यर्थः। ननु रजताभाववतोऽधिष्ठानस्य कथं रजतसंबन्धितेत्यत्राह—**तस्येति**। अधिष्ठानसत्ता सद्रूपचैतन्यमेव। तत्संबन्धश्च सत्तानवच्छेदकभेदलक्षणतादात्म्यम्। तथा च परमार्थतस्तच्छून्यत्वेऽपि काल्पनिकतत्संबन्धो न विरुद्ध्यत इत्यर्थः। यद्वा ननु तत्संबन्धिरजतस्य शुक्तौ सत्त्वात्कथं तत्र तदवच्छिन्नाभाव इत्यत्राह—**तस्येति। सदन्यत्वेति**। तत्संबन्धस्य कल्पितत्वान्न तदवच्छिन्नपारमार्थिकनिषेधानुपपत्तिरित्यर्थः। वस्तुतस्तु पूर्वकल्प एव श्रेयान्। न च सन्निरूप्यत्वाभावे अभावस्य पारमार्थिकत्वानुपपत्तिः; परमतेऽविद्यमानप्रतियोगिकाभावस्य विद्यमानत्ववत्तदुपपत्तेः। निरूपकसत्त्वमात्रस्याप्रयोजकत्वेन सदधिकरणनिरूप्यत्वेनापि सत्यत्वोपपत्तेश्च। न च सदधिकरणनिरूप्यत्वेन सत्यत्वे प्रपञ्चमात्रस्य सत्यत्वापत्तिरिति

---

1 तदन्यत्व–ख.

## पूरणी

वाच्यम्; अतोऽपि त्वदुक्तनिरूपकमात्रस्य सत्त्वप्रयोजकत्वानुपपत्तेः। किं चानतिप्रसक्तरजतत्वादेरेवावच्छेदकत्वसंभवेन सत्यत्वस्य न तदवच्छेदककोटौ प्रवेशः। लघ्ववच्छेदेन प्रमाणवृत्तेरतिप्रसङ्गभिया सद्रजतत्वस्य रजतत्वावच्छिन्नसत्त्वस्य वावच्छेदकत्वे तस्य पारमार्थिकत्वेन तदवच्छिन्नाभावस्य तदधीनपारमार्थिकत्वानुपपत्तेश्च। अपि चाभावप्रतियोगितामात्रे न सत्त्वमवच्छेदकम्, व्यावहारिकाभावस्यापि सत्यत्वप्रसङ्गात्। किं तु पारमार्थिकाभावप्रतियोगितायाम्। तथाचाभावस्य पारमार्थिकत्वे तत्प्रतियोगितायां सत्त्वमवच्छेदकत्वं सत्त्वावच्छेदकत्वे च तदवच्छिन्नप्रतियोगिकत्वेन तस्य पारमार्थिकत्वमित्यन्योन्याश्रयः। तस्माद्यथा आधेयप्रपञ्चस्य कल्पितत्वेऽप्याधारब्रह्मणः पारमार्थिकत्वं तद्वत्प्रतियोगिनः कल्पितत्वेऽपि तदभावस्य पारमार्थिकत्वमुपपन्नम्। संबन्धिकल्पितत्वस्य संबन्धिपारमार्थिकत्वाविरोधित्वात्। यत्तु सत्त्वावच्छिन्नरजताभावः सत्त्वस्य प्रतियोगिताव्यधिकरणतया व्यधिकरणधर्मावच्छिन्नप्रतियोगिकः। नच तत्र प्रमाणाभावः; गवि शशशृङ्गं नास्तीति प्रतीतिबलेन तत्सिद्धेः। नच व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिसत्त्वाविरोधितया शुक्तिरजतादेः कल्पितत्वं न सिद्ध्येदिति वाच्यम्; अभावान्तरस्यातथात्वेऽपि सत्त्वावच्छिन्नप्रतियोगिकाभावस्य तत्सत्त्वविरोधित्वात्। अन्यथा प्रतियोगिसत्त्वे तत्र तदवच्छिन्ननिषेधानुपपत्तेरिति, तच्चिन्त्यम्; अवच्छेदकत्वं स्वरूपसंबन्धविशेषः। स च प्रतियोग्यवृत्तिधर्मस्य प्रतियोगिना समं न संभवतीति व्यधिकरणधर्मावच्छिन्ननिषेधस्यानुक्तिसंभवदुस्थत्वात्। अत एव गवि शशशृङ्गं नास्तीति प्रतीतिरपि शृङ्गे शशीयत्वाभावविषयिणीति संक्षेपः।

**नासंभव इति।** मिथ्यात्वस्येत्यर्थः॥

**अन्ये तु कल्पितप्रतियोगिकाविरहैकस्वभावाभावस्य न परमार्थत्वं वक्तुं शक्यम्। तद्विरहत्वस्य [1]वास्तवत्वायोगात्।**

---

## दीपनम्

सिद्धान्तरहस्यमाह—**अन्ये त्विति**। अधिष्ठानात्मकाभावं व्यावर्तयति—**विरहेति**। भावत्वानाधिकरणाभावस्येत्यर्थः। रजताधिकरणे[2] त्रैकालिकतया प्रमीयमाणे अभावे भावव्यावर्तकरजताभावत्वधर्मो वास्तवो न वा। नाद्यः; रजतस्य मिथ्यात्वे तत्संबन्ध्यभावत्वस्य सत्यत्वानुपपत्तेरित्याह—**तद्विरहत्वस्येति**। द्वितीयेऽपि किं व्यावहारिकं तद्विरहात्मकत्वं प्रतीतिकं वा उत [3]तद्विरहत्वमेव नेति वा। नाद्यः, प्रातीतिकरजतसंबन्धितद्विरहत्वस्य तदयोगात्। व्यावहारिकप्रपञ्चाधिकरणे तत्कालीनतया श्रुत्या प्रमीयमाणतदभावे तदयोगाच्च। न हि भावाभावयोः समानसत्ताकयोरेकत्र वृत्तिः संभवति। न द्वितीयः; शुक्त्यादौ रजतप्रतीतिकाले तदभावस्याप्रतीतेस्तदानीं तत्रासत्त्वापत्तेश्च। तृतीये च न भावत्वानधिकरणा-

---

## पूरणी

**नेतीति**। मिथ्याशब्दस्यापह्नवार्थेऽपि दर्शनादिति भावः। ननु प्रातीतिकसंबन्धिनः पारमार्थिकत्ववद्व्यावहारिकत्वमप्यस्तीत्यस्वरसादाह—**व्यावहारिकेति**। **न हीति**। यद्यपि तद्धर्मस्य व्यावहारिकत्वेऽपि अभावधर्मिणः पारमार्थि[4]कसत्ताकत्वान्न समानसत्ताकता, तथापि समानसत्ताकधर्मावच्छिन्नाभावेन भावस्य सहवृत्तिर्न संभवति, व्यावहारिकाभावे तथा विरोधावधारणादिति भावः। **शुक्त्यादाविति**।

---

[1] वास्तवस्यायोगात्—ग. [2] बाधेन त्रका—ख-च. [3] तद्विरहात्मत्वमेव—च.
[4] कत्वान्न—झ.

**तदभावे च तस्य तद्विरहात्मत्वं कल्पितमेवेति न विरहरूपाभाव-सिद्धिः। न हि निष्प्रतियोगिकोऽपि विरहरूपोऽभावोऽस्ति।**

## दीपनम्

भावसिद्धिरित्याह -**तदभाव इति**। यत्तु परमते अभावत्वमपि न प्रतियोगिघटितम्, किं तु संयोगत्वादिवदखण्डमिति तदपि प्रसङ्गात्प्रत्याह- **न हीति**। प्रतियोग्यघटितमभावत्वं नास्तीत्यर्थः। अखण्डत्वे गोत्वादिवत्प्रतियोगिना विनैव निरूप्येत। संयोगत्वादिकमप्यसंप्रति-

## पूरणी

प्रातीतिकस्य प्रतीतिनियतसत्ताकतया यावत्सत्त्वं प्रतीतिः स्यात्, अप्रतीतौ वा सत्त्वं न स्यादित्यर्थः। ततश्च सत्याभावधर्मस्य न प्रातीतिकत्वमिति भावः। नन्वयं नियमो नास्त्येव, समयान्तरे तादिदं रजतमिति प्रत्यभिज्ञानुरोधेन मध्येऽपि तत्सत्त्वात्। अन्यथा घटादेरपि स्थैर्यं न सिद्ध्येत्, तस्य तदेक[1]मानकत्वादिति चेन्न; तथापि दोषादिघटितरजतसामग्रीविरहे तथा प्रत्यभिज्ञानासिद्धेः। सामग्रीसत्त्वे च रजतान्तरोत्पादावश्यकत्वेन तस्यैव तज्जातीयतया तथानुभवविषयत्वात्। अन्यथा स्वप्नकल्पितगजादेर्जाग्रत्यपि कदाचिद्व्यवहारप्रसङ्गात्। घटादेस्तु पाकाद्यर्थक्रियाबलेन प्रतीतिविरहदशायामपि सत्त्वम्। अत एव प्रत्यभिज्ञा तज्जातीयविषयत्वेनान्यथा नेयेति दिक्। **अखण्डमिति**। प्रतियोग्यघटितमुपाधिरूपमभावत्वमित्यर्थः। जातित्वाभ्युपगमे समवेतं स्यादित्यग्रिमापादनविरोधादित्यवधेयम्। **संयोगत्वादिकमिति**। तदपि प्रतियोगिघटितोपाधिरूपमित्यर्थः। ननु समवेताखण्डधर्मत्वं निष्प्रतियोगिकत्वे तन्त्रमित्यभावत्वस्यासमवेतत्वान्नैवमित्याशङ्क्य तदपि स्यादित्याह-

[1] मानत्वा—क्ष.

**ब्रह्मातिरिक्तवस्त्वभ्युपगमेऽद्वैतश्रुतिविरोधाच्च । तस्माद्भूतलाद्घटाद्यभाववदधिष्ठाने आरोपिताभावो न ततोऽतिरिच्यते । किं तु सर्वाधिष्ठाननिराश्रयचैतन्यमेव, अधिकरणभिन्नसत्ताकप्रतियोगिकाभावस्यैवाधिकरणाद्भेदात् । न च लाघवात्प्रतियोगिभेद[1]मात्रमभावस्याधिकरणभेदे प्रयोजकमिति वाच्यम्;**

## दीपनम्

पन्नमेव । किं च गोत्वादिसाधारणाखण्डधर्मवदभावत्वमपि समवेतं किं न स्यादिति तस्य ततोऽविशेषप्रसङ्गः तस्य प्रमेयत्वादिसाधारण्यं च स्यादिति भावः । **अद्वैतश्रुतिः** एकमेवाद्वितीयमित्यादिश्रुतिः । न च तद्वाक्यं भावद्वैतनिषेधपरमिति वाच्यम्; सङ्कोचे मानाभावात् । दृश्यत्वादिहेतोस्तत्रैव व्यभिचारान्न ततः प्रपञ्चमिथ्यात्वसिद्धिः । अदृश्यत्वे च प्रमाणाभावान्न तत्स्वरूपसिद्धिरिति । तस्मात्कल्पितप्रतियोगिकाभावस्य तदधिष्ठानात्पृथग्दुर्निरूपत्वात्तदेव स इत्याह—**तस्मादिति ।** नन्वेवमभावमात्रमपलप्यते चेदनुपलब्धिप्रमाणाभ्युपगमविरोधः स्यात् । नेत्याह—**भूतलादिति** । भूतले घटो नास्तीत्याधाराधेयतया प्रमीयमाणाभावस्यासति बाधके त्यागायोगादिति भूतलादेर्घटाद्यभावोऽतिरिच्यत इति न कोऽपि विरोध इत्यर्थः । ननु क्वचिदधिकरणादभावो भिद्यते, क्वचिन्नेत्यत्र किं नियामकं, तत्राह—**अधिकरणेति ।** शुक्तौ

## पूरणी

**किं चेति** । गोत्वादिरूपेत्यर्थः । ननु प्रमेयत्वादिवदखण्डत्वेऽप्यसमवेतत्वं स्यादित्यत्राह—**तस्येति** । अखण्डस्य क्वचिदसमवेतत्वे प्रमेयत्ववत्सकलवस्तुनिष्ठता स्यादित्यर्थः । **न तत्स्वरूपेति** । इदं चोपलक्षणम् । तस्य चैतन्याविषयत्वे ब्रह्मणः सार्वज्ञ्यहानिश्चेति द्रष्टव्य-

[1] मात्रमधिकरणादभावस्य भेद—ग.

रजताधिकरणे तत्कालीनतया प्रमीयमाणाभावस्याधिष्ठानाद्भेदानुपपत्त्या गुरुशरीरस्यापि भिन्नसत्ताक[1]त्वस्यैव प्रयोजकत्वात्। अत एव घटादौ शुक्तिरजताद्यभावोऽन्य एव। तथा च

## दीपनम्

हीदं रजतमिति सामानाधिकरण्यानुभवाद्रजतसत्ता शुक्तिसत्तातो न भिद्यत इत्यधिष्ठानसत्तैव तत्सत्ता। घटादेस्तु नैवं प्रतीतिरिति घटसत्ता भूतलसत्तातो भिद्यत इत्यधिकरणात्प्रतियोगिसत्त्वभेदोऽभावभेदे प्रयोजकः। तदभावे चाधिकरणमेवाभावः। नन्वेवं घटाद्धटस्य पृथक्सत्ताभावात् घटाधिकरणको घटाभावो न प्रतीयेतेति चेन्न; प्रमित्यभावस्येष्टत्वात्। विरुद्धयोः सामानाधिकरण्यवदाधाराधेयभावानुपपत्तेः, अभावे स्वाभावानधिकरणत्वस्य [2] क्लृप्तत्वाच्च। प्रतीते[3]र्घटत्वत्ववैशिष्ट्याभावविषयत्वेनाप्युपपत्तेरिति भावः। **अत एवेति।** तद्भिन्नसत्ताकप्रतियोगिकत्वादेवेत्यर्थः। तथा च शुक्तिरजतादेः शुक्त्यवच्छिन्नचैतन्यमभावः, प्रपञ्चस्यापि शुद्धचैतन्यमेव श्रुतिप्रतिपाद्याभाव इति स्थिते सत्याह—**तथा चेति।** स्वमनधिकरणं यस्येति भ्रमं [4]व्यावर्त-

## पूरणी

मित्यर्थः। नन्वभावस्याधिष्ठानात्मकत्वे रजताभावस्य शुक्त्यात्मकत्वमस्त्वित्याशङ्क्य—**निराश्रयेत्युक्तं** मूले। शुक्तेः साश्रयत्वेन चैतन्याध्यस्तत्वान्न पारमार्थिकाभावत्वम्। किं तु निराश्रयपारमार्थिकचैतन्यस्येत्यर्थः। वक्ष्यमाणमिथ्यात्वलक्षणोपयोगितया वाऽभावात्मकचैतन्यस्य निराश्रयत्वमुक्तमिति मन्तव्यम्। **रजतसत्तेति।** रजतस्वरूपसत्ता। कल्पितस्याधिष्ठानैकस्वरूपसत्ताकत्वात्। तेन चैतन्यसत्ताया भूतलघटादावैक्येऽपि न दोषः। विरोधस्याधाराधेयताविरोधित्वं दृष्टं चेत्याह—**अभाव इति।** घटाभावे तदभावात्मकघटस्यानुपलम्भादित्यर्थः। **घटत्वेति।** ननु

---

[1] कस्यैव–क. [2] नियमेन क्लृप्त–ख. च. [3] घटवैशि–क-च. [4] वारयन्नाह–ख.

**स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्। स्वस्यानधिकरणं घटादि तदनधिकरणं यस्य तत्प्रतियोगित्वम्।**

---

## दीपनम्

यत्राह—**स्वस्येति**। मिथ्यात्वमिति शेषः। स्वस्य मिथ्यात्व-

---

## पूरणी

घटवैशिष्ट्यस्य न घटभिन्नसत्ताकत्वम्, तद्व्यतिरेकेण पृथगन्यत्रानुपलम्भादिति चेन्न; सामानाधिकरण्येनाननुभूयमानत्वं भिन्नसत्ताकत्वे प्रयोजकम्, घटो वैशिष्ट्यमिति सामानाधिकरण्येनाननुभवात् वैशिष्ट्यं घटभिन्नसत्ताकमिति तद्वैशिष्ट्याभावस्य घटाद्भेदो युक्त इति भावः। ननु घटस्य स्वाभावानधिकरणत्वे स्वस्मिन् स्ववृत्तित्वप्रसङ्गः; अभावानधिकरणस्य प्रतियोग्यधिकरणत्वनियमादिति चेन्न; त्वन्मते घटाभावस्य स्वानधिकरणत्वेऽपि प्रतियोग्यनधिकरणत्वेनैतन्नियमाभावादिति दिक्॥

वस्तुतस्तु घटाभावस्य घटवृत्तित्वेऽपि न क्षतिः। न चाधिकरणभिन्नसत्ताकप्रतियोगित्वाभावेन तद्भेदानुपपत्तिः; अधिकरणभिन्नप्रतियोगिकाभावभेद एव तस्य प्रयोजकत्वात्। अधिकरणात्मकप्रतियोगिकाभावभेदस्य तु स्वेन रूपेणैव भेदः। न चैवमननुगमः; अनुगतासंभवे तदाश्रयणस्यापि युक्तत्वादिति सारम्॥

**तथा चेति**। एतच्चोपलक्षणम्। उपादानवृत्त्यन्योन्याभावध्वंसादिरप्युपादानमेव, तदभिन्नसत्ताकप्रतियोगित्वादिति मन्तव्यम्। वस्तुतस्तु पूर्वकल्पोऽपि श्रेयान्। न च तद्विरहात्मत्वधर्मे पारमार्थिकत्वादिविकल्पः; तस्य व्यावहारिकत्वात्। नच प्रातीतिकसंबन्धिनो न व्यावहारिकत्वमिति वाच्यम्; पारमार्थिकत्ववदुपपत्तेः। नच

दीपनम्

धर्मिणः शुक्तिरजतादेः । तथा चाभावस्य प्रतियोगिवैयधिकरण्यानिषेधे प्रतियोगिसमानाधिकरणत्वमवृत्तित्वं वा वाच्यम् । [1] न तदुभयमपि

पूरणी

स्वसमानसत्ताकधर्मावच्छिन्नाभावेन भावस्य सह वृत्तिविरोधः ; लाघवेन समानसत्ताकाभावधर्मिसहभावस्यैव लोके विरोधावधारणादिति भावः । नचैवं मुक्तौ तद्धर्मनिवृत्तौ तदभावस्तद्विरहरूपो न स्यादिति वाच्यम्; तद्धर्मावच्छिन्नाभावविरहस्य तदानीमिष्टत्वात् । तत्त्वेन सर्वव्यवहारस्यापि सर्वमुक्तावसम्प्रतिपत्तेः तदुपलक्षितत्वेन तद्व्यवहारोपपत्तेश्च । यद्वा अधिष्ठानात्मकाभाववत्ताद्विरहत्वं तत्स्वरूपं न तु तद्गतो धर्मः, येनोक्तविकल्पावकाशः । ततश्च तत्संबन्धिनः कल्पितत्वेऽपि अधिष्ठानाभाववत्तस्य पारमार्थिकत्वमुपपद्यत इति न किंचिदनुपपन्नम् । न वा तदतिरिक्ताभावाभ्युपगमेऽद्वैतश्रुतिविरोधः ; तस्य भावाद्वैतपरत्वात् । न च सङ्कोचे मानाभावः; "नेह नानास्ति किञ्चन" इत्यादिश्रुत्या ब्रह्माधिकरणकातिरिक्ताभावबोधनात्तद्विषयश्रुतिबलेन सामान्यश्रुतिसङ्कोचस्य युक्तत्वात् । न च दृश्यत्वहेतोस्तत्र व्यभिचारः; प्रपञ्चमिथ्यात्वसिद्धेः पूर्वं तादृशाभावानुपस्थित्या तत्र व्यभिचाराग्रहेण व्याप्तिग्रहाविरोधात् । न च कूटलिङ्गजन्यतया मिथ्यात्वानुमिते[2]रप्रमात्वापातः ; कूटलिङ्गजन्याया अपि वह्निमति पर्वतादौ वह्न्यनुमितेः प्रमाणत्वदर्शनेन तज्जन्यत्वस्य तत्राप्रयोजकत्वात् । व्यापकवति यत्किंचिद्व्याप्यज्ञानादिजन्यत्वस्य तत्र प्रयोजकत्वादिति सङ्क्षेपः ॥

**यस्येति भ्रममिति** । तथा च घटानधिकरणककपालाद्यनधिकरणघटात्यन्ताभावप्रतियोगित्वेन घटादावतिप्रसङ्गः स्यादिति भावः । नन्वेतावता सत्यत्वविरोधि मिथ्यात्वं कथं सिद्ध्येदित्यत्राह— **तथा चेति** । **प्रतियोगिसमानाधिकरणेति** । प्रतियोग्यनतिरिक्त-

---

[1] न तत्रोभय—**च**, न तूभय—**क**. [2] रप्रमाणत्वापातः—**ग्र**.

## दीपनम्

सत्यत्वपक्षे संभवति । न ह्येकावच्छेदेन प्रतियोगिदेशे तत्काले तत्समानसत्ताकोऽभावः संभवति, न वा विरहरूपोऽवृत्तिरभावः संभवति । तस्माद्भावरूपाभावमादायैवेदं लक्षणं पर्यवस्यति । न च सत्यस्य स्वोपादानाद्भिन्नसत्ताकस्य भावरूपोऽभावः संभवति, इतीदमेव मिथ्यात्वमित्यर्थः । अत्र च प्रतियोगिदेशानधिकरणस्य तदनधिकरण-देशस्य चाभावस्य प्रतियोगित्वेन[1] सिद्धसाध्यतानिवृत्तये नञ्द्वयम् । तद्वति वृत्त्यन्तरेण तदभावस्य प्राङ्निरस्तत्वात् कथमपि नार्थान्तरा-

## पूरणी

देशवृत्तित्वमित्यर्थः । संयोगाभावस्य प्रतियोगिसमानाधिकरणस्यापि तदनधिकरणगुणाद्यधिकरणत्वेन तत्सामानाधिकरण्यमात्रपर्यवसाना-संभवात् । **स्वोपादानादिति ।** सत्यत्वपक्षे अधिष्ठानाधेयस्वरूप-सत्तयोर्भेद इति स्वाधिकरणभिन्नसत्ताकप्रतियोगिकाभावस्य ततो भेद-नियमादित्यर्थः । **इदमेवेति** प्रपञ्चस्य ब्रह्मभिन्नसत्ताकत्वे तद्रूपाभावप्रति-योगित्वं न युक्तमिति तदभिन्नसत्ताकत्वसिद्ध्या मिथ्यात्वासिद्धिरित्यर्थः । **प्रतियोगिदेशेति ।** प्रथमनञभावे घटाधिकरणकपालानधिकरणघटा-त्यन्ताभावप्रतियोगित्वेन, द्वितीयनञभावे घटानधिकरणभूतलाद्यधि-करणात्यन्ताभावप्रतियोगित्वेन घटादावर्थान्तरनेत्यर्थः । **कथमपीति ।** वस्तुतो वृत्त्यन्तरेण तदभावाभ्युपगमेऽपि घटानधिकरणभूतलादावपि समवायावच्छिन्नघटाभाववृत्तेर्नार्थान्तरता, तदनभ्युपगमात्तच्छङ्कापि नास्तीत्यर्थः । यद्यपीदमधिकरणाभावत्ववादिगुरुमते अर्थान्तरतादुष्टम् , तथाप्युक्तानियमेन तत्पक्षस्यायुक्ततया प्रसाध्याङ्गत्वेनोपन्यस्तम् । न चैवमपि घटाद्यनधिकरणघटाभावाद्यनाधिकरणघटाभावप्रातियोगित्वेनार्था-न्तरता ; स्वानधिकरणभावानधिकरणकत्वस्य विवक्षितत्वादिति ॥

---

[1] परस्य सिद्ध—च.

**ब्रह्मरूपात्यन्ताभावश्च तथेति नासंभवः । सत्यज्ञानानन्दात्मन**

दीपनम्

**शङ्केति** भावः । ननु ब्रह्मणो भावरूपत्वाभ्युपगमे अभावत्वस्य दुर्निरूपत्वात् तुच्छस्वभावतापत्तिः सदात्मकभावरूपत्वानुपपत्तिश्चेत्यत आह—**सत्येति** । यथा प्रमाणसिद्धभावस्वभावस्यैव घटादेः घटाभावो नेति प्रमितिविषयत्वेन तदभावात्मकत्वमेवं [1] श्रुत्या सदाद्यात्मकब्रह्मण एव "प्रपञ्चोपशमम्" इत्यादि श्रुत्यादिसिद्धप्रपञ्चनिषेधात्मकत्वे न किंचिदनुपपन्नम् ॥

ननु भावस्याभावाभावात्मत्वमुपपन्नं, न तु भावाभावात्मत्वमिति **चेन्न** ; भावस्याभावात्मताऽविरोधे स्थिते प्रमाणबलाद्भावाभावात्मत्वस्याप्य-**विरोधात्** । अन्यथा ध्वंसरूपाभावप्रागभावस्य भावरूपत्वं न स्यात्, अन्यत्र प्रागभावस्य भावत्वादर्शनात् । ननु श्रुतिप्रतिपन्नप्रपञ्चाभावस्य [2] ब्रह्ममात्रत्वे न परपक्षाद्विशेषः, न वा श्रुतेः प्रपञ्चबाधकत्वम्, तस्यास्त-

पूरणी

ननु परमतवदभावस्य तुच्छत्वं नास्माभिरुपेयत इत्यपरितो-षादाह—**सदात्मेति** । प्रपञ्चोपशमामित्यादीत्यत्रादिपदेन "शिवमद्वैतं चतुर्थं मन्यन्त" इति श्रुतिशेषस्य "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिश्रुत्यन्तरस्य च सङ्ग्रहः । अन्यत्रादर्शनेन प्रमाणमूलस्याप्यर्थ-स्यानभ्युपगमे दण्डमाह—**अन्यथेति** । **न परपक्षादिति** । **ब्रह्म**-प्रपञ्चोभयस्वरूपस्य तैरभ्युपगमादित्यर्थः । ननु प्रपञ्चस्य सत्यत्वा-सत्यत्वाभ्यां विशेष इत्याशङ्क्य तदेव न सिद्ध्येदित्याह—**न वेति** **यथा घटेति** । घटान्योन्याभावस्य स्ववृत्त्यसंभवादन्योन्याभावत्वरूपेण स्वरूपमात्रविषयप्रतीतेरसङ्कीर्णतया यथा घटतदन्योन्याभावाभ्यां वस्तुव्यवस्थापकत्वमित्यर्थः । यद्वा—ननु ब्रह्मणस्तद्विरोधिरूपशून्यत्वे कथं

1 श्रुत्यादिसिद्ध सदा-च. 2 ब्रह्मभावमात्रे-च.

**एव ब्रह्मणः प्रपञ्चात्यन्ताभावत्वमिति न शून्यतापत्तिः। एतच्चान्यत्रोपपादितमिति नात्र प्रपञ्च्यते ॥**

---

## दीपनम्

द्विरोधिप्रमेयाभावादिति चेन्न; श्रुतिप्रतिपन्नब्रह्मस्वरूपस्यैव प्रपञ्चसत्ताविरोधित्वात्। यथा घटान्योन्याभावो घटो न भवतीति अभावे घटतादात्म्यनिषेधप्रमा अतिरिक्तान्योन्याभावमविषयीकुर्वाणापि अभावं घटादसङ्कीर्णमेव व्यवस्थापयति. एवं सत्यज्ञानानन्दात्मकं ब्रह्मैव प्रपञ्चात्यन्ताभावतया बोधयन्ती श्रुतिर्ब्रह्म निर्विशेषं व्यवस्थापयति, प्रमाणसिद्धतत्स्वरूपवैचित्र्यस्य दुरपह्नवत्वात्। अतिरिक्ताभावाभ्युपगमेऽपि प्रमाणसिद्धतत्स्वरूपस्यैव प्रपञ्चविरोधित्वात्। प्रमाणवत्त्वाद्भावात्मकाभावेऽपि तन्नानुपपन्नमित्येतत्सर्वमभिप्रेत्याह—**एतच्चेति** ॥

---

## पूरणी

तत्सत्ताविरोधित्वम्, घटवद्भूतलस्यापि घटसत्ताविरोधित्वापातादित्याशङ्क्याह—**यथा घटेति**। प्रमाणबलाद्विरोधिरूपशून्यस्यापि विरोधित्वं युक्तमिति भावः। **निर्विशेषमिति**। प्रपञ्चसत्ताविरोधितयेत्यर्थः। **ननु** भूतलादेर्विरोधिरूपवत्तया तत्सत्ताविरोधित्वम्, ब्रह्मणस्तु स्वरूपेणेति कथं वैचित्र्यमित्याह—**प्रमाणेति**। अत एव गुरुमते केवलभूतलादिस्वरूपस्यैव घटादिसत्ताविरोधित्वमिति भावः। **अतिरिक्तेति**। अत्यन्ताभावत्वेन न प्रतियोगिसत्ताविरोधिता, संयोगात्यन्ताभावस्यापि तथात्वप्रसङ्गात्, किं तु प्रमाणसिद्धपारमार्थिकत्वादिविरोधिरूपेणैवेत्यर्थः। नन्वन्यत्वादिधर्मयोगित्वेन न प्रपञ्चान्तःपातः, असदन्यत्वादिधर्मयुक्त-

**एतदेवानिर्वचनीयत्वम्। तदुक्तम्—" मिथ्याशब्दो द्व्यर्थोऽपह्नववचनोऽनिर्वचनीयतावचनश्चेति। अथ वा सदन्यत्वमनिर्वचनीयत्वम्। न चासत्यतिव्याप्तिः; अन्यत्वादिधर्मयोग्यासद्रूपाङ्गीकारे तस्य प्रपञ्चान्तःपातात् बाह्याभ्युपेतासतो निःस्वरूपत्वात्। किंचासन्नाम किंचिदस्ति चेदसत्त्वव्याघातः, नास्ति चेत्कुत्रातिव्याप्तिः। सच्च बाधायोग्यस्वरूपम्, न तु**

---

## दीपनम्

एतच्च पञ्चपादिकाचार्यसंमतमित्याह—**तदुक्तमिति। अन्यत्वादीति।** सत्प्रतियोगिकान्यत्वादीत्यर्थः। **निःस्वरूपत्वादिति।** अत एवान्यत्वादिधर्मरहितमित्यर्थः। सदन्यत्वस्य प्रपञ्चान्यवृत्तित्वे व्याघातमप्याह—**किंचेति।** ननु किमिदं सत्त्वम्, न तावदनिर्वचनीयान्यत्वम्; परस्पराश्रयात्, नापि सत्ताजातिविशिष्टत्वम्; निर्धर्मके ब्रह्मण्यतिव्याप्तेः सत्त्वविशिष्टप्रपञ्चेऽव्याप्तेश्च। अत एव न मिथ्यात्वाभावविशिष्टत्वमपि, तत्राह—**सच्चेति।** प्रतियोगितया बाधकप्रमाविष-

---

## पूरणी

ब्रह्मणस्तदनन्तर्भावादित्यत आह—**सत्प्रतियोगिकेति। सदन्यत्वस्येति।** धर्ममुखेनातिप्रसङ्गं निराकृत्य धर्मिमुखेन तं निरस्यतीत्यर्थः। **अव्याप्तेरिति।** सत्ताशून्यसामान्यादौ तल्लक्षणसंभवेऽपि द्रव्यादावव्याप्तिरित्यर्थः। **अत एवेति।** निर्धर्मके ब्रह्मण्यतिव्याप्तेरेवेत्यर्थः। यद्यपि निर्धर्मके ब्रह्मण्येतद्धर्मस्याप्यभावान्नातिप्रसङ्गः, तथाप्युक्तधर्मस्य सद्व्यवहारनिमित्तत्वे ब्रह्मणि सद्व्यवहारो न स्यादित्यत्र तात्पर्यम्। ननु बाधकप्रमाविषयान्यत्वं ब्रह्मण्यसंभवी, प्रपञ्चनिषेधप्रमाविषयत्वादित्यत्राह—**प्रतियोगित्वेति।** ननु निर्धर्मके तस्मिन्नन्योन्याभावधर्मोऽपि

**सत्त्वविशिष्टम्; सत्त्वस्यैवासत्त्वापातात्। न च सत्त्वेऽपि सत्त्वं वर्तते, सत्त्वान्तरे प्रमाणाभावात्। स्वस्य स्ववृत्तित्वायोगाच्च। अतो निर्धर्मके ब्रह्मणि नाति[1]व्याप्तिः, नच सत्त्वविशिष्टे प्रपञ्चेऽव्याप्तिर्वा। तत्तद्वादिनं प्रति प्रपञ्चस्य सत्त्वादिविरुद्धसाध्याभिप्रायेण सिद्धान्तग्रन्थे सदन्यत्वे सत्यसदन्यत्वे सत्युभयात्मकान्यत्वमित्युक्तम्। [2]तत्र चाहृदयवाचामहृदयमुत्तरमिति न्यायेनासदन्यत्वं प्रपञ्चस्योक्तं न तु तत्त्वाभिप्रायेण।**

## दीपनम्

यान्यत्सत्। अन्यत्वं च स्वरूपमेवेति नोक्तदोष इत्यर्थः। किं सत्त्वे सत्त्वान्तरमुत तदेव सत्त्वम्, नाद्यः; सत्सदिति [3]बुद्धेरेकाकारविषयत्वेन तद्भेदे प्रमाणाभावादित्याह—**सत्त्वान्तर** इति। न द्वितीयः; संबन्धाभावात्, इति। न चाभेदः संबन्ध इति वक्ष्यत इत्याह—**स्वस्येति**। अतो बाधयोग्यान्यदेव सदिति नोक्तदोष इत्याह—**अत इति**। ब्रह्मणि सतीति शेषः। **प्रपञ्च इति**। अनिर्वचनीय इति शेषः। **उक्तमित्यस्यानन्तरं न** त्वनिर्वचनीयपदार्थाभिप्रायेणेति द्रष्टव्यम्। **न तु तत्त्वेति**। प्रपञ्चे असदन्यत्वधर्मवैशिष्ट्याभिप्रायेण नोक्तम्।

## पूरणी

कथमित्यत आह—**स्वरूपमेवेति**। **न चाभेद इति**। विशिष्टधीहेतोरेव संबन्धत्वादभेदस्य चातथात्वादित्यर्थः। अत्र विवक्षिताभावप्रदर्शनायापेक्षितं पूरयति—**सतीति**। नन्वसदन्यत्वस्यानिर्वचनीयत्वशरीरप्रवेशेऽपि असत्प्रतियोगिविरहात्कथं तत्प्रतियोगिकान्यत्वोक्तिरित्यत्राह—**अहृदयेति** मूले। ननु प्रतियोगिसत्त्वमभावे न तन्त्रम्; नष्टघटप्रतियोगिकाभावस्यापि दर्शनात्, किं तु प्रतियोगिज्ञानम्, असद्गोचरमपि ज्ञानमस्तीति

1 व्याप्तिः सत्त्वविशिष्टे—छ. 2 तथा च—ग. 3 ति एकाकारबुद्धेरेकविषय—ख.

**असदा[1]कारज्ञानाभासस्य निर्विषयताया अन्यत्रोपपादितत्वात् । तस्मात्सिद्धमभ्या[2]सादिलक्षणम् ॥**

## दीपनम्

असतोऽभावेन तदन्यत्वस्याप्यसंभवादित्यर्थः । **असदाकारेति । ज्ञान-** स्यासता निःस्वरूपेण सह कस्यापि संबन्धस्यानिरूपणाद्विषयसंबन्धं विना सविषयत्वासंभवादसदाकारज्ञानं सविषयं न भवतीत्यर्थः । यत्तूपा- याभावादसद्ज्ञानमेव नोदेतीति, तन्न, असदिति शब्दः कस्यचि- द्वाचकः, पदत्वादित्यनुमानेन बाधानवतारदशायां प्रसिद्धपदार्थाति- रिक्तस्य कस्यचिदसत्पदवाच्यत्वभ्रमसंभवेन शब्दादेस्तदुपायत्वसंभवात् । अन्यथा असतो भाननिराकरणासंभवाच्चेति ॥

## पूरणी

तत्प्रतियोगिकाभावोऽपि स्यादित्याशङ्क्याह—**असदाकारेति** मूले । प्रतियोगिगोचरज्ञानमेव [3] नास्तीत्यर्थः । **कस्यापीति** । संवित्तादात्म्यस्य परमतसिद्धस्वरूपसंबन्धस्य वाऽभावादित्यर्थः । **सविषयमिति** । नच ज्ञानत्वस्य सविषयत्वव्याप्यत्वात्कथं निर्विषयज्ञानमिति वाच्यम् ; अतीतादिज्ञानस्यातीतताद्यविषयतायाः परैरभ्युपगन्तव्यत्वात् । तस्य- तदानीमविद्यमानतया विशिष्टधीनियामकविषयसत्तात्मकस्वरूपविशेषस्य तत्र विरहादिति भावः । **बाधेति** । असन्नाभिधेयमित्यप्रतिसन्धान- दशायामित्यर्थः । **प्रसिद्धेति** । घटादावसद्व्यवहारादर्शनेन तत्र तद्भ्रमा- योगात्तदतिरिक्ते तद्भ्रम इत्यर्थः । **शब्दादेरिति** । उक्तानुमानेनास- त्पदसङ्केतग्रहे सति तत्पदघटितवाक्यादसदर्थावगतेः । यद्यपि किंचिद्व- स्तुवाचकत्वरूपसाध्यानुमितेरप्रसिद्धवस्तुगोचरत्वेऽपि नासदालम्बनत्वम् , तथाप्यसत्पदवाच्यत्वस्यैव क्वाप्यसत्त्वेन तद्बोधसंभव इति द्रष्टव्यम् । **अन्यथेति** । सर्वथा तदप्रतीतावित्यर्थः ॥

---

[1] कारकज्ञाना—**ग.** [2] सादौ लक्षणम्—**क. ग.** [3] नास्तीति भावः—**ट.**

प्रमाणं च सदिदं रजतमिति तावत्प्रत्यक्ष[1]मनिर्वचनीयत्वे। तत्र न तावद्रजतस्वरूपमेव सत्; सच्छब्दस्य रजतपर्यायत्वेनाप्रसिद्धेः, प्रपञ्चमात्रानुगतसद्बुद्धेस्तद्विषयत्वानुपपत्तेश्च। नापि सत्ता तस्य धर्मः; चैतन्यातिरिक्तसत्तायां प्रमाणाभावात्, सत्ताजातेः सर्वत्राप्रसिद्धेश्च। बाधायोग्यत्वस्या-

## दीपनम्

प्रमाणं चेति। उच्यत इति शेषः। नन्विदं विरुद्धं, नेत्याह--तत्रेति। सच्छब्दस्येति। रजतस्वरूपमेव सद्बुद्धिविषय इति वदता रजतसच्छब्दयोरेकार्थत्वं वक्तव्यम्। तच्चानुपपन्नम्; सच्छब्दस्य रजतादिपदैः सह प्रयोगायोगात् सद्बुद्धे रजतादिबुद्ध्यवैलक्षण्यप्रसङ्गाच्चेत्यर्थः। प्रमाणाभावादिति। घटादौ सद्बुद्धेरधिष्ठानात्मकचैतन्यविषयत्वादित्यर्थः। धर्मोऽपि किं जातिः, बाधायोग्यत्वं वा। नोभयमपीति क्रमेणाह—सत्तेत्यादिना। सामान्यादावित्यर्थः। नच साक्षात्परम्परासंबन्धेन सत्ताजातिः सर्वत्र सद्बुद्धिविषय इति वाच्यम्; परम्परासंबन्धेन प्रत्यक्षविशिष्टबुद्धावतिप्रसङ्गात्। अनुगतैकाकारबुद्धे-

## पूरणी

विरुद्धमिति। सद्बुद्धेः सदन्य[2]विषयत्वाभावादित्यर्थः। स्वयं पर्यायत्वे दोषान्तरमाह—सच्छब्दस्येति। घटः कलश इतिवत्सद्रजतमिति सह प्रयोगो न स्यादित्यर्थः। यद्वा सह प्रयोगः पर्यायमध्ये परिगणनम्, तदभावादिति मूलोक्तस्यैव विवरणम्। अवैलक्षण्येति। तद्भिन्नाकारत्वं न स्यादित्यर्थः। अतिप्रसङ्गादिति। रजतत्वाश्रयसंयोगादिना पाषाणादौ रजतत्वविशिष्टप्रत्यक्षापत्तेरित्यर्थः। ननु विशिष्टधीनियामकत्वलक्षणं संबन्धत्वं विशिष्टज्ञानात्मकफलबलकल्प्यमिति नातिप्रसङ्ग इत्यपरितोषादाह—अनुगतेति। एकसंबन्धावच्छि-

---

[1] प्रत्यक्षमस्यानि—ख. ग. छ. [2] विषयकत्वा—ग्र.

**त्मनोऽन्यत्र प्रमाणाभावात्, प्रपञ्चे [1]तद्बुद्धेरन्यथाप्यु[2]पपत्तेः, शुक्तिरजतादेः प्रत्यक्षं बाध्यमानत्वाच्च। तस्मादधिष्ठानसद्व्यक्ति-तादात्म्यमेवेदं ज्ञानं विषयीकरोतीति सदन्यद्रजतं प्रत्यक्ष-विषयः॥**

---

## दीपनम्

रेकरूपसंबन्धविषयत्वस्य वक्तुमुचितत्वात्। अन्यथा प्रमाप्रमेयबुद्ध्यो-रिवाकारभेदप्रसङ्ग इति भावः। ननु यथाप्रमाणमात्मनोऽन्यस्यापि तदस्त्वि[3]त्यत आह—**प्रपञ्च इति**। अनन्यसिद्धो ह्यनुभवोऽर्थसाधकः, अयं चाधिष्ठानचैतन्यविषयत्वेन देहादावात्मबुद्धिरिवान्यथासिद्धः। न चाविनिगमः; लाघवात्सद्बुद्धेरेकविषयत्वे संभवत्यनेकविषयत्वकल्पना-योगात्, प्रपञ्चोत्पत्तेः प्रागपि "सदेव सोम्य" इत्यात्मनः सद्रूपत्वावधा-रणाच्चेति भावः। **प्रत्यक्षं** समक्षम्, इदानीमिति यावत्। **सदन्यदिति**। तादात्म्यस्य भिन्नत्वे सत्यभिन्नसत्ताकत्वरूपतया तद्भेद-घटितत्वादित्यर्थः॥

---

## पूरणी

न्नविषयत्वस्येत्यर्थः। साक्षात्परम्परासंबन्धभेदे प्रतीतिवैलक्षण्यं दृष्टमित्याह—**अन्यथेति**। प्रमात्वप्रकारस्यैकत्वेऽपि साक्षात्संबन्धेन स्वाश्रयविषयतालक्षणपरम्परासंबन्धेन च प्रमा प्रमेयमिति विलक्षणाकार-बुद्ध्योर्दर्शनादित्यर्थः। ननु सत्प्रपञ्चोपहितत्वेन ब्रह्मणि सद्बुद्धिरित्या-शङ्क्य निषेधति—**न चाविनिगम इति**। **अनेकेति**। तथा सति घटाद्यनेकविषयत्वकल्पना स्यादित्यर्थः। प्रत्यक्षपदस्य बाधकप्रमाण-परत्वे तृतीया स्यादित्याशङ्क्याह—**समक्षमिति**॥

---

1 सद्बुद्धे-**ग.** 2 पपत्तेश्च शुक्ति-**ख.** 3 इत्याह-**च.**

**अनुमानं च—विमतं सदन्यत्, बाध्यत्वात्, यन्नैवं तन्नैवं, यथात्मा। एवं मिथ्यात्वेऽपि प्रयोक्तव्यम्। यथा—अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिशुक्तिरजतं स्वसमानाधिकरणात्यन्ताभावप्रतियोगि, दृश्यत्वात्, संयोगवत्। घटादिकं च**

---

## दीपनम्

प्रथममतिरिक्तात्यन्ताभावघटितमिथ्यात्वलक्षणे अनुमानमाह—**अव्याप्येति।** विशिष्टसाध्यस्य कुत्राप्यप्रसिद्धेः पक्षधर्मताबलाद्विशिष्टसाध्यसिद्धिमभिप्रेत्य पक्षं विशिनष्टि—**अव्याप्येति।** अव्याप्यवृत्तिर्योऽत्यन्ताभावः तदप्रतियोगिशुक्तिरजतम्। शुक्तिरजते चेदमनुभवसिद्धमिति न पक्षविशेषणासिद्धिरित्यर्थः। **स्वसमानाधिकरणेति।** स्वसंसृज्यमानेत्यर्थः। एवं च सत्युक्तविशेषणवति रजते स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसिद्धौ एकावच्छेदेन स्वसंसृज्यमानाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं विशिष्टसाध्यं सिद्ध्यतीति

---

## पूरणी

**विमतमिति मूलम्।** नन्वत्र सदन्यत्वरूपसाध्याप्रसिद्धिः; न चासति तत्प्रसिद्धिरिति वाच्यम्; तस्य निःस्वरूपत्वप्रतिपादनात्, न च प्रत्यक्षेण सदन्यत्वं शुक्तिरजतादाविव सुप्रसिद्धमिति वाच्यम्; तथा सत्यनुमानवैयर्थ्यापातात, प्रत्यक्षविप्रतिपत्त्या तदनवताराच्चेति चेन्न; सत्त्वं किंचिन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम्, धर्मत्वात्, गोत्ववदित्यनुमानात्सत्त्वावच्छिन्नभेदसिद्धिः। न च धर्मत्वं प्रमेयत्वादौ व्यभिचारीति वाच्यम्; तस्यापि नानात्वेनसाध्यसत्त्वादिति दिक्। **रजते चेति।** भिन्नावच्छेदेन रजततदभावयोरनुपलम्भादित्यर्थः। सामयिकात्यन्ताभावप्रतियोगित्वेनार्थान्तरतावारणाय **स्वसंसृज्यमानेति।** अत्र त्रैकालिकनिषेधप्रमानुपपत्तिर्विपक्षे बाधिका। अत

पक्षतुल्यम्। एवं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिशुक्ति-रजतं, स्वानधिकरणमात्रावृत्त्यत्यन्ताभावप्रतियोगि, दृश्यत्वात्, संयोगवत्। अन्यथाख्यात्यादिनिराकरणेन शुक्तिरूप्यस्य साधितत्वान्नाश्रयासिद्धिः॥

---

## दीपनम्

भावः। दृश्यत्वात् चैतन्यविषयत्वात्। अतो न ब्रह्मणि व्यभिचार इति ब्रह्मरूपात्यन्ताभावघटितलक्षणे अनुमानमाह—एवमिति। पक्षविशेषणं च पूर्ववत्। स्वानधिकरणमात्रे यो न वर्ततेऽत्यन्ताभावः तत्प्रतियोगीत्यर्थः। अत्यन्ताभावस्य स्वानधिकरणमात्रावृत्तित्वं च स्वाधिकरणवृत्तित्वेन सर्वत्रावृत्तित्वेन वा। तत्र पक्षविशेषणात्प्रथमस्य बाधे द्वितीयं सिद्ध्यत्स्वाभिमतं साध्यमादाय सिद्ध्यतीति भावः।

---

## पूरणी

एव संयोगादौ नाव्याप्यवृत्तित्वमुपाधिः। उक्ततर्केण हेतोः साध्यव्याप्यत्वे निश्चिते साध्यव्याप्यहेत्वव्यापकतयोपाधेः साध्याव्यापकत्वादिति भावः। स्वाभिमतमिति। न चावृत्तिगगनादिरूपात्यन्ताभावप्रतियोगित्वेनार्थान्तरता; गगनादेर्घटात्यन्ताभावत्वेनाननुभवात्-घटादेर्गगनाभिन्नसत्ताकत्वेन तदधिकरणकघटाद्यभावस्य ततो [1]भेद-नियमेन गगनादेर्घटादिप्रपञ्चात्यन्ताभावत्वव्यतिरेकानिश्चयेन बाधाच्च तत्प्रतियोगित्वेनार्थान्तरताशङ्कानवकाशात्। यद्वा स्वभिन्नसत्ताकाधि-करणानात्मकत्वं साध्ये अभावविशेषणम्। अतः स्वैकसत्ताकभावरूपा

---

1 भेदभिन्नत्वे नियमेन-ट.

भ्रान्ति[1] ज्ञानत्वप्रसिध्द्यन्यथानुपपत्त्यापि[2] ज्ञेयस्य मिथ्यात्वम्। सत्त्वे बाधायोगादसत्त्वे, चापरोक्षत्वायोगाच्च सदन्यत्व-

दीपनम्

साध्ये मात्रपदं विना साध्याप्रसिद्धेर्न विवक्षितसाध्यसिद्धिरिति तदुपात्तम् ॥

**भ्रान्तीति** । अपरोक्षभ्रान्तीत्यर्थः । व्यधिकरणप्रकारकत्वादेः प्राङ्निरस्तत्वान्मिथ्यार्थविषयज्ञानस्यैव लोकप्रसिद्धापरोक्षभ्रान्तित्वमिति तेन विना तदनुपपन्नमिति ततस्तत्सिद्ध्यतीत्यर्थः । ख्यातिबाधान्यथानुपपत्तिमपि तत्र प्रमाणयति—**सत्त्व इति** । बाधायोग्यत्व इत्यर्थः ।

पूरणी

त्यन्ताभावप्रतियोगित्वमेव परिशेषात्सिद्ध्यतीत्यर्थः। **साध्याप्रसिद्धेरिति**। घटात्यन्ताभावादेः सर्वस्य स्वानधिकरणभूतलादिवृत्तितया तदवृत्त्यत्यन्ताभावप्रतियोगित्वस्य क्वाप्यसंभवात्। मात्रपददाने तु स्वाधिकरणेऽपि विद्यमानसंयोगात्यन्ताभावस्य स्वानधिकरणमात्रावृत्तितया तत्प्रतियोगित्व लक्षणसाध्यस्य संयोगादौ प्रसिद्धेरित्यर्थः ॥

ननु वह्न्यादिभ्रान्तानुमितौ तत्प्रसिद्धावपि न भ्रान्तिविषयवह्न्यादेर्मिथ्यात्वम्, देशान्तरस्थवह्न्यादेरेव तद्विषयत्वादित्याह—**अपरोक्षेति**। परोक्षस्थले च व्यधिकरणप्रकारकत्वेनानिर्वचनीयत्वेन वा तज्ज्ञानस्य तत्प्रसिद्धिरिति भावः। ननु परमतासिद्धसत्ताजातिविशिष्टत्वं न बाधाभावे प्रयोजकम्; तादृशस्यापि रजतादे रजतत्वादिजातिविशिष्टस्यैव बाधसंभवात्, नाप्यबाध्यत्वम्; आपाद्यापादकयोरभेदप्रसङ्गादित्यत आह—**बाधायोग्यत्व इति**। ननु बाधायोग्यस्यापि रजतादेरधिकरणान्तर बाधोऽ-

[1] ज्ञानप्रसि—छ.　　[2] तस्य—क.

**मसदन्यत्वं च। न चैवं सदन्यत्वेऽपरोक्षत्वमसदन्यत्वे च बाधोऽसद्रूदात्मवच्च न स्यादिति वाच्यम्। तत्किं सत्त्वमपरोक्षत्वे**

दीपनम्

अधिष्ठान इति शेषः। सद्रूपस्यात्मनो बाधादर्शनाद्बाधायोग्यताया एव सत्त्वशब्दार्थत्वात् सत्त्वे बाधानुपपत्तिः। एतेन सत्त्वमबाध्यत्वमित्यापाद्यापादकयोरभेद इति निरस्तम्। तदयोग्यताया एव तत्पदार्थत्वात्। असतश्चेन्द्रियसन्निकर्षसंवित्तादात्म्ययोरयोगात्। रजतादेरसत्त्वे रजतं पश्यामीत्यनुभूयमानमपरोक्षत्वं न स्यात्। अत उभयविलक्षणं रजतादिकमित्यर्थः। अत्रान्यथैवोपपत्तिमाशङ्कयाह—**न चेति**। तथा च सदसदात्मकं तदिति भावः। लाघवाद्धि सत्त्वासत्त्वे बाधापरोक्षत्वाभावयोः प्रयोजके न त्वसदन्यत्वसदन्यत्वे, गौरवात्। ननु सिद्धान्तेऽपि बाधापरोक्षत्वयोः सदन्यत्वासदन्यत्वप्रयोज्यत्वे गौरवम्। नच विनिगमकाभावः; प्रतियोगिनो बाधापरोक्षत्वयोर्लाघवेन क्लृप्तप्रयोजकत्वानुरोधेन तदधीनग्रहणयोस्तद्व्यतिरेकयोर्गुरुप्रयोजकताया अपि न्याय्यत्वादिति चेन्न; लघुशरीरस्यान्यस्या[1]भावे तयोरेव तत्र प्रयोजकत्वादित्याह—**तत्किमिति**।

पूरणी

क्लृप्त इत्याशङ्कयाह—**अधिष्ठान इति शेष इति**। सत्त्वासत्त्वयोर्बाधापरोक्षत्वाभावप्रयोजकत्वं दर्शयति—**सद्रूपस्येति**। इतोऽपि सत्त्वं बाधविरहप्रयोजकमित्याह—**बाधायोग्येति**। रजतादेरपरोक्षत्वाभावे सम्प्रतिपत्तिं वारयति—**रजतं पश्यामीति**। **अत्र** ख्यातिबाधविषये। **अन्यथैवेदि**। सदसदात्मकत्वेनापीत्यर्थः। **सिद्धान्तेऽपीति**। भवन्मते अभावयोः प्रयोजकलाघवमस्मन्मते च प्रतियोगिनोर्बाधापरोक्षत्वयोः सदसत्त्वमात्रं प्रयोजकमिति लाघवं विपरीते गौरवं च समानमित्यर्थः। **प्रतियोगिनोरिति**। प्रतियोगिविषयलाघवं प्रथमोपस्थिततया देयमित्यर्थः। **लघुशरीरस्येति** मूले वक्ष्यमाणरीत्या लघुनोरपि सत्त्वासत्त्व-

[1] भावेन—च.

**प्रयोजकं, येन तदभावे तन्न स्यात्। [1] तथा सति नित्यातीन्द्रि [2] येष्वपि तत्प्रसङ्गः। न च सतो रूपादिमतोऽपरोक्षत्वम्। तद्ध्यावश्यकेन तेनैवालं किं सत्त्वेन। न चापरोक्षत्वे सत्त्वं व्यापकम्; व्याप्त्यसम्प्रतिपत्तेः। न चात्मनि व्याप्तिः, तत्र चैतन्यस्योपाधित्वात्; व्याप्तिग्राहकतर्काभावाच्च। एवमसत्त्वस्यापि बाधाप्रयोजकत्वान्न तद्व्यतिरेकेऽबाध्यत्वम्। अपरोक्षत्वा-**

## दीपनम्

उद्भूतरूपमेव द्रव्यप्रत्यक्षं प्रति समनियततया प्रयोजकमित्यर्थः। **चैतन्यस्येति**। आत्मनो हि स्वप्रकाशत्वात् सत्त्वम्। मिथ्यावस्तुनोऽस्वप्रकाशत्वादपरोक्षज्ञानविषयस्य प्रकाशे कल्पितत्वमन्तरेण तद्विषयत्वायोगान्न तस्य सत्त्वमित्यर्थः। **बाधेति**। न ह्यसतोऽत्यन्ताभावस्त-

## पूरणी

योर्न तत्प्रयोजकत्वमित्यर्थः। स्वप्रकाशात्मकचैतन्यस्य साध्यप्रयोजकत्वमाह—**आत्मनो हीति**। चैतन्योपाधेः साधनाव्यापकत्वं दर्शयति—**मिथ्येति**। नन्वपरोक्षत्वमेव सत्त्वसाध्यमस्त्वित्यत्राह—**अपरोक्षेति**। कल्पितत्वसाधारणमपरोक्षत्वं न तत्प्रयोजकमित्यर्थः। यद्वा—नन्वस्वप्रकाश[3]त्वेपि सत्त्वं किं न स्यादित्यत्राह—**अपरोक्षेति**। अस्वप्रकाशस्यापरोक्षचैतन्यतादात्म्येन तद्विषयत्वं वाच्यम्। तथा च कल्पितत्वमेव स्यादित्यर्थः। वस्तुतस्त्वपरोक्षचैतन्यविषयत्वादपि न प्रपञ्चस्य सत्यत्वमिति हेत्वन्तरं समुच्चिनोति—**अपरोक्षेति**। **चैतन्यस्योपाधित्वादिति मूले**। चेतनस्य भावश्चैतन्यं स्वप्रकाशत्वम्। तस्य सत्त्वप्रयोजकत्वादित्यर्थः॥

[1] तथा च—ग. छ. [2] ये च-क, येऽपि—ग. [3] त्वेनापि स—ट.

भावे त्वसत्त्वं रूपाद्यभावसम्पादकतया प्रयोजकमेव। बाह्येन तुच्छस्यापरोक्षत्वानङ्गीकाराच्च ॥

यत्तु यदसत्तन्नापरोक्षमिति व्याप्तिग्रह एव व्यभिचार इति, तन्न; देशकालादिसंबन्धशून्येऽसति व्याप्त्यसंभवेन निर्विषयासज्ज्ञानेऽपरोक्ष[1]विषयत्वनिषेधाभिप्रायत्वात्तस्य। यत्तु सदसत्त्वयोः परस्परं विरोधात्तदुभयनिषेध एकत्र न संभवति,

---

## दीपनम्

त्प्रतियोगित्वं च संभवति, न वा बाह्यैस्तुच्छस्य बाधोऽभ्युपेय इत्यर्थः। बाह्यमतरीत्यापि तस्य तत्प्रयोजकत्वं वक्तुं शक्यमित्याह—**बाह्येनेति** ॥

देशेति। व्याप्तिर्ह्येकस्मिन्देशे काले वोभयोः सामानाधिकरण्यविशेषः, न चासतोऽधिकरणे संबन्धविशेषोऽस्तीति न तन्निरूपिता

---

## पूरणी

**नवेति**। असत्प्रतियोगिकात्यन्ताभावस्वीकारेऽपि प्रतिपन्ननिषेधप्रत्ययात्मबाधोऽसतः परैर्नाभ्युपगन्तुं शक्यते। असतः प्रतीतिविषयत्वाभावात्। असत्प्रतियोगिकनिषेधप्रमाभ्युपगमेऽसतोऽपि प्रामाणिकतया सत्त्वापाताच्चेत्यर्थः। यद्वा नात्र निषेधप्रत्ययमात्रं बाधत्वेनाभिमतम्, तस्य सत्यत्वाविरोधित्वात्। किं तु स्वाधिकरणक निषेधप्रत्ययः। स चासति निरधिकरणे परैरपि नाभ्युपेयत इत्यर्थः। **तस्येति**। असतोऽपरोक्षत्वविरहप्रयोजकत्वमित्यर्थः। यद्यप्यसत्ख्यातिवादिनाऽसतोऽपरोक्षत्वमभ्युपेयते, [2]तथाप्यन्तः सद्ज्ञानाकाररजतादिर्बहिरवभासत इति साकारवादिना असतोऽपरोक्षत्वं नाभ्युपगतमिति

---

1 विषयकत्व–छ. 2 तथाप्यसज्ज्ञाना–ट.

**विरुद्धयोरिव तदुभयनिषेधस्याप्येकत्रासंभवादिति, तन्न;**

दीपनम्

व्याप्तिः संभवति। अतस्तज्ज्ञानं परेषामतीतादिज्ञानवन्निर्विषयमिति नासतोऽपरोक्षत्वसिद्धिरिति भावः। **असंभवादि**त्यसंभवहेतुं विरोधं प्रकटयतीति न साध्याविशेषः। यद्यपि सिद्धान्ते सदन्यत्वमात्रं प्रपञ्चेऽभ्युपेयते; तावन्मात्रस्यैवानिर्वचनीयशब्दार्थत्वात्, न त्वसदन्यत्वमपि; असत्तदन्यत्वयोरभावात्, तथाप्यभ्युपेत्येदं वर्णितरीत्या प्रमाणसिद्धेऽर्थे दृष्टान्तेन विरोधसमाधानम्। तत्रापि सदसद्वैलक्षण्यस्यावास्तवत्वेन विरोधे न काचित्क्षतिः। न ह्यद्वैतवादे सदसदन्यत्वं किंचित्तत्त्वतः प्रतिपाद्यमस्ति; सत्त्वासत्त्वदुर्निरूपत्वप्रकटनपरत्वात्तद्वाचः।

पूरणी

तद्रीत्येदं द्रष्टव्यम्। यद्वा अनावृतसंवित्तादात्म्यमर्थस्यापरोक्षत्वम्। तच्चासतो वाद्येन केनापि नाभ्युपेयत इति स्वासिद्धान्तरीत्येदमुक्तम्। ननु यदसज्ज्ञानं तन्नापरोक्षमिति व्याप्तिग्रहस्यापि अपरोक्षतया तद्विषयत्वेनापरोक्षत्वमसतोऽप्यस्तीत्यत आह—**अतस्तज्ज्ञानमिति**। असज्ज्ञान एवासन्न विषय इति तज्ज्ञानगोचरोक्तव्याप्तिग्रहे सुतरां तद्विषय इत्यर्थः। ननु घटाभावे घटतदभावाधिकरणत्वनिषेधः प्रमाणबलादस्तु, प्रकृते तु कथमित्यत आह—**वर्णितेति**। ख्यातिबाधान्यथानुपपत्तिप्रमाणमत्रापि तुल्यमित्यर्थः। **सत्त्वासत्त्वेति**। ननु सदसदन्यत्वं असदेवोच्यते काल्पनिकं वा। नाद्यः; सदसदात्मकत्वप्रसङ्गात्, असद्विषयकव्यवहारासंभवाच्च। न द्वितीयः; सदसदन्यत्वयोः प्रातीतिकत्वे व्यावहारिकत्वे वा समानसत्ताकत्वेन विरोधस्य वज्रलेपायितत्वादिति चेन्न; रजतत्वविरुद्धशुक्तीदंतादे रजतत्वसामानाधिकरण्यदर्शनेन यथाप्रतीति काल्पनिकविरुद्धवस्तुसमावेशस्याभ्युपगमान्मायिकत्वपक्षे न कश्चिद्विरोध इत्यत्र तात्पर्यादिति। अत एव सदसत्त्वयोः काल्पनिकसामानाधिकरण्य-

## दीपनम्

न चैवं सदसदन्यत्वयोरेव मिथ्याभूतं सामानाधिकरण्यमस्त्विति वाच्यम्; तथापि सत्त्वादिप्रयुक्तदोषानपायात्। किं च सामानाधिकरण्यस्य मिथ्यात्वं यद्यसत्त्वं, तर्हि नास्त्येव तत्। [1]यदि सद्विलक्षणत्वम्, तर्हि पारमार्थिकसामानाधिकरण्यमनुपपन्नमित्यभ्युपेतं त्वयाप्यनिर्वचनीयम्। रजतादेः [2]सत्त्वे उक्तदोषानापायात्। सद्विलक्षणत्वमेवाभ्यु-

---

## पूरणी

माशङ्क्य निषेधति—**न चैवमिति**। ननु सत्त्वादिसंबन्धस्य पारमार्थिकत्वे स दोषः, न काल्पनिकत्वेऽपीत्यस्वरसादाह—**किं चेति**। **त्वयापीति**। अपारमार्थिकस्य सामानाधिकरण्यस्य सदसद्विलक्षणत्वेनानिर्वचनीयत्वं त्वयापि स्वीकृतमित्यर्थः। न च सामानाधिकरण्यस्य मिथ्यात्वं सत्त्वासत्त्वसामानाधिकरण्यवत्त्वमेव, अतो न त्वदभिमतानिर्वचनीयत्वसिद्धिरिति वाच्यम्; तत्सामानाधिकरण्यस्य पारमार्थिकत्वे तस्यापि तत्त्वापत्त्या तस्यापि मिथ्यात्वं वाच्यम्। तन्मिथ्यात्वमपीदमेवेत्यनवस्था। नच सदन्यत्वस्यापि सदन्यत्वरूपानिर्वचनीयत्वस्यैव वाच्यत्वे तत्राप्यनवस्थेति वाच्यम्; सदन्यत्वेऽपि सदन्यत्वस्याभावाधिकरणकाभावान्तरासंभवेन तत्स्वरूपत्वात्। किं च सामानाधिकरण्यस्य सदसदात्मकत्वे सदंशमादाय रजतादिसत्त्वासत्त्वयोः पारमार्थिकत्वेन तत्प्रयुक्तौ युगपद्बाधाबाधौ स्याताम्, असदंशेन च तयोरसत्त्वे तत्प्रयुक्तबाधापरोक्षत्वे न स्यातामिति सद्विलक्षणमेव सामानाधिकरण्यं वाच्यमिति भावः। सामानाधिकरण्यमेव तथा स्वीक्रियताम्, किमिति रजतादेरनिर्वचनीयत्वाभ्युपगम इत्यत्राह—**रजतादेरिति**। नच

---

1 अथ-**च**. 2 सत्त्वं, ङ—**च**.

**घटाभावे घटतदभावाधिकरणत्वस्य, पटोत्पत्तेः पूर्वं तन्तुषु पटध्वंसतदभावाधिकरणत्वस्य चाभावात् । सत्त्वधर्मे सत्त्व-**

---

## दीपनम्

पेयतेऽस्माभिः, तथापि परैरपि नायं नियमोऽभ्युपगन्तुं शक्यत इति व्यभिचारोदाहरणमाह—**घटाभाव इति**। यत्तु घटप्रागभाव एव घटध्वसप्रागभावोऽपीति तन्न; घटो भविष्यतीति प्रतीयमानाभावस्य तदन्यप्रतियोगिकत्वानुपपत्तेः, प्रतियोगितदवच्छेदकभेदेऽभावैक्यानुपपत्तेश्चेति भावः। **सत्त्वेति**। भावाभावयोः परस्परानधिकरणत्वस्य प्रागुप-

---

## पूरणी

सत्त्वादेः कल्पितत्वान्नायं दोष इति वाच्यम्; तथासति कल्पितसत्त्वेनापरोक्षत्वं कल्पितासत्त्वेन बाधश्च न स्यात्; ब्रह्मालीकयोः कल्पिताभ्यां बाधापरोक्षत्वयोरदर्शनात्। रजतादेरनिर्वचनीयतयोपपत्तौ वृथा तत्रानिर्वचनीयसत्त्वासत्त्वसामानाधिकरण्यधर्मकल्पनम्, तत्र मानाभावश्च। नच सदिदं रजतं असदेव रजतमभादित्यनुभवद्वयं तत्र मानम्; आद्यस्योक्तसत्तादात्म्यविषयत्वेनान्यथा सिद्धत्वात्। द्वितीयानुभवस्यापि तस्य स्वतः सदन्यत्वगोचरत्वेन तदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वगोचरत्वेन वा तत्रामानत्वादिति सङ्क्षेपः॥

**यत्तु घटेति**। ततश्च पटोत्पत्तेः पूर्वं तन्तुषु पटध्वंसप्रागभावात्मकपटप्रागभावस्य सत्त्वान्नोभयनिषेध इत्यर्थः। **प्रतियोगीति**। इदं चोपलक्षणम्—प्रागभावस्य यत्किंचित्प्रतियोगिनाश्यत्वे घटोत्पत्त्यनन्तरं ध्वंसप्रागभावस्य विरहात्तदुत्पत्तिर्न स्यात्। यावत्प्रतियोगिनाश्यत्वे चोत्पन्नघटस्यापि पुनरुत्पत्तिः स्यात्, सामग्रीसत्त्वादिति द्रष्टव्यम्।

**तदभावाच्च । तस्मात्सिद्धमनिर्वचनीयादिस्वभावं शुक्तिरजतादि ॥**

## दीपनम्

पादितत्वात्, सत्त्वे सत्त्वाभावाधिकरणत्वे [1] सत्त्वानुपपत्तेश्च सत्त्वं न स्वाभावाधिकरणं, संबन्धाभावाच्च न स्वाधिकरणमिति न सत्त्वमुभयाधिकरणमित्यर्थः। किं च कार्यस्य स्वोत्पत्तेः प्राक्सत्वे कारकव्यापारवैयर्थ्यादनुपलम्भायोगाच्चासत्त्वे चोत्पत्त्ययोगात्। न ह्यसन्निर्विशेषं किंचिदुत्पद्यते, न वा प्रागभावप्रतियोगित्वादिविशेषस्तस्य संभवति, एवं विनाशोऽपि न; सतो विनाशानन्तरमसत्त्वानुपपत्तेः। अत उत्पत्तिविनाशाभ्यामपि रजतादिकमनिर्वचनीयमेवेत्युपसंहरति—**तस्मादिति** ॥

## पूरणी

ननु घटादावप्युक्तदोषसंभवात्किमिति सत्त्वपर्यन्तगमनमित्यत्राह—**सत्त्व इति**। घटादेः कथंचित्स्वाभावाधिकरणत्वेऽपि असत्त्वापत्त्या सत्त्वस्य न तदभावाधिकरणत्वमिति दोषदार्ढ्याय [2] तदुदाहरतीत्यर्थः। नन्वसतः प्रागभावप्रतियोगिन उत्पत्तिरस्त्वित्यत आह—**न वेति**। तदा प्रतियोगिनोऽसत्त्वे तद्धर्मस्यापि तत्र विरहात् असतश्चाव्यावर्तकत्वादिति भावः। **सत इति**। सदसत्त्वयोरेकत्र विरोधादिति भावः। सतः कालत्रये बाधायोग्यस्य विनाशासंभवाच्चेति द्रष्टव्यम् ॥

**अत उत्पत्तीति**। ननु सज्जातीयस्य पूर्वमविद्यमानस्य प्रागभावप्रतियोगिनो वा उत्पत्तिः तादृशस्य वर्तमानप्रतियोगिनो ध्वंसश्चेति

---

1 असत्त्वापत्तेश्च—च. 2 तदुदाहृतमित्यर्थः—ग.

## पूरणी

उत्पत्तिविनाशयोरन्यथाप्युपपत्तेर्न त्वदभिमतानिर्वचनीयत्वसिद्धिः, त्वत्पक्षेऽपि कारकव्यापारानुविधानदर्शनेन तादृशकार्यस्यैवोत्पाद इति वाच्यत्वादिति चेन्न ; सत्त्वमसत्त्वं चेति प्रकारद्वयम् । सत्त्वं च बाधायोग्यत्वमसत्त्वमलीकत्वम् । तत्र घटादेः कालत्रयबाधायोग्यत्वे घटोत्पत्तेः पूर्वं तन्नाशानन्तरं चोपलम्भप्रसङ्गः । असत्त्वे च तस्य कालत्रयासंबन्धितया नाद्यक्षणसंबन्धरूपोत्पत्तिर्घटत इति सदसद्विलक्षणत्वेनोत्पत्त्यादिमत्प्रपञ्चेऽनिर्वचनीयत्वस्य वाच्यत्वादिति भावः ।

वस्तुतस्तु "अथ रथान् रथयोगान् पथः सृजते" इति स्वाप्नापरोक्षविषयेऽनिर्वचनीयरथादिसृष्टिश्रुतिरनिर्वचनीयख्यातौ मानम् । न च सृजतेर्ज्ञानार्थतया भ्रममात्रसिद्धावपि नार्थसिद्धिरिति वाच्यम्; सृजतेरुत्पादनार्थे मुख्यतया बाधकं विना तत्परित्यागायोगादित्यलमनेन ॥

## परोक्षेऽनिर्वचनीयोत्पत्तिमतम्

ननु परोक्षस्थलेऽन्यथाख्यातिरवश्यमेषितव्या ; तत्रानिर्वचनीयवह्न्यादेरनभ्युपगमात्, तथा चापरोक्षविषयेऽपि तयैवाखिलव्यवहारोपपत्तौ किमर्थकल्पनयेति चेत्, अत्र केचित्[1]—तत्रानिर्वचनीयवह्निरुत्पद्यत एव । न च तस्यानावृतसंवित्तादात्म्येनापरोक्षतापत्तिः ; धर्मादिवदनुद्भूतत्वेनाप्रत्यक्षत्वोपपत्तेः । न च वह्निरुद्भूत एवेति नियमात्कथमेतदिति वाच्यम्; तप्ततैलादावनुद्भूतस्यापि सत्त्वात् । न च धूमस्योद्भूतेनैव व्याप्तिग्रहात्कथमनुद्भूतारोप इति वाच्यम् ; लाघवाद्वह्निमात्रेण व्याप्त्यवधारणात् । न च तत्र वह्न्यादौ मानाभावः ; अपरोक्षस्थले क्लृप्तदोषादिघटितसामग्र्यनुसारेण तत्कल्पनात् । दोषादेरन्वयव्यतिरेकाभ्यां ज्ञान इवार्थेऽपि हेतुत्वात् । न चैवं शशविषाण-

[1] अत्र-झ.

## पूरणी

मिति शब्दात् अयोग्यतानिश्चयविरहदशायां वृत्तिबोधोत्पत्तौ प्रातिभासिक-शशविषाणकल्पनापि स्यादिति वाच्यम्; इष्टत्वात्। अन्यथा तत्र तवापि प्रत्यक्षविषाणारोपे का गतिरित्याहुः ॥

## तत्खण्डनम्

तच्चिन्त्यम्; अपरोक्षविषये दोषादेरर्थे प्रत्यपि हेतुत्वमिति सामग्रीवशेन नानिर्वचनीयाभ्युगमः। येन परोक्षस्थलेऽपि लिङ्गभ्रमादि-दोषघटितसामग्रीबलेन तदावश्यकतया अनुद्भूतवह्न्यादिकमपि कल्प्येत। अपरोक्षविषयेऽनिर्वचनीयसिद्धेः पूर्वं दोषादेरर्थहेतुत्वाकल्प-नात्। किं तु देशान्तरस्थरजतादिना इन्द्रियसान्निकर्षादिविरहेणापरोक्ष-प्रतीत्यनुपपत्त्या तत्रानिर्वचनीयकल्पनम्। न चेह सा। विद्यमान-वह्निविषय इवाविद्यमानविषयेऽपि लिङ्गपरामर्शाद्यात्मिकायाः सामग्र्या-स्तुल्यत्वेन विषयं विनापि तत्प्रतीतिसंभवात्। न च परोक्षेऽपि विषयो हेतुः; येन तेन विनानुमितिर्न स्यात्। तस्मात्प्रमाणाभावान्न परोक्ष-विषयेऽनिर्वचनीयसिद्धिः ॥

## परोक्षेऽनिर्वचनीयोत्पत्तिसामग्रीविरहः

किं च परोक्षविषये सामग्र्यप्यसिद्धा; विषयदेशस्थान्तःकरण-वृत्तिसंबन्धस्य तदवच्छिन्नाज्ञानक्षोभद्वारा जाग्रत्परिणामहेतोरत्रासिद्धेः[1]। न च पर्वतात्मकविषयदेशस्थान्तःकरणवृत्तिसंबन्धोऽस्तीति वाच्यम्; पर्वतमात्रे न वह्न्यनुमानम्, पुरोभागावच्छेदेन वह्न्यभावस्य प्रत्यक्ष-सिद्धतया बाधेन तदयोगात्। किं त्वसान्निकृष्टोपरिभागे। तदवच्छे-देनान्तःकरणवृत्तिसंबन्धाभावान्न वह्निपरिणामो युक्तः। अन्यथा

---

[1] हेतोस्तत्रा—ख.

## पूरणी

तदवच्छेदेन विद्यमानव्यावहारिकवह्नेरपि प्रत्यक्षत्वप्रसङ्गात् । अपि च स्मृतपर्वतादौ यत्र भ्रान्तवह्न्याद्यनुमितिः तत्र पर्वतदेशस्थाज्ञानस्य कथंचिदपि वृत्तिसंबन्धाभावात्तत्परिणामो न युक्तः । न च तत्र पर्वतस्य स्मृतिरूपवृत्तिविषयतया वृत्तेस्तद्देशस्थत्वाभावेऽपि निर्वह्नि-पर्वतावच्छिन्नाज्ञानस्य परिणामोऽस्त्विति वाच्यम् ; अपरोक्षविषये विषयदेशस्थसंबन्धस्य तद्धेतुत्वेन क्लृप्ततया तेन विना तदयोगात् ॥

वस्तुतस्तु परोक्षविषये आवारकनिर्वह्नित्वाज्ञानादौ मानाभावेन प्रातिभासिकवह्न्यादिपरिणामासंभवः । अस्ति प्रकाशत इति सामग्र्यां नास्ति न प्रकाशत इति विपरीतव्यवहारयोग्यतात्मकावरणस्य परोक्ष-भ्रमविषयपर्वतोपरिप्रदेशादेरिन्द्रियासन्निकृष्टत्वेनायोग्यतया वा तत्रत्य-वह्न्यभावाद्यग्रहाद्विपरीतव्यवहार इति प्रकाशसामग्रीकालीनविपरीत-व्यवहाराभावेनाकल्पनात् । तस्मादुपादानावारकाज्ञानाभावान्न परोक्षा-निर्वचनीयभ्रम इति संक्षेपः । न चैवमन्यथाख्यात्यापत्तिः ; अतीतादि-वन्निर्विषयवह्निभ्रमस्य तत्राभ्युपगमात् । तस्य च व्यधिकरणा-प्रकारकत्वेन परमतसिद्धान्यथाख्यातिरूपत्वाभावात् । न च व्याप्ति-ज्ञानस्य व्यापकगोचरज्ञानजनकत्वनियमेन कथं ततो निर्विषयभ्रम इति वाच्यम् ; अतीतधूमादिना अतीतवह्न्याद्यनुमितेस्त्वयापि निर्विषयत्वा-भ्युपगमेन तथानियमासिद्धेरित्याहुः ॥

वस्तुतस्तु तत्र निर्विषयभ्रमस्वीकारे अतीताद्यसज्ज्ञानादिवत्तत्र प्रवृत्त्यनुपपत्तिः ; ज्ञानस्य स्वविषय एव प्रवृत्तिजनकत्वनियमात् । अन्यथा अपरोक्षविषयेऽपि निर्विषय एव रजतादिभ्रम इति वक्तुं शक्यत्वादनिर्वचनीयख्यात्यपलापः । किं च देशान्तरस्थस्य रजतादेः सन्निकर्षाभावेनापरोक्षप्रतीत्यसंभवेऽपि देशान्तरस्थवह्न्यादेर्व्याप्तिग्रहादि-

**तत्र चान्वयव्यतिरेकाभ्यां दोषादि निमित्तकारणम् । दोषजन्यज्ञानस्यान्यस्याभावाच्चार्थ एव तत्कारणम् ।**

---

## दीपनम्

न च कारणाभावात्कथं रजतोत्पत्तिरिति वाच्यम्; तदुपादानस्याज्ञानस्योपरिष्टाद्वक्ष्यमाणत्वात् । तन्निमित्तमत्राह—**तत्र चेति** । रजताकाराविद्यावृत्तिमभ्युपेत्य विनिगमकाभावाद्दोषादेरर्थं प्रत्यपि हेतुत्वमिति प्रागुक्तम् । इदानीं साक्षिमात्रमेव रजतज्ञानमिति मतमाश्रित्याह — **दोषजन्येति** । यदर्थमनिर्वचनीयादिम्वभावं शुक्तिरजतादि साधितं

---

## पूरणी

सामग्रीवशेन भानस्य संभवादावश्यकत्वाच्च निर्विषयभ्रमाङ्गीकारो नोचितः । वस्तुतोऽतीतादेरपि भासमानत्वलक्षणं विषयत्वमस्त्येव । अन्यथा तज्ज्ञानात्तद्व्यवहारानुपपत्तेः । अतीतादिज्ञानमिति व्यपदेशानुपपत्तेः तदतीतत्वादिसंशयनिवृत्त्यनुपपत्तेश्च । किं तु विशिष्टधीजननयोग्यतात्मकसंबन्धलक्षणविषयत्वस्यातीतादावभावाज्ज्ञाने निर्विषयत्वव्यवहारः । एवं च भ्रान्त्यनुमित्यादावपि कस्यचिद्वह्निमाने तस्य देशान्तरे तदा विद्यमानत्वेन संबन्धात्मकविषयतापि संभवतीति न निर्विषयानुमितिभ्रमसंभवः । संबन्धात्मकविषयत्वाभावेऽपि तस्य भासमानत्वलक्षणविषयत्वमात्रेण तदभाववति तद्विषयत्वलक्षणान्यथाख्यातित्वस्य दुर्वारत्वाच्चेति दिक् । तस्मात्परोक्षविषये सामग्रीबलेनान्यथाख्यातिस्वीकारेऽपि अपरोक्षविषयेऽनिर्वचनीयख्यातिरेवेति तत्र समाधानम् । न चैवं परमतसाङ्कर्यम्; एकदेशसाङ्कर्यस्य सर्वमतेऽपि सत्त्वेनादोषत्वादिति सारम् ॥

**इदानीमिति** । ननु दोषादेर्भ्रमज्ञान एव हेतुत्वम्, परोक्षस्थले दोषस्य ज्ञानं प्रत्येव हेतुत्वात् । संस्कारस्यापि ज्ञानमात्र एव हेतुत्वा-

## पूरणी

वधारणात्। अधिष्ठानसामान्यज्ञानमपि धर्मिज्ञानतया भ्रमज्ञान एव हेतुः। ज्ञानस्य चिकीर्षां विनार्थाहेतुत्वात्। अस्तु वोभयत्र हेतुत्वम्, अन्यत्र दोषादेरर्थहेतुत्वादर्शनेऽपि प्रमाणबलेनात्र तत्कल्पनात्। न त्वर्थमात्रहेतुत्वमिति चेन्न; साक्षिरूपरजताद्यपरोक्षभ्रमस्याजन्यत्वेन दोषादेरर्थं प्रत्येव हेतुत्वात्। नच दोषादिसामग्रीबलेन चक्षुरादिना तद्गोचरभ्रमज्ञानान्तरमुत्पद्यत इति वाच्यम्; रजतस्य प्रातीतिकस्य प्रतीतिपूर्वं सत्त्वाभावेन तदिन्द्रियसन्निकर्षविरहात्तद्गोचरैन्द्रियिकज्ञानानुत्पत्तेः। न चेन्द्रियार्थसन्निकर्षविरहेणैन्द्रियिकान्तःकरणवृत्तिविरहेऽपीन्द्रियदोषादि[1]कारणकाविद्यावृत्तिरास्तामिति वाच्यम्; प्रयोजनाभावेन तस्या अग्रे निरसिष्यमाणत्वात्। न चैवं रजतगोचरचाक्षुषज्ञानाभावे रजतं पश्यामीत्यनुभवविरोधः; चक्षुर्जन्यवृत्त्यभिव्यङ्ग्यसाक्ष्यनुभवेनापि तदुपपत्तेः। अत एव चक्षुर्व्यापारानुविधानमप्यभिव्यञ्जकाधिष्ठानसामान्यवृत्तावेवोपक्षीणम्। नन्वेवमन्धस्य त्वगिन्द्रियेणोपनीते रूपविशेषवद्रजतभ्रमः स्यात्, चक्षुर्व्यापारानन्तरमाकाशे नीलभ्रमो न स्यात्; चक्षुषा तत्स्फुरणासंभवात्, न चानुमित आकाशे तद्भ्रमः; नीलं नभः पश्यामीत्यनुभवानुपपत्तेरिति चेन्न; जाग्रद्रजताद्यारोपे चाक्षुषाधिष्ठानसामान्यवृत्तेरेव हेतुतया अन्धस्य तद्भ्रमानुभवानुपपत्तेः। आकाशं च न नित्यानुमेयम्, किंतु चक्षुर्जन्यप्रभाद्याकारवृत्त्यभिव्यक्तसाक्षिप्रत्यक्षम्। अन्यथा शब्दादेराकाशगुणत्वादिसंशयदशायां तदनुभवानुपपत्तेः। चक्षुर्व्यापारानन्तरं झटिति तत्स्फुरणाच्च। नच नीरूपद्रव्यस्य कथं चाक्षुषवृत्त्यभिव्यक्तसाक्षिवेद्यत्वमिति वाच्यम्; रूपवत्प्रकाशाद्यवच्छेदेन तदुपपत्तेः। रूपहीनद्रव्यस्याप्यन्तःकरणादिव-

[1] कारकावि—ख.

## पूरणी

त्साक्षिभास्यत्वाविरोधाच्च। न चान्याकारवृत्त्याऽतीन्द्रियाकाशचैतन्याभिव्यक्तौ वाय्वादेरपि प्रत्यक्षतापातः; गुरुत्वादिवत्तस्यायोग्यत्वात्। योग्यतायाश्च फलबलकल्प्यत्वादिति दिक् ॥

वस्तुतस्तु मूर्तप्रत्यक्षतायामेवोद्भूतरूपवत्त्वं प्रयोजकमिति नीरूपमप्याकाशं साक्षाच्चक्षुरादिवृत्तिगोचर एवेति सारम्। तस्मान्नाकाशे नीलापरोक्षभ्रमानुपपत्तिः। यत्त्वाकाशस्य साक्षिवेद्यत्वाभावे अन्धादीनामप्युपनीते आकाशे नीलं नभ इति भ्रमः स्यादिति तदवश्यं चक्षुर्जन्यवृत्त्यभिव्यक्तसाक्षिवेद्यम्, साक्षिवेद्यत्वपक्षे चापरोक्षाकाशानुभवस्य तदधिकरणकनैल्यापरोक्षारोपहेतुत्वान्नायं प्रसङ्ग इति, तच्चिन्त्यम्; तस्यानुभूयमानारोपतया अन्धादीनां तदनुभवासंभवेन तदारोपायोगात्। नच रूपवद्द्रव्यान्तराननुभवान्नायमनुभूयमानारोप इति वाच्यम्; नभोदेशव्यापिविचित्ररत्नमेरुशिखरप्रभाया अनुभूयमानत्वात्। न चात्र मानाभावः; स्मर्यमाणारोपपक्षे प्राचुर्येण नैल्यारोपानुपपत्तेः, शुक्तिरजताद्यारोपवत्सादृश्यादिनियामकस्याभावात्। अनुभूयमानारोपपक्षे तु दक्षिणदेशे मेरुप्रभानीलभागाधिक्यात्तदुपपत्तेः, अतः प्रचुर्येण नीलारोपान्यथानुपपत्तिरेव बहुदेशव्यापिविचित्रशिखरवत्त्वेनागमसिद्धमेरुशिखरप्रभानुभवे मानम्। न चैवं तत्प्रभाया विचित्रत्वेन पीतत्वादेरप्यारोपप्रसङ्गः; कदाचित्तदारोपस्याप्यनुभवसिद्धत्वात्। नच सन्निहितदेशेऽपि तत्प्रभानुभवप्रसङ्गः; ऊर्ध्वदेशप्रभाया अधोदेशाप्रसरात्। प्रत्युत स्मर्यमाणारोप एवाविशेषात् निकटदेशे तदारोपापत्तेरिति दिक्। यदप्यधिष्ठानापरोक्षत्वमारोप्यापरोक्षत्वे तन्त्रम्, अन्यथा वायावपि नीलापरोक्षभ्रमः स्यादिति तदपि, न सम्यक्; शीतो वायुरिति वायावप्यपरोक्षशीतत्वानुभवस्य चक्षुषापि धूसरपाटल-

**एवं स्थिते प्रयुज्यते-अहंकारोऽध्यस्तः, दृश्यत्वात्, शुक्तिरूप्यवत्,। न च सादृश्याभावान्नाहंकाराध्यास उपपन्न इति वाच्यम्;**

---

## दीपनम्

तदाह—**एवं स्थित इति**। तथा च वाक्यप्रतिपाद्याभेदे न किंचिद्बाधकमिति भावः। **अहंकार इति**। अहंकारश्चाग्रे वक्ष्यमाणो द्रष्टव्यः। चैतन्यविषयत्वं च हेतुरिति न ब्रह्मणि व्यभिचार इति। **सादृश्येति**। निरवयवनिर्गुणनिष्क्रियस्यात्मनो गुणावयवादिसामान्यलक्षणसादृश्याभावादित्यर्थः। घटादिपराग्व्यावृत्तप्रत्यक्स्वरूपाहमितिप्रती-

---

## पूरणी

त्वाद्यपरोक्षारोपस्य घ्राणेन सौरभापरोक्षारोपस्य चानुभवेन तथा नियमासिद्धेरिति सङ्क्षेपः। तस्मात्पूर्वोक्तविधयैवाकाशमपरोक्षमिति तत्त्वम्॥

**घटादीति**। अहमिति प्रतीतिरहंप्रतीतिः; तद्योग्यत्वं घटमहं जानमीत्यनुभूयमानघटादावपीति प्रत्यक्स्वरूपेति विशेषणम्। प्रत्यग्रूपेणाहंप्रतीतियोग्यत्वं तदर्थः। घटादेः पराग्रूपेण तथा प्रतीतियोग्यत्वान्नातिप्रसङ्गः। प्रत्यक्पदेन निष्कृष्टाहंकारचैतन्यरूपविवक्षायामहंकारे तदसंभव इत्यत उक्तं—**पराग्व्यावृत्तेति**। पराग्व्यावृत्तस्वरूपमात्रं विवक्षितमिति नासंभवः। परं परा वा अञ्चति, चिद्व्यतिरिक्तरूपेण प्रकाशत इत्येवं रूपं पराक्त्वमहंकारस्यापीत्यत उक्तं—**घटादीति**। बाह्यघटादिकमेवात्र पराक्त्वनाभिमतम्। तद्व्यावृत्तरूपेणाहंप्रतीतियोग्यत्वमहंकारेऽस्तीति न दोषः। न चैवं देहेन्द्रियादावतिप्रसङ्गः; अहंभिन्नत्वरूपेण प्रतीयमानस्य पराक्पदेनोक्तत्वात्, देहेन्द्रियादेर्ममायं देह इति भेदेनोपलभ्यमानत्वात्। यद्वा स्थूलोऽहमित्यादिना देहेन्द्रियादेरप्यहंकारवत्तादात्म्येनाध्यस्यमानत्वात् तत्रोक्तसादृश्यातिप्रसङ्गो न दोषाय। निगर्वस्तु

**तस्य ज्ञानेऽनित्यत्वजडत्वाद्यारोपे व्यभिचारेणाध्यासमात्राहेतुत्वात् । नन्वेवमव्यभिचारात्संस्कार· कारणम्, [1] स चात्र नास्तीति**

## दीपनम्

तियोग्यत्वस्य आत्मन्यपि पूर्वपूर्वाहंकाराध्यासप्रयुक्तस्य संभवान्न सादृश्याभावः । गुणावयवादिसादृश्यं तु नाध्यासमात्रे हेतुः, व्यभिचारादित्याह—**तस्येति** । **संस्कारः** प्रमाजन्यसंस्कारः । लाघवेन संस्कारमात्रं

## पूरणी

अहंत्वेनाहामिति प्रतीतियोग्यत्वम् । तच्च देहाहंकारादावेव न घटादाविति । योग्यता च तज्जनितसंशयनिवृत्त्यादिव्यवहारवत्त्वम् । तच्चाविषयविषयात्माहंकारसाधारणमिति तत्त्वम् । नन्वहंकाराध्यासात्पूर्वं तस्य तत्प्रतीतिविषयत्वाभावात्कथं तेनोक्तसादृश्यमात्मन इत्यत्राह—**पूर्वपूर्वेति** । परमगुरुचरणास्तु—आत्माहंकारयोरनुगततद्योग्यतावच्छेदकानिरूपणान्न तद्योग्यत्वमनुगत सादृश्यम्; किं त्विदंप्रत्यक्षाविषयत्वमित्याहुः । **गुणावयवादीति** । अन्यादृशं तु सादृश्यं भावत्वादिरूपं ज्ञानेऽपि सुवचमिति भावः । इदं च सादृश्यं वस्तुसदारोपनिमित्तमित्यभिसन्धायोक्तम् । वस्तुतस्तु ज्ञायमानमेव तदारोपनिमित्तम्, तथैवान्वयाद्यनुविधानात् अज्ञातस्य हेतुत्वे मानाभावाच्च । न चोक्तसादृश्यज्ञानादहंकाराध्यास इति यत्किंचिदेतत् । न चैवमपि सादृश्यज्ञानाभावे कथमारोप इति वाच्यम्; तस्य क्वचिदेवारो[2]प्योपस्थापकतया अन्यथासिद्धत्वेन तदहेतुत्वादिति तत्त्वम् ॥

**तस्य ज्ञान इति मूलम्** । यद्यपि लोहितः स्फटिक इत्यादिसोपाधिकभ्रमेऽप्येतस्य व्यभिचारः; तथापि तत्र कथंचिदवयवादिसादृश्यं

[1] स च तत्र—छ. [2] प्यस्मारकतया—झ.

चेत्, न; [1]पूर्वभ्रमजन्यसंस्कारस्य सत्त्वात्। न चाहंकाराधिष्ठानस्य दृश्यत्वायोगात् स्वप्रकाशत्वं वक्तव्यम्, तत्र च नारोपसंभव इति न भ्रमसंस्कार इति वाच्यम्; स्वप्रकाशस्याप्यविद्याप्रतिबद्धप्रकाशत्वात्। तत्र च प्रमाणं वक्ष्यते॥

स्यादेतत् यद्यहंकारातिरिक्तात्मनि किंचित्प्रमाणं भवेत्। तत्र यद्यपि त्वंपदार्थो न देहो न चेन्द्रियम् रूपादिमत्त्वात् जन्मनाशवत्त्वाच्च। आत्मनश्च जन्मान्तरीयानुसन्धानेनानादित्वात्।

दीपनम्

कारणं न तु प्रमाजन्यः, तदा गौरवात्, स चात्र सुसम्पाद इत्याह—**पूर्वेति**। अहंकारस्य हि प्रतिदिनं सुषुप्तौ नाशात्तद्भ्रमोऽन्य एवेति पूर्वेत्युक्तम्। **दृश्यत्वेति**। अन्यथा तस्य वक्ष्यमाणविधयाऽनात्मत्वापत्त्या अधिष्ठानत्वानुपपत्तेरित्यर्थः। **तत्र चेति**। अधिष्ठानविशेषानवभासस्याध्यासकारणत्वादित्यर्थः।

तत्र स्वप्रकाशस्यात्मनोऽविद्यावरणे अहंकारान्यस्वप्रकाशज्ञप्तिमात्रमात्मेति निरूपयितु प्रथममहंकारातिरिक्त आत्मनि प्रमाणाभावान्न तस्याध्यस्तत्वमिति शङ्कते—**स्यादेतदिति**। **एतत्** अध्यस्तत्वम्। स एव देहादिव्यतिरिक्तत्वं तस्य प्रथममनुजानाति—**तत्रेति**। **रूपादीति**। रूपादिमतो घटादेरनात्मत्वादित्यर्थः। **जन्मेति**। आत्मनस्तथात्वे [2]कृतहानादिप्रसङ्ग इत्यर्थः। **जन्मान्तरीयेति**। जातमात्रस्य स्तन्यपानादिप्रवृत्त्यनुपपत्त्या जन्मान्तरीयतदिष्टसाधनताव्याप्त्यनुसन्धानं

पूरणी

संभवति, ज्ञाने तु न कथंचित्संभव इति तदुदाहृतम्। **प्रमाजन्यः**। अबाध्यार्थगोचरज्ञानजन्य इत्यर्थः। तद्वति तत्प्रकारकज्ञानत्व-

[1] पूर्वपूर्व- ग. छ.  [2] कृतनाशादि–ख.

स्वप्नावस्थायां मनुष्यादिदेहाभावेऽपि अहमित्यनुभवदर्शनात्, करणस्य वास्यादिवदनात्मत्वाच्च। प्रत्यभिज्ञानानुपपत्तेश्च। तथापि नाहमनुभवगोचरादन्य आत्मा; अहम [1] एवात्मत्वानुभवात्तदन्यात्मनि प्रमाणाभावाच्च। न [2]तावदत्र प्रत्यक्षं प्रमाणम्, नाप्यहंकारोऽनात्मा, दृश्यत्वात्, घटादिवदिति पक्षधर्मता-

---

दीपनम्

तस्य कल्पनीयमित्यनादिरयमात्मेत्यर्थः। [3]**देहाभावेऽपि** देहे तदुपलम्भाभावेऽपि। **करणस्य** चक्षुरादे। रूपरसादिद्रष्टुः प्रत्यभिज्ञानादपि न चक्षुरादेरात्मत्वमित्याह—**प्रत्यभिज्ञेति। अहम एवेति।** ज्ञानाश्रयो ह्यात्मा। तत्त्वं चाहंकारस्यैवानुभूयत इति स एवात्मेति भावः। **न तावदिति।** ज्ञानाश्रयादहंकारादतिरिक्त आत्मा प्रत्यक्षेण नानुभूयत इति न ततस्तात्सिद्धिरित्यर्थः। **पक्षेति।** द्रष्टुरभावेऽहंकारस्य दृश्यत्वमनुपपन्नमिति स चाहंकारो न भवतीति तदन्यात्मसिद्धिरित्यर्थः।

---

पूरणी

रूपस्याहंकारानुभवेऽपि सत्त्वादिति। परमते स्वप्नकाले पूर्वदेहस्य सत्त्वेन न [4]तथाभाव इत्यत आह—**तदुपलम्भेति**। यद्यपि तदा मनुष्यत्वादिरूपेण तद्देहानुपलम्भेऽपि सिंहत्वादिरूपेण सामान्येन वा तदुपलम्भोऽस्त्येव, किंचिद्देहोपाध्यवच्छिन्नस्यैव स्वप्नानुभवदर्शनात्। तथापि देहात्मवादे मनुष्यत्वादितत्तद्रूपावच्छिन्नस्तदात्मेति तद्रूपविशेषानुपलम्भे तदहमभिमानो न स्यादिति भावः। **रूपेति**। इन्द्रियाणां प्रत्येकमात्मत्वे योऽहमद्राक्षं स इदानीं स्पृशामीत्यैकात्म्यप्रत्यभिज्ञा न स्यादित्यर्थः। **स चाहंकार इति**। स्वस्य स्वद्रष्टृत्वायोगादिति भावः।

---

[1] एवात्मत्वेनानु-**ग.** [2] तावत्तत्र-**ग. छ.** [3] तदभावेऽपीति कुत्रचित्पाठदर्शनात् मूलेऽपि मनुष्यादिदेहे तदभावेऽपीत्यपि पाठः स्यात्. [4] तदभावः-**झ.**

**बलात्तत्सिद्धिरिति वाच्यम्; अहंकारपदेनान्तःकरणाद्यभिधाने सिद्धसाधनात्, तदतिरिक्ताहमिति व्यवहारविषयाभिधाने सिद्धान्ते बाधात् ।**

दीपनम्

**अन्तःकरणादीत्यादि**पदेन शरीरेन्द्रियादि गृह्यते। **तदतिरिक्तेति।** अन्तःकरणादेर्घटादेश्च पक्षताव्यावृत्तये विशेषणद्वयम्। **सिद्धान्त इति।** सिद्धान्ते ह्यन्तःकरणातिरिक्ताहमितिव्यवहारविषयस्य चैतन्यस्यात्मत्वाद्बाध इत्यर्थः। न चाहमितिपदवाच्यस्य पक्षत्वम्; तस्याप्यन्तःकरणादिरूपत्वे चैतन्यरूपत्वे चोक्तदोषानपायात्। विशिष्टस्य स्वरूपादनन्यत्वे चैतन्यांशे बाधात् अतिरिक्तत्वे च सिद्धसाधनादिति। न च ज्ञानाश्रयः पक्षः; सिद्धान्ते चैतन्यस्यापि तत्त्वात् वृत्त्यादेश्चैतन्येऽध्यस्तत्वात्, तदतिरिक्तज्ञानस्य सिद्धान्तेऽनाश्रयत्वेन परपक्षे च तस्याप्रसिद्धतया पक्षाप्रसिद्धेः। तार्किकमतेऽपि नित्यज्ञानस्य जीवाद्यनाश्रयत्वात्, नापि ज्ञानान्यः पक्षः; चैतन्यस्यापि वृत्तिज्ञानान्यत्वात्, नित्यज्ञानान्यत्वस्य परपक्षेऽप्यप्रसिद्धेः। अत एव [1] स्वप्रकाश इत्यपि

पूरणी

इदं चोपलक्षणम्—आत्मभिन्नत्वसाध्यमपि भेदप्रतियोग्यतिरिक्तात्मानमादाय पर्यवस्यतीति मन्तव्यम्। अन्तःकरणावच्छिन्नचैतन्यस्याहंपदवाच्यतया प्रत्येकविशिष्टोपादानाभ्यां दोषमाह—**तस्यापीति। अतिरिक्तत्वे चेति।** तस्य जडत्वादहमनुभवे प्रकाशमानस्वरूपातिरिक्तस्य परैरप्यात्मत्वेनानभ्युपगमाच्चेत्यर्थः। **परपक्षे चेति।** गुरुमत इत्यर्थः। अहंकारानात्मत्वसाधने ईश्वरानभ्युपगन्तृमीमांसकस्यापि पूर्वपक्षित्वादिति भावः। अत एव तदभ्युपगन्तारं प्रत्याह—**तार्किकेति।** जीवानात्मत्वसाधनस्योद्देश्यत्वादिति भावः। **परपक्षेऽपीति।** मीमांसकमते ईश्वरा-

[1] अस्वप्रकाश—**ख. च.**

**दृश्यत्वं च ब्रह्मणि व्यभिचारि ।**

---

दीपनम्

न ; नैयायिकपक्षेऽप्रसिद्धेरिति । [1] (आत्मत्वस्य सिद्धान्तेऽभावे तदत्यन्ताभावतदन्योन्याभावयोरभावेन साध्ये बाध इति द्रष्टव्यम्) । **ब्रह्मणीति ।** **दृश्यत्वं** ज्ञानविषयत्वम्, **तच्च** वेदान्तप्रमेये ब्रह्मण्यप्यस्तीति व्यभिचारः । न च चैतन्यविषयत्वं तत्; तस्याद्याप्यप्रसिद्धेः । [2] सत्त्वे वा ब्रह्मापि तद्विषय एव । अन्यथा तद्व्यवहारानुपपत्तेः, ब्रह्मणः सर्वज्ञत्वाद्यनुपपत्तेश्च । न हि तस्य [3] स्वरूपेणातिरिक्तं ज्ञानमस्ति । "तदात्मानमेवावेत्"

---

पूरणी

नभ्युपगमेन नित्यज्ञानाप्रसिद्धेरित्यर्थः । अपिशब्देनाध्यस्तस्याधिष्ठानस्वरूपतयाधिष्ठानात्मकनित्यज्ञानान्यत्वमप्रसिद्धमिति दर्शयति । **नैयायिकेति ।** गुरुमते ज्ञानस्य स्वप्रकाशत्वाभ्युपगमादित्यर्थः । ननु प्रत्यग्रूपचैतन्याप्रसिद्धावपि ब्रह्मचैतन्यं प्रसिद्धमित्यस्वरसादाह—**सत्त्वे वेति । अन्यथेति ।** तद्विषयज्ञानस्यैव तद्व्यवहारहेतुत्वादित्यर्थः । ननु स्वरूपज्ञानस्य स्वविषयत्वाभावेऽपि तदतिरिक्तस्वविषयज्ञानमादाय सर्वज्ञतेत्यत्राह—**न हीति ।** परमते हीश्वरवत् ज्ञानाश्रयत्वानभ्युपगमादिति भावः। यद्वा ननु स्वाकाराविद्यावृत्त्याश्रयतया सर्वज्ञतोपपत्तिः, जगदुपादानतया तस्य तद्वृत्त्याश्रयत्वादित्यत्राह—**न हीति ।** ज्ञानपदवाच्यधर्म्यतिरिक्तं ज्ञानं नास्ति, वृत्तेर्ज्ञानपदवाच्यत्वेऽप्यज्ञानत्वादित्यर्थः । नन्वतिरिक्तज्ञानाभावे कथं तस्य सर्वज्ञत्वम्, सर्वगोचरज्ञानाश्रयत्वस्य तदर्थत्वादित्यत्राह—**स्वरूपेणेति ।** स्वरूपेण स्वभावतः । विषयावच्छेदानवच्छेदाभ्यामौपाधिकभेदवत्त्वेऽपि स्वभावतो भिन्नं ज्ञानं नास्ति । औपाधिकभेदादेव सर्वज्ञत्वोपपत्तेरित्यर्थः । अथवा ननु वृत्तेरज्ञानत्वे कथं तर्हि प्राण्यदृष्टसहकारिजानितसर्वगोचराविद्यावृत्तिमत्तया ब्रह्मणः सर्वज्ञत्ववर्णनमित्यत्राह—**स्वरूपेणेति ।** ज्ञानचैतन्यतादात्म्येन वृत्तेर्ज्ञानपद-

---

[1] अयं कुण्डलितः पाठः क्वाचित्कः. [2] प्रसिद्धौ वा–**ग.** [3] स्वरूपातिरिक्तं, स्वरूपज्ञानातिरिक्तं–**च.**

**अहंकार आत्मा, ज्ञानाश्रयत्वादिभ्यः, ईश्वरात्मवत् व्यतिरेकेण घटादिवद्वेति प्रतिप्रयोगाच्च ।**

दीपनम्

इत्यादिश्रुतेश्च ब्रह्म स्वज्ञानविषय इति दृश्यमेव । न चास्वप्रकाशत्वं दृश्यत्वमिति वाच्यम् ; तद्यदि प्रमाणविषयत्वं तह्यसिद्धिः, सिद्धान्तेऽहंकारस्य साक्षिमात्रभास्यत्वात्, सकलप्रमाणागोचरे ब्रह्मणि व्यभिचाराच्च । अत एव न ज्ञानान्यत्वम् ; ब्रह्मणि व्यभिचारादप्रयोजकत्वाच्चेति भावः । **अहंकार** इति । देहेन्द्रियान्तःकरणव्यतिरिक्ताहमनुभवगोचर इति न बाध इत्यर्थः । **ज्ञानाश्रयेति** । नचान्यतरासिद्धिः ; अहं जानामि करोमि भुञ्ज इति प्रतीतेरात्मविषयत्वात् आत्मनि संसाराभावे

पूरणी

वाच्यत्वेऽपि स्वरूपेण न ज्ञानत्वम् । चैतन्यस्य स्वगोचरत्वे च तद्वृत्तेस्तादात्म्येन न तज्ज्ञानरूपत्वमित्यर्थः "तदात्मानं" इति द्वितीयया ज्ञानविषयत्वरूपतत्कर्मत्वप्रतीतेरित्यर्थः । **अहंकारस्येति** । तस्य चक्षुरादिप्रसिद्धप्रमाणाविषयत्वात् सकलेति । चक्षुरादिजनितघटादिवृत्तेस्तदवच्छिन्नब्रह्मचैतन्यविषयत्वादित्यर्थः । **ब्रह्मणीति** । वृत्तिज्ञानान्यत्वस्य तत्रापि सत्त्वादित्यर्थः । ननु नित्यज्ञानान्यत्वं हेतुरि[1]त्याशङ्कयाह—**अप्रयोजकत्वादिति** । **देहेन्द्रियेति** । तद्व्यतिरिक्तस्य पक्षत्वादहमनुभवगोचरदेहेन्द्रियादिना नांशतो बाध इत्यर्थः । न चैवमपि परमतसिद्धान्तःकरणस्यास्मन्मते ज्ञानाद्याश्रयाहंकारात्मकतया तदतिरिक्ताहमनुभवगोचरस्यात्मत्वसाधनेऽस्मन्मते सिद्धसाधनमिति वाच्यम् ; अन्तःकरणस्य परमतेऽहमनुभवगोचरतया तत्र बाधाप्रसङ्गेन देहेन्द्रियव्यतिरिक्ताहमनुभवगोचरमात्रस्य पक्षत्वात् । अन्तःकरणपदं तु सम्पातायातम् । अतो न सङ्कटं किञ्चिदिति ध्येयम् । **न चान्यतरेति** ।

[1] त्यत आह—झ.

**अहंकारस्यानात्मत्वेऽहं मुक्तः स्यामिति मुक्त्यर्थिप्रवृत्ति-बाधश्च । अत एव न श्रुत्यापि तदतिरिक्त आत्मा सिद्ध्यति । ततश्च नाहंकारोऽध्यस्त इत्यहमर्थस्य कर्तुर्भोक्तुः प्रतिशरीरं भिन्नस्य न तद्विरुद्धब्रह्माभेद इति वाक्यमभेदोपासना-**

## दीपनम्

तन्निवर्तकज्ञानोपायानुष्ठानानुपपत्तेश्चेति भावः । **श्रुत्येति** । "अथातोऽहंकारादेश" इत्युक्त्वा उक्तया "अथात आत्मादेश" इत्यादिश्रुत्येत्यर्थः । अहंकारातिरिक्तात्मना विनानुपपत्त्यभावेन नार्थापत्तितोऽपि तत्सिद्धिरित्युपसंहरति—**ततश्चेति** । **वाक्यं** तत्त्वमस्यादिवाक्यम् । श्रुत्यैकप्रमेयत्वादस्यार्थस्यानुमानादेः श्रुतिप्रमेयसंभावनाबुद्धिहेतुतया तदुपकार-

## पूरणी

यद्यपि ज्ञानाद्याश्रयस्यात्मत्वं साध्यतया पराभिमतम्, तादृशोऽस्मन्मतसिद्धाहकारः, स च ज्ञानाद्याश्रयः, तत्र चोक्तहेतुरस्त्येवेति कथमन्यतरासिद्धिः, तथाप्यहमनुभवगोचरत्वसामान्यरूपेण पक्षतायामस्मदभिमतालौकिकात्मनोऽपि [1] तद्रूपवत्तया पक्षान्तर्भावे पक्षैकदेशे ज्ञानाद्याश्रयत्वासिद्धिशङ्काप्यस्मन्मतरीत्या न संभवति । तस्यापि कल्पितज्ञानाश्रयत्वादित्युक्तामिति भावः । मूले—**अहंकारस्येति** । अहंकारस्यानात्मत्वे तदतिरिक्तात्मनि संसाराभावादबद्धस्यात्मनो मुक्त्यर्थं प्रवृत्त्यनुपपत्तेः अहंपदार्थोल्लेखेन तद्गतमुक्त्युद्देशेन तदनुपपत्तिरित्यर्थः । **अत एव न श्रुत्येति** मूलम् । श्रुतावहंकारपदस्यान्तःकरणपरत्वे तदतिरिक्ताहमनुभवविषयपरत्वे वा ज्ञानाद्याश्रयाहंकारातिरिक्ताभिमतात्मनस्ततोऽसिद्धिरित्यर्थः । तच्छ्रुतिं दर्शयति—**अथात इति** । नन्वहंकारपदं

"जीवस्थस्त्वनिरुद्धो यः सोऽहंकार [2] इति स्मृतः"

इति स्मृतिप्रसिद्धार्थानिरुद्धपरम्, परमतसिद्धान्तःकरणपरं वा । अतो नाहमनुभवगोचरातिरिक्तात्मसिद्धिरित्यत्राह—**अहंकारेति** । अन्तःकरणावच्छिन्नेत्यर्थः ॥

[1] तद्रूपतया—**ज्ञ**. [2] इतीरितः—**ट**.

**परमुचितमिति चेन्न; " अथातोऽहंकारादेशः " इत्यहंकारमात्मा-**

---

दीपनम्

त्वमेवेत्यभिप्रेत्य श्रुत्या प्रथममतिरिक्तमात्मानमाह—**अथात इति**। " अथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वं " इति श्रुत्या अहङ्कारावच्छिन्न आत्मोपदिश्यते। अहमिति कृतिः करणं यस्येति व्युत्पत्त्या—

" शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥ "

इति स्मृतिप्रसिद्धया चान्तःकरणावच्छिन्नात्मैवाहंकारः, न केवलान्तःकरणं, नवा केवल आत्मा; अहं करोमि जानामि भुञ्जे चेति प्रतीतेः शबलविषयत्वेन तत्समानविषयाहंकारपदस्यापि तदर्थत्वात्। न चाहंकारादहंपदार्थोऽन्य एवेति वाच्यम्; तत्र प्रमाणाभावात्। अभेदेऽप्यहंकारपदस्य तत्र व्युत्पत्तेर्दर्शितत्वात् " अथातोऽहंकारादेश "

---

पूरणी

**अहमिति कृतिरिति**—अहमभिमानीति यावत्। न तावदहंकारपदस्यान्तःकरणमात्रमर्थः; उक्तावयवव्युत्पत्तेरहमनुभवे प्रकाशमानविशिष्टचैतन्यविषयत्वात्। नापि स्मृतिप्रसिद्धानिरुद्धपरत्वम्; स्मृत्यन्तरे अवच्छिन्नचैतन्येऽपि तत्पदप्रयोगादित्याह—**शोकहर्षेति**। जडस्य केवलान्तःकरणस्य शोकहर्षादेरसंभवादिति भावः। न च प्रसिद्धितौल्येन विनिगमकाभावः; अभेदसार्वात्म्यश्रुत्यपेक्षयावच्छिन्नरूपार्थस्यैव ग्राह्यत्वादिति भावः। उक्तव्युत्पत्तेर्बीजमाह—**अहंकरोमीति**। वाशब्दः प्रतीतिक्रमप्रदर्शनार्थः। ननु समानविषयत्वमसिद्धमेवेत्याशङ्क्य निषेधति—**न चेति**। शब्दवैरूप्यं तत्र मानमित्यत्राह—**अभेदेऽपीति**। वाक्यशेषादप्यहंकारपदस्योक्त एवार्थ इत्याह—**अथात इति**। ननु तत्राहंपदं मकारान्ताव्ययम्, न तु दकारान्ता-

## दीपनम्

इत्युक्तस्यैव "अहमेवाधस्तात्" इत्यहंपदेनाभिधानात्, केवलान्तःकरणस्य परिच्छिन्नतया सर्वगतत्वानुपपत्तेश्च। "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वं" इति पूर्ववाक्योपदिष्टब्रह्मणस्तत्तुल्यलक्षणतया जीवस्याभेदपरेऽस्मिन्वाक्ये प्रयुक्तस्याहंकारादिपदस्यान्तःकरणमात्रे वृत्त्ययोगाच्चेति। नन्वन्तःकरणावच्छिन्नस्य न सर्वगतत्वं न वा सर्वात्मत्वं न वा भूमाभेद इति, सत्यम्, अनया हि श्रुत्या प्रत्यगभेदेन भूमाख्यब्रह्मणः स एवेति तच्छब्देन प्रसञ्जितं पारोक्ष्यं व्यावर्तयितुं भूमत्वं चात्माभेदेनोपपादयितुं स्थूलदृष्टिप्रसिद्धाहंकारात्मानमुपदिश्य, तस्य सर्वगतत्वादिकं चैतन्यां-

---

## पूरणी

स्मच्छब्दरूपम्; अतो न दकारान्तास्मच्छब्दान्निष्पन्नाहंपदसमानार्थतेत्यनुशयादाह—**केवलस्येति**। तथा च सार्वात्म्योपदेशानुपपत्तेरिति भावः। अतो भेदनिर्देशादहमनुभवगोचरातिरिक्तात्मसिद्धिरिति भावः। नन्वन्तःकरणे सार्वात्म्योपदेशः आदित्यो जगन्मय इतिवत् ज्ञप्तिहेतुत्वेन गौणतयाऽन्यथा सिद्ध इत्यरुचेराह—**स एवाधस्तादिति**। जीवब्रह्माभेदपरवाक्ये तत्प्रमेयाभेदोपयोग्यर्थ एव प्रदर्शनीयः। न च परमतसिद्धान्तःकरणभेदादिकं तदुपयोगि। किं तु कर्तृत्वादिविशिष्टाज्जीवात्मनो भेद इति भेदनिर्देशद्वारा तद्बोधकश्रुतावहंकारपदं कर्तृत्वादिविशिष्टार्थम्। तच्चान्तःकरणावच्छिन्नमिति तत्परमेव युक्तमिति भावः। यद्यप्यस्मदभिमतज्ञानाद्याश्रयान्तःकरणपरतयैवाभिमतभेदसिद्धिः, तथापि सार्वात्म्योपदेशादेः केवलेऽनन्वयात्तदवच्छिन्नपरत्वमुक्तमिति मन्तव्यम्। **भूमाख्येति**। यद्यपि भूमशब्दो भावप्रत्ययान्ततया बहुत्वार्थः, तथाप्यल्पत्वनिवृत्तिलक्षणया ब्रह्मपर इति भूमाख्येत्युक्तम्। यद्यप्यत्र श्रुतौ

नमुपदिश्य "अथात आत्मादेशः" इत्यात्मनोऽहंकारात्पृथङ्निर्देशेनात्मनोऽन्यत्वात् अन्यथा भेदनिर्देशवैयर्थ्यात् ॥

नन्वेवं परमात्मनोऽपि भेदप्रसङ्गः, "स एवाधस्तात्"

दीपनम्

शेनोपपाद्यत इत्यहंकारातिरिक्तो निष्कृष्ट आत्मोपादिश्यत इत्याह—**उपदिश्याथात आत्मादेश इतीति**। "अथात आत्मदेशः, आत्मैवाधस्तादात्मोपरिष्टादात्मा पुरस्तादात्मा दक्षिणत आत्मा पश्चादात्मोत्तरत आत्मैवेदं सर्वं" इति श्रुत्या भेदनिर्देशेनेत्यर्थः। अन्यथा भेदनिर्देशवैय्यर्थ्यादिति ॥

यथाश्रुतमादाय शङ्कते—**नन्वेवमिति**। [1] अज्ञायमानभेदवत्त्वे सति पृथङ्निर्दिश्यमानत्वस्य हेतोर्विवक्षितत्वान्न ब्रह्मणि व्यभिचार

पूरणी

भूमपदं नास्ति, तथापि "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति"इति पूर्ववाक्ये भूमपदनिर्दिष्टस्य ब्रह्मणोऽत्र तच्छब्देन परामर्शात्तथोक्तिः। "स एवाधस्तात्"इत्यादि "अथातोऽहंकारादेशः, अथात आत्मादेशः" इत्यशेषवाक्यजातं जीवब्रह्माभेदप्रमित्यर्थम्। तत्र "स एवाधस्तात्" इत्यादिवाक्येन सर्वात्मकं ब्रह्मोपदिश्य उत्तरवाक्यद्वयेन तल्लक्षणलाक्षिततया जीवस्य तदभेदं दर्शयति। तत्रापि प्रथमं सूक्ष्मप्रत्यगात्मनो दर्शयितुमशक्यत्वात्स्थूलदृष्टिप्रसिद्धशबलितात्मानमहंकारं श्रुत्या दर्शयतीति नात्राहंकारपदमन्तःकरणमात्रपरमनिरुद्धपरं वा किं त्वहमनुभवगोचरान्तःकरणावच्छिन्नचैतन्यपरमिति न परमतासिद्धप्रमातृत्वादिविशिष्टाहंकारातिरिक्तात्मसिद्धिरिति प्रघट्टार्थः ॥

**यथाश्रुतमिति**। अनन्यथासिद्धप्रकरणादिसंवलितभेदनिर्देशस्य तत्साधकत्वोक्तेरित्यर्थः। **अज्ञातेति**। अहंकारात्मानौ परस्पर-

1 अज्ञातभेदवत्तयेति व्याख्यानुसारी पाठः.

**इत्यादिना तस्यापि पृथङ्निर्देशादिति, चेन्न; तयोर्भेदस्य प्रत्यक्षसिद्धत्वेन श्रुत्यनपेक्षत्वात्। भेदे तयोः सर्वात्मत्वोप-**

---

## दीपनम्

इत्याह—**न तयोरिति**। अथ वा यद्यप्यहंकारादिवात्मनः परमात्मनोऽपि पृथङ्निर्देशोऽस्ति, तथाप्यहंकारादात्मनो भेदानिर्देशस्य भेदे तात्पर्यम्; फलवत्यज्ञातेऽर्थे श्रुतेस्तात्पर्यनियमात्। ब्रह्मभेदश्रुतेस्तु न तत्र तात्पर्यम्, श्रुतिव्यतिरेकेण नाहमीश्वर इति प्रत्यक्षेणापि तस्य सिद्धत्वात्, भेदज्ञानादनर्थश्रवणाच्च। अहमिति ज्ञानस्य वक्ष्यमाणविषया चिदचिद्विषयतया तत्प्रत्याय्यभेदस्याप्यहमतिरिक्तात्मनिष्ठत्वात्तस्य वक्ष्यमाणविषया [1]अपुरुषार्थत्वाच्चेति नात्मनो ब्रह्मभेदः श्रुत्यर्थः। अनहंकारात्मत्वं तु श्रुतिसंमत एवेत्यभिप्रेत्याह—**न तयोरिति**। **सर्वात्मत्वेति**।

---

## पूरणी

भिन्नौ, अज्ञातभेदभिन्नत्वे सति पृथङ्निर्दिश्यमानत्वात्, यन्नैवं तन्नैवम्, व्यतिरेकेणाभिन्नब्रह्मवदित्यनुमानमिति भावः। ननु नानुमानविषया भेदः साधितः, किं तु श्रुतिविषयेत्यस्वरसादाह—**अथवेति**। **फलवतीति**। अहंकारात्मभेदस्य प्रमाणान्तराज्ञातत्वात् ब्रह्मानन्दैक्यात्मकफलवत्त्वाच्चेत्यर्थः। **अनर्थेति**। "एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इति श्रुतेरित्यर्थः। देवगवोत्तानवहनादावज्ञातेऽप्यफले अग्नेर्हिमनिवर्तकत्वादौ फलवत्यपि ज्ञाते न श्रुतेस्तात्पर्यमित्युभयोपादानं द्रष्टव्यम्। ननु नाहं ब्रह्मेति प्रत्यक्षेणाहंकारब्रह्मभेद एव प्रतीयते नात्मब्रह्मभेद इत्यत्राह—**अहमिति ज्ञानस्येति**। न्यायतोऽपि न भेदज्ञानं पुरुषार्थहेतुरित्याह—**तस्येति**। भेदज्ञानस्यानन्दैक्यात्मक-

---

[1] अपुमर्थत्वा—**ख, च.**

## दीपनम्

जीवब्रह्मणोर्भेदे हि "स एवेदं सर्वम्, आत्मैवेदं सर्वं" इति तयोः सर्वात्मत्वोपदेशो नोपपद्येत । नचेयं श्रुतिः सर्वगतत्वमात्रपरेति वाच्यम्; तादात्म्यश्रुतेरभेदार्थत्वात् । न च "स एवाधस्तात्" इत्युपक्रमानुसारेणोपसंहारोऽपि सर्वगतत्वपरतया नीयते, एकस्मिन्वाक्ये उपक्रमानुगुण्येनैवोपसंहारस्य नयनादिति वाच्यम्; उपक्रमेऽपि तस्य तदर्थत्वा-[1]निर्णयात् । सन्देहे चाभेदपरवाक्यशेषबलेनैवोपक्रमस्य नयनात् । न च

## पूरणी

पुरुषार्थहेतुत्वाभावादित्यर्थः । सार्वात्म्योपदेशानुपपत्तिहेत्वन्तरेण श्रुतेर्जीवब्रह्मभेदपरत्वाभावं दर्शयतार्थात्तदुपदेशात्मकश्रुतिबलेनापि कर्तृत्वादिविशिष्टाहंकारात्मभेदः सिद्ध्यति । कर्तुरात्मत्वे सार्वात्म्योपदेशायोगादिति दर्शितमित्याह—**अनहंकारेति** । यद्वा ननु सार्वात्म्योपदेशान्नाभेदसिद्धिः; अहंकारे व्यभिचारादित्यत्राह—**अनहंकारेति** । अहंकारस्यानात्मत्वमसर्वात्मत्वमित्यर्थः । तदुपदेशस्य चैतन्यात्मविषयत्वेन वक्ष्यमाणत्वान्न व्यभिचार इति भावः । जीवाहंकारभेदे तु न किंचिद्बाधकमिति फलितार्थः । **एकस्मिन्वाक्य इति** । अन्यथा विरुद्धार्थद्वयस्यैकत्रासंभवेन वाक्यभेदः स्यादित्यर्थः । **उपक्रमेऽपीति** । न चाधस्तादित्याद्यधिकरणश्रुत्या तद्गतत्वार्थनिर्णय इति वाच्यम्; प्रथमार्थेऽप्यस्तातिप्रत्ययविधेरिति भावः । "अक्ताः शर्कराः" इत्यत्रेव वाक्यशेषादर्थनिर्णय इत्याह—**सन्देहे चेति** । ननु सर्वात्मकत्वं सर्वाभेदः, ब्रह्मणश्चिद्रूपस्य कथं जडाभेद इत्याशङ्क्य निषेधति—**न च**

[1] निश्चयात्–ख. च.

## दीपनम्

विरोधात्कथं ब्रह्मणो जडाभेद इति वाच्यम् ; अध्यस्तस्य ह्यधिष्ठानमेव स्वरूपं न त्वन्यत्, न हि रज्जुसर्पस्य रज्जुव्यतिरिक्तं स्वरूपमस्तीति न विरोधः । न चैवमहंकारादपि भेदानुपपत्तिः, न हीयं श्रुतिरात्मनोऽहंकाराद्भेदं प्रतिपादयति ; किं त्वनहंकारत्व[1]मात्रम् । [2]तच्च तस्य

## पूरणी

**विरोधादिति** । तदात्मकत्वं हि तदभिन्नसत्ताकत्वम्, न तु तदैक्यम्; तच्च कल्पितभेदेनोपपन्नमित्यभिप्रेत्याह—**अध्यस्तस्य हीति** । जीवाभेद इति क्वचित्पाठः । तत्राहंकारावच्छिन्नकर्त्रात्मना कथं ब्रह्माभेद इत्याशङ्क्य प्रमातृत्वादेरात्मन्यध्यस्तत्वेन परमार्थतस्तद्विरहात्स्वरूपेणैक्योपपत्तिः । यद्यध्यस्तप्रमातृत्वादिकमधिष्ठानात्माभिन्नसत्ताकं स्यात् तदा भूतलादिज्ञानाद्घटादिवदात्मस्वरूपज्ञानात्तदनिवृत्तिप्रसङ्गे [3]स्वरूपेणात्मैकत्वं न स्यात् । न ह्येवमित्याह—**अध्यस्तस्य हीति** । ननु जीवब्रह्माभेदवदहंकारब्रह्माभेदस्यापि मानान्तराज्ञातत्वात्कर्तृरानन्दैक्यपुरुषार्थपर्यवसानसंभवाच्च तत्र श्रुतेस्तात्पर्यं स्यादिति चेन्न ; विरोधेन तदभेदस्य बाधिततया तत्र श्रुतितात्पर्यासंभवात् जीवाहंकाराभेदस्य मानान्तरज्ञातत्वे जीवाभिन्नब्रह्माभेदस्यापि ज्ञानाच्चेति भावः । ननु यद्यध्यस्तमधिष्ठानान्नान्यत्तर्ह्यहंकारस्याप्यात्मन्यध्यस्ततया ततस्तद्भेदो न स्यादित्याशङ्क्य निषेधति—**न चैवमिति** । भेदं सत्तावच्छेदकभेदम् । **अनहंकारत्वमात्रं** तद्भेदमात्रम् । अधिष्ठानात्सत्तावच्छेदकभेदाभावेऽपि तदनवच्छेदकभेदोऽस्त्येव । अन्यथा तत्त्वापत्तेः, तादात्म्यानुपपत्तेश्च । अतोऽत्रापि श्रुतिरहंकारात्मनोः सत्तानवच्छेदकभेदं प्रतिपादयतीति न विरोधः । न चैतादृशभेदस्याहमिति तादात्म्यानुभवसिद्धतया श्रुतिप्रमेयत्वानुपपत्तिः ; तदनुभवस्य नाहं ब्रह्मेत्यादिवत् स्फुटं तद्भेदानवगाहित्वात् । अन्यथा विवादानुपपत्तेरिति दिक् । ननु भेदे सति तस्य सत्तानवच्छेदकत्वं कथमित्याशङ्क्याह—**तच्चेति** ।

---

1 मात्रत्वम्—च. 2 तच्चास्य—ख. 3 णात्मैकं न—ट.

**देशायोगाच्च। अहंकारे [1]च तदुपदेशस्य तदभिन्नचैतन्यविषयत्वात्। एवं "स एष इह प्रविष्ट आ नखाग्रेभ्यः" इति जगत्स्रष्टुः शरीरे जल इव सवितुः प्रवेशवाक्यमपि तत्र मानम्। न**

## दीपनम्

मिथ्यात्वेनैवोपपद्यत इत्यर्थः। नन्वेवमहंकारस्यापि सर्वात्मत्वादिप्रसङ्गः, "अहमेवेदं सर्वं" इति श्रुतेरित्याशङ्क्य न हि सा अहंकारस्वरूपपरा, किं तु तद्द्वारेण प्रत्यगभिन्नब्रह्मस्वरूपपरेति तदवच्छिन्नचैतन्यस्य स्वरूपेण सार्वात्म्यपरेति सापि मुख्यार्थेत्याह—**अहंकार इति। जल इति।** न हि पूर्णस्य परमात्मनः सर्पस्य बिल इव प्रवेशः संभवति। नापि [2]पाषाणे मण्डूकवत्परमात्मनस्तत्र जीवरूपेण परिणाम एव प्रवेश इति वाच्यम्; जीवस्यानादित्वेनोत्पत्त्ययोगात् परमात्मनो निर्विकारत्वश्रुतेश्च। तस्मादपरिच्छिन्नस्याप्याकाशस्य जले प्रतिबिम्बदर्शनात्, अन्यथा अल्पजलाधारे भाजने बहुदूराकाशानुभवायोगात्, परमात्मनः

## पूरणी

तत् तादृशभेदवत्त्वम्। समानसत्ताकधर्मिद्वयभेदस्य सत्तावच्छेदकता यथा घटपटोभयभेदस्य। आत्माहंकारभेदस्तु न तथा, अहंकारस्य मिथ्यात्वादात्मनश्च सत्यत्वात्। अतः सत्यात्ममिथ्यावस्तुभेदः सर्वोऽपि तादृश इति भावः। ननु न तत्राकाशस्य प्रतिफलनं, किं त्वभ्रनक्षत्रादेः, जलान्तस्स्थाकाश एव च तद्वत्तया प्रतीयत इत्याशङ्क्याह—**अन्यथेति**। जलस्यागाधतां व्यावर्तयितुमल्पेत्युक्तम्। तदपरिच्छिन्नतां व्यावर्तयितुं भाजन इत्युक्तम्। गाधपरिमितजलेऽपरिच्छिन्नसाभ्रनक्षत्राकाशस्य दूरस्थत्वेनानुभवस्तत्प्रतिफलनं विना

---

[1] तु—ख.  [2] पाषाणस्थम—च.

**च प्रविष्टस्यान्तर्यामित्वमेव न जीवत्वमिति वाच्यम्; अप्रविष्टस्यापि [1]करणत्ववन्नियन्तृत्वोपपत्तेः। प्रविष्टे प्राणनादेर्मौढ्यादेश्च निश्चितजीवधर्मस्य श्रवणाच्च।**

दीपनम्

[2]पूर्णस्याविद्यातत्कार्यप्रतिबिम्बभाव एव प्रवेशः। प्रतिबिम्बितं हि सवित्रादिकं तत्र प्रविष्टमिव दृश्यत इति तस्य प्रवेशशब्देनानुवादोपपत्तेः। प्रतिबिम्बं च बिम्बादनन्यदिति वक्ष्यतीतीयमपि श्रुतिरहंकारातिरिक्तात्मनि प्रमाणमित्यर्थः। यद्यपि "एष त आत्मान्तर्याम्यमृतः" इत्यन्तर्यामिणोऽप्यात्माभेदमेव श्रुतिर्दर्शयति, तथापि भेदमभ्युपेत्याह— **अप्रविष्टस्यापीति**। तथा च तदर्थं तस्य [3]प्रवेशकल्पनं निष्प्रयोजनम्। न चाप्रविष्टाज्जगत्कारणादन्तर्यामिणो भेदसिद्ध्यर्थं तदिति वाच्यम्; 'नान्योऽतोऽस्ति द्रष्टा" इति श्रुत्या अन्तर्याम्यतिरिक्तद्रष्टृनिषेधात्। कारणत्वनियन्तृत्वयोराविरोधेन तदाश्रयभेदस्यानपेक्षितत्वाच्च। न हि जीवत्वमिव जगत्कारणत्वेनान्तर्यामित्वं विरुद्ध्यत इति भावः। **प्राणनादेरिति**। "स एष इह प्रविष्टः" इत्यस्योत्तरत्र हि

पूरणी

न संभवतीत्यर्थः। **तत्कार्येति** अन्तःकरणसङ्ग्रहः। **प्रविष्टमिवेति**। प्रवेशशब्दस्तत्र लाक्षणिकः। अनुवादे च लक्षणा न दोषायेति भावः। नन्वहंकार एव प्रतिबिम्बरूपोऽस्त्वित्यत्राह— **प्रतिबिम्बितमिति**। प्रमातृत्वादिविशिष्टाहंकारस्य च तदभेदासंभवादिति भावः। **अन्तर्यामिण इति**। प्रतिबिम्बस्यान्तर्यामित्वेऽपि अहंकारातिरिक्तात्मसिद्धेरात्मानमन्तरो यमयतीति प्रकृतान्तर्यामिणोऽनया जीवात्मत्वप्रतिपादनादित्यर्थः। **अतिरिक्तेति**। तथा च तद्भेदो बाधित एवेति भावः। **ननु काल्पनिकभेदेऽप्यतिरिक्तद्रष्टृनिषेधोपपत्तिरित्यत्राह— कारणत्वेति**।

[1] कारणत्वमिव निय— **ग. छ.** [2] पूर्णस्यापि— **ख.** [3] प्रवेशनं— **ख.**

# अनुमानमपि——अन्तःकरणधर्मातिरिक्ताहमनुभवगोचरो

## दीपनम्

"प्राणन्नेव प्राणो नाम भवति वदन् वाक्" इत्यादिश्रुतिः प्रविष्टे प्राणनादिव्यापारं दर्शयति । स च जीवस्यैवेति निश्चितम् । एवं "विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव" इति प्रविष्टे मौढ्यमज्ञानादिकं च दर्शयति । न चैतत्सर्वमन्तर्यामिणः संभवतीति प्रतिबिम्बभावापन्नो जीव एवेत्यहंकारातिरिक्त एवात्मेति भावः ॥

एवं श्रुत्याहंकारातिरिक्त आत्मनि सिद्धेऽपि कस्यचित्कुतर्करसिकस्य कदाचित्संशयविपर्यासादिकं भवेदिति "श्रोतव्यो मन्तव्यः" इत्यादिश्रुत्यभिप्रायानुसारेण श्रुत्यर्थासंभावनानिराकरणार्थमनुमानमाह——**अनुमानमपीति** । तत्र प्रमाणमिति शेषः । **अन्तःकरणेति** । अन्तःकरणधर्मातिरिक्तो योऽहमित्यनुभवः तद्विशेष्य इत्यर्थः । तथा च पराभिमतात्मत्वस्य न पक्षतेति न सिद्धसाधनम् । अन्तःकरण-

## पूरणी

एकधर्म्यवच्छेदेनोभयोर्वृत्तिविरोधे भेदकल्पना, यथा किंचिज्ज्ञत्वसर्वज्ञत्वादेर्विरोधेन जीवब्रह्मणो[1], न चात्र तथा ; एकबिम्बत्वावच्छेदेनोभयसंभवादित्यर्थः । **कोशान्** अन्नमयादीन् ॥

ननु श्रुतिप्रमितार्थे सिद्धसाधनेनानुमित्यनुदयात्कथमनुमानोपन्यास इत्यत्राह——**एवं श्रुत्येति** । श्रुतिजनितज्ञानस्य मननात्पूर्वमप्रामाण्यशङ्काकलङ्कितत्वेनासत्कल्पत्वात्तदुपन्यासः । अत एव मननविधिरपीत्याह——**श्रोतव्य इति** । **न सिद्धसाधनमिति** ।

1 अरिमन्मते–**ख**.

**न स्वद्रष्टा, अहमनुभवे प्रकाशमानस्त्वव्यतिरिक्तद्रष्टृको वा, दृश्यत्वात्, घटवत्।**

## दीपनम्

धर्माः परमते संख्यादयः प्रसिद्धाः। सिद्धान्ते च बुद्धिसुखदुःखेच्छादयः[1] तदतिरिक्तो योऽहमित्यनुभवः, परमते आत्मसमवेतं ज्ञानम्, अस्माकं च चैतन्यम्। तस्याप्यहमाकारवृत्त्यवच्छिन्नस्याहमाकारत्वात्। तद्गोचरत्वं च पराभिमतस्यात्मनो नास्मदभिमतस्य। तस्य स्वयंप्रकाशत्वेन स्वपरविषयत्वाभावादिति न पक्षासिद्धिः। न वास्मदभिमतस्यात्मनः पक्षतेत्यर्थः। अस्मदभिमतात्मनोऽपि अहमाकारवृत्तिविषयत्वात्तस्य पक्षताव्यावृत्तये धर्मातिरिक्तेति। परेषामप्रसिद्धिवारणायन्तःकरणेति। **न स्वद्रष्टेति**। न स्वव्यवहारहेतुप्रकाशधर्मवानित्यर्थः। अत्र च याव[2]द्विशेषाभावः साध्य इति न परस्येश्वरज्ञानानधिकरणत्वेनार्थान्तरता। यत्किंचित्प्रकाशनिषेधे पुरुषान्तरीयप्रकाशाभावेन सिद्धसाधनताव्यावृत्तये

## पूरणी

नाशङ्कितः सिद्धसाधनमित्यर्थः। नन्वन्तःकरणमात्रस्याहमनुभवत्वे तद्विषयसुखादावतिप्रसङ्गः, न चाहमाकारतया चैतन्यस्याहमनुभवत्वम्; नित्यसर्वानुगतचैतन्यस्य स्वतो विषयानाकारत्वादित्यत्राह--**तस्यापीति**। **अस्मन्मतेऽपीति** मूलमप्येतदभिप्रायमेवेति भावः। **न पक्षेति**। सिद्धान्ते केवलचैतन्यस्याहमनाकारत्वेनाहमनुभवाप्रसिद्ध्या पक्षासिद्धिदोषाप्रसङ्ग इत्यर्थः। स्वविषयकचैतन्यात्मकदर्शनवत्त्वेन बाधमाशङ्क्याह—**न स्वव्यवहारेति**। अस्मदभिमतचैतन्यप्रकाशस्याधर्मत्वाद्धर्मपदेन तद्दोषव्यावृत्तिरित्यर्थः। नन्वीश्वरज्ञानस्य जगन्निमित्तत्वेन देवदत्तात्मव्यवहारहेतुतया तज्ज्ञानानधिकरणत्वेन सिद्धसाधनतेत्याशङ्क्याह—**अत्र चेति**। **यत्किंचिदिति**। यद्यपि यावद्विशेषणादेव

---

[1] तदन्यश्चाह–क.  [2] विशेषणाभावः–च.

## दीपनम्

स्वेति । स्वकर्मकस्वकर्तृकव्यवहार एव स्वीय इति परज्ञानानधिकरणत्वेन नार्थान्तरता । न च वृत्त्याश्रयतया बाधः, वृत्तेरप्रकाशरूपत्वात् । प्रकाशत्वं ह्यखण्डधर्मतया परैरभ्युपगतो धर्मोऽस्मदभिमतात्मैवेति न वृत्तिः प्रकाशः । अनेन ह्यनुमानेन परप्रसिद्धनिषेधः क्रियत इति नास्मन्मते निषेध्याप्रसिद्धिर्दोषाय । यं प्रति ह्यनुमानं स्वप्रमेयं साधयति तं प्रत्येव हि तत्प्रमेयस्याबाधितत्वमपेक्ष्यते नान्यं प्रत्यपि । एवं च

## पूरणी

नायं प्रसङ्गः; स्वज्ञानवति यावज्ज्ञानाभावस्यासिद्धेः । तथापि मीमांसकं प्रतीदं विशेषणम् । तन्मते ईश्वरज्ञानाप्रसिद्ध्या तदर्थान्तरवारणाय यावद्विशेषणस्यानादेयत्वादिति स्मर्तव्यम् । देवदत्तात्मगोचरव्यवहारहेतुयज्ञदत्तादिज्ञानानधिकरणत्वेन सिद्धसाधनवारणाय—स्वकर्तृकेति । देवदत्तकर्तृकघटादिव्यवहारहेतुघटादिसत्ताबोधकवाक्यप्रयोजनकयज्ञदत्तज्ञानानधिकरणत्वेन तद्वारणाय—स्वकर्मकेति । अत्र स्वकर्तृकत्वमात्रमेवालम्, परकीयज्ञानस्य वाक्यप्रयोगोपक्षीणत्वेनान्यदीयव्यवहाराहेतुत्वात् । अन्यथा देवदत्तात्मसत्ताबोधकवाक्यप्रयोगद्वारा तदात्मगोचरव्यवहारेऽपि हेतुत्वसंभवेन सिद्धसाधनस्य वज्रलेपायितत्वादित्यवधेयम् । वस्तुतस्तु स्वकर्मकव्यवहारः स्वकर्तृकव्यवहारो वेत्यर्थः । तेन साध्यद्वयमभिप्रेतम् । न च स्वकर्मव्यवहारघटितसाध्ये देवदत्तात्मगोचरहेतुपरकीयज्ञानानधिकरणत्वेन सिद्धसाधनता । परस्य परात्मगोचरव्यवहारस्य परोक्षतया तत्कर्मत्वाभावादिति सारम् । **वृत्तेरिति** । जडान्तःकरणपरिणामात्मकवृत्तेस्तत्त्वासंभवादिति भावः । पराभ्युपगमानुरोधेनापि वृत्तिर्न प्रकाश इत्याह—**प्रकाशत्वमिति** । अस्मिन्मते तत् अस्मदभिमतात्मस्वरूपमेव न तु वृत्तिगतः स्वधर्मः, येन वृत्तिः प्रकाशः स्यादित्यर्थः । [1] नन्वस्मिन्मते प्रकाशस्याधर्मतया तद्धर्मघटितसाध्यमप्रसिद्धमित्यत आह—**अनेन हीति** । **अबाधितत्वमिति** । प्रसिद्धत्व-

[1] नन्वस्मन्मते—म.

[1]अस्मन्मतेऽपि वक्ष्यमाणरीत्याहमाकारवृत्तिप्रतिबिम्बितचैतन्यस्याहमनुभवस्य सत्त्वात् न पक्षाप्रसिद्धिः। दृश्यत्वं च प्रकाशविषयत्वम्, प्रकाशश्चा[1]स्मन्मते चैतन्यमेव न वृत्तिरिति न

---

### दीपनम्

द्रष्टारं विना दृश्यत्वायोगात् दृश्यत्वहेतोः पक्षधर्मताबलादहंकारातिरिक्तो वक्ष्यमाणविधया दृग्रूप आत्मा सिद्ध्यति। [2]अस्मिंश्च साध्ये अहमनुभवगोचरस्य पक्षतेति द्रष्टव्यम्। अथ वा मुक्तिकालीनात्मपदार्थो न भवतीति साध्यार्थ इति यथास्थितमेवेति भावः। साक्षादेव स्वाभिमतं साध्यमाह—**अहमनुभव इति**। अहमनुभवे प्रकाशमानो यः स्वव्यतिरिक्तो द्रष्टा तद्वानित्यर्थ। परपक्षे ईश्वरमादायार्थान्तरपरिहारार्थमहमनुभवे प्रकाशमान इति। तत्त्वं चाहमनुभवप्रयुक्तसंशयाद्यगोचरत्वम्। तच्च स्वपरप्रकाशसाधारणमिति न बाधः। यदीश्वरस्याप्यहमनुभवोऽस्तीति ब्रूयात्तदा देवदत्ताहमनुभव इति विवक्ष-

---

### पूरणी

मित्यर्थः। **द्रष्टारमिति**। अहंकारस्य च स्वद्रष्टृत्वनिषेधादिति भावः। ननूक्तसाध्यस्यास्मदभिमतात्मन्यपि सत्त्वात्तद्व्यावृत्तये पक्षविशेषणं व्यर्थमित्याशङ्क्यात्र साध्ये न तदुपात्तम्, किंतूत्तरसाध्य इत्याह—**अस्मिंश्चेति**। अहमनुभवगोचरमात्रस्येत्यर्थः। ननु सकृदुच्चरितशब्दस्य वैरूप्यं न युक्तमित्यस्वरसादाह—**अथवेति**। **परपक्ष इति**। अहमनुभवस्याहङ्कार[3]शबळितविषयत्वादीश्वरस्य च तत्संबन्धविरहेण तथानुभवविरहादिति भावः। ननु प्रकाशमानत्वं प्रकाशविषयत्वं चेदस्मन्मते बाधः, प्रकाशाभिन्नत्वं चेत्परमतेऽप्रसिद्धिरित्यत्राह—**तत्त्वं चेति**। अहमनुभवप्रयुक्तसंशयादिविरहवत्त्वमित्यर्थः। **यदीश्वरस्येति**। अह-

---

1 अस्मिन्मते—**ख**. 2 तस्मिंश्च—**च**. 3 संवलित—**ग**.

**वृत्तिवेद्ये ब्रह्मणि चैतन्याविषये व्यभिचारः। न च ज्ञानाश्रयत्वात्तस्यात्मत्वम्; वृत्तेर्ज्ञानपदवाच्यत्वेऽपि ज्ञानत्ववत्परमते ज्ञानादन्यत्वात्, चैतन्यस्य च सर्वाधारस्याहंकारानाश्रयत्वात्, लाघवेन ज्ञानत्वस्यैव तत्प्रयोजक[1]त्वाच्च। न चैवमहं मुक्तः स्यामिति प्रवृत्त्यनुपपत्तिः; अहंपदार्थस्य चिदचित्संवलिततया अहमित्यनुभवे [2]चिदात्मनोऽपि प्रकाशमानत्वादहमर्थस्य**

दीपनम्

र्णीयम्। **चैतन्याविषय इति।** एतच्च स्वप्रकाशवाद उपपादयिष्यतीति न व्यवहारानुपपत्तिः। "तदात्मानमेवावेत्" इति श्रुतिश्च वृत्तिविषयत्वाभिप्राया। "विज्ञातारमरे केन विजानीयात्"इति श्रुत्या स्पष्टमेव तस्य स्वविषयत्वप्रतिषेधात्। किं जन्यज्ञानाश्रयत्वं तस्य उत नित्यज्ञानाश्रयत्वम्, नोभयमपीति क्रमेणाह—**वृत्तेरित्यादिना। ज्ञानत्वस्येति।** ज्ञानत्वस्यैवाना[3]त्मत्वव्यावृत्तौ प्रयोजकत्वादित्यर्थः। एवमहंकारस्यानात्मत्वे। चिदचित्संवलितत्वं चाग्रे वक्ष्यत इत्यभि-

पूरणी

मनुभवस्य लाघवेनात्ममात्रालम्बनत्वादिति पराभिसन्धिः। तथा चेश्वरद्रष्टृकत्वेनार्थान्तरतेति भावः। **न व्यवहारेति।** तदभिन्नत्वेऽपि तद्व्यवहारोपपत्तेरित्यर्थः। **वृत्तिविषयत्वेति।** इदं चोपलक्षणम्। स्वातिरिक्तवे[4]दितव्याभावपरा वा, तत्समानसत्ताकस्यान्यस्याभावादिति मन्तव्यम्। **केन विजानीयादिति।** नात्र तद्गोचरज्ञानमात्रनिषेधः। तद्विषयवृत्तेरभ्युपगमात्, किं तु स्वरूपज्ञानस्य तद्विषयत्वमित्यर्थः। ननु ज्ञानत्वं न स्वपरमतसिद्धात्मत्वसामान्यप्रयोजकम्; त्वया तदनभ्युपगमादित्यत्राह—**अनात्मत्वेति।** लाघवस्य सप्रतियोगितया प्रतियोगि-

[1] त्वम्—छ. [2] अस्मदात्मनोऽपि—ख.ग.ञ. [3] स्मव्याघृ—च. [4] वेदितव्यस्याभाव—झ.

स्वमुक्तिप्रवृत्त्युपपत्तेः । न चाप्रयोजकत्वम् ; लाघवेन दृश्यत्व-मात्रस्यैवोक्तसाध्यव्याप्यत्वात्, विपक्षे प्रतिशरीरमात्मभेद-प्रसङ्गेन गौरवाच्च । न चालौकिका[1]त्मकल्पनागौरवम्, अस्म-दभिमतान्तःकरणादहंकारात्परैरप्यात्मनो भेदस्याङ्गीकृतत्वात् । अत एवाहंकारः, अहंकारद्रष्टृकः, दृश्यत्वादित्यहंकारान्तरबाधे

## दीपनम्

प्रायः । लाघवेनेति । दृश्ये घटादौ ह्यनात्मत्वं दृष्टम् । तत्र किं दृश्यत्वं प्रयोजकम्, मनो[2]मात्राकरणकज्ञानविषयत्वं वा वक्तव्यम् । तत्र हि लाघवात् दृश्यत्वमेव प्रयोजकमिति दृश्योऽहमनुभवविषयोऽनात्मेत्यर्थः । प्रतिशरीरमिति । यद्यहंकार आत्मा स्यात्तस्य सुखदुःखादिधर्मिणः प्रतिशरीरं भेदः स्यात् । तत्र शरीरे सुखदुःखादि-वैचित्र्यदर्शनात्संसारिणस्तस्येश्वरादपि भेदो वक्तव्य इत्यहंकारात्मत्वे गौरवम् । सिद्धान्ते तु दुःखादिधर्मिणोऽहंकारस्य प्रतिशरीरं भेदेऽपि चैतन्यमात्रे भेदभेदक[3]योरनुपलम्भात् श्रुतिन्यायसिद्धात्मैक्यस्य बाधका-

## पूरणी

गुरुधर्मं दर्शयति—**मनोमात्रेति**। ज्ञानमात्रे मनसः कारणतया असंभववारणाय मात्रपदम् । न च तादृशेश्वरज्ञानविषयतयात्मन्यातिप्रसङ्ग इति वाच्यम् ; जन्यत्वस्य ज्ञानविशेषणत्वान्नञ्व्यत्यासेन मनोमात्रकरणक-ज्ञानाविषयत्वस्य विवक्षितत्वाद्वेति भावः । ननु सिद्धान्तेऽपि पराभितात्मस्थानीयाहंकारस्य प्रतिशरीरं भेदकल्पना समानेत्यत आह— **सिद्धान्ते त्विति**। परमते जीवपरमात्मनोर्भेदोऽपि वक्तव्यः । तथा-न्तःकरणजीवयोरुभयोरपि प्रतिशरीरं भेदश्च, [4]नास्मन्मत इति लाघव-

[1] त्मभेदकल्प—ग. [2] मात्रका—च. [3] योरप—च. [4] नास्मन्मतेऽपीति

**तस्यैव द्रष्टृत्वमिति प्रत्युक्तम्। अहंकारस्यात्मत्वे दुःखादेरत्यन्तोच्छेदासंभवेन मुक्त्यर्थिप्रवृत्त्यनुपपत्तेश्च । "स्वमपीतो भवति" इति स्वापेऽहंकारस्य विलयश्रवणाच्च तस्यानात्मत्वम्। अहंकारस्य सुषुप्ता[1]वनाशे जाग्रतीवाहमित्यनुभवः स्यात्।**

**दीपनम्**

भावात्तत्र लाघवमिति तदेव [2]युक्तमित्यर्थः। **अत्यन्तेति।** कार्यस्य हि परिणाम्युपादानमेव स्वरूपमिति तदुच्छेदादृते न तस्यात्यन्तिकोच्छेदः। उपादानं चाहंकारः। आत्मा चेत् तदुच्छेदे सति कस्य मोक्षः पुरुषार्थ । अनुच्छेदे च न दुःखादेरात्यन्तिकोच्छेद इत्यर्थः। पूर्वोक्तानात्मत्वसाध्ये ध्वंसप्रतियोगित्वमपि हेतुमाह—**स्वमिति।** स्वं स्वात्मानमपीतो भवति। अपिपूर्वस्येतेर्लयार्थत्वात्स्वात्मनि लीनो भवतीत्यर्थः। इदं हि वाक्य स्वापे ब्रह्मणि जीवस्य लयं[3] प्रदर्शयति। न च तस्य स्वरूपेण स संभवति। अतस्तदुपाधिभूताहंकारविलयादेव तद्विलयः श्रुत्यभिमत इत्यहंकारो ध्वंसप्रतियोगी॥

योग्यानुपलम्भादपि स्वापे तदभावमाह—**अहंकारस्येति।** ननु प्रमाणाभावादेव तदा तदनुपलम्भो न तु प्रमेयाभावादिति, तत्राह—

**पूरणी**

मित्यर्थः। ब्रह्मोपादानव्यावृत्त्यर्थमाह—**परिणामीति। स्वरूपमिति।** कार्योच्छेदप्रयोजकोच्छेदप्रतियोगित्वलक्षणस्वरूपमिहाभिमतम्। ततोऽपरिणामिनोऽपि ब्रह्मणः सत्तानिरूपकतया प्रपञ्चस्वरूपत्वं न विरुद्ध्यत इति ध्येयम्। **अतस्तदुपाधीति।** नचाज्ञानोपाधेर्लय प्रतिपादकमस्त्विति वाच्यम्; तथा सति मुक्तत्वप्रसङ्गादिति भावः। नन्वहंकारातिरिक्तात्मसिद्धौ तस्य जीवोपाधितया तल्लयप्रतिपादकमिदं भवेत्, तदेव विप्रतिपन्नमित्यनुशयादाह—**अहंकारस्येति** मूले॥

[1] वप्यविनाशे—**ख**.　[2] प्रयुक्त—**च**.　[3] प्रतिपादयति—**छ**.

**जाग्रति क्लृप्तप्रमाणस्य साक्षिणस्तत्रापि सत्त्वात्। अतोऽनुपलम्भात्तदभाव एव। किंचास्ति तावत् "न दृष्टेर्द्रष्टारं पश्येत् न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्यादिवाक्यादहंकारधर्मातिरिक्तं नित्यं ज्ञानम्॥**

---

## दीपनम्

**जाग्रतीति**। औदासीन्यबोधाभ्यां हि लोके साक्षिशब्दः प्रसिद्धः, न च बोद्धापि कर्ता साक्षी न वोदासीनोऽप्यज्ञः। ततोऽत्र साक्षिशब्द आत्मानोऽकर्तृबोधाभिप्रायो द्रष्टव्यः। न तावज्जाग्रति बहिरिन्द्रियेण तदनुभवः; रूपादिहीनत्वात्तस्य। न च मनः प्रमाणमित्युपरिष्टाद्वक्ष्यति। तत श्चात्मस्वरूपचैतन्यसबन्धादेव तदा तत्प्रथत इति यावत्सत्त्वं प्रकाशेत। न च स्वापकाले केनचिदप्यहमित्यनुभूयते। तदा तत्सत्त्वे वा विशेषविज्ञानात्सुषुप्त्यभावप्रसङ्गादित्यनन्यथासिद्धानुपलम्भात्सुषुप्तावहंकाराभाव इत्याह—**अत इति**। नन्वहंकारातिरिक्तात्मनोऽपि ज्ञानान्यत्वे दृश्यत्वादनात्मत्वम्, न च ज्ञानस्वरूपत्वम्; ज्ञानस्यानित्यस्य तदात्मकत्वायोगात्, न च नित्यं ज्ञानं प्रमाणसिद्धमस्तीत्यतो बाधितमनुमानमित्याशङ्क्यात्मनश्चिद्रूपत्वं साधयितुं चक्षुरादिजन्यज्ञानातिरिक्तं नित्यं च ज्ञानमित्यत्र क्रमेण श्रुतिद्वयमुदाहरति—**किं चेति**॥

---

## पूरणी

अनुपलम्भमात्रान्नाभावनिश्चयः, अतीन्द्रियवस्तूच्छेदापत्तेरित्यत्राह—**योग्येति**। लोकसिद्धसाक्षिशब्दप्रवृत्तिनिमित्तं चैतन्ये दर्शयति—**औदासीन्येति**। **तत्सत्त्वे** वेत्यापाततः। अज्ञानवन्नित्यप्रतीतिकाहंकारावभासेऽपि सुषुप्तेरविरोधादिति ध्येयम्। **अनन्यथासिद्धेति**। **अहंकारः** सुषुप्तिकालीनाभावप्रतियोगी, सत्यां निश्चयसामग्र्यामभासमान-

## दीपनम्

ननु "नदृष्टेर्द्रष्टारं" इत्यत्र दृष्टिविषयदर्शनाश्रयः प्रतीयते, तच्च दर्शनं घटादिदृष्टिविषयं मनोजन्यमपि संभवतीति नानेन जन्यज्ञानातिरिक्तं ज्ञानं सिद्ध्यतीति चेन्नः; तदसंभवस्य वक्ष्यमाणत्वात्, तस्य स्पष्टप्रत्यक्षावभासत्वेन न पश्येरिति दुर्विज्ञेयत्वप्रतिपादनायोगात्। मनोजन्याया अपि विषयतया षष्ठ्यन्तदृष्टिपदेनोपात्तत्वाच्च। "न विज्ञातेर्विज्ञातारं विजानीयाः" इति सकलमनोव्यापारं प्रत्यपि तस्य साक्षित्वोपपादनात्। तस्माच्चक्षुरादिजन्याया मनोजन्याया वा वृत्तेः साधकं यच्चैतन्यं तदेव तत्तद्विषयोपधानभेदं चैतन्याद्भिन्नमिव भवतीति तत्संबन्धात्स्वरूपचैतन्यमेव वृत्त्यादीनां द्रष्टृत्युच्यत इति श्रुत्या जन्यज्ञानातिरिक्तं ज्ञानं सिद्ध्यति। एव "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते"

---

## पूरणी

त्वादित्यनुमानात्तन्निश्चय इत्यर्थः। **तस्येति**। घटादिदृष्टिगोचरदर्शनं दुर्विभाव्यमिति श्रुत्यर्थः। मनोजन्यज्ञानपरत्वे च न स युक्तः; मनोजन्यज्ञानस्यापि मनोवेद्यतया प्रत्यक्षेण तस्य निश्चेतुं शक्यत्वादित्यर्थः। ननु घटं जानामीतिवद्घटज्ञानं जानामीति स्फुटमननुभवादस्येव तस्यापि दुर्विज्ञेयतेत्यनुशयादाह—**मनोजन्याया इति**। दृष्टिपदस्य ज्ञेयविषयज्ञानमात्रपरतया द्रष्टृपदस्य तद्गोचरमनोजन्यज्ञानार्थत्वायोगादित्यर्थः। श्रुत्यन्तरानुरोधेनापि दृष्टिपदस्य मनोव्यापारासाधारणज्ञानपरतया न द्रष्टृपदं मनोव्यापारात्मकतज्जन्यज्ञानपरं युक्तमित्याह—**न विज्ञातेरिति**। यद्वा श्रुत्यन्तरे मनोव्यापारगोचरज्ञानस्य दुर्विभाव्यत्वप्रतिपादनादपि जन्यज्ञानातिरिक्तज्ञानसिद्धिरित्याह-**न विज्ञातेरिति**। ननु दर्शनस्य चैतन्यात्मकत्वे तदाश्रयाप्रसिद्ध्या द्रष्टृत्वानन्वय इत्यत्राह—**तत्तद्विषय इति**। दर्शनात्मकतत्तद्विषयोपाहितचैतन्य-

## दीपनम्

इति द्रष्टुरहंकारस्य साक्षिभूताया [1]वृत्तेर्विनाशप्रतिषेधात् सिद्धं तन्नित्यत्वम् । न चेयं श्रुतिरीश्वरज्ञानस्यैवानित्यत्वं प्रतिषेधतीति वाच्यम्; "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति" इति द्वितीयाश्रुत्या जीवस्य विशेषज्ञानाभावे उक्ते स्वरूपनाशमाशङ्क्य "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इत्याह । तथा च यस्य विशेषविज्ञानाभावस्तस्यैव ज्ञान[2]स्येयमनित्यत्वं प्रतिषेधति । न चायमीश्वरे संभवति । अप्रसक्तप्रतिषेधायोगाच्च । तस्मादहंकारादिसाक्षिदृष्टेरेवायमनित्यत्वप्रतिषेध इति भावः ।

---

## पूरणी

स्यानुस्यूतचैतन्याद्विशिष्टाविशिष्टरूपेण प्रातीतिको भेदोऽस्ति. अनुस्यूतस्योपहितचैतन्यात्मकदर्शनेन तादात्म्यसंबन्धात्तत्र द्रष्टृव्यवहारोपपत्तिरित्यर्थः । मनोजन्याया इति पररीत्या । सिद्धान्ते मनसोऽपृथक्प्रमाणत्वादिति ध्येयम् । **स्वरूपनाशमिति** । जीवस्य चैतन्यात्मकतया तस्य ज्ञानाभावकथने तन्नाशाशङ्केत्यर्थः । यद्वै तदिति सुषुप्तौ जीवः किमपि न पश्यतीति यल्लौकिकैरुच्यते तदभिधानं पश्यन्नेव जीवः तत्तदानीं न पश्यतीति भ्रान्त्या विषयविशेषाज्ञानेनेति यावत् । तत् विशेषवस्तु न पश्यतीति हेतुना वेत्यर्थः । न तु सर्वथा ज्ञाननाशोऽस्तीति वाक्यद्वयतात्पर्यार्थः । नन्वेवं ज्ञाननाशादेव तदा तथा लौकिकव्यवहारोऽस्त्वित्याशङ्क्य न हि द्रष्टुरित्यादिश्रुतिस्तन्नाशं निषेधतीत्यर्थः । **अप्रसक्तेति** । यज्ज्ञानानित्यत्वं प्रसक्तं तन्निषेधः; न चेश्वरज्ञाने तथा प्रसक्तिः; तस्य शरीरादिसंबन्धाभावेन तदयोगात् । प्रसक्तनिषेधपरत्वे संभवत्यप्रसक्तनिषेधपरत्वकल्पनायोगाच्चेति भावः । इदं

---

[1] दृष्टेर्विनाश—ख. [2] स्येदमनित्यत्वं—च.

**अस्ति च जाग्रति घटादिधारातदाश्रयाहंकारानुसन्धानमेतावन्तं [1]कालमहामिदमनुभवन्नेवासमिति च। न चैतत्तत्काले धारातदाश्रयसाक्षिणमहंकारधर्मातिरिक्तानुभवं विनोपपद्यते। घटगोचरधाराज्ञानेन तदविषयधारातदाश्रययोः स्मृत्यसंभवात्।**

## दीपनम्

तत्रादौ युक्त्यापि श्रुतिसिद्धं चक्षुरादिजन्याहंकारधर्मातिरिक्तं ज्ञानं संभावयति—**अस्ति चेति**। **घटादिधारा** घटादिज्ञानधारा। ततः किम्, तत्राह—**न चेति**। अननुभूते स्मृत्यसंभवादिति भावः॥

तत्रादौ वेद्यज्ञानवादिमतेऽनुपपत्तिमाह—**घटगोचरेति**। ज्ञानं हि स्वविषये स्मृतिमुत्पादयति। न च घटादिगोचरधाराज्ञानस्य ज्ञानं तदाश्रयो वा गोचर इति न ततस्तत्स्मृतिः स्यादित्यर्थः। न चानुव्यवसायात्स्मृतिरुपपद्यत इति वाच्यम्; अनुव्यवसायस्य निरसिष्यमाणत्वात्। किं च तत्तज्ज्ञानानन्तरमनुव्यवसायः, किं वा धारानन्तरम्। नाद्यः; विजातीयज्ञानेन [2]व्यवधाने ध्यानादिरूपधाराविलोपप्रसङ्गात्, इच्छाघटितार्थानुभवसामग्र्यां सत्यां मानसज्ञाना-

## पूरणी

चोपलक्षणम्—"तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति" इति पूर्ववाक्यप्रमितस्य शोकसन्तरणस्य सर्वथा अशोके परमेश्वरेऽयोगात्। "न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यत" इत्युत्तरवाक्यप्रतिपन्न[3]घ्राणाभिव्यक्तगन्धज्ञानस्य च तत्रायोगादिति मन्तव्यम्॥

**तत्रादाविति**। आदौ श्रुतिसिद्धं युक्त्यापि संभावयतीत्यर्थः। **ध्यानादिरूपेति**। विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहात्मकेत्यर्थः। नन्वनुव्यवसायस्यापि घटविषयकतया न विजातीयतेत्यस्वरसादाह—**इच्छेति**। बाह्यार्थानुभवसामग्र्या मानसज्ञानसामग्रीतो

[1] कालं घटमनु-ख. [2] व्यवधानात्-ख. [3] घ्राणजन्यवृत्त्यभिव्यक्त-ग.

## दीपनम्

संभवात्, तत्कल्पने वा तत्सामग्री प्रबलेति [1]तस्यां बाह्यज्ञानाभावप्रसङ्गः। नापि द्वितीयः; विनष्टानां प्रथमादिज्ञानानामनुभवासंभवात्। न च चरमज्ञानस्य मनस्समवधानदशायां सामान्यलक्षणया प्राक्तनज्ञानानुभव इति वाच्यम्; तथापि समयविशेषावच्छिन्नज्ञानमात्रानुभवायोगात्, विजातीयज्ञानव्यवधानानन्तरमपि प्रातरारभ्याप्रहरमिदमद्राक्षमित्यादिप्रतिसन्धानानुपपत्तेश्च, प्रमाणाभावेन तस्या एवासिद्धेः। तथा हि न तावत्प्रसिद्धधूमेषु गृहीतवह्निसंबन्धस्य तर्कानुदयकाले धूमो वह्नि-

## पूरणी

बलवत्त्वान्न तस्यां सत्यामनुव्यवसायसंभवः। बाह्यार्थानुभवसामग्रीमात्रस्याप्रबलत्वेऽपि इच्छाघटितसामग्र्याः सर्वतो बलवत्त्वेन बुभुत्सितवेंकटाचलनायकप्रतिमादिदर्शनादिसामग्र्यां सत्यां तदसंभवादित्यर्थः। **तत्कल्पने वेति।** बाह्यार्थधीसामग्र्यापि मानसज्ञानकल्पन इत्यर्थः। तथा च सर्वत्रानुव्यवसायधाराया अविरामः स्यादिति भावः। सामान्यस्येन्द्रियसंबन्धस्य प्रत्यासत्तित्वात्तत्संबन्धार्थमाह—**मनस्समवधानेति।** **समयेति।** ज्ञानत्वेन सकलज्ञानानुभवः स्यान्न तु समयविशेषावच्छिन्नत्वेनानुसन्धीयमानज्ञानमात्रानुभव इत्यर्थः। ननु ज्ञानत्वेनोपस्थितेषु ज्ञानेषु तत्समयावच्छिन्नार्थान्तरास्मृत्यादिना समयविशेषावच्छिन्नत्वानुमानात्तद्व्यवहारोपपत्तिरित्यस्वरसादाह—**विजातीयेति।** अत्रार्थान्तरस्मृतिसंभवेन तदस्मरणात्मकलिङ्गाभावेन तत्समयावच्छिन्नत्वस्य दुर्ग्रहत्वादित्यर्थः। ननु प्रहरान्तर्भूतपूर्वापरघटिकादिकालोपाध्यवच्छिन्नार्थान्तरास्मरणादिलिङ्गेन घटादिज्ञानेषु तत्समयावच्छिन्नत्वग्रहे विजातीयज्ञानकालोपाधिघटिततदुपाधिसमयाप्रतिसन्धानात्तथा प्रतिसन्धानमित्यनुशयादाह—**प्रमाणेति।** **न तावदिति।** महान

[1] तस्यां [illegible]ना—च·

## दीपनम्

व्याप्यो न वेति संशयबलात्तत्सिद्धिः, अप्रसिद्धधूमसन्निकर्षस्य च तामृतेऽयोगादिति वाच्यम्; पूर्वं धूमो वह्निव्याप्य इति निश्चयाभावात् प्रसिद्धगोचरस्य तस्योपपत्तेः। अयं हि संशयो यत्र धूमे वह्निजन्यत्वमात्रं न विषयीकरोति धूमो वह्निजन्यो न वेति, [1]तददर्शनात्, किं तु तद्व्याप्यत्वम्। तच्च धूमे धूमत्वावच्छिन्नवह्निसबन्धिताकत्वमेव। तच्च प्रसिद्धधूमेष्वज्ञातमिति न संशयानुपपत्तिरिति न सामान्यं प्रत्यासत्तिः॥

नापि ज्ञानेच्छाकृतीनां समानविषयत्वादनागतपाकादेः कृतिसाध्यत्वज्ञानाय तदपेक्षा; तथाविधज्ञानस्यापि प्रवर्तकत्वे रजतत्वेन गृह्य-

## पूरणी

सीयधूमादौ वह्निसंबन्धनिश्चयेऽपि धूमो वह्निव्याप्यो न वेति जायमानः संशयो न प्रसिद्धधूमविषयः; तत्र तत्संबन्धनिश्चयात्, किं त्वप्रसिद्धधूमविषयः। तेन च चक्षुस्सन्निकर्षान्तराभावात्सामान्यं सन्निकर्षः कल्प्यत इति संश[2]यान्यथानुपपत्तिः प्रमाणमुपन्यस्तं तन्न युक्तिमित्यर्थः। व्यभिचारशङ्कानिवर्तकतर्कावतारे तदसंभव इत्यत उक्तं—**तर्कानुदय इति**। धर्मिज्ञानस्यापि पृथक्संशयहेतुत्वादुपन्यस्तं—**पूर्वमिति**। वह्निसामानाधिकरण्यमात्रनिश्चयेऽपि तद्व्याप्यत्वानिश्चयादित्यर्थः। समानविषयनिश्चयस्य च तन्निवर्तकत्वादिति भावः। **वह्निजन्यत्वेति**। वह्निसामानाधिकरण्यमात्रमित्यर्थः। यथाश्रुते नियमगर्भजन्यत्वसंशयस्यापि व्याप्यत्वसंशयतुल्यत्वेनासाङ्गत्यादिति।

अनागतपाकादौ चिकीर्षा तद्गोचरज्ञानसाध्या, घटज्ञानात्पटेच्छाविरहेण समानविषयत्वेन ज्ञानेच्छाकृतीनां हेतुहेतुमद्भावावधारणादनागतपाकज्ञानं च न विधान्तरेणेति तदर्थं पाकसामान्यं प्रात्यासत्तिरेषितव्येति पक्षं दूषयति—**नापीति**। **तथाविधेति**। ज्ञानं सामान्यं

[1] तद्दर्शनात्—च. [2] यानुपपत्त्या—ट.

## दीपनम्

माणे कस्मिंश्चित्तत्त्वेनागृह्यमाणेऽपि रजते सन्निकृष्टेऽपि प्रवृत्त्यादिप्रसङ्गात्। पाकत्वमनागतवृत्ति, अनित्यवृत्तिनित्यधर्मत्वात्, घटत्वादिवदित्यनुमानादिदानीमनागतज्ञानसंभवात्। दृष्टान्ते चानागतवृत्तित्वमाप्तवचनादिना सिद्ध्यति। भविष्यत्कालः पाककालः, व्यवहारकालत्वा-

## पूरणी

प्रत्यासत्तिरिति क्वचिद्रजतत्वग्रहणमुक्तम्। **तत्त्वेनागृह्यमाणे** विशिष्य तत्त्वेनाज्ञायमाने। देशान्तरस्थे देशवैशिष्ट्याज्ञानान्न प्रवृत्तिः; इदंताज्ञानस्यापि तद्धेतुत्वादित्यत उक्तं—सन्निकृष्ट इति। क्वचिद्रजतत्वोपस्थित्यनन्तरं तत्प्रत्यासत्त्या सकलरजतानुभवे सति तस्य पुरोवर्तिरजतविषयत्वात्ततस्तत्र रजतार्थिनः प्रवृत्ति स्यादित्यर्थः। नन्विदंतावगाहीष्टतावच्छेदकप्रकारज्ञानं प्रवर्तकम्, सामान्यासत्तिजज्ञानस्य सन्निकृष्टेदंतानवगाहित्वान्नायं प्रसङ्गः, न चैवं पाकत्वेनानागतपाकज्ञानमपि न हेतुः स्यादिति वाच्यम्; चिकीर्षाया अनागतविषयत्वनियमादनागतेदंतावगाहिज्ञानस्य चासंभवेन सामान्याकारज्ञानस्यैव चिकीर्षाहेतुत्वात्। प्रवृत्तिविषयगोचरप्रत्यक्षं तूक्तरूपेणैव; तथैवान्वयादिदर्शनादित्यनुशयादाह—**पाकत्वमिति**। अनागतत्वं च वर्तमानप्रागभावप्रतियोगित्वम्। तद्वृत्तित्वं च नात्मत्वादाविति तत्र व्यभिचारवारणायानित्यवृत्तीति विशेषणम्। एतद्घटत्वादिव्यावृत्तये नित्यधर्मत्वादिति। ततश्चानागतपाकज्ञाने सति तस्य पाकत्वेन रूपेणेष्टसाधनताज्ञानाच्चिकीर्षादीति भावः। **आप्तवचनादिने**त्यादिपदेन प्रत्यक्षसङ्ग्रहः। कुलालव्यापारदशायां प्रत्यक्षेणानुमानेन वा घटो भविष्यतीति घटत्वादावनागतवृत्तित्वग्रहणात्।

**ननु** पाकत्वमेकफलावच्छिन्नक्रियाक्षणनिचयवृत्तिस्तत्समाहारात्मक उपाधिधर्मः, तस्य च नित्यत्वमसिद्धम्; न चानेकवृत्तित्वं नित्यशब्दार्थः; युगपदुत्पन्नतावद्घटत्वादौ व्यभिचारादित्यपरितोषादाह—**भविष्यादिति**। प्रलये व्यभिचारवारणाय व्यवहारविशेषणम्। पक्षा-

दीपनम्

दिति वा साध्यम्। भविष्यदादिज्ञानं च तवाप्यन्यत एव। व्याप्तिज्ञानं चानुमितिसमानाकारमेव तज्जनकं न तु समानविषयमिति न तदर्थमपि तदपेक्षा।

ननु ज्ञानेच्छा[1]प्रयत्नानां कार्यकारणत्वग्रहाय सामान्यप्रत्यासत्तिः। तथाहि—कदाचिदिष्टसाधनत्वेन ज्ञाने जाते कुतश्चिद्धेतोरनुत्पन्नायां चिकीर्षायां तदनुव्यवसायः सकलेष्टसाधनताज्ञानगोचरो जायते। एवं समयान्तरे प्रतिबन्धादनुत्पादितप्रयत्नेच्छायां जातायां तदनुव्यवसायः।

---

पूरणी

सिद्धिमाशङ्क्याह —**भविष्यदादीति**। कालोपाधित्वसामान्यासत्त्या तेन रूपेण भविष्यत्कालोपाधेरुपस्थितावपि भविष्यत्त्वेन तदुपस्थित्यर्थं प्रमाणान्तरं त्वयापि वाच्यम्। तच्च अयं कालोपाधिः कालोपाध्यन्तरपूर्वः, कालोपाधित्वात्, सम्प्रतिपन्नवदित्यनुमानं व्यवहारप्रलयकालपरिमाणनिरूपकज्योतिरागमो वेति मतद्वयेऽपि तुल्यमिति भावः। वस्तुतस्तु ज्ञानेच्छादीनां समानप्रकारकत्वेन हेतुता न तु समानविषयकत्वेनापि, गौरवात्। नच घटत्वेन पटेच्छापत्तेः समानविषयकत्वमप्यावश्यकमिति वाच्यम्; इच्छायाः प्रकारांशग्रविषयस्वभावतया तदनुपपत्तेः। अस्मन्मते अनिर्वचनीयख्यात्यभ्युपगमेन शुक्तिरजतादीच्छाया अपि तथात्वात् व्यधिकरणप्रकारकेच्छायां दोषस्याप्यन्वयव्यतिरेकासिद्धहेतुत्वकल्पनया वा तद्विरहादेव तदाभावोपपत्तेरिति दिक्। अतो न तदनुरोधेन सामान्यासत्तिताशङ्कापीति तत्त्वम्। व्याप्तिज्ञानमनुमितिसमानविषयत्वेन तद्धेतुः, महानसीयधूमवह्निव्याप्तिग्रहस्य पर्वतीयवह्निविषयत्वं वह्निसामान्यासत्तितां विना नेति मानान्तरमाशङ्क्य निषेधति—**व्याप्तिज्ञानमिति**।

**कुतश्चिदिति**। इच्छाविषयस्य सिद्धत्वभ्रमादित्यर्थः। **प्रतिबन्धादिति**। प्रवृत्तिहेतुभूतोपादानप्रत्यक्षविरहादित्यर्थः। ननु जन्य-

---

[1] च्छाकृतीनां—ख.

## दीपनम्

ततः स्मृत्युपनीतयोः कार्य[1]कारणभावग्रहः। अन्यथेच्छानन्तरं विनष्टज्ञानादनुव्यवसायासंभवान्न तयोः कार्यकारणभावग्रहः, एवं कृतिचिकीर्षयोरिति चेन्मैवम्; कार्यकारणभावग्रहे हि धूमाग्न्योरिव समानप्रकारकज्ञानमुपयुज्यते न तु समानविषयत्वमपि, गौरवात् प्रमाणाभावाच्च। किं च तथापि कथं कार्यकारणभावग्रहः? युगपत्स्मृत्युपनीतयोः पूर्वापरीभावग्रहासंभवात् प्रमाणाभावाच्च। न च स्मृतिः क्रमेणैव भवतीति नियमः; अक्रमेणापि तद्दर्शनात्। किं च सामान्यमप्यनागतव्यक्त्या असंबद्धं कथं तदुपस्थापयेत्। प्रत्यासत्तिर्हि प्रत्याय्याश्रितैव ज्ञानं जनयेत्। न हि भविष्यत्संबन्धोऽप्युत्पद्यमानज्ञान उपयुज्यते। समवायस्तु स्वरूपेण वर्तमानोऽकिंचित्करः। अन्यथा घटत्वेन पटादेरप्युपस्थितिप्रसङ्ग इति न सामान्यं प्रत्यासत्तिः॥

## पूरणी

जनकव्यक्त्युपस्थितौ कथं तद्गतहेतुहेतमद्भावग्रह इत्यस्वरसादाह—**किं चेति। युगपदिति।** पूर्वापरभावग्रहं विना न तद्घटितहेतुहेतुमद्भावग्रहः। सामान्यलक्षणाजनितज्ञानस्य समयविशेषानुल्लिखितया तज्जनितस्मृत्योर्न पौर्वापर्यविषयत्वमिति न सामान्यलक्षणया हेतुतानिर्वाहः। न च स्मृत्योः पूर्वापरभावात् तद्गोचरज्ञानेच्छयोरनुभवपूर्वापरभावसिद्धौ क्षणिकवस्तुनोरुत्पत्तिक्रममन्तरा अनुभवक्रमानुपपत्त्या तत्पूर्वापरीभावानुमानमिति वाच्यम्; ज्ञानेच्छानुभवद्वयजनितसंस्कारद्वयेन समूहालम्बनस्मृतेरपि संभवात्। अनुभवक्रमान्यथाभावेन स्मृतिदर्शनाच्चेति भावः। नन्विच्छापूर्वसमयविशेषावच्छिन्नतया प्रवर्तकज्ञानसजातीयेऽनुभूते तत्समयविशेषावच्छिन्नतज्ज्ञाने तज्ज्ञानत्वसामान्येन तज्ज्ञानानुभवात्तत्स्मृत्योः पूर्वापरीभावविषयत्वोपपत्तिरित्यनुशयादाह—**किं चेति। न हीति।** अनागतसन्निकर्षस्य प्रत्यक्षहेतुत्वेऽतिप्रसङ्गादिति भावः। **अन्यथेति।**

---

1 कार्यकारणत्वग्रहः–च.

## दीपनम्

न चान्धकारप्रतीत्यर्थं सामान्यप्रत्यासत्तिः, प्रौढप्रकाशयावत्तेजोज्ञानं विना तदभावज्ञानासंभवादिति वाच्यम् ; अन्धकारस्य रूपवत्त्वादिना द्रव्यरूपस्यालोकज्ञानानपेक्षत्वेन यावदालोकज्ञानस्यानपेक्षणात् । किं च तत्रापि नात्यन्ताभावज्ञानार्थं निखिलतेजोज्ञानापेक्षा, यत्किंचित्प्रतियोगिज्ञानेऽपि तज्ज्ञानसंभवात् । यावत्प्रतियोगिज्ञानस्य गौरवेणाकारणत्वात् । प्रागभावादिस्तु सामान्यरूपो नैवास्ति । तत्तद्विशेषस्तु तत्तत्प्रतियोगिमात्रविशेषनिरूप्य इति किं सामान्यलक्षणयेत्यलम् । तस्मान्नाहंकारधर्मातिरिक्तं ज्ञान विना धारास्मृतिः सभवती-

---

## पूरणी

घटत्वसमवायस्य पटेऽपि सत्त्वात्तस्यैकत्वादित्यर्थः । तथा च तत्तद्व्यक्तिनिरूपितवर्तमानसंबन्धस्य सन्निकर्षतया तत्रोपयोगादिति भावः ॥

**द्रव्यरूपस्येत्य**नन्तर व्यवहारार्थमिति शेषः । **तत्रापि** तमसः आलोकाभावत्वपक्षेऽपि । **यत्किंचिदिति** । सामान्यात्यन्ताभावज्ञानस्य प्रतियोगितावच्छेदकावच्छिन्नयत्किंत्प्रतियोगिज्ञानसाध्यत्वादित्यर्थः । **प्रागभावादिस्त्विति** । त्वया तदनभ्युपगमात् सामान्यकार्यापत्तिरूपबाधकाच्चेति भावः । इदं च वस्तुगतिमनुरुद्ध्योक्तम् । सामान्यप्रागभावादिसत्त्वेऽपि तदत्यन्ताभाववद्यत्किंचित्प्रतियोगिज्ञानादेव तज्ज्ञानसंभवादिति ध्येयम् । **तत्तद्विशेष इति** । तत्तत्प्रागभावादिविशेषज्ञानस्य प्रतियोगिविशेषावच्छिन्नज्ञानाधीनत्वाद्विशेषज्ञानस्य च सामान्यलक्षणया असंभवादित्यर्थः । ननु वह्न्याद्यनुमितेर्विशेषणज्ञानजन्यत्वानुरोधेन सामान्यलक्षणासिद्धिरित्याशङ्क्याह—**इत्यलमिति** । विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वासिद्धेः विशेषणतावच्छेदकवाह्नित्वप्रकारकज्ञानस्य च

**न चेदं न स्मरणं किं त्वनुभव एवेति वाच्यम्; विनष्टानां तेषां प्रत्यक्षासंभवात्, ततो व्यवहाराभावेनानुमानायोगाच्च। न चार्थस्मृत्या ज्ञानानुमानम्; मध्ये स्मरामीति**

---

## दीपनम्

त्यभिप्रेत्य एतावन्त कालमिदमहमन्वभूवमिति ज्ञानं स्मृतिरनुभवो वेति विकल्प्याद्य निरस्य द्वितीयमाशङ्क्याह—**न चेदमिति**। अनुमानेऽपि किं व्यवहारो लिङ्ग, उत स्मृतिः, आद्य आह—**तत इति**। विनष्टाद्धारारूपज्ञानात्समयान्तरे व्यवहाराभावादित्यर्थः। तावत्समयावच्छिन्नार्थस्मृत्या तन्मूलानुभवोऽनुमीयत इति द्वितीयमाशङ्क्याह—**न चार्थेति**। व्याप्यतावच्छेदकप्रकारेण व्याप्यज्ञानं ह्यनुमितिजनकम्। स्मृतौ च स्मृतित्वमेव ज्ञानव्याप्यतावच्छेदकम्। न च तत्पूर्वं नियमेन तत्प्रकारकज्ञानमस्तीति न तल्लिङ्गजन्यं ज्ञानमित्यर्थः। तदभ्यु-

---

## पूरणी

तां विनापि संभवादिति भावः। **धारास्मृतिरिति**। नन्वतिरिक्तज्ञानेऽपि कथं स्मृतिः, संस्कारस्यानुभवनाशजन्यत्वात् नित्यतज्ज्ञानस्य नाशायोगात्, घटादिवृत्तेश्च धारातदाश्रयगोचरतया तद्विशिष्टसंस्काराजनकत्वादिति चेन्न; धारातदाश्रयाहमाकाराविद्यावृत्तेस्तदानीमुत्पत्त्या ततस्तद्गोचरसंस्कारोपपत्तेः। न च ज्ञानद्वयस्यैकदा विरोधः; अन्तःकरणाविद्यावृत्त्योर्भिन्नोपादानतया तदभावादिति भावः। नन्वर्थस्मृतिमात्रेण न धारानुमानमित्यत आह—**तावत्समयेति**। **व्याप्यतावच्छेदकेति**। अन्यथा प्रमेयत्वेन धूमज्ञानेन वह्न्यनुमित्यापातादिति

**ज्ञानाभावेऽपि तद्दर्शनात् । स्मृतेरनुभवजन्यत्वादज्ञानसंशय[1]विपर्ययदशायामपि तद्दर्शनात् ॥**

**एवं [2]सुखादिव्यवहाराय कल्प्यमपि ज्ञानं लाघवादेकमित्यहंकारधर्मातिरिक्तमेव । दुःखाद्युत्पत्तिविनाशव्यतिरेकेण**

दीपनम्

पेत्याप्याह—**स्मृतेरिति** । तथा च न स्मृत्यन्यद्धारारूपे ज्ञाने प्रमाणं वक्तुं शक्यमिति जन्यज्ञानस्य [3]वेद्यत्ववादे धारानुभवार्थमहङ्कारधर्मातिरिक्तं ज्ञानमेषितव्यमिति भावः ॥

इदानीं सुखादिसाक्षित्वेनापि तन्निरूपयति—**एवमिति** । सुखादिव्यवहारः स्वगोचरज्ञानसाध्यः, व्यवहारत्वात्, संमतवदित्यनुमानाल्लाघवादेकं सिद्ध्यति । तच्चाहंकारधर्मो न भवति; तस्य नियमेनानित्यत्वानुभवात् । ततोऽहंकारधर्मातिरिक्तमेव तदित्यर्थः । न च दुःखज्ञानं नष्टं सुखज्ञानमुत्पन्नमित्यनुभवाल्लाघवमकिंचित्करमेवेत्याह—**दुःखादीति** । न हि घटे सत्येव यथा घटज्ञानं नष्टमुत्पन्नमित्यनुभवः एवं दुःखादौ विद्यमाने दुःखादिज्ञानोत्पत्तिविनाशावनुभूयेते, न वा दुःखादिज्ञाने घटादिज्ञाने चक्षुरादेरिव पृथक्कस्यचित्कारणस्यान्वय-

पूरणी

भावः । **स्मृतेरिति मूलम्** । एतेनास्मरणलिङ्गेनार्थान्तराननुभवानुमानपुरस्सरं धारानुमानं परास्तम् । **न स्मृत्यन्यदिति** । धारारूपज्ञानगोचरप्रतिसन्धानं न स्मृतिव्यतिरिक्तम्, अनुभवस्योक्तरीत्यासंभवात् । स्मरणं चातिरिक्तं नित्यानुभवमन्तरा न संभवतीत्यर्थः । ननु जन्यज्ञानस्य स्वप्रकाशत्वमते नोक्तानुमानेनातिरिक्तज्ञानासिद्धिरित्यत आह—**वेद्यत्वेति** । लाघवस्य तर्कात्मकतया तदनुग्राह्यं प्रमाणमाह—**सुखादीति** । ननु घटज्ञानोत्पत्तिविनाशानुभवोऽपि तथा स्यादित्यत्राह—**यथा घटेति** । वैधर्म्यान्तरमप्याह—**न वेति** । ननु नृत्यज्ञाना-

[1] विपर्यास—**क**. [2] दुःखादि—**ग-छ**. [3] वेद्यत्वादेव—**ख**.

**तत्स्फुरणे तदननुभवात् । अन्यथा अन्वयादिदर्शनासंभवेन ज्ञानसुखादीनां कार्यकारणत्वग्रहासंभवात् ॥**

---

## दीपनम्

व्यतिरेकौ दृश्येते इत्यबाधितलाघवात्तदनुभवैक्ये सिद्धे दुःखादिविषय-विनाशादिविषय एवायमनुभव इत्यर्थः । सुखादिसाधकनित्यसाक्ष्यनु-भवानङ्गीकारे बाधकमाह—**अन्यथेति** । सुखार्थी हि नृत्यादिज्ञाने प्रवर्तत इति तस्य तयोः कार्यकारणभावग्रहो वक्तव्यः । नृत्यादिज्ञानं च निरपेक्षमेव सुखजनकमिति तदनन्तरं तद्भवत्येवेति न सुखात्पूर्वं व्यवसायः संभवति । न च सुखानन्तरं विनश्यदविनश्यतोर्ज्ञानसुखयोः समूहालम्बनमिति वाच्यम्; वर्तमानस्यैव प्रत्यक्षविषयत्वात् । अन्यथा ततः क्वापि निष्कम्पप्रवृत्तिर्न स्यात्, ज्ञानत्वविशेषणज्ञानदशायां तस्य नष्टत्वात् । न च स्मृत्यनुमितस्येष्टज्ञानस्य कारणताग्रहः, प्रत्यक्षेण पूर्वापरीभावाज्ञाने तदयोगात् । न च सुखं सकारणं कार्यत्वादि-त्यनुमानात्तत्सिद्धिरिति वाच्यम्; मनस्संयोगादिजन्यत्वेन सिद्धसाध-

---

## पूरणी

नन्तरं सहकार्यन्तरं विना सुखानुत्पत्तौ तज्ज्ञानानुभवाद्धेतुताग्रहः स्यादित्यत आह—**नृत्यादिज्ञानं चेति** । **विनश्यदविनश्यतोरिति** । सुखोत्पत्तिदशायां विनश्यतो नृत्यदर्शनस्याविनश्यतः सुखस्य चानन्तर-मनुव्यवसाय इति न वाच्यमित्यर्थः । नत्वनुव्यवसायदशायां तद्दर्शनस्य विनश्यत्ता, तस्य द्विक्षणावस्थायित्वेन तदानाशात् । ननु न क्षण-संबन्धः प्रत्यक्षगोचरः, किं तु स्थूलोपाध्यवच्छेदरूपा वर्तमानता, सा च विनश्यदवस्थेऽपीत्यनुशयादाह—**ज्ञानत्वेति** । तथा च पूर्वक्षणेऽपि तदसत्त्वात्प्रत्यक्षेण न तदनुव्यवसाय इति भावः । नन्विष्टविषयस्मृत्या इष्टविषयज्ञानानुमानाद्धेतुताग्रह इत्याशङ्क्य निषेधति—**न च स्मृतीति** । पौर्वापर्येण ज्ञानसुखयोरुपस्थितौ तद्ग्रहः, तद्रूपोपस्थितिश्च

## प्राभाकरमतम्

**अस्तु तर्हि ज्ञानस्य स्वप्रकाशत्वमिति चेन्न; कार्यस्य रूपादिवत्तदयोगात् ॥**

---

## दीपनम्

नात् । न च जन्यज्ञानजन्यम्; इच्छादेरपि ज्ञानजन्यत्वस्योक्तविधया दुर्ग्रहत्वात् ज्ञानविशेषस्य जनकत्वासिद्धेश्च । सामान्यलक्षणयोपस्थित-योरपि पूर्वापरीभावो दुर्ग्रह इत्युक्तम् । तस्माद्य[1]देष्टज्ञानमुत्पद्यते तदा तान्नियमेन कश्चिज्जानातीति वाच्यम्, एवं तदनन्तरभावि सुखं चेति तयोः कार्यकारणभावग्रह इत्यतस्तदेव सुखादिसाधकं नित्यसाक्षिज्ञान-मवश्यमभ्युपगन्तव्यमित्यर्थः ॥

प्राभाकरमतमादायाशङ्कते—**अस्त्विति** । स्वरूपज्ञाने तदभ्यु-पेत्य जन्यज्ञाने दूषयति—**न कार्यस्येति** । न च कार्यत्वेऽपि स्वप्रकाशत्वं किं न स्यादिति वाच्यम्; तस्य कार्यकारणतादिग्राहक-

---

## पूरणी

प्रत्यक्षेण न स्मृतिलिङ्गकानुमानेनेत्यर्थः । नन्विच्छा जन्यज्ञानजन्या, आत्मविशेषगुणत्वादित्यनुमानात्तत्सिद्धिरित्यनुशयादाह — **ज्ञानविशेष-स्येति** । नृत्यादिज्ञानजन्यत्वासिद्धेरित्यर्थः । ननु तदर्थं सामान्यलक्षणा-भ्युपेयताम्, किमतिरिक्तसाक्षिकल्पनयेत्याशङ्क्याह—**सामान्येति** ।

नित्यज्ञानस्वप्रकाशत्वस्य स्वेनाभ्युपगमादाह—**जन्येति** । **तस्य कार्येति** । स्वसमानरूपप्रत्यक्षाविषयत्वस्य स्वप्रकाशशब्दार्थत्वादिति भावः । अतोऽस्मन्मते आत्मनोऽतिरिक्तवृत्तिविषयत्वेऽपि न दोष इति मन्तव्यम् । ननु स्वव्यवहारार्थं ज्ञानान्तरानपेक्षत्वं स्वप्रकाशत्वम्, न तूक्तरूपम्, भवन्मते स्वसमानरूपप्रत्यक्षान्तराप्रसिद्धेरित्यनुशयादाह—

---

1 यदेवेष्ट—ख. ब.

## दीपनम्

प्रत्यक्षादिविषयत्वेन तदयोगात् लाघवाच्च स्वप्रकाशताया एकवृत्तित्व-संभवे गौरवेणानेकवृत्तिताया अकल्पनात् । यत्कार्यं तदस्वप्रकाशमिति निरुपाधिव्याप्तिभङ्ग[1]प्रसङ्गश्च । न च रूपादावनात्मसमवेतत्वमुपाधिः ; इच्छादौ साध्याव्याप्तेः । न चेच्छादावपि स्वप्रकाशत्वम्; सविषये-च्छाया अपि स्वप्रकाशत्वे अर्थप्रकाशतापत्तेः । नापि प्रमाणाजन्यत्व-मुपाधिः ; स्मृतौ समव्याप्त्यभावात्, प्रमाणाजन्यत्वस्यान्यथापि संभवेन पक्षे साध्यव्यापकत्वाभावाच्चेत्यर्थः ।

---

## पूरणी

**लाघवादिति** । ननु स्वप्रकाशधर्म्यन्तरकल्पनातो वरं क्लृप्तजन्यज्ञाने स्वप्रकाशधर्मकल्पनेत्यस्वरसादाह—**यत्कार्यमिति** । अनौपाधिकत्वम-सिद्धमित्याशङ्क्य निषेधति—**नच रूपेति** । **अर्थप्रकाशेति** । विषयं विना सविषयेच्छायाः प्रकाशायोगात् । तथा च ज्ञानलक्षणलक्षिततया ज्ञानान्तर्भावः स्यादिति भावः । **स्मृताविति** । प्रमाणाजन्याया अपि स्मृतेस्त्वया स्वप्रकाशत्वाभ्युपगमादिति भावः । **प्रमाणेति** । **अन्यथापि** अस्वप्रकाशत्वेनापि । साध्यव्यापकताग्राहकमानाभावादित्यर्थः ।

वस्तुतस्तु अयं घट इति जन्यप्रत्यक्षं न स्वविषयकम् ; स्वेन्द्रि-यसन्निकर्षाजन्यप्रत्यक्षत्वात्, पटप्रत्यक्षवत् । न चाप्रयोजकत्वम् ; प्रत्यक्षमात्रे विषयेन्द्रियसन्निकर्षस्य हेतुत्वेन तेन विना तदनुपपत्तेः । न च स्वातिरिक्तविषयकप्रत्यक्ष एव तद्धेतुता ; लाघवेन जन्यज्ञानप्रत्यक्षतायां तदिन्द्रियसन्निकर्षजन्यत्वस्य प्रयोजकत्वात् । अन्यथा स्वातिरिक्तविषय-कानुमित्यादावेव व्याप्त्यादिधीर्हेतुरिति स्वांशे ज्ञानमनुमित्यादिरूपमपि स्यात् । तथा च सर्वं ज्ञानं मितिमात्रंशे प्रत्यक्षमिति स्वसिद्धान्त-**विरोध** इति दिक् ।

---

[1] प्रसङ्गाच्च—च.

सुखादिसाधनार्थं क्लृप्तनित्यज्ञानस्यैव [1]स्वयं प्रकाशत्वेन निखिलव्यवहारोपपत्तौ जन्यज्ञाने तत्कल्पने प्रमाणाभावात्। मनसः सर्वप्रमाणसहकारिणः पृथक्प्रमाणत्वायोगात्। न हि प्रमाणं प्रमाणान्तरस्य सहकारि, सर्ववृत्तिसाधारणस्य

दीपनम्

नन्वस्वप्रकाशज्ञानस्य कथं स्वविषयसाधकत्वमित्याशङ्क्य सुखादिसाधकतया क्लृप्तनित्यसाक्षिप्रकाशबलात्तदुपपत्तिरित्यभिप्रेत्याह—**सुखादीति**। न च [2]सुखेच्छादिकं स्वयंप्रकाश इत्युक्तम्। अस्तु तर्हि मानसमित्यत आह—**मनस इति**। यथा प्रमाणसहकारिण [3]आलोकादेर्न पृथक्प्रमाणत्वमेवं मनसोऽपीति। अन्यथा घटादिज्ञाने चाक्षुषत्वमानसत्वजात्योः साङ्कर्यप्रसङ्गः। इन्द्रियत्वेन मनःकरणत्वस्य तद्व्याप्तत्वात्॥

पूरणी

**नन्विति**। ज्ञायमानस्यैव ज्ञानस्यार्थसत्तानिश्चयात्मकत्वादित्यभिमानः। नन्वतिरिक्तसाक्षिणं विना कथं सुखादिव्यवहारानुपपत्तिरित्याशङ्क्य तदभावे किं सुखादिकं स्वप्रकाशं मानसं वेति विकल्प्य नाद्य इत्याह—**न च सुखादीति**। सविषयेच्छायाः स्वप्रकाशत्वनिषेधे निर्विषयसुखादेस्तत्त्वं दूरतोऽपास्तमिति भावः।

द्वितीयमाशङ्क्याह—**अस्तु तर्हीति**। **साङ्कर्येति**। यद्यपि मानसत्वं विनान्यत्र चक्षुषत्वाभावान्न परस्परविरुद्धसमावेशलक्षणः सङ्करः, तथापि त्वया विरुद्धत्वेनाभ्युपगतयोस्तज्जात्योरेकत्र समावेशः स्यादित्यर्थः। नन्विन्द्रियत्वेन मनोजन्यत्वं मानसत्वे प्रयोजकम्, चाक्षुषादिज्ञाने मनसो मनस्त्वेन कारणत्वेऽपीन्द्रियत्वेनाकरणत्वान्न मानसत्वमित्यत्राह—**इन्द्रियत्वेनेति**। **तद्व्याप्तत्वात्** प्रत्यक्षव्याप्तत्वात्।

[1] स्वप्रकाश—छ. [2] सुखादिकमिति व्याख्यानुसारी पाठः. [3] आत्मादेः—च.

## दीपनम्

न हि घटादिज्ञाने मानसत्वं कश्चिदनुभवति । इच्छादिकं प्रति मनसो वक्ष्यमाणविषयोपादानत्वाच्च न मनस्तत्र

---

## पूरणी

प्रत्यक्षमात्रं प्रति तदवच्छेदेन मनश्चक्षुरादेः करणत्वाच्चाक्षुषप्रत्यक्षादिकं प्रति जनकस्य मनसस्तथैव करणत्वं स्यादित्यर्थः । मनःकरणत्वव्याप्तत्वाद्वेत्यर्थः । मनसः पृथक्प्रमाणत्वे तज्जन्यसुखादिसाक्षात्कारे तस्य तथा जनकत्वावधारणेनान्यत्रापि तस्य तथैव जनकत्वं स्यादिति भावः ॥

ननु गुणगतजातौ जातिसङ्करो न दोषायेत्यत्राह—**न हीति** । तथाप्यनुभवविरोध इत्यर्थः । अथ वा प्राभाकरमते सर्वं ज्ञानं मितिमात्रंशे प्रत्यक्षम्, तदंशे च न चक्षुःकरणम्, चक्षुषो ज्ञानतदाश्रयसंनिकर्षाभावात्, किं तु मन इन्द्रियत्वेन करणमिति वाच्यम् । तथा च ज्ञाने विरुद्धत्वेनाभिमतयोश्चाक्षुषत्वमानसत्वयोः समावेशः स्यादिति प्रथमपङ्क्तिकार्थः । ननु बाह्येन्द्रियासहकृतमनोजन्यत्वं मानसत्वे प्रयोजकम्; अतो न चाक्षुषादिज्ञानस्य मानसत्वमित्यत्राह—**इन्द्रियत्वेनेति** । लाघवेनेन्द्रियत्वावच्छिन्नमनःकरणत्वमात्रस्य मानसत्वे प्रयोजकत्वादित्यर्थः । विषयाद्यंशभेदेनोभयसत्त्वाभ्युपगममाशङ्क्याह—**न हीति** । ननु विषयसन्निकृष्टमनोजन्यत्वं मानसत्वे प्रयोजकमिति न घटादिचाक्षुषज्ञाने मानसत्वमित्यनुशयादाह—**इच्छादिकमिति** । यद्वा ननु शब्दादेः स्वविषयज्ञानसहकारिणोऽपि पृथक्प्रमाणत्वं दृष्टमित्यपरितोषादाह—**इच्छादिकमिति** । लोके उपादानकरणयोर्भेदादर्शनादिति भावः । अदर्शनमात्रमप्रयोजकमित्यपरितोषादाह—

**तात्पर्यस्य पृथग्वृत्तित्वादर्शनात्, सुखादिविषयानन्तज्ञाने प्रमाणाभावाच्च। स्वप्रकाशेनापि घटादिज्ञानेना**[1]**त्मनोऽसिद्धेश्च।**

---

## दीपनम्

[2]प्रमाणम्। **वृत्तिः** शब्दशक्त्यादिः। असाधारणविषयाभावाच्च न मनः प्रमाणम्। सुखादेर्लाघवसिद्धनित्यानुभवसिद्धत्वात्। एवं मनस एव सर्वप्रमासंभवे प्रमाणान्तरविलोपप्रसङ्गः। शब्दादेरालोकवत्सहकारितयो-पपत्तेरित्यभिप्रेत्याह—**सुखादीति**। **आत्मन इति**। घटादिधारा-कालीनात्मन इत्यर्थः। घटादिज्ञानात्तदाश्रयस्यापि सिद्धिरिति वदन्तं

---

## पूरणी

**असाधारणेति**। न चैवं "मनसा ह्येष पश्यति" इति करणश्रुति-विरोध इति वाच्यम्; आत्मनि [3]स्ववृत्त्यारोपनिमित्ततया तदुपपत्तेः। "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतिरपि चित्तैकाग्रताया दर्शननिमि-त्ततां बोधयतीति न तद्विरोधोऽपीति भावः। लाघवसिद्धेत्युपलक्षणम्—अनन्यथासिद्धसुषुप्त्यनुभवसिद्धेत्यपि द्रष्टव्यम्। ननु शब्दादेरप्यन्वया-नुविधानान्मानान्तरमशक्यापह्नवमित्यत्राह—**शब्दादेरिति**। इदं चापा-ततः—पश्याम्यनुमिनोमीति विलक्षणव्यवहारबलेन प्रमाणान्तरस्य दुरपह्न-वत्वमिति। अथ वा यत्र चक्षुरनुमानादौ पश्याम्यनुमिनोमीति विलक्षण-व्यवहारस्तस्य मानान्तरत्वेऽपि [4]शब्दार्थापत्त्यादौ तथा विलक्षणव्यवहारा-भावेन तदपलापप्रसङ्ग इति भावः। अत एवाह—**शब्दादेरिति**।

---

[1] त्मासिद्धेश्च—ग. [2] कारणम्—ख. च. [3] स्वगतापरोक्षवृत्त्यारोप—ञ.
[4] शब्दार्थावगत्यादौ—ञ.

**ज्ञानस्य स्वस्मादन्य[1]स्मिन्विषय एव संशयादिनिवर्तकत्वाच्च । एवं तदा नेतः परमद्राक्षमित्यज्ञानानुसन्धानार्थं ज्ञानान्तरमावश्यकमिति सिद्धमहंकारधर्मातिरिक्तं ज्ञानमिति ॥**

## दीपनम्

प्राभाकरं प्रत्याह—**ज्ञानस्येति**। ज्ञानं हि यद्गोचरसंशयादिनिवृत्तिस्वभावं तद्गोचरमेव स्मृतिमुत्पादयति। संशयं च स्वान्यस्मिन् स्वविषयविषयकमेव निवर्तयतीति न घटादिज्ञानादात्मस्मृतिरित्यर्थः। **तदा** धाराकाल इत्यर्थः। ननु तदानींतनघटज्ञानधारयैव तदितरगोचराज्ञानानुभव एवायमिति चेन्न, अद्राक्षमिति स्मृतित्वानुभवविरोधात्, घटानुपस्थितिदशायामप्युक्तानुभवदर्शनाच्चेत्यभिप्रेत्याह—इति **सिद्धमिति** ॥

## पूरणी

**प्राभाकरमिति** पुनर्ग्रहणं तन्मतनिराकरणस्य प्रक्रान्तत्वेऽपि मध्ये मनःप्रामाण्यनिषेधस्य नैयायिकमतसाधारणत्वादिति द्रष्टव्यम्। ननु घटज्ञानेनात्मगोचरसंशयाद्यनुवृत्तावपि तज्ज्ञानेनात्मासिद्धौ किमायातमित्याशङ्क्य ज्ञानस्य वस्तुसाधकत्व तदसत्त्वशङ्कानिवर्तकत्वम्, तदभावे तन्न स्यादित्याह—**ज्ञानं हीति**। स्वाभिमतस्वप्रकाशचैतन्यव्यावृत्त्यर्थमाह—**स्वान्यस्मिन्निति**। न चात्मापि घटादिचाक्षुषज्ञानविषय इति युक्तं; रूपशून्यद्रव्यस्य तदयोगादिति भावः। जन्यज्ञानस्य स्वप्रकाशत्वाभ्युपगमेऽपि अतिरिक्तनित्यानुभवे मानमाह—**एवं तदेति मूले**। **धारयैवे**त्यनन्तरमिदानीं स्मर्यमाणयेति शेषः। नन्वद्राक्षमिति दर्शनस्य भूतकालसंबन्धित्वं प्रतीयते, न तद्गोचरज्ञानस्य स्मृतित्वमपि, इत्यनुशयादाह—**घटेति**। [2]घटधारानुपस्थितिदशायामित्यर्थः। यद्यपि तदा [3]घटधाराकालीनाज्ञानप्रतिसन्धानमसंभावितं तथापि धाराया अज्ञानव्याप्तत्वे-

---

[1] स्मिन्स्वविषय-**ग-छ.** [2] घटाधार-**झ.** [3] घटाधार-**झ.**

**नन्वेवं किं वृत्तिकल्पनया, ज्ञानद्वैविध्ये प्रमाणाभावात्। न च जानामीत्यनुभवात्तत्सिद्धिरिति वाच्यम्;** [1]**त्वदभ्युपगतचैतन्यविषयत्वेऽपि तदुपपत्तेः। वृत्तिकार्यस्येन्द्रिय**[2]**संयोगेनापि निर्वाहयितुं शक्यत्वाज्जडत्वस्योभयत्राविशेषादिति चेन्न; कादाचित्कज्ञानं विनापरोक्षघटादेः कादाचित्काविद्यानिवृत्त्यनुपपत्तेः। न चेन्द्रियसंबन्ध एव वृत्तिरिव चैतन्यसहकारी भव-**

---

## दीपनम्

**वृत्तीति।** अन्त करणपरिणा[3]मरूपवृत्तिकल्पनयेत्यर्थः। नन्वेवं सर्वदा सर्वव्यवहारप्रसङ्गः, स्वरूपज्ञानस्य सर्वदा सत्त्वात्। न चाविद्यैव प्रतिबन्धिकेति वाच्यम्; तर्हि स्वरूपज्ञानस्य तन्निवर्तकत्वे सदा तदभावप्रसङ्ग इति न व्यवहारकादाचित्कता, न च ज्ञानादन्यन्निवर्तकमस्तीत्यन्तःकरणपरिणामरूपं वृत्तिज्ञानमेषितव्यमिति, [4]तदाह—**वृत्तिकार्यस्येति।** स्वरूपज्ञानमेव ह्यविद्याप्रतिबन्धकनिवर्तकम्। तस्य च चक्षुःसन्निकर्षः सहकारीति नातिप्रसङ्ग इति भावः। सत्यपीन्द्रियसम्प्रयोगे व्यासङ्गादावविद्यानिवृत्त्यदर्शनाद्वृत्तिरेषितव्येत्याह—**कादाचित्केति।** कादाचित्की या अविद्यानिवृत्तिस्तदनुपपत्ते-

---

## पूरणी

नानुपस्थितावपीत्यर्थः। वस्तुतो धारोपलक्षितप्रातरादिकालीनेतरदद्राक्षमिति प्रतिसन्धानस्य धारोपस्थितिमन्तरापि संभवात्तदभिप्रायेणेत्थमुक्तम्।

**त्वदभ्युपगतेति मूलम्।** विषयावच्छिन्नप्रमातृचैतन्ययोरौपाधिकभेदेनाश्रयाश्रयिभावोपपत्तेरिति भावः। **कादाचित्केति मूलम्।**

---

[1] त्वदभिमत—**ख.** [2] सम्प्रयोगेणा—**छ.** [3] रूपज्ञानक-**च.** [4] तत्राह-**ख. च.**

**त्विति वाच्यम्; आत्माविद्यानिवृत्तौ तदभावात्। न च तत्र शब्द एव सहकारी; अननुगमात्। न च प्रमाणत्वेनानुगमः; प्रमाणशब्दस्य प्रमाकरणार्थत्वेन वृत्तेरावश्यकत्वात्। तस्यानुमानादि[1]साधारणत्वाच्च। तस्माल्लाघवेनापरोक्षवृत्तिरेव तद्धेतुः। एवं ज्ञानपदवाच्यत्वेनापि सा कल्प्यते। स्वरूपज्ञानमात्रस्य ज्ञानपदवद्वाक्यार्थस्य तद्वाच्यत्वायोगात्॥**

---

## दीपनम्

रित्यर्थः। न च समनस्केन्द्रियसंनिकर्षः सहकारी; व्यभिचारादित्याह—**आत्मेति**। **शब्दः** तत्त्वमस्यादिवाक्यम्। **अननुगमादिति**। तथा च साक्षात्कारत्वेनानुगतहेतौ संभवति नाननुगतं कारणं कल्पनीयमित्यविद्यानिवर्तकत्वेन वृत्तिः स्वीकर्तव्येत्यर्थः। **वृत्तेरिति**। **वृत्तीद्धो** बोधो बोधेद्धा वृत्तिर्वा प्रमेति सावश्यकीत्यर्थः। **तस्येति**। तथा चानुमानादेरविद्यानिवर्तकत्वेनातिप्रसक्तस्य न तन्निवर्तकतावच्छेदकत्वमित्यर्थः। नन्वेवं कथं परोक्षवृत्तिः सिद्ध्यतीति चेन्न; तद्व्यवहारेण तत्सिद्धेः। न चानुत्पादितवह्निज्ञानाद्धूमादिबोधाद्वह्न्यादिव्यवहार इति वाच्यम्; अन्यज्ञानादन्यव्यवहारानुपपत्तेरिति। **ज्ञानपदवदिति**। “विज्ञानमानन्दं

---

## पूरणी

तथा च कादाचित्काविद्यावृत्तिः कादाचित्कहेतुजन्या, कादाचित्कत्वात्, घटादिवदित्यनुमानात्तत्सिद्धिरिति भावः। **समनस्केति**। यद्यपि सिद्धान्ते मनसो मध्यमपरिमाणवत्त्वात्सर्वेन्द्रियैर्युगपत्सान्निकर्षसंभवस्तथापि तदसंभवमभ्युपेत्याप्याह—**व्यभिचारादिति**। ननु साक्ष्यनुभवस्य प्रमात्वेन कथं प्रमासिद्धौ वृत्तिः सिद्ध्यतीत्यत आह—**वृत्तीद्ध इति**। साक्ष्यनुभवमात्रस्य ज्ञानविशेषप्रमारूपत्वायोगादिति भावः। **नन्विति**।

---

[1] साधारण्याच्च—ग. छ.

एवं "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिवाक्यादपि [1]तत्सिद्धिः। न च जानामीत्यनुभवोऽपि स्वरूपज्ञानं विषयीकरोति; चैतन्यस्यादृश्यस्य चैतन्यविषयत्वायोगात् संबन्धाभावेन स्वस्य स्वविषयत्वायोगाच्च। न चाभेदः संबन्धः;

---

दीपनम्

ब्रह्म" इत्यादिवाक्येन ज्ञानपदसमभिव्याहृतेन हि ज्ञानात्मकं ब्रह्म बोध्यत इति ज्ञानं वाक्यार्थो न ज्ञानादिसंसर्ग इति वक्ष्यति। ततश्च यो यत्पदवद्वाक्यार्थः न स तत्पदवाच्यः। अन्यथैकैकस्मात्पूर्णवाक्यार्थप्रतीतिप्रसङ्ग इति स्वरूपज्ञानमात्रं न ज्ञानपदवाच्यमिति वृत्तिविशिष्टं वृत्त्युपहितं वा तद्वाच्यमिति वृत्तिरवश्यमभ्युपेया। अत एव ज्ञानमुत्पन्नं विनष्टमिति व्यवहारोऽपि ज्ञानपदवाच्यवृत्तिविषयोऽर्थवानिति भावः।

वेदान्तेति। वेदान्तजन्यज्ञानेनेत्यर्थः। किं चैवं स्वविशेषणविशेष्यतापत्तेरपि जानामीत्यनुभवो न स्वरूपचैतन्यविषयः। [2] न च तदिष्टम्; एकनिरूपितगुणप्रधानभावस्यैकत्रासंभवादित्यभिप्रेत्य निया-

---

पूरणी

**एवं** कादाचित्काविद्यानिवृत्त्युपयोगितया वृत्तिस्वीकार। परोक्षस्थले तदभावादिति भावः। वाक्यार्थस्यापि गवानयनसंसर्गस्य संसर्गपदवाच्यत्वं दृष्टमिति तद्व्यावृत्तये **यत्पदवदिति**। तस्य संसर्गपदवद्वाक्यार्थत्वाभावान्न व्यभिचार इति भावः। विशिष्टशक्तिकल्पनायां गौरवमिति प्रकारान्तरमाह—**वृत्त्युपहितमिति**। इतोऽपि वृत्तिसिद्धिरित्याह—**अत एवेति**। दण्डी पुरुष इत्यत्र पुरुषापेक्षया दण्डस्य गुणत्वं दण्डापेक्षया पुरुषस्य प्रधानत्वं चेत्यत उक्तं—**एकनिरूपितेति**।

---

[1] वृत्तिसिद्धिः—ख. ग. [2] यो न चैतन्यविषय इति भावः—ख-च.

## पूरणी

अपि च घटं जानाति घटः स्फुरतीति सकर्मकाकर्मकविलक्षणानुभवात्स्फुरणातिरिक्तज्ञानसिद्धिः। उभयोरभेदे घटं जानातीतिवद्देवदत्तो घटं स्फुरतीति घटः स्फुरतीतिवद्घटो जानातीति च प्रत्ययप्रसङ्गात्। ननु घट जानातीति ज्ञानकर्मत्वं घटस्यानुभूयते, देवदत्तस्य च तत्कर्मकज्ञानाश्रयत्वम्। घटः स्फुरतीत्यत्र तु विषयतासंबन्धेन स्फुरणाश्रयत्वमात्रं घटस्य तथानुभवविषय इति अभेदेऽपि प्रतीतिवैचित्र्योपपत्तिरिति चेन्न, घटमहं जानामीतिवत्तमहं स्फुरामीत्यपि कदाचित्प्रतीतिप्रसङ्गात्। मम घटः स्फुरतीति स्वसंबन्धिस्फुरणाश्रयत्वेनैव नियमेनानुभवाच्च। किं च ज्ञानेन घटः स्फुरतीति भेदस्य स्फुटमनुभूयमानत्वान्नाभेदशङ्कापीति दिक्।

ननु कथं तवापि स्फुरणाश्रयत्वेन घटानुभवः चैतन्यप्रकाशस्य तदवृत्तित्वादिति चेत्, स्फुरणस्य विषयगतत्वाध्यासेन तदुपपत्तेरित्यलमनेन। तेन स्वरूपेणैकस्यापि चैतन्यस्य विषयावच्छेदोपाधिना भिन्नविषयदर्शनेन विशेषणविशेष्यभावानुपपत्ति ; अन्यथा अहमुपलभ इति चैतन्यालम्बनत्वेनाभ्युपगतप्रतीतेर्दुस्सम्पादत्वादिति दूषणमकिंचित्करम्। वस्तुतस्तु घटादिगोचरस्मृत्यनुकूलसंस्कारजनकतयातिरिक्तवृत्तिरभ्युपेया। अनित्यसप्रकारकनिश्चयजन्यत्वात्संस्कारस्य। अस्मन्मते च ज्ञाननाशस्य तद्धेतुत्वात्सुतरां तदावश्यकता। न च तत्र मानाभावः। संस्कारो हि तस्यैव सूक्ष्मरूपावस्थाविशेषः। स च तत्पूर्वरूपनाशानन्तरमेव युक्तः। तत्स्थितिसमये तदनुपपत्तेः। किं च पूर्वानुभवेन कालान्तरीयस्मृत्युपपत्तये संस्कारकल्पना। सा च सामग्रीवशेन तन्नाशानान्तरमेव युक्ता। अन्यथा पूर्वानुभवस्यैव तावत्पर्यन्तं स्थायित्वोपपत्तौ ज्ञानोत्पत्तिद्वितीयक्षणे सस्कारं प्रकल्प्य तेन तज्ज्ञाननाशकल्पनानुपपत्तेः। न च ज्ञानस्था-

## पूरणी

यित्वस्य योग्यानुपलम्भबाधः ; परमते ज्ञानस्य यावत्सत्त्वं वेद्यत्वासिद्धेः। न च ज्ञानान्तरादिना तन्नाशावश्यकता ; धर्मादिवत्फलपर्यन्तावस्थानस्याप्युपपत्तेः। न चैवं स्मृतेरनुभवाहेतुकत्वे तदन्वयाद्यनुविधानानुपपत्तिः ; संस्कारस्यानुभवावस्थाविशेषात्मकस्य तदवस्थाभेदवदनुभवात्य[1]न्तभेदविरहेण तदुपपत्तेः। अत एव सुषुप्तावन्तःकरणसूक्ष्मावस्थाविशेषोपहितचैतन्यानुभवोऽप्यन्तःकरणोपहितसाक्ष्यनुभव इति गीयते। अन्यथा अवस्थात्रयसाक्ष्यैक्यानुपपत्तेः। एतेनानुभवनाशस्यैव स्मृतिहेतुत्वापत्तौ तज्जनितसंस्कारापलापप्रसङ्गः, न च ध्वंसस्य स्थिरतया सर्वदा स्मृतिप्रसङ्गान्नैवमिति वाच्यम् ; संस्कारपक्षेऽपि तुल्यत्वात् ; सदृशवस्तुदर्शनादिसहकारिकादाचित्कत्वेन स्मृतिकादचित्कत्वस्य ध्वंसेऽपि तुल्यत्वादिति प्रत्युक्तम्। स्मृतेरनुभवजन्यत्वग्राहिप्रत्यक्षप्रमाणविरोधात्। न चानुभवध्वंसस्तद्द्वारम् ; प्रतियोगितदभावयोरेकत्राजनकत्वात्। अन्यथा यागध्वंसस्यैव द्वारत्वे अपूर्वकल्पनाविलयापत्तेरिति दिक् ॥

न चानुभवध्वंसस्य संस्कारहेतुत्वे प्रतिक्षणमनन्तसंस्कारोत्पादप्रसङ्गः, अपेक्षणीयाभावादिति वाच्यम् ; पूर्वसंस्कारस्य सजातीयसंस्कारोत्पादविरोधित्वात्। न चैवं स्मृत्या पूर्वसंस्कारनाशे अनन्तरं तदापत्तिरिति वाच्यम् ; अग्रिमसमयेऽपि पुनः स्मृत्यनुरोधेन तत्संस्कारस्यैकस्मृतिनाश्यत्वासिद्धेः। यदि स्मृतेरपि संस्कारजनकत्वम्, अनित्यसप्रकारकनिश्चयत्वस्य लाघवेन तज्जनकतावच्छेदकत्वात्, तथा च स्मृतिजनितसंस्कारादेव कालान्तरे पुनः स्मृतिरिति मतम्, तथापि न दोषः। तत्संस्कारस्यैव विरोधितया अनन्तसंस्कारानुदयात्। यद्वा अनुभवनाशस्य स्वक्षण एव संस्कारोत्पादकत्वनियमः, अतः प्रतिक्षणं

[1] न्ताभेद—म.

## पूरणी

संस्कारानुत्पत्त्या क्वचिदप्यर्थविशेषे न स्मृतिप्रमोषानुपपत्तिः। नच पूर्ववर्तिन एव हेतुतया कथं स्वकाले तदुत्पादकत्वमिति वाच्यम्; प्रतिबन्धकध्वंसवत्कार्यसहभावेनापि हेतुत्वसंभवात्। स्वोत्पत्त्यनन्तरक्षण एव वा तज्जनकत्वनियमोऽस्तु॥

यत्त्विन्द्रियसन्निकर्षनाशादीनां ज्ञाननाशकत्वेऽननुगमात्संस्कार एव ज्ञाननाशकः कल्प्यते। तच्च ज्ञानजन्यत्व एवेति ज्ञानजन्यसंस्कारो न तन्नाशजन्य इति, तन्न, संस्काराजनकनिर्विकल्पकसंशयादेर्हेत्वन्तरान्नाशस्य वाच्यतया अननुगमस्य तुल्यत्वात्। न च विरोधिगुणवत्त्वेनानुगतरूपेण नाशकता; इच्छादिवद्गुणान्तरेणापि संभवात्। अन्यथेच्छादावपि तत्संस्कारकल्पनापत्तेः। अनुगतकारणनाशत्वरूपेणेन्द्रियसन्निकर्षादिनाशस्यापि तन्नाशकत्वोपपत्तेश्च। न च वृत्तिस्त्वन्मतेऽन्तःकरणपरिणामविशेषः, तच्च द्रव्यम्, द्रव्यस्य च निमित्तकारणनाशेन नाशोऽन्यत्र न दृष्ट इति वाच्यम्, अन्यत्रादर्शनेऽपि निमित्तापेक्षाबुद्धिनाशस्य द्वित्वादिनाशकत्ववदत्रैव कल्पनोपपत्तेः इन्धननाशेनाग्निनाशदर्शनाच्च। न च तत्राग्न्यवयवनाशद्वारा तन्नाशः; तथा कल्पनायां मानाभावात्। वस्तुतस्तु इच्छादिवद्वृत्तेरपि ज्ञानादिविरोधिपरिणामादेव नाशः। न च द्रव्यवति द्रव्यान्तरारम्भविरोधाद्वृत्तिपरिणामसमये परिणामान्तरासंभवः। तथा मतीच्छापरिणामस्याप्यनुदयप्रसङ्गात्। न च सजातीयपरिणामासंभवः; बीजाभावात् पञ्चावधानादौ युगपदनेकज्ञानपरिणामदर्शनाच्च। न च तदसिद्धिः; शब्दरूपरसगन्धस्पर्शान् युगपत्प्रत्येमीति यौगपद्यानुभवात्। न चासौ भ्रमः; बाधविरहात्॥

किं बहुना समूहालम्बनस्थले भिन्नदेशस्थनानाघटादिविषयाकारज्ञानपरिणामानां भेदस्यावश्यकतया तद्यौगपद्यस्य सर्वसिद्धत्वात्।

**भेदाभावस्य विशिष्टप्रत्ययविषयत्वात् । स्वरूपमात्रस्याविशिष्टप्रत्ययसाधारणस्य विशिष्टधीनियामकत्वायोगाच्च । कथं**

## दीपनम्

**मकत्वायोगाच्चेति** चकारः। घटपदस्य घटत्वविशिष्टार्थत्वात् स्वरूपपदस्य च व्यक्तिमात्रार्थत्वात्, विशिष्टस्वरूपयोश्च तादात्म्य[1]सभवान्न

## पूरणी

अतो विरोधिज्ञानादिपरिणामात्पूर्वज्ञाननाशः। सुषुप्तिप्राक्कालीनज्ञानस्य तु कालविशेषाददृष्टविशेषाद्वा नाशः। मुक्तिप्राक्कालीनचरमानुभवसंस्कारादेः कालविशेषान्नाशस्य परैरभ्युपगन्तव्यत्वादिति सर्वमवदातम्। तथा च ज्ञाननाशजन्यत्वात्संस्कारस्य तदर्थं वृत्तिरेषितव्या। ननु जन्यज्ञानसिद्धावनित्यसप्रकारकनिश्चयत्वस्य संस्कारजनकतावच्छेदकत्वकल्पना, जन्यज्ञानमेवास्माभिरपलप्यत इति कुतस्तदवकाश इति चेत्, न तावज्जन्यज्ञानमात्रापलापः; स्मरामीति स्मृतिवृत्तेरनुभवसिद्धत्वात्। न च स्फुरणं तथानुभवविषयः; व्यवहितादेः स्मर्यमाणस्य स्फुरणावच्छेदविरहात्। तदाकारवृत्तिं विना स्फुरणसंबन्धानुपपत्तेश्च। नापि जन्यानुभववृत्तेरपलापः; परोक्षे वह्निमनुमिनोमीत्याद्यनुभवेन तद्वृत्तेरुक्तरीत्यावश्यस्वीकर्तव्यत्वात्। किं त्विन्द्रिय[2]सम्प्रयोगादिनैवावरणनिवृत्तिसंभवेऽनावृतसंवित्तादात्म्येन घटादेः स्फुरणोपपत्तेः किं तद्वृत्त्येत्यपरोक्षवृत्तौ विवादः। तत्र च परोक्षवह्न्यादिविषयस्मृत्यनुरोधेन तदनुकूलसंस्कारजनकत्वस्यानित्यसप्रकारकनिश्चयत्वावच्छेदेन ग्रहात् अपरोक्षविषयेऽपि तद्बलेनातिरिक्तवृत्तिकल्पना युक्तेत्यलमतिकथया॥

मूले **भेदाभावस्येत्य**नन्तरमतिरिक्तस्येति शेषः। नन्वर्थभेदेऽपि प्रकृते तदुभयार्थैक्याद्भेदनिर्देशानुपपत्तिरित्यत्राह—**घटपदस्येति**।

[1] सत्त्वान्न—च. [2] संयोगा—झ.

**तर्हि घटस्य स्वरूपमिति प्रमितिः । का तत्र कथंता । स्वरूपघटशब्दयोरपर्यायत्वेनार्थभेदसत्त्वात् । अन्यथा घटस्य घट इति धीप्रसङ्गात् । औपचारिकव्यवहारमात्रं वा तदस्तु । अभेदसंबन्धे प्रमेयत्वमपि नोदाहरणम् । अतो जानामीत्यनुभवो वृत्तिमेव विषयीकरोतीति सिद्धा वृत्तिः ॥**

---

## दीपनम्

तत्राभेदः षष्ठ्यर्थ इत्यभिप्रेत्याह—**स्वरूपेति** । **प्रमेयत्वमपीति** । तस्य तद्वृत्तित्वे प्रमाणाभावात् । न हि प्रमेयत्वे प्रमेयत्वमिति धिया घटादिप्रमाविषयत्वं तत्रानुभूयते । किं तु प्रमान्तरविषयत्वमिति न तस्य तद्वृत्तित्वम् । न चैवं सर्वशब्दाज्जायमानज्ञानस्य कथं स्वविषयत्वमिति वाच्यम् । न कथंचित्, सर्वत्वविशिष्टज्ञानस्य केवलस्वरूपादन्यत्वात्, सामान्याकार[1]ज्ञानस्य सामान्यविशिष्टयत्किंचिद्विशेषविषय-

---

## पूरणी

विशिष्टाविशिष्टोपाधिना तयोर्भेदादभिन्नसत्ताकत्वाच्चेति भावः । **औपचारिकेति** मूलम् । राहोः शिर इतिवदभेदेऽपि भेदव्यवहारमात्रं, न तु तत्र विशिष्टप्रतीतिरित्यर्थः । यद्वा आरोपितभेदविषया तत्प्रतीतिरित्यर्थः । **किं तु प्रमान्तरेति** । न चैवमनवस्था; तद्गोचरप्रमितीनां प्रमाणसिद्धत्वे तन्मूलायास्तस्याः प्रामाणिकत्वात् । यदि च प्रमेयत्वं केवलसाक्षिवेद्यं तदा तत्र प्रमेयत्वान्तरा[2]भावाददोष इति भावः । ननु ज्ञानत्वसामान्यजज्ञानस्य कथं स्वविषयत्वमित्यत्राह—**सर्वेति** । **सामान्येति** । तत्रापि विशिष्टाविशिष्टभेदेन तादात्म्यमस्तीत्यर्थः । यद्वा सर्वपदजन्यज्ञानस्य स्वविषयत्वाभावेऽपि न क्षतिरित्याह—**सामान्येति** ।

---

[1] ज्ञानस्यापि—च. [2] भावान्न दोष-झ.

## वृत्तेरन्तःकरणधर्मत्वनिरूपणम्

सा चान्तःकरणधर्मः । "कामः सङ्कल्पः" इत्यादि-

### दीपनम्

त्ववत् सर्वमिति ज्ञानस्यापि [1]बुद्धिस्थविषयत्वाभावेन यत्किंचिद्विशेष-विषयत्वोपपत्तेश्चेत्यर्थः ॥

एवं वृत्तिं निरूप्य तत्प्रकृतिं निरूपयति—**सा चेति** । "कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतिर्धीशब्दवाच्यवृत्तेर्मनस्सामानाधिकरण्यं दर्शयन्ती मनोधर्मत्वं दर्शयति । न च "आयुर्वै घृतं" इतिवदुपचार इति वाच्यम्; मुख्ये बाधकाभावात् । "कामा येऽस्य हृदि श्रिता, तीर्णो हि तदा सर्वान् शोकान् हृदयस्य" इति श्रुत्या च स्पष्टमेव कामादीनां तत्प्रती-

### पूरणी

घटोऽस्तीति घटत्वाकारज्ञानस्य यत्किंचिद्घटविषयत्ववदित्यर्थः । **बुद्धिस्थेति** । जायमानज्ञानस्येति शेषः । सर्वनाम्नां बुद्धिस्थवाचकत्वादिति भावः ॥

नन्वत्र श्रुतौ ज्ञानमनसोर्धर्मधर्मिभावबोधकसप्तम्यादेरभावात्कथं तत्सिद्धिरित्यत्राह—**मनस्सामानाधिकरण्यमिति** । मनस्तादात्म्यमित्यर्थः । वृत्तेरन्तःकरणपरिणामत्वं विना तदयोगादिति भावः । **नचायुरिति** । यथा घृतस्यायुस्साधनार्थत्वेन सामानाधिकरण्यव्यपदेशोऽन्यथासिद्धस्तद्वन्मनसोऽपि ज्ञानसाधनतया तद्व्यपदेशान्यथासिद्धिरित्यर्थः । ननूदाहृतानन्तरश्रुतिद्वये वृत्तिवाचकपदाभावात्कथं वृत्तेस्तद्धर्मतासिद्धि-

[1] बुद्धिस्थत्वाभावेन—च.

**भूतेः, परिशेषाच्च। न चात्मैव तदाश्रयः; अहंकाराख्यान्तःकरणातिरिक्तात्मनः परमतेऽप्रसिद्धेः। अस्मन्मते तस्य ज्ञानस्वरूपत्वेन ज्ञानपरिणामायोगात्, निरवयवस्य तस्य निमित्तसंयोगाभावेन तदनुपपत्तेश्च। न हि स्वात्यन्ताभावसमानाधि-**

---

### दीपनम्

यत इति वृत्तिरन्तःकरणधर्म इत्यर्थः। **परिशेषादिति।** देहेन्द्रियाकारेण परिणतभूतभेदस्तदनाश्रयस्तत्रापि[1] सम्प्रतिपन्नः। एवं दिक्कालभेदोऽपीत्यन्तःकरणधर्म इत्यर्थः। किमहमनुभवगोचर एवात्मा बुद्ध्यादिधर्मी उत तदन्यः। आद्य स्वाभिमतमेव सिध्यतीत्यभिप्रेत्य द्वितीयं प्रत्याह—**अहंकारेति।** पूर्वमहंकारानात्मत्वनिरूपणदशायां पराभ्युपगममभिप्रेत्य धर्मिकल्पनागौरवं निराकृतम्। अत्र तु परैरहमनुभवविषयस्य ज्ञानाद्याश्रयस्यैवात्मत्वेन स्वीकारात् तस्य श्रुतिन्यायाभ्यामस्मदभिमतान्तःकरणरूपाहंकारतया सिद्धेर्न परेषां तदतिरिक्तात्मा प्रमाणात्सिध्यतीत्युक्तमिति न पूर्वोक्तविरोधः। नन्वेवमवच्छेदकभेदेन

---

### पूरणी

रित्याह—**इति वृत्तिरिति।** "काम. सङ्कल्पः" इत्यादिसामान्यश्रुत्युपात्तकामादीनामन्तःकरणधर्मत्वे वृत्तेरपि तत्सिद्धिरिति भावः। **तत्रापीति।** अन्यथा देहाश्रयत्वे रूपादिवद्बाह्येन्द्रियप्रत्यक्षप्रसङ्गादिति भावः। **दिक्कालेति।** त्वन्मते ज्ञानस्य विशेषगुणतया तदनाधारदिक्कालाद्याश्रितत्वायोगादिति भावः। **पराभ्युपगममिति।** आत्मान्तःकरणात्मकवस्तुद्वयस्वीकारस्य मतद्वयेऽपि तुल्यत्वादित्यर्थः। **निमित्तेति मूलम्।** परमतासिद्धान्तःकरणादिसंयोगस्य ज्ञानासमवायिहेतोस्तत्रा-

---

[1] संमतःच.

**करणस्य तस्य निर्भागे वृत्तिः संभवति। अव्याप्यवृत्त्यवच्छेदक-**

दीपनम्

भावाभावयोरेकत्र वृत्तिरविरुद्धेति तत्राह—**अव्याप्येति**। अवच्छेद्या-भावासमानाधिकरणो ह्यवच्छेदको वक्तव्यः। अन्यथा द्रव्यत्वादेरपि संयोगविशेषावच्छेदकत्वप्रसङ्गात्। न च निरवयववृत्तिधर्मस्य तत्सं-भवति। न चैवं सावयवेऽपि संयोगो न स्यादिति वाच्यम्; अवयव-भेदोपाधिकस्यानिर्वचनीयभेदस्यास्मन्मतेऽवयविन्यपि संभवात्। अत एव मूले वृक्षः कपिसंयोगवान्नाग्र इत्यबाधितप्रतीतिः सर्वसंमता। न चेयं संयोगात्यन्ताभावविषयिणीति वाच्यम्; भेदप्रतीतिमात्रोच्छेदा-

पूरणी

संभवादित्यर्थः। **अव्याप्येति** मूलम्। अव्याप्यवृत्ती यौ संयोगतद-भावौ तदवच्छेदकस्य निरवयवात्मन्यसंभवादित्यर्थः। **नच निरवय-वेति**। आत्मत्वादेः संयोगतदभाववद्वृत्तित्वादित्यर्थः। वस्तुतस्तु कूटस्थ-त्वासङ्गत्वश्रुतिविरोधान्नास्मन्मतसिद्धात्मनो ज्ञानपरिणाम इति मन्तव्यम्। ननु मूलस्य सर्वथा वृक्षवृत्तित्वाभावे वृक्षवृत्तिसंयोगावच्छेदकत्वं न स्यात्, अवच्छेद्यासमानाधिकरणस्य तत्त्वायोगादिति अवयविवृक्षेऽप्यवयव-मूलस्य केनचित्संबन्धेन वृत्तिर्वाच्या, ततश्च तस्याप्यवच्छेद्यसंयोगा-भावसमानाधिकरणतया न तदवच्छेदकत्वम्। अतः सावयववृक्षा-दावपि संयोगतदभावयोर्वृत्तिर्न स्यादित्याशङ्क्य निषेधति—**न चैव-मिति**। **अवयवेति**। मूलाग्रावच्छेदकभेदेन भिन्नयोरेव वृक्षयोः संयोग-तदभावाधारत्वमिति नैकत्र भावाभावयोर्वृत्तिरित्यर्थः। **भेदप्रतीतीति**। घटादिभेदप्रतीतेरपि घटत्वाद्यभावविषयत्वस्य वक्तुं शक्यत्वादित्यर्थः॥

इदं चापाततः घटत्वाभावज्ञाने प्रतियोगितावच्छेदकघटत्वत्वा-वच्छिन्नज्ञानस्य हेतुतयापेक्षितत्वात् घटत्वावच्छिन्नघटान्योन्याभावधी-समये च नियमेन तदवच्छिन्नानुपस्थितेः। किं च घटत्वत्वस्य च

**भेदस्यापि तत्रासंभवात्। न चोपाधिभेदव्यतिरेकेण सत्यप्रपञ्च-वादिन औपाधिकोऽधिकरणभेदः संभवति ॥**

**नन्वन्तःकरणस्य युगपज्ज्ञानानुत्पत्तिलिङ्गेन करणतया**

---

## दीपनम्

पत्तेरिति। **अधिकरणभेदः** संयोगतदभावयोरिति शेषः। धर्मिग्राहक-मानविरोधान्नान्तःकरणस्योपादानत्वमिति शङ्कते—**नन्विति**। व्यासङ्ग-स्थले हि चक्षुरादीन्द्रियाणां रूपादिविषयैः सन्निकर्षे सत्यपि कदा-चित्कस्यचिज्ज्ञानं न सर्वस्येति तदन्यथानुपपत्त्या क्रमेण [1] संयोगिस्वभावं

---

## पूरणी

घटेतरावृत्तित्वे सति घटवृत्तित्वात्मकस्य घटान्योन्याभावग्रहाधीनग्रहतया घटत्वाभावेन घटान्योन्याभावापलापे आत्माश्रयाद्यापत्त्या तद्भेदद्वयसंभवे-नातिरिक्ततदन्योन्याभावस्यावश्यस्वीकर्तव्यत्वात्। [2] अत्र च संयोगव-द्भेदधीसमये संयोगत्वजात्यवच्छिन्नाभावभाननियमेनावश्यकात्यन्ता-भावेन तद्भेदद्वयुपपत्तौ विरोधेनान्योन्याभावाकल्पनात्। अपि च प्रतियो-ग्यवृत्त्यनुयोगिवृत्तिधर्मज्ञानं भेदधीहेतुः। स च धर्मो न वृक्षत्वादिः, अतिप्रसक्तत्वादिति, संयोगाभाववत्त्वमेव तद्धर्मो वाच्यः। अतः प्रथमप्रत्येतव्यतदत्यन्ताभावेनान्यथासिद्धेर्न वृक्षादौ संयोगवद्भेदक-ल्पनेति वक्तुं शक्यत्वादिति दिक्। तस्मादस्मन्मते काल्पनिकभेदस्य सर्वत्राभ्युपगमात् वृक्षादावपि तद्भेदे बाधकाभावाद्भेदप्रतीतेरन्यथा वर्णनं न युक्तमित्येव समाधानं मन्तव्यम् ॥

ननु निरवयवात्मन्यप्यौपाधिकाधिकरणभेदसत्त्वान्न विरोध इत्य-त्राह—**न चोपाधीति** मूले। **क्रमेणेति**। अन्यथा युगपज्ज्ञानेन्द्रिय-

---

[1] करणसंयोगि—**क**. [2] तत्र—**ख**.

**क्लृप्तस्य कथमुपादानत्वमिति चेन्न; अहं जानामीति ज्ञानाश्रयत्वेनानुभूयमानस्य करणत्वायोगात्। अन्यथा धर्मकल्पना-**

दीपनम्

रूपादिविज्ञानकरणं किंचित्कल्पनीयम्। तच्च मनो निमित्तमिति तन्नोपादानमित्यर्थः। मनः साक्षिमात्रगम्यं नार्थापत्तिगम्यम्। अतो न धर्मिग्राहकमानविरोधः। प्रत्युत [1]साधकमेवैतादित्याह—**नाहमिति**। अहमिति प्रत्ययो ह्यन्तःकरणावच्छिन्नचैतन्यविषयो न तु केवलविषयः, सुषुप्तावह [2]मनुभवाभावात्। प्रतीतिकारणाभावस्य प्रागेव निरस्तत्वात्। अत एव नाज्ञानविषयः। नापि शरीरविशिष्टात्मविषयः। जाग्रत्स्वप्नयोर्जन्मभेदे वा शरीर [3]भेदप्रमायामप्यहमनुभवगोचराव्यावृत्तेः। न चैवं मम मन इति प्रतीतिः कथं स्यात्, मनसोऽपि ममताधिकरणत्वादिति वाच्यम्; तत्प्रतीतेर्ममताधिकरणचैतन्यभेदविषयत्वात्। अतोऽहं जानामीत्यनुभूयमान ज्ञानमन्तःकरणधर्म इत्यर्थः। **धर्मीति**। मनःकल्पने

पूरणी

संयोगे सति तस्य कृत्स्नसहकारिसम्पत्त्या युगपज्ज्ञानप्रसङ्गेन तत्कल्पनावैयर्थ्यादिति भावः। **तच्चेति**। सिद्धस्योपादानज्ञानानुदयान्यथानुपपत्तिकल्पितस्य मनसस्तदुपादानत्वायोगादिति भावः। **प्रत्युतेति**। **तदित्यनन्तर**मस्तीति शेषः। **प्रतीतिकारणेति**। स्वप्रकाशचैतन्यस्य तदानीं सत्त्वादित्यर्थः। **अत एवेति**। सुषुप्तावज्ञानप्रतिभासेऽप्यहमभिमानाभावादित्यर्थः। **जाग्रदिति**। बाल्ययौवनयोः [4]परिणामभेदेन स्वप्ने व्याघ्रत्वाद्यध्यासे जातिस्मर्तॄणां जन्मभेदे च तद्भेदस्यावगमादित्यर्थः। **अहमनुभवेति**। विलक्षणाकाराहमनुभवाभावादित्यर्थः। प्रतिदिनं सुषुप्तावहंकारनाशेन तद्भेदाद्विलक्षणाहमनुभवप्रसङ्ग इत्यत उक्तं—**भेदप्रथायामिति**। अहंकारभेदस्याप्रतीतेरिति भावः। ननु

[1] साधकमेव तदितिव्याख्यानुसारी पाठः. [2] मभिमानाभावात्—च. [3] भेदप्रथायामिति व्याख्यानुसारी पाठः. [4] परिमाण—झ.

**लाघवेनात्मन्येव क्रमजननशक्तिमात्रकल्पनेनान्यथासिद्ध्या तद्-सिद्धेश्च। नियतक्रमस्यादृष्टादेव परमत इवोपपत्तेः ॥**

**तत्र च चक्षुरादि करणम्, रूपादिकं जानामीत्यनुभूयमानस्य चक्षुराद्यन्वयव्यतिरेका[1]नुविधानदर्शनात्। आलोकश्च तमोनिवृत्तावेव कारणम्; तत्रैवान्वयव्यतिरेकदर्शनात्। रूपादि-**

## दीपनम्

हि धर्मो प्रथमं कल्पनीयः। तत्र च रूपादिज्ञानक्रमजननसामर्थ्यमणुत्वं चेति द्वयं कल्पनीयम्। अन्यथा युगपदेकविषयानन्तज्ञानसामग्रीसत्त्वेन तावज्ज्ञानप्रसङ्गात्। ततश्च सम्प्रतिपन्नात्मन्येव क्रमज्ञानजननसामर्थ्यं तद्धर्म एव कल्पनीय इति न करणीभूतमनःसिद्धिरित्यर्थः। नन्वेवं तत्र रूपज्ञानकाले स्पर्शज्ञानमेव कुतो न स्यादिति चेत्तर्हि मनसश्चक्षुःसंयोगकाले स्पर्शनसंयोग एव कुतो न स्यात्, अदृष्टमेव तत्र नियामकमिति चेत् प्रकृतेऽपि तथास्त्वित्यभिप्रेत्याह—**नियतेति** ॥

वक्ष्यमाणचैतन्यानादित्वानुमानस्य चक्षुराद्यन्वयव्यतिरेकविरोधं परिहर्तुं तदन्यथासिद्धिमभिप्रेत्याह——**तत्र चेति**। वृत्ताविव्यर्थः। चोऽवधारणे। प्रसङ्गादाह—**आलोकश्चेति**। रूपादिमत्त्वेन

## पूरणी

मनसोऽणुत्वेनैव ज्ञानक्रमोपपत्तेर्न क्रमजननसामर्थ्यमपि कल्प्यमित्यत्राह—**अन्यथेति**। अणुत्वेन नानेन्द्रियसंबद्धानेकज्ञानक्रमोपपत्तावप्येकेन्द्रियसन्निकृष्टघटविषयानेकज्ञानोत्पादप्रसङ्गस्य युगपद्वारणाय तत्सामर्थ्यस्यापि कल्प्यत्वादित्यर्थः ॥

**चक्षुरादीति**। चक्षुराद्यन्वयव्यतिरेकानुविधानदर्शनाधीनबाधशङ्कापरिहारायेत्यर्थः। नन्वालोकाभावात्मकतमोनिवृत्त्यात्मकत्वादालोकस्य न तत्र हेतुतेत्यत्राह—**रूपादीति**। **तत्रैवेति** मूलम्। तमो-

1 अनुविधानात्—छ.

**विज्ञाने पृथक्तयोरभावाच्च। न चालोकोत्कर्षाद्रूपज्ञानोत्कर्षोऽस्तीति स तत्र हेतुः; तत्रापि तमोनिवृत्त्युत्कर्षादेव तदुत्कर्षात्। अन्यथाऽतिस्थूलप्रदीपेन सर्वात्मना तमसि निवृत्ते ततोऽपि स्थूलतरेण ज्ञानोत्कर्ष[1]प्रसङ्गात्। स्वस्वाभावज्ञाने व्यभिचाराच्च नालोकश्चाक्षुषज्ञाने कारणम्॥**

---

## दीपनम्

भावरूपस्य तमसो निवृत्तावेवालोकः कारणमित्यर्थः। व्यभिचारादपि चाक्षुषज्ञाने नालोकः कारणमित्याह—स्वेति। असंयुक्तालोकस्य कारणत्वादर्शनात्संयुक्तस्यैव तद्वक्तव्यमित्यालोकत्र्यणुकादौ तदभावेन व्यभिचारादिति भावः॥

---

## पूरणी

निवृत्तावेव तदन्वयव्यतिरेकयोरन्यथासिद्धत्वादित्यर्थः। **न चालोकेति** मूलम्। रूपादिज्ञानस्योत्कर्षः बह्ववयवव्यापित्वगोचरत्वं तद्गतशुक्लतरत्वादिविषयत्वं वेत्यर्थ। नन्वालोकज्ञाने कथं तद्व्यभिचारः, तत्सत्त्वादित्याह—**असंयुक्तेति**। विषयासंबद्धेत्यर्थः। येन रूपेण तस्य प्रत्यक्षहेतुत्वं तद्रूपावच्छिन्नस्य स्वगोचरसाक्षात्कारे व्यभिचार एवेति भावः। ननु विषयावयव्यालोकसंबन्धौपयिकालोकस्तद्धेतुरस्त्वित्यत्राह—**आलोकत्र्यणुकेति**। तदवयवद्व्यणुकादेरयोग्यतया तत्साक्षात्काराजनकत्वादित्यर्थः।

---

[1] प्रसङ्गः—छ.

## प्रतिबन्धकाभावस्य कारणत्वनिरासः

**एवं प्रतिबन्धकाभावोऽपि न कारणम्; सामग्रीकालीनकार्यानुत्पाद[1]प्रयोजकतयान्यथासिद्धत्वेन तद्धेतुत्वे प्रमाणाभा-**

### दीपनम्

**एवमिति** । प्रतिबन्धकाभावत्वेन न कारणत्वमित्यर्थः । तथात्वे हि सामग्रीवैकल्यस्यैव प्रतिबन्धकतया वक्तव्यत्वेनान्योन्याश्रयः स्यादिति भावः । ननु मण्याद्यभावत्वेन स कारणम्, न च तत्र प्रमाणाभावः; अनन्यथासिद्धान्वयव्यतिरेकवत्त्वादित्याशङ्क्य प्रतिबन्धकलक्षणमुखेन हेत्वसिद्धिमाह—**सामग्रीति** । दाहादेः कार्यस्य या सामग्री तत्कालीनो यस्तदनुत्पादस्तत्प्रयोजकः । तस्याग्निमक्षणेन संबन्धनिमित्तमिति यावत् । तद्रूपत्वात्प्रतिबन्धकत्वस्य तदभावान्वयव्यतिरेकयोः गन्धे रूपप्रागभाववदग्निमसंबन्धाभावविषयतयाऽन्यथासिद्धत्वात् ।

### पूरणी

किं प्रतिबन्धकाभावत्वेन स हेतुः, मण्यभावत्वेन वेति विकल्पाद्यकल्पाभिप्रायेणेदं योजयति—**प्रतिबन्धकाभावत्वेनेति** । **सामग्रीति** । परमते कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वरूपतया अभावकारणत्वे मण्यादेः प्रतिबन्धकता, तत्प्रतिबन्धकत्वे तदभावस्य हेतुतेत्यन्योन्याश्रय इत्यर्थः । न च वक्ष्यमाणप्रतिबन्धकाभावत्वेन हेतुत्वे नोक्तादोष इति वाच्यम्, मण्यादेः कार्यानुत्पादप्रयोजकत्वस्य तद्व्यतिरेके कार्यप्रयोजकताग्रहसमनियततया तद्दोषतादवस्थ्यादिति भावः । **हेत्वसिद्धिमिति** । अन्वयव्यतिरेकान्यथासिद्धिमित्यर्थः । **गन्ध इति** । गन्धस्थलीयरूपप्रागभावान्वयव्यतिरेकयोः रूपविषयत्वव-

[1] प्रयोजकाभावतया—ख. ग. छ.

## दीपनम्

अतस्तस्य प्रमाणाभावादन्यथासिद्धत्वाच्च न कारणत्वमित्यर्थः । मण्यादिर्हि कार्यानुत्पादाग्रिमसमयसंबन्धस्यैव प्रयोजको न त्वनुत्पादस्य, तस्यानादित्वात् । येन तद्व्यतिरेके कार्ये तद्व्यतिरेकः प्रयोजकः स्यात् । न च कार्यमेवाग्रिमसमयसंबन्धव्यतिरेक इति वाच्यम्; तस्यानुत्पादमात्रव्यतिरेकत्वात् । ततश्च कार्यमग्रिमसमयसंबन्ध[1]व्यतिरेकतोऽन्यदेवेति न तद्गोचरावन्वयव्यतिरेकौ । न वा मण्याद्यभावोऽनन्यथासिद्धः । कथं तर्हि तद्विरहे तदुदय इति चेन्न; प्रथमोपस्थितिलाघवाभ्यां कार्यस्य कारणोत्कर्षानुविधाय्युत्कर्षाकस्मिकत्वानुपपत्त्यादिभ्यश्च तद्धेतुतया क्लृप्तवह्न्यादिकारणादेव तदुपपत्तेः । एतेन दण्डादेरप्येवं सति घटकारणता न स्यात्, तत्राप्युक्तान्यथासिद्धिसंभवादिति प्रत्युक्तम् । प्रथमोपस्थित्यादिहेतुभिर्दण्डघटयोरेव प्रथमं संबन्धकल्पनात् । तदनुरोधेनैव पश्चात्तद्व्यतिरेकस्य कार्यव्यतिरेकाग्रिमसमयसंबन्धप्रयोजकत्वं

---

## पूरणी

दित्यर्थः । **अन्यथासिद्धत्वाच्चेति** । चो हेत्वर्थे । यतोऽन्वयव्यतिरेकयोरन्यथासिद्धिः अतो न तद्धेतुतायां किंचित्प्रमाणमित्यर्थः । ननु मणौ सति दाहानुत्पाद इत्यन्वयस्तत्प्रागभावविषयः, अतस्तद्व्यतिरेकोऽपि दाहविषय इति कथमन्यथासिद्धिरित्यत्राह—**मण्यादिर्हीति** । न च समकालोत्पत्तिकत्वेनैक्यम्; तादृशघटपटयोस्तददर्शनादित्याह—**ततोऽन्यदिति** । **न वेति** । अतो मण्याद्यभावोऽन्यथासिद्ध इत्यर्थः । ननु वह्न्यादिकमपि तत्संबन्धाभावे हेतुरस्त्वित्यत्राह—**प्रथमेति** । वन्हे दाह इति दाहसंबन्धस्य प्रथमोपस्थितत्वाद्दाहत्वस्य कार्यानवच्छेदकत्वे लाघवाच्चेत्यर्थः । प्रकृते संभावितं हेत्वन्तरमाह—**कार्यस्येति** । आदिपदेन कारणं विना कार्योत्पादासंभवो दर्शितः । **तदनुरोधनेति** ।

[1] व्यतिरेकि ततोऽन्यदेवेति व्याख्यानुसारी पाठः.

## दीपनम्

कल्पनीयम्, न तु प्रथमकल्पितं बाधनीयम्। न चैवं दाहसामग्रीसत्त्वान्मण्यादिकाले दाहः किं न स्यादिति वाच्यम्; तदनुत्पादस्याग्रिमसमयसंबन्धस्यैव बलीयस्या सामग्र्या प्रथमं सम्पादनात्। न चैतावता तदभावोऽपि तत्र कारणम्, प्रायश्चित्तस्य दुःखानुत्पादाग्रिमसमयसंबन्धप्रयोजकत्वेऽपि तदभावस्य दुःखाहेतुत्वात्, तद्धेतुत्वे उक्तविधया प्रमाणाभावाच्च। न च मण्याद्यभावजन्यतावच्छेदके गौरवम्; पूर्वोपस्थितन्यायेनावश्यकत्वेनान्वयव्यतिरेकयोः समानविषयत्वेन प्रथम-

---

## पूरणी

चरमोपस्थितदण्डादिव्यतिरेकस्य कार्यप्रागभावाग्रिमसमयसंबन्धविषयत्वेऽपि प्रथमोपस्थितान्वयानुरोधाद्घटादिहेतुत्वमेव ग्राह्यम्। मणौ दाहाभाव इति व्यतिरेकसंबन्धस्यैव प्रथमोपस्थितत्वात्तदनुरोधेन तदभावे दाह इत्यन्वयस्यापि तत्संबन्धाभावविषयत्वमित्यर्थः। **बलीयस्येति**। बलवत्त्वं च फलबलकल्प्यमिति भावः। **न चैतावतेति**। मणौ सति दाहानुत्पादमात्रेणेत्यर्थः। ननु सामग्रीकालीनकार्यानुत्पादप्रयोजकाभावस्य तद्धेतुत्वम्, प्रायश्चित्तेन तु दुःखहेतुपापनाशान्न तस्य सामग्रीकालीनकार्यानुत्पादप्रयोजकतेत्यस्वरसादाह—**तद्धेतुत्व इति**। मण्याद्यभावहेतुत्व इत्यर्थः। प्रायश्चित्ताभावस्य दुःखहेतुत्वाभ्युपगमं वाशङ्क्याह—**तद्धेतुत्व इति**। **न च मणीति**। संबन्धाभावत्वस्य गुरुत्वादित्यर्थः। **पूर्वोपस्थितेति**। मणौ दाहाभाव इति प्रथमावगतप्रागभावसंबन्धनिमित्तानुरोधेन तद्विरहस्य तत्संबन्धविरहहेतुताया युक्तत्वात्। संबन्धाभावस्य कार्यतया तत्र यत्किंचित्कारणस्य वाच्यत्वात्। न च मण्यभावे दाह इति व्यतिरेकस्य कथं संबन्धाभावविषयत्वमिति वाच्यम्; तस्याप्यन्वयसमानविषयत्वनियमेन प्रथमगृहीतसंबन्धविरहविषयत्वस्य वाच्यत्वेन तथा व्यतिरेकासिद्धेः। प्रतिबन्धकानुपस्थिति-

दीपनम्

क्लृप्तकारणतानुरोधेन च गौरवस्यापि न्याय्यत्वात्। किं च मणिकालेऽपि कार्यदर्शनान्न तदभावः कारणम्। न चोत्तेजकाभावविशिष्टमण्यभावस्तदाप्यस्तीति वाच्यम्; प्रतिबन्धकताशक्तिविघटकोत्तेजकत्वस्याभावकारणताग्रहाधीनप्रतिबन्धकताबोधाधीनत्वेन चक्रकापत्तेः। तत्तदुत्तेजकविशेषानन्त्यव्यभिचाराभ्यां तद्विशिष्टाभावस्य कारणताग्रहासंभवात्। वस्तुतस्तु मणिकालीनकार्ये संशयानन्तरप्रत्यक्ष इव विशेषदर्शनस्य उत्तेजकस्यैव कारणत्वसंभवादिति भावः। तत्र च वह्न्याद्यभावेऽतिव्याप्तिपरिहाराय सामग्रीकालीनेत्यनुत्पादाविशेषणम्। न च वह्न्याद्यभावोऽपि प्रतिबन्धकः; वह्न्याद्यभावाद्दाह्याभावाद्वा दाहानुत्पत्ताविदानीं [1]दाहः प्रतिबद्ध इति पृथक्प्रसिध्यभावादिति॥

---

पूरणी

दशायां वह्न्यादेर्मण्याद्यभावनैरपेक्ष्येण प्रथमं कारणताकल्पनाच्च तद्गौरवं प्रमाणमूलत्वेनाकिंचित्करमित्यर्थः। चकारो भिन्नक्रमो वा। उक्तहेतुत्रयेण च तत्कारणताग्रहावश्यकत्वे तदकिंचित्करमित्यर्थः। व्यतिरेकव्यभिचारादपि न तदभावो हेतुरित्याह—**किं चेति**। ननूत्तेजकत्वरूपेण तदभावविशिष्टाभावः कारणम्, तत्तद्व्यक्तिविशेषाभावविशिष्टाभावत्वेन वा। नाद्य इत्याह—**प्रतिबन्धकतेति**। अभावकारणत्वे तत्प्रतियोगित्वेन मण्यादेः प्रतिबन्धकता, प्रतिबन्धकत्वे च तच्छक्तिविघटकतोत्तेजकता, मन्त्रादेरुत्तेजकत्वग्रहे च तदभावविशिष्टमण्याद्यभावत्वेन हेतुतेति चक्रकाश्रय इत्यर्थः। द्वितीये त्वाह—**तत्तदिति**। ननु मन्त्रादेरुत्तेजकतया यावत्तदभावाविशिष्टाभावत्वेनानुगतरूपेण हेतुत्वमिति नोक्तदोष इत्यस्वरसादाह—**वस्तुतस्त्विति**। अन्यथा विशेषदर्शनाभावविशिष्टग्राह्यसंशयाभावस्य प्रत्यक्ष-

---

1 दाहप्रतिबन्धा—च.

**वात्। किं च मणित्वादिकमेव मण्यादेः [1] कार्यानुदये प्रयोजकम्, न तु तदभावाभावत्वमिति मण्याद्यभावव्यतिरेकोऽन्यथासिद्धः।**

## दीपनम्

किं च मण्यादेः प्रतिबन्धकाभावाभावत्वस्यान्यथासिद्धत्वेन कार्यव्यतिरेकाप्रयोजकत्वात् अन्यथासिद्धव्यतिरेकतया मण्याद्यभावो न कारणमित्याह—**किं चेति**। लाघवान्मणित्वादिकमेव दाहाभावे प्रयोजकम, न मण्याद्यभावाभावत्वम्, गौरवात्। यद्यपि मणिरेव मण्यभावाभावः, तथापि तस्य तदभावव्यतिरेकत्वं न कार्यव्यतिरेके प्रयोजकमिति मण्यभावाभाववत्तदभावत्वमपि कार्येऽप्रयोजकमेव। ननु तदभावाभावत्वाधिकरणमणेः कार्यानुत्पादप्रयोजकत्वे तदभावोऽपि तत्र प्रयोजक एवेति चेन्न; अभावाभावस्य भावाद्भेदे तयोः सहभावनैयत्ये-

## पूरणी

मात्रहेतुत्वसंभवेन विशेषदर्शनसंशयोत्तरप्रत्यक्षे पृथक् हेतुर्न स्यादिति भावः। ननु मण्याद्यभावे दाहः तद्विरहे दाहाभाव इत्यन्वयव्यतिरेकयोः संभवाद्दण्डाद्युक्तन्यायेन दाहे तदभावो हेतुः स्यादित्याशंक्याह—**किं चेति मूलम्**। तदभिप्रायमाह—**किं च मण्यादेरिति**। यदि मण्यभावाभावत्वं कार्यव्यतिरेकप्रयोजकतावच्छेदकं स्यात् भवेदेवं तदभावपुरस्कारेणान्वयव्यतिरेकग्रहः, न ह्येवं, अतो मणिपुरस्कारेणैवान्वयव्यतिरेकग्रह इति पूर्वोक्तन्यायेन संबन्धाभाव एव हेतुत्वमिति प्रघट्टकार्थः॥

**मण्यभावेति**। मण्यभावाभावत्वस्य कार्यव्यतिरेकाप्रयोजकतया मण्यभावत्वमपि न कार्यप्रयोजकमित्यर्थः। आशयमजानानश्चोदयति। **नन्विति**। भेदपक्षं प्रविश्याह—**अभावेति**। तथा च तदभावव्यति-

[1] कार्यानुत्पादप्र–क. छ.

**न च मणित्वादिकमेव मण्याद्यभावाभावत्वम्; तस्य निष्प्रतियोगिकत्वात्। मणिर्मण्यभावाभाव इति पृथक्प्रतीतेश्च। किं**

## दीपनम्

प्यप्रयोजकत्वात्। अभावस्य भेदो नास्तीति चेदस्त्वेवं प्रमाणबलात्, न तु कार्यानुत्पादसिद्ध्यर्थमेव तद्भेदाभ्युपगम[1] इति अभावत्वविशिष्टाकारेण तस्याप्यन्यथासिद्धिरेवेति भावः। **न चेति**। तथा च नाभावत्वविशिष्टाकारभेद[2] इत्यर्थः। नन्वेवं प्रतिबन्धकाभाववदनुपलम्भस्याप्यभावधीहेतुत्वं न संभवति, तत्रापि प्रतिबन्धकत्वप्रतियोग्युपलम्भस्याभावज्ञानानुत्पादप्रयोजकत्वात् [3]मण्याद्यभाववदन्यथासिद्धव्यतिरेक-

## पूरणी

रिक्त एव दाहप्रयोजकः स्यान्न तु मण्यभाव इति भावः। **प्रमाणबलादिति**। अतिरिक्ताभावविषयकत्वेऽनवस्थात्मकप्रतिकूलतर्कसहकृताद्घटवति घटाभावो नास्तीत्यनुभवबलादित्यर्थः। **न त्विति**। यदि मण्यादेः कार्याभावप्रयोजकत्वार्थं तदभावाभावत्वमभ्युपेयं तदा तदेव प्रयोजकतावच्छेदकमिति तद्रूपमनन्यथासिद्धं स्यात्, न त्वेवं; तदभावस्यातिरिक्तत्वेऽपि मण्यादेर्दाहानुत्पादप्रयोजकत्वाक्षतेः। किं तूक्तप्रमाणान्तरादेव तदभावत्वसिद्धिरिति तद्रूपमन्यथासिद्धमेवेत्यर्थः। यद्वा तत्प्रमाणमभ्युपगच्छति—**प्रमाणेति**। मण्यभावाभावत्वेन कार्यानुत्पादप्रयोजकत्वलाभेन त्वया तदभेदो नोक्तः। किं तु सर्वसंमतोक्तप्रमाणादेवेत्यर्थः। ननु तर्ह्यस्मदभिमतसिद्धिरित्यत्राह—**इत्यभावत्वेति**। एवमपि लघु मणित्वादिकमेव प्रयोजकं नोक्तरूपमिति भावः। **तथा चेति**। अभावत्वविशिष्टाकारस्य मणित्वविशिष्टाकारान्न भेदः, येना-

[1] इत्यर्थः—ख. [2] इति भावः—च. [3] मणिवदन्यथा—च.

चाभावमात्रं न कारणमिति न किंचिदनिष्टम् । एवं विशेषणज्ञानमपि न कारणम् । तत्सन्निकर्षादेव विशिष्टज्ञानोपपत्तेरित्येतत्सकलमन्यत्रोप[1]पादितम् ॥

## दीपनम्

त्वाच्चेति चेदोमित्याह—अभावमात्रमिति, अनुपलम्भज्ञानमेव साक्षिरूपमभावज्ञाने कारणं नानुपलम्भः । तस्योक्तविधया तत्त्वे प्रमाणाभावात् ॥

## विहिताकरणस्य प्रत्यवायकारणत्वनिरासः

एवं विहिताकरणमपि न प्रत्यवायहेतुः, किं तु विहितविरुद्धकरणं तत्कालीनं कायिकं मानसिकं वा विध्यवज्ञारूपं किंचिदिति नाभावज्ञानमात्रं कारणम् ।तदुक्तं भट्टपादैः—

" स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते " ॥ इति ॥

## पूरणी

न्यथासिद्धिरित्यर्थः । विहितविरुद्धेति । नन्वेवं "न कलञ्जं भक्षयेत्" इत्यादौ भक्षणादिनिषेधस्य प्रागभावात्मकस्य कथं साधनताघटितं निषेधनियोगविषयत्वमिति चेन्न; तत्रापि भक्षणविरोधिव्यापारस्यैव तद्विषयत्वात् । वस्तुतस्त्वस्मिन्मते इष्टसाधनत्वस्य विध्यर्थतया तत्र धातूपात्तभक्षणादौ लिङादिनोक्तबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य नञा निवृत्तिर्बोध्यत इति नानुपपत्तिरिति स्मर्तव्यम् । इदं चापाततः, तथाहि—संबन्धः किं प्रागभावसमयरूपः अतिरिक्तो वा । आद्ये संबन्धाभावस्य प्रागभावविरहात्मककार्यपर्यवसायितया प्राप्तं तद्धेतु-

1 पादितमिति—छ.

## पूरणी

त्वम्। द्वितीयस्तु अभावस्य भावधर्मानाश्रयत्वादयुक्तः। नच संबन्धोऽप्यभावः, तस्य प्रतियोग्यनिरूपणात्, अभावस्य संबन्धत्वादर्शनाच्च। अस्तु वा कश्चित्काल्पनिकः संबन्धः, तथापि प्रतिबन्धकाभावस्य तद्विरहहेतुत्वाभ्युपगमे प्रतिबन्धकाभावो न कारणमिति स्वप्रतिज्ञाविरोधः। न च भावकार्यविषयिणी सा; प्रमाणतौल्येनाभिनिवेशमात्रतापातात्। न चान्वयव्यतिरेकयोः संबन्धतदभावविषयतया प्रमाणतौल्यमसिद्धमिति वाच्यम्; मण्यभावे दाह इति कदाचिदन्वयस्यापि प्रथमोपस्थितिसंभवेन व्यतिरेकस्य तदनुरोधितया दण्डादिवत्कारणताग्राहकत्वात्। वस्तुतस्तूत्तरसमयसंबन्धित्वेन रूपेण प्रागभावो मण्यादिसाध्यः अविद्यानिवृत्तित्वेन ब्रह्मणो ज्ञानसाध्यत्ववत्। ततश्चान्वयव्यतिरेकयोः प्रागभावतद्विरहविषयतया सिद्धं मण्याद्यभावस्य दाहहेतुत्वम्। रूपादिचाक्षुषज्ञानप्रतिबन्धतमोनिवृत्तेस्तद्धेतुत्वस्य स्वयमभ्युपगमाच्च। नच तन्निवृत्तिरपि तत्संबन्धाभाव एव हेतुरिति युक्तम्; तदुत्कर्षेण चाक्षुषज्ञानोत्कर्षवर्णनविरोधात्॥

किं चैवं मण्यभावस्य दाहाहेतुत्वे मणिकालेऽपि तत्प्रसङ्गः। तदभावातिरिक्तसामग्र्यास्तदा सत्त्वात् समग्रीमविघटयतश्च प्रतिबन्धकत्वायोगात्। नच प्रागभावसंबन्धोत्पादे तद्विरोधेन न दाह इति वाच्यम्; एवमपि मणौ सत्येव प्रागभावसमयसंबन्धोत्पत्त्यनन्तरक्षणे दाहप्रसङ्गात्। नच तत्संबन्ध एव तत्प्रतिबन्धकः; तथा सति तदभाव एव तद्धेतुरिति घट्टकुटीप्रभातन्यायापातादिति संक्षेपः। यत्तु मणिकालेऽप्युत्तेजकसमवधाने कार्यदर्शनान्न तदभावः कारणम्, व्यभिचारात्। नचोत्तेजकाभावविशिष्टमण्यभावस्तथा; तत्तदुत्तेजकविशेषाणामनन्ततया तद्विरहविशिष्टाभावकारणताया दुर्ग्रहत्वात्। किंच मणिकालीनदाहविशेषे उत्तम्भकं

## पूरणी

हेतुरस्तु संशयोत्तरप्रत्यक्षे विशेषदर्शनवत्, किं विशिष्टाभावहेतुताकल्पनयेति, तदपि न; मणिमन्त्रादेरवोत्तेजकतया मणित्वादिसामान्यरूपेण मण्यभावविशिष्टमन्त्राभावत्वादिहेतुत्वस्य सुग्रहत्वात्। प्रतिबन्धकाभावकूटस्य च हेतुत्वेनानतिप्रसङ्गात्। नच दाहविशेषे उत्तम्भकस्य हेतुत्वम्; अन्वयव्यतिरेकाभ्यां दाहमात्रे विशिष्टाभावस्य हेतुत्वात्। न चैवं विशेषादर्शनसहकृतसंशयाभावस्य प्रत्यक्षमात्रहेतुत्वापत्तौ विशेषदर्शनमपि प्रत्यक्षविशेषहेतुर्न स्यादिति वाच्यम्; आद्यसंशयस्य प्रत्यक्षाप्रतिबन्धकतया तत्र विशिष्टाभावहेतुतायां मानाभावात्। अवधारणानवधारणादिविभागानुरोधेन प्रत्यक्षे विशेषदर्शनस्य पृथग्धेतुताया वाच्यत्वाच्चेति दिक्॥

## शक्तिसाधनम्

वस्तुतस्तु व्यवहारे भट्टसमानसिद्धान्ततया वेदान्तिभिः शक्तेरभ्युपगन्तव्यत्वात्, चित्सुखाचार्यादिभिर्यत्नेन तत्साधनाच्च। प्रतिबन्धकमण्याद्यभावस्य शक्त्युद्भवादावन्यथासिद्धत्वान्न प्रागभावसंबन्धाभावहेतुता। नच शक्तिकार्यस्य प्रतिबन्धकाभावेनान्यथासिद्धेर्न तत्र मानमिति वाच्यम्; मण्यादावनतिप्रसक्तप्रतिबन्धव्यवहारान्यथानुपपत्तेरेव मानत्वात्। तथा हि—न तावत्कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम्, वह्न्यभावादावपि तद्व्यवहारप्रसङ्गात्। अत एव न कार्यानुत्पादप्रयोजकत्वम्। नापि सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वम्, प्रतिबन्धकाभावस्य हेतुत्वपक्षे तस्य साग्र्यनन्तर्भूततया तत्कालीनानुत्पादप्रयोजकत्वस्य मण्यादावसंभवात्। नच स्वाभावेतरसामग्रीकालीनत्वं तदर्थः; वह्न्यभावाभावात्मकवह्नीतरसामग्रीकालीनदाहानुत्पादप्रयोजकवह्न्यभावादावतिप्रसङ्गतादवस्थ्यात्। यत्तु चरमका-

## पूरणी

रणकालीनकार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वम्, चरमत्वं च स्वोत्पत्त्यनन्तरभावकारणानपेक्षत्वम्, तादृशश्च करतलानलसंयोगादिः, तत्कालीनकार्यानुत्पादप्रयोजकतया च मण्यादेः प्रतिबन्धकतेति, तदपि न सम्यक्; दुरदृष्टस्य चरमकारणविघटकस्याप्रतिबन्धकत्वापत्तेः। वह्न्यादिशक्त्यभिभवमन्तरेण मण्यादेः कार्यानुत्पादप्रयोजकत्वस्याप्यसंभवात्। न हि प्रकाशमाने सवितरि घटाद्यर्थस्याप्रकाशसंबन्धो दृश्यत इति दिक्। तस्मात्क्लृप्तहेतुशक्त्यभिभावकत्वं तद्व्यवहारप्रयोजकमिति शक्तिसिद्धिः॥

किं च—

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥"

इति स्मृतिरपि तत्र मानमित्यलमसमयपर्जन्यनिनदेन॥

यदप्यनुपलम्भज्ञानमेव साक्षिरूपमभावज्ञाने कारणं नानुपलम्भ इति तदप्यसमञ्जसम्; अभावस्य प्रतियोगिनिरूप्यतया उपलम्भात्मकप्रतियोगिस्मृत्युपहितस्यैव साक्षिणोऽनुपलम्भगोचरत्वेनोपलम्भास्मृतिदशायामनुपलम्भेऽधिकरणग्रहे च सत्यभावज्ञानानुदयप्रसङ्गात्। किं चाभावप्रतीतिपूर्वमनुपलब्धिज्ञानावश्यकत्वे लिङ्गविधयैवानुपलब्धेरभावप्रमापकत्वसंभवात्पृथक्तत्प्रामाण्यं दत्तजलाञ्जलि स्यात्। तस्मात्स्वरूपसदनुपलम्भ एवाभावधीहेतुः॥

नन्वतिरिक्तशक्त्यभ्युपगमपक्षे प्रतिबन्धकाभावस्याहेतुतया न स्वरूपसदनुपलम्भः प्रमाणम्। नच तत्र करणान्तराभावेनागत्यानुपलम्भस्य करणत्वमिति वाच्यम्; क्वचित्प्रतिबन्धकाभावो हेतुः क्वचिन्नेत्यर्थवैशसप्रसङ्गादिति चेन्न; प्रतियोग्युपलम्भासमवहिताधिकरण-

सा च वृत्तिरिन्द्रियसंबन्धाज्जायमाना विषयदेशस्थैव जायते। न च [1]परमत इवान्तरेवावतिष्ठते, न वान्तर्जाता निर्गच्छति। अन्तःस्थत्वे घटादीनामपरोक्षत्वायोगात्। न चेन्द्रियजन्यज्ञानविषयत्वमर्थस्यापरोक्षत्वमिति तदन्यथापि सिद्ध्यतीति वाच्यम्; सुखादेस्तदभावप्रसङ्गात् तस्य केवलसाक्षिभास्यत्वात्। परोक्षे मनोजन्यानुमितिविषयपरमाण्वा-

## दीपनम्

प्रतिकर्मव्यवस्थामुखेनापि साक्षि[2]स्वरूपं निरूपयति—**सा चेति**। संभावितमतान्तरमपि प्रत्याह—**न चेति**। तार्किकमतेनाशङ्क्याह—**न चेति**। **परमाण्वादेरपीति**। न चेन्द्रियत्वेनेन्द्रियजन्य[3]ज्ञानत्वं तदिति वाच्यम्; जन्यतावच्छेदकापरिचये जनकत्वस्यैव दुर्ग्रहत्वा-

## पूरणी

ज्ञानस्यानुपलभ्यमानतया अभिमतत्वात्। अधिकरणग्रहेण विना तत्प्रतीत्यनुदयादिति न किंचिदनुपपन्नम्। यदप्यभावमात्रं न कारणमिति तदप्यसारम्; अन्वयव्यतिरेकतौल्येन भाववदभावस्यापि कारणत्वात्। अभावकारणत्वे अद्वैतबाधकाभावाच्च। न च भट्टसिद्धान्तश्रद्धया तदनभ्युपगमः; कुड्यसंयोगाभावस्य गतौ विशेषणासंसर्गग्रहविरहस्य विशिष्टज्ञाने प्रतिबन्धकजिज्ञासानिवृत्तिलक्षणावसरसङ्गतेर्निरूपणे च हेतुत्वस्य तैरभ्युपगमात्। वस्तुतस्तु तन्मते शक्तिमत्कारणं, अभावस्तु न भावधर्मशक्त्याश्रयः, अतः कार्यापेक्षणीयोऽप्यभावो न कारणमिति तत्सिद्धान्तः। स्वयं च शक्तेरनभ्युपगमान्नियतपूर्ववर्तित्वं कारणत्वमभिप्रेतमित्यभावोऽपि तथाविधः कारणं स्यादेव। ज्ञाननाशस्य संस्कारहेतुत्वाभ्युपगमाच्चेति यत्किंचिदेतत्॥

---

1 परपक्षे—ख. ग. 2 स्फुरणं—च 3 ज्ञानविषयत्वं—च.

देरपि [1]तदापत्तेश्च। न चापरोक्षत्वं जातिः; अविद्यातिरिक्तजडजातौ प्रमाणाभावात्। न हि सर्वमुक्तौ [2]घटादिसद्भावे प्रमाणमस्ति।

---

## दीपनम्

दित्यर्थः। अस्तु तर्ह्यपरोक्षत्वं जातिरेव तज्जन्यतावच्छेदिकेत्याशङ्क्याह—**न चेति**। किमपरोक्षत्वं जातिः वृत्तिनिष्ठा चैतन्यनिष्ठा उभयनिष्ठा वा। नाद्यः; सुखादिज्ञाने तदभावप्रसङ्गात्। न द्वितीयः; चैतन्यस्यैकव्यक्तित्वान्नित्यपरोक्षस्यापि चैतन्यविषयतया साक्षात्करोमीत्यनुभवप्रसङ्गाच्च। अत एव न तृतीयोऽपीत्यर्थः। ननु घटोऽयं घटोऽयमित्यनुगतप्रतीतिविषयतया घटत्वादिजातिरवश्यं स्वीकर्तव्या, अत एव साक्षात्कारत्वमपि जातिः, न चाविद्यैव तदुपादानतयानुगता तद्विषय इति वाच्यम्; पटादावपि तत्सत्त्वेन घटादिबुद्धिप्रसङ्गात्। अतः सुखादावपि तदाश्रयाविद्यावृत्तिः कल्प्यतामित्यत आह—**अविद्येति**। न तावत्सुखादावविद्या-

---

## पूरणी

**अत एवेति**। नित्यानुमेयतया व्यवहारप्रसङ्गादेवेत्यर्थः। ननु वृत्तिचैतन्यनिष्ठत्वविकल्पदोषस्तदवस्थ एवेत्यत आह—**अतः सुखादाविति**। वृत्तिनिष्ठैव सा सुखादावप्यविद्यावृत्तिमादायैव तथा व्यवहार इति न दोष इति भावः। ननु परमते अपरोक्षप्रमाभ्रान्तिज्ञानयोरिव तत्स्थानीयान्तःकरणाविद्यावृत्त्योरपि सा जातिः स्यादित्यरुचेराह—

---

[1] तथात्वापत्तेश्च–ख. [2] घटत्वादि–ख.च.

## दीपनम्

वृत्तौ सा जातिः, विलक्षणवृत्त्योरविलक्षणजात्ययोगात् अविद्यावृत्तिविषय-ज्ञाने अपरोक्षत्वायोगाच्च ।

किं च किं बुद्धेरनुगतत्वं स्वरूपैक्यमेकविषयत्वं वा नाद्यः; नानाघटेषु क्रमेण जायमानानां तासां तदयोगात् विलक्षणानामप्येकबुद्धिदर्शनात् एकव्यक्तिविषयतयोपपत्तेश्च । न द्वितीयः; तस्यातिरिक्तजात्यधीनसिद्धितयान्योन्याश्रयात् अविलक्षणानेकधर्मवत्त्वेन घटाद्यनुगतमतेरन्यथोपपत्तेरुचितत्वात् । किं च यद्यपि घटत्वादिकमनादिवृद्धव्यवहारप्रयोजकतयानादि तथापि न नित्यम्, येनाविद्याभिन्नं स्यात् । नच सर्वमुक्तिकाले तत्सत्त्वे प्रमाणमस्ति, तदानीं वृद्धव्यवहाराभावात् । न चानादिभावस्य नित्यत्वमिति वाच्यम्; अभाववत्तस्याप्रयोजकत्वात् । न चैवं पटादावपि घटादिबुद्धिप्रसङ्गः; घट

---

## पूरणी

अविद्यावृत्तीति । तद्गोचरज्ञानस्य साक्षिरूपत्वादित्यर्थः । ननु परमते ज्ञानगोचरज्ञानान्तरवत् वृत्तिगोचरवृत्त्यन्तरमपि स्यादित्यरुचेराह—किं चेति । ननु विलक्षणधर्माविषयत्वे सतीति विवक्षितमित्यरुचेराह—एकव्यक्तीति । आकाशाद्येकव्यक्तिगोचरबुद्धेरैक्येऽपि तज्जात्यसिद्ध्या व्यभिचारादित्यर्थः । तस्यातिरिक्तेति । एकव्यक्तिविषयत्वस्य जात्यसाधकतया एकधर्मविषयत्वं वाच्यम्, तथा चान्योन्याश्रय इत्यर्थः । ननु नैकधर्मविषयत्वमनुगतत्वम् । किं तु विलक्षणधर्मागोचरत्वमित्यरुचेराह—अविलक्षणेति । नन्वनेकधर्मविषयत्वकल्पनायां गौरवमित्यपरितोषादाह—किं चेति । अभाववदिति । यथा अनाद्यभावत्वमविनाशित्वाप्रयोजकं; प्रागभावे व्यभिचारात्, तथा अनादिभावत्वमपि; विपक्षे बाधकाभावादित्यर्थः । तथा च विनाश्यनादिजडभावरूपाविद्या-

## दीपनम्

इति प्रत्यक्षे घटव्यक्तिविशेषस्यापि कारणत्वात् । अनुभवसिद्धस्य घटादौ पटादिव्यावृत्तस्य घट इति बुद्धिजननयोग्यतास्वरूपस्यापह्नोतुमशक्यत्वात् । नच घटत्वादिकमेव विशेषो नान्य इति वाच्यम्; घटत्वादेरपि व्यक्तिविशेषसमवेतत्वेनैव पटत्वादिव्यावृत्तत्वात् । अन्यथा व्यक्त्यसंबन्धसमयेऽपि घटत्वपटत्वयोः परस्परं व्यावृत्तधीप्रसङ्गात् ।

## पूरणी

लक्षणलक्षितत्वादविद्यात्मिकैव घटत्वादिरिति भावः । यद्यपीदमविद्यासंबन्धादिसाधारणं तथापि तस्य तादात्म्येनानुगतव्यवहारानर्हत्वादिना तद्व्यतिरेकस्यापि सिद्धिः । तदर्हत्वं वा हेतौ विशेषणमिति द्रष्टव्यम् । ननु तद्योग्यत्वमपि घटत्वादिनेति तत्साधारण्ये पटादेरपि तद्योग्यताप्रसङ्ग इत्याशङ्क्य निषेधति--**न च घटत्वेति । घटत्वादेरिति ।** तद्योग्यत्व विलक्षणतत्तद्व्यक्ति[1]स्वरूपं विलक्षणस्वरूपविशेषावच्छेदेनैव ग्राह्यम्, न तु विलक्षणजात्या; जातिवैलक्षण्यस्य व्यक्तिवैलक्षण्याधीनया अन्योन्याश्रयप्रसङ्गादित्यर्थः । न चैवमनुपयोगाज्जात्यपलापप्रसङ्गः; विलक्षणव्यक्तिविशेषेष्वनुगतबुद्धिनिमित्तत्वेन तत्स्वीकारादिति भावः । **व्यक्त्यसंबन्धेति ।** यद्यपि जातेर्व्यक्त्यसंबन्धसमयः प्रलयः, तदा व्यावृत्तबुद्ध्यापादनमयुक्तम्; व्यवहर्तॄणामभावात्, न च व्यक्त्यप्रतीतिसमय इति तदर्थः; तदानीमपि जातेरप्रतीत्या तदापादनायोगात्, तथापि व्यक्तिविशेषसंबन्धाप्रतीतिकाल इत्यर्थः । घटपटादेर्विशिष्य शक्त्यनवधारणदशायां घटादिपदं किंचित्प्रवृत्तिनिमित्तावच्छिन्नार्थस्य वाचकमिति सामान्यतस्तज्जातिप्रतिसन्धाने संमुग्धसविकल्पकप्रत्यक्षे वा तद्व्यावृत्तिबुध्यापत्तिरिति भावः । ननु जातिवैलक्षण्यस्य व्यक्तिवैलक्षण्याधीनत्वे घटपटवद्घटेष्वपि परस्परविलक्षणबुद्धिप्रसङ्गः,

[1] स्वरूपे–म.

**तस्मादपरोक्षार्थविषयत्वमेव ज्ञानेऽपरोक्षत्वम्। अर्थस्य चापरोक्षत्वमपरोक्षानावृतसंवित्तादा[1]त्म्यात्,**

## दीपनम्

न चैवं [2]घटादिवत्पटानामपि परस्परं विलक्षणधीप्रसङ्गः; पटादेर्घट इति बुद्धियोग्यतास्वरूपत्वाभावात्। घटानां च सर्वेषां तत्सत्त्वात्। तत्र च व्यक्तिविशेषतादात्म्यापन्नाविद्यैवावच्छेदिका। घटत्वादिकमपि परमतेऽपि व्यक्तिविशेषसमवेतमेवावच्छेदकम्, न स्वरूपेण; पटादावपि तत्सत्त्वात्। तस्मादनुगतबुद्धिर्व्यक्तिविशेषतादात्म्यापन्नामविद्यामेव विषयीकरोतीति नातिरिक्ता जातिः। केचित्तु चैतन्यमेवानुगतव्यवहारविषय इत्याहुः।

किं तर्हि ज्ञानेऽपरोक्षत्वं, तत्राह—**तस्मादिति**। नन्वर्थस्यापरोक्षत्वमपरोक्षज्ञानविषयत्वमेव, अनेवंभूतस्य वह्न्यादेस्तददर्शनात्, ततश्चान्योन्याश्रय इत्यत आह—**अर्थस्य चेति**।

## पूरणी

तत्तद्व्यक्तिवैलक्षण्येन प्रतिव्यक्ति जातिवैलक्षण्यापातादित्याशङ्क्य निषेधति—**न चेति**। **पटादेरिति**। व्यक्तीनां परस्परं संस्थानविशेषवैलक्षण्यं न जातिवैलक्षण्यप्रयोजकं, किं तु तत्तद्विशिष्टबुद्धियोग्यस्वरूपवैलक्षण्यम्, घटविशिष्टबुद्धियोग्यतास्वरूपवैलक्षण्याभावान्न घटानां परस्परवैलक्षण्यधीः। पटादेस्तु घटापेक्षया तत्सत्त्वात्तद्बुद्धिरित्यर्थः। ननु तथापि साधारणाविद्यायाः कथमसाधारणघटादिव्यवहारनिमित्तत्वमित्यत्राह—**व्यक्तिविशेषेति**। **परमतेपीति**। इदं च सर्वा सर्वगता जातिरिति पक्षे द्रष्टव्यम्। **केचिदि**त्यस्वरसाविष्कारः। तद्बीजं तु

[1] त्म्यम्–ग. [2] घटपटादिवद्घटानामपि–क. ख. ग. घ.

**न स्वतः; जडस्य तदयोगात्। [1]संविदस्तु स्वत एव तत्; "यत्साक्षादपरोक्षात्" इति श्रुतेः। तत्र साक्षादिति घटादिवत् ज्ञानद्वाराऽपरोक्षत्वस्य निरस्तत्वात्। संवित्तादात्म्यमात्रेण घटादेरापरोक्ष्ये [2]तु सर्वं सर्वस्य सर्वदापरोक्षं स्यादित्यनावृतेत्युक्तम्।**

## दीपनम्

घटादेरित्यर्थः। ननु किं संविदोऽप्येवमेवापरोक्षत्वं, स्वत एवेति चेत्, अर्थस्यापि तथात्वं किं न स्यादिति, तत्राह—**न स्वत इति**। जडस्यापि स्वतोऽपरोक्षत्वेऽतीतव्यवहितार्थस्याप्यपरोक्षत्वं स्यादित्यर्थः। संविदस्तु नोक्तदोषः, तस्या वक्ष्यमाणविषयैकत्वादित्यभिप्रेत्याह—**संविदस्त्विति**। न चैवं पुरुषान्तरसंविदोऽप्यपरोक्षत्वप्रसङ्ग इति वाच्यम्; इष्टापत्तेः। न चैवं देवदत्तस्येदानीं घटसंविदस्ति न वेति संशयो न स्यादिति वाच्यम्; संविदि देवदत्तीयत्वस्यान्यं प्रत्यनावृतसंवित्तादात्म्याभावेनानपरोक्षत्वादित्यर्थः। संविदः स्वतोऽपरोक्षत्वे प्रमाणमाह—**यत्साक्षादिति। ज्ञानद्वारेति।** घटादेर्हि स्वाकारवृत्तिसंसर्गे सत्येव वक्ष्यमाणविषयानावृतसंवित्तादात्म्यमिति ज्ञानप्रयुक्तं तदित्यर्थः।

## पूरणी

जडव्यावहारिकघटादिव्यवहारस्य तादृगविद्यानिमित्तकत्वे संभवति तद्विपरीतचैतन्यकल्पनायोगात्। प्रपञ्चसत्ताव्यवहारे तु सद्विलक्षणाविद्यायास्तन्निमित्तत्वायोगेन तथात्वकल्पनादिति। अत एव 'अविद्यातिरिक्तजडजाता' विति मूले जडपदं सत्ताव्यवहारव्यावृत्त्यर्थं मन्तव्यम्। चैतन्यव्यावृत्त्यर्थमाह—**घटादेरिति**। **अतीतव्यवहितेति**। इदं चोपलक्षणम्—अर्थस्य स्वतोऽपरोक्षत्वे प्रमाणव्यवहारवैयर्थ्यं चेति द्रष्टव्यम्। **देवदत्तीयत्वस्येति**। घटसंविदो देवदत्तीयत्वं तदन्तःकरणवृत्त्यभिव्यक्तत्वम्। परबुद्धेश्चाप्रत्यक्षत्वादन्यसाक्षिणा तदनवभास इति भावः।

[1] संविदश्च—च. [2] च.

## दीपनम्

एतदुक्तं भवति—संविदो हि वक्ष्यमाणविषयैकत्वात्प्रकाशत्वाच्च न स्वपरसंविद्विषयत्वम्। नापि तद्गोचरेन्द्रियजन्या वृत्तिः संभवति। शब्दात्तद्गोचरापरोक्षवृत्तिस्तु संविदः स्वतोऽपरोक्षत्वं विना न निर्वहति। अपरोक्षार्थविषयत्वेनैवेन्द्रियजन्यवृत्तेरपरोक्षत्वस्य वक्तव्यत्वात्। अतो वर्णितश्रुतेश्च संवित्स्वत एवापरोक्षा। एवं च सद्ब्रह्मोपादानकप्रपञ्चानुगतसत्ता यथा कारणस्वरूपमेव, एवं जडप्रपञ्चापरोक्षत्वमपि तदधिष्ठानापरोक्षचैतन्यमेव। तदुक्तम्—"प्रमाण[1]ज्ञानादन्तरपरोक्षानुभवान्न विषयस्यापरोक्षता भिद्यते" इति। अतोऽपरोक्षसंवित्तादात्म्यमेव घटादेरपरोक्षत्वमिति नान्योन्याश्रय इति।

## पूरणी

संविदः स्वतोऽपरोक्षत्वं न्यायोपेतं चेत्याह—**एतदुक्तमिति**। **न स्वपरेति**। चैतन्यस्य स्वप्रकाशत्वेन न स्वविषयत्वम्, एकयाच्च न परसंविद्विषयत्वमित्यर्थः। द्वारभूतवृत्तिज्ञानासंभवमप्याह—**नापीति**। यद्यपि घटाद्यैन्द्रियकवृत्तेस्तदवच्छिन्नचैतन्यगोचरत्वमुक्तं, तथापि स्वरूपेणाखण्डपूर्णचैतन्याकारा तद्वृत्तिर्नेत्यर्थः। **शब्दादिति**। शब्दस्य परोक्षधीजननस्वभावतया तज्जन्यवृत्तेः स्वतस्तदयोगादित्यर्थः। तत्र हेतुः—**अपरोक्षार्थेति**। ऐन्द्रियकत्वमविवक्षितं अपरोक्षत्वाभिमतपरं वा। उक्तरीत्या वृत्तेरर्थापरोक्षत्वाधीनापरोक्षताकत्वादित्यर्थः। वृत्तेरित्यनन्तरं इवेति वाध्याहारः। तेनैन्द्रियकवृत्तिवच्छब्दजन्यवृत्तेरप्यपरोक्षार्थविषयत्वेनैवापरोक्षत्वस्य वाच्यत्वादित्यर्थः। अपीति वाध्याहर्तव्यम्। तथा पाठे तु सुगम एवार्थः। वस्तुतस्तु तद्गोचरापरोक्षवृत्तिसंभवेऽपि न वृत्तिद्वारकं संविदपरोक्षत्वम्, वृत्तेरनावृतसंवित्तादात्म्यद्वारैवार्थापरोक्षनिमित्तत्वात्। संविद्गोचरसंविदन्तरस्य च विरहादिति ध्येयम्। **अतः** उक्तन्यायात्। **नान्योन्याश्रय इति**। ननु ज्ञानस्या-

[1] ज्ञानादनन्तर—च.

**तस्माद्यदान्तःकरणवृत्त्या घटाद्यवच्छिन्नचैतन्यमुपधीयते तदान्तःकरणावच्छिन्नघटाद्यवच्छिन्नचैतन्ययोर्वस्तुत एकत्वेऽप्युपाधिभेदाद्भिन्नयोरेकोपाधिसंबन्धेनैक्याद्भवत्यभेद इत्यन्तःकरणावच्छिन्नचैतन्यस्य [1]विषयावच्छिन्नतदधिष्ठान[2]चैतन्याभेदसिद्ध्यर्थं वृत्तेर्निर्गमनं वाच्यम् ॥**

## दीपनम्

ननु बाह्यस्य घटादेः कथमान्तरसंवित्तादात्म्यम् , नच संविद्रूपब्रह्मोपादानकत्वात्संवित्तादात्म्यमिति वाच्यम् ; व्यवहितस्यापि तत्सत्त्वात् । नच सा संविदावृतेति वाच्यम् ; संविद एकत्वेन निकटस्थघटाधिष्ठानसंविदोऽप्यावृतत्वप्रसङ्गेनैकस्याप्यपरोक्षत्वानुपपत्तेः , [3]सर्वं वा सर्वदा अपरोक्षमिति परोक्षत्वापरोक्षत्व व्यव[4]स्था न स्यादित्याशङ्क्याह—**तस्मादिति** । तस्माद्यदान्तःकरणवृत्त्या घटाद्यवच्छिन्नचैतन्यमुपधीयते अवच्छिद्यते तदैकोपाधिसंबन्धेनेत्यग्रिमेणान्वयः । ननु भिन्नयोः कथमेकोपाधिसंबन्धेऽप्यैक्यम् , अभेदे वा किमुपाधिसंबन्धेनेति, तत्राह—**वस्तुत इति** । चैतन्यं ह्यन्तःकरणसाक्षिभूतं

## पूरणी

परोक्षत्वे आवरणनिवृत्त्या अनावृतसंवित्तादात्म्यलक्षणमर्थस्यापरोक्षत्वम् , अर्थापरोक्षत्वे च ज्ञानापरोक्षत्वमित्यन्योन्याश्रयस्त्वपक्षेऽप्यापततीति चेत् अत्रेदं तत्त्वम्—अन्तःकरणोपहितसंवित्तादात्म्यमर्थस्यापरोक्षत्वम् , साक्षिसंबन्धस्यैवापरोक्षताप्रयोजकत्वात् । तादृश्येव संविदनावृता भवतीत्यनावृतेत्युक्तम् । उपधानं च नित्यानावृते सुखादौ स्वरूपेण । आवृते तु वृत्तिद्वारकम् । तादात्म्यं च तत्प्रतियोगिकसत्तावच्छेदकभेदशून्यत्वम् । तच्चात्मार्थसाधारणम् । अत आवृताखण्डाद्यंशस्येदानीं तदाकार-

---

[1] विषयाभिन्न—ग. [2] चैतन्यस्य चाभे—ख. च. [3] सर्वस्य सर्वदा—च.
[4] स्थानुपपन्ना स्या—ख. च.

## दीपनम्

बाह्यघटाद्यवच्छिन्नं चैकमप्यन्तःकरणावच्छेदानवच्छेदाभ्यां भिद्यते आकाशमिव घटावच्छेदानवच्छेदाभ्याम् । ततश्च चक्षुरादिसन्निकर्षा-[1]द्यनुसारेणान्तःकरणं यदा वृत्तिद्वारा बाह्यघटादिना संयुज्यते तदा प्राक्तेनानवच्छिन्नमपि विषयावच्छिन्नं चैतन्यमवच्छिद्यत इति एको-पाध्यवच्छेदाद्यः प्राक्तदनवच्छेदप्रयुक्तो भेदस्तद्राहितं भवति । यदा घटाधिष्ठानचैतन्येन घटोऽभिन्न इत्यन्तःकरणावछिन्नचैतन्येनाप्यभिन्नो भवति तदा अपरोक्षार्थविषयिण्या वृत्त्या अपरोक्षया घटावच्छिन्नचैतन्या-वरणं निवर्तत इत्यनावृतसंवित्तादात्म्याद्घटोऽपरोक्षो नान्य इति प्रति-कर्मव्यवस्था ॥

अत्र यद्यपि प्रमातृविषयादिचैतन्यमेकं तथापि घटावच्छिन्न-मज्ञातं सत्प्रमेयं, तदेव निवृत्ताविद्यं सत्प्रमाणफलं, वृत्त्यवच्छिन्नं च प्रमाणं, अन्तःकरणविशिष्टं प्रमात्रिति न प्रमात्रादिसाङ्कर्यम् । नन्व-विद्यायां प्रतिबिम्बितचैतन्यं जीवः, तदेव प्रतिबिम्बत्वविशिष्टचैतन्य-मन्तःकरणेनावच्छिद्यत इति तदपि प्रतिबिम्बितचैतन्यमेव । घटाद्यधि

## पूरणी

वृत्तिद्वारकान्तःकरणोपधानाभावात् नापरोक्षावभासः । अनावृत-चैतन्यांशस्य स्वरूपेणान्तःकरणोपधानात्तथावभासः । आवरणानावरणे तु फलबलकल्प्ये । अतो न सङ्कटं किंचिदित्यवधेयम् । अत एवानु-पदं वक्ष्यति " ततोऽपरोक्षार्थविषयिये " ति । **अभिन्न इति ।** तादा-त्म्यापन्न इत्यर्थः । अधिष्ठानचैतन्यस्यान्तःकरणावच्छेदेन साक्षिरूप-तया तत्संबन्धो भवतीति यावत् ।

---

[1] ध्यनुरोधेन—च.

**एवं घटाद्यवच्छिन्नचैतन्यावरणाज्ञाननिवृत्त्यर्थमपि तत्कल्प्यम्, यन्मते घटाद्यवच्छिन्नचैतन्या[1]वारकाज्ञानं तन्निष्टम्।**

दीपनम्

ष्ठानचैतन्यं तु बिम्बचैतन्यम्। जीवव्यावृत्तरूपेणैव ब्रह्मण प्रपञ्चोपादानत्वात्। तत्कथं भेदकोपाधावविद्यादौ सत्येव बिम्बप्रतिबिम्बयोरभेद इति [2]चेन्न; सत्यं बिम्बत्वप्रतिबिम्बत्वविशिष्टयोर्नाभेदः। कथं तर्ह्यन्तःकरणविषयावच्छिन्नचैतन्ययोरभेदः। प्रतिबिम्बत्वविशिष्टेऽपि हि चैतन्ये तदुपलक्षित शास्त्रप्रतिपाद्यं प्रतिबिम्बस्वरूपभूतं चैतन्यमस्त्येव। एवं बिम्बत्वविशिष्टेऽपि। ततश्च विषयावच्छिन्नचैतन्यस्य प्रतिबिम्बाभेदयोग्यस्वरूपमात्रस्यान्तःकरणानवच्छेदेन तदवच्छिन्नाद्भिन्नस्यान्तःकरणेनावच्छेदे प्रतिबिम्बत्वाधिकरणाभेदो न विरुद्ध्यत इति भवति घटादेर्वृत्त्या साक्ष्युपरागः। एवं च घटाद्यवच्छिन्नचैतन्यमपि बिम्बप्रातिबिम्बभावेन द्विधा वृत्तमिति न जीवस्य घटप्रमातृतादशायां बिम्बात्मकेश्वरस्य घटसंबन्धानपायात् पृथक्सर्वज्ञत्वविरोधोऽपीति भावः।

नन्वेवमहं न जानामीत्यनुभूयमानमज्ञानमात्मनिष्ठमेवेति न तन्निवृत्त्यर्थं वृत्तिनिर्गमनं कल्प्यमिति तत्राह—**यन्मत इति**। अज्ञानं ह्यावार-

पूरणी

**ब्रह्मणः** चैतन्यस्य। अन्यथा मयि घटादिरिति प्रतीतिप्रसङ्गादिति भावः। **शास्त्रप्रतिपाद्यमिति**। शास्त्रप्रतिपाद्यतया शास्त्रविषयस्वरूपमित्यर्थः। विषयस्य घटादेः प्रतिबिम्बस्य च स्वरूपभूतं वेत्यर्थः। **बिम्बप्रतिबिम्बभावेनेति**। अविद्याबिम्बत्वरूपेण अन्तःकरणावच्छेदोपाधिना तत्प्रतिबिम्बजीवाभिन्नत्वरूपेण चेत्यर्थः। यथाश्रुते विषयावच्छिन्नस्याविद्याप्रतिबिम्बत्वाभावेनासङ्गतेरिति ध्येयम्। **न जीवस्येति**। अन्तःकरणोपहितजीवसाक्षिरूपेण बिम्बत्वरूपेण च

[1] वरणाज्ञानं—ग. [2] चेत्सत्यम्—ख.

**ज्ञानं हि स्वसमानाश्रयविषयमज्ञानं निवर्तयति । अन्यथाति-प्रसङ्गात् ।**

---

दीपनम्

कत्वादावृताश्रयमेव तमोवदिति मूलाज्ञानमेकाश्रयविषयमिति घटाद्यज्ञानमपि तद्वदेव। अनुभवस्य तु गतिर्वक्ष्यमाणविधया भविष्यतीति विषयचैतन्याश्रयमेवाज्ञानमिति येषामभिप्रायस्तन्मत इत्यर्थः । तन्मते ज्ञानाज्ञानयोरेकचैतन्याश्रयत्वसिद्धये वृत्तिनिर्गमनमिति वक्तुं ज्ञानस्य स्वनिवर्त्याज्ञानेनैकाश्रयविषयत्वनियममाह——**ज्ञानं हीति । अतिप्रसङ्गादिति ।** देवदत्तस्य घटज्ञानेन यज्ञदत्तीयघटाज्ञानस्य देवदत्तीयपटज्ञानस्य च निवृत्तिप्रसङ्गादित्यर्थः ।

नन्वेवमपि विषयचैतन्यस्थाज्ञानवादे देवदत्तीयघटापरोक्षज्ञानाद्यज्ञदत्तीयघटाद्यज्ञानस्य निवृत्तिः कथं न स्यात् , तदाश्रयचैतन्यस्य देवदत्तीयवृत्तिमदन्तःकरणावच्छिन्नतया तज्ज्ञानाश्रयाभिन्नत्वात् । न च यदज्ञानं यं प्रति स्वाश्रयमावृणोति तज्ज्ञानादेव तन्निवर्तत इति न यज्ञदत्त प्रत्यावारकं घटाज्ञानं देवदत्तज्ञानान्निवर्तत इति वाच्यम् ; समानाश्रयत्वनियमवैयर्थ्यात , वृत्तिनिर्गमनं मुधेति चेदुच्यते —निर्गतान्तःकरणप्रयुक्तचैतन्यैक्याभावे पुरुषविशेषनिरूपितावरणाज्ञानतन्निवृत्त्योरसंभवात् । अविद्या हि स्वाधिकरण एव [1] संशयं कुर्वाणा तं प्रत्यावृणोतीति साक्ष्यभेदाय वृत्तिनिर्गमनं वाच्यम् ।

पूरणी

तस्य तद्दृष्टत्वमिति न विरोध इत्यर्थः । **वक्ष्यमाणविधयेति** । अहं न जानामीत्यनुभवो मूलाज्ञानविषयो न त्ववस्थाज्ञानविषय इत्यर्थः । **आवरणाज्ञानेति** । साधकाभावेनावरणाज्ञानस्य निवर्तकाभावेन तन्निवृत्तेश्चासंभवादित्यर्थः । तत्र निवृत्त्यसंभवमुपपादयति— **अविद्या हीति । संशयमिति ।** अध्यासमित्यर्थः । **तं प्रतीति ।** पुरुष-

---

[1] संशयादि—ख.

## दीपनम्

किं च न हि विषयचैतन्यस्य प्रमातृचैतन्यभेददशायां अज्ञानस्य तदावारकत्वे किंचित्प्रमाणमस्ति। तदनवभासस्य पुरुषान्तरसंवेदनवत्प्रमाणवैकल्यादेवोपपत्तेः । ननु चैतन्यस्य स्वाभाविकैक्यमेवावभासेऽपेक्ष्यत इत्यनवभासाद्विषयचैतन्यमावृतमस्तु, किमन्तःकरणप्रयुक्ताभेदेनेति चैतन्यमपि पुरुषान्तरं प्रत्यावृतमिति चेन्न ; तत्तत्पदार्थेदमंशोपहितचैतन्यस्यानावृतस्याप्यन्तःकरणानुपधानदशायामननुभवात् । न च तदप्यावृतमिति वाच्यम् ; सम्प्रतिपन्नावश्यकभेदमात्रेणानवभासोपपत्तौ तत्रावरणे प्रमाणाभावात् क्वचिदपीदमंशनिरूपितसंशयाद्यभावेन तद्योग्यतारूपावरणकल्प-

---

## पूरणी

विशेषप्रतियोगिकमावरणं न तु तन्निष्ठम्, आवरणविक्षेपयोः समानाश्रयत्वादित्यर्थः । तथा च पुरुषविशेषप्रतियोगिकावरणं तद्धेत्वज्ञानं च विषयावच्छिन्नचैतन्यगतं अन्तःकरणवृत्तेस्तच्चैतन्यसंबन्धं विना निवर्तयितु न शक्यम् । आन्तरवृत्त्यापि तन्निवृत्तौ परोक्षेऽपि तदापत्तेः । न चापरोक्षवृत्तेरेव तन्निवर्तकत्वान्नातिप्रसङ्ग इति वाच्यम् ; अपरोक्षार्थविषयकत्वेनैवास्यापरोक्षत्वात् । आन्तरवृत्त्याप्यावरणनिवृत्तौ च परोक्षवह्नेरप्यनावृतसंवित्तादात्म्येनापरोक्षत्वप्रसङ्गादिति भावः । वृत्तेरनिर्गमे आवरणाज्ञानासिद्धिप्रसङ्गमाह—**किं चेति** । **तदनवभासस्येति** । स्वसत्ताप्रकाशसामग्रीकालीनविपरीतव्यवहारयोग्यताया आवरणात्मकत्वादिति भावः । **सम्प्रतिपन्नेति** । विषयप्रमातृचैतन्ययोर्बिम्बप्रतिबिम्बरूपेण भेदस्य सर्वसिद्धत्वात् सर्वथा तयोरैक्ये अन्तःकरणसुखादिवत् सर्वदा घटादेरपि भानप्रसङ्गेन तद्भेदस्यावश्यवाच्यत्वाच्चेति साक्षिसंबन्धविरहादेवेदमंशानवभासोपपत्तौ न तत्रावरणकल्पनमित्यर्थः । **तद्योग्यतेति** । संशयादिविपरीतयोग्यतारूपेत्यर्थः ।

**मूलाज्ञाननिवर्तके तथा दृष्टत्वाच्च । न च वृत्ति-निर्गमनं विनान्तःकरणचैतन्यगतज्ञानस्य विषयचैतन्यस्थता भवति । न चान्तरेव जाता निर्गच्छति। कार्यस्य कारणं विनान्यत्रागमनात् । अन्तःकरणस्य सर्वात्मनागमनात् ।**

### दीपनम्

नायोगात् । अत इदमाकारवृत्त्यवच्छेदाच्चैतन्याभेदे संजातेऽपि शुक्तित्वादिविशेषानवभासात्तत्रावरणं कल्पनीयमिति वृत्तिनिर्गमनमपेक्षितमेवेति ।

किं च मूलाज्ञानस्य निवर्तकज्ञाने तत्सामानाधिकरण्यं दृष्टमेवेत्यन्यत्रापि लाघवात्तद्वक्तव्यमित्याह—**मूलेति** । **अन्तःकरणचैतन्येति** । अन्तःकरणावच्छिन्नचैतन्येत्यर्थः । अन्तरेवोत्पन्ना वृत्तिर्निर्गच्छतीति पक्षं दूषयति—**न चान्तरिति** । **सर्वात्मनेति** । प्रथमं सङ्कुचितस्य हि चक्षुरादिना विषयदेशव्यापी कश्चिदवस्थाविशेषो जायते । सैव वृत्तिरिति स्वस्थानस्थस्यैवान्तःकरणस्य धर्मः । न चेदेवं, यदि

### पूरणी

**मूलाज्ञानस्येति** । **लाघवात्** क्लृप्तत्वलाघवात् । तथा च घटाद्यवच्छिन्नाज्ञाननिवृत्तिः स्वसमानाश्रयज्ञानसाध्या अविद्यानिवृत्तित्वात्, मूलाज्ञाननिवृत्तिवत् । न च दृष्टान्ते साध्यवैकल्यम्; चरमान्तःकरणवृत्तेरन्तःकरणावच्छिन्नचैतन्यगतत्वादिति भावः । **सङ्कुचितस्य हीति** । सङ्कुचितमन्तःकरणं चक्षुरादिद्वारा विपुलावस्थया विषयचैतन्येन संबध्य तद्देशव्यापिनीं वृत्तिमारभत इति नास्मन्मते सर्वथान्तः-

**अत एव वृत्तिर्न गुणो न वा क्रिया। ननु परिच्छिन्नेनान्तःकरणेन कथं बहुदेशव्यापिकार्यारम्भ इति चेन्न; चक्षुरादेरिव लोके जलूकादेरिव च तदुपपत्तेः।**

## दीपनम्

वृत्तिर्नाम कश्चित्परिणामविशेषोऽन्तरेवोत्पन्नः क्रियया घटादिकं व्याप्नुयात् तर्हि वृत्तिव्यतिरिक्तान्तःकरणविपुलावस्थायां प्रमाणा[1]भावादन्तःकरणनिर्गमनं विना तत्कार्यस्य तदनुपपत्तेरन्तःकरणमपि सर्वात्मना बहिर्निर्गच्छेदिति सद्यः शरीरमचेतनं स्यादित्यर्थः। **अत एव** यतो घटादिना संयुज्यते वृत्तिरत एव। न हि वृत्तिघटयोः संयोगातिरिक्तः संबन्धोऽस्तीति भावः। यदि कश्चिददृष्टाकृष्टैरवयवान्तरैः सहिता एव चक्षुरवयवा बहुदेशव्यापि चक्षुरन्तरमारभन्त इति ब्रूयात्तं प्रत्याह— **लोक इति**। आदिशब्देन प्रभा सङ्गृह्यते ॥

## स्वरूपसंबन्धभङ्गः

**नन्वेवं परोक्षस्थलेऽपि वृत्तिनिर्गमनं वक्तव्यमिति तदप्यपरोक्षं स्यात्, अन्यथा ज्ञानस्य विषयसंबन्धासंभवात्। न च विषयविषयिभाव**

## पूरणी

करण धर्मः। त्वत्पक्षे त्वन्तरुत्पन्नसङ्कुचितान्तःकरणपरिणामविशेषस्यान्तःकरणेन सह बहिर्निर्गमे सर्वात्मना निर्गमः स्यादिति देहावच्छिन्नात्ममनोवियोगस्यैव मरणतया सद्य शरीरघातः स्यादिति भावः। **प्रमाणाभावेने**त्युपलक्षणम्। तथा सति तद्देश एव वृत्तिसंभवेनान्तर्वृत्तिकल्पनावैयर्थ्याच्चेति द्रष्टव्यम्। **जलूकादेरिवेति** मूले। ननु

[1] भावेनेतिव्याख्यानुसारी पाठः.

## दीपनम्

एव संबन्ध इति वाच्यम्; परस्परं संबद्धयोर्हि विषयविषयिभावसंबन्धः, न चात्र संयोगादिः संभवति। यत्तु स्वरूपमेव संबन्ध इति तन्न; स्वरूपमात्रस्याविशिष्टप्रत्ययसाधारणस्य [1]विशिष्टधियं प्रत्यानियामकस्य संबन्धत्वायोगात्। किं च न तावत्स्वरूपद्वयं संबन्धः, अतीतानागतविषयज्ञाने असंबन्धप्रसङ्गात्। नापि ज्ञानमात्रम्; अखण्डज्ञानव्यक्तेः स्वतो विशेषाभावेन एकेनैव सर्वेणापि संबन्धप्रसङ्गात्। न च यज्ज्ञानं यद्व्यवहारं जनयति तत्स्वरूपं तस्यैव संबन्ध इति वाच्यम्; व्यवहारविषयत्वस्यापि ज्ञानविषयत्वेनैव वक्तव्यत्वात् उपेक्षाज्ञाने तदभावाच्च।

## पूरणी

पटादाविव संवलनादिनानुपलभ्यमानस्य विस्तारस्य तदभावे जलूकाया मुपलम्भः न त्ववस्थाविशेषोत्पत्तिरिति दृष्टान्तवैषम्यमिति चेन्न; संवलनाभावदशायामपि जलूकायां विस्तारवैषम्यस्योपलभ्यमानत्वेन अवस्थाविशेषोत्पत्तेरेवावश्यवाच्यत्वात्, अत एवारुचेर्वा प्रभानिदर्शनम्। तत्र सङ्कुचितदीपप्रकाशात्प्रभारूपतद्विकासावस्थोत्पत्तेरिति। न च बहिर्देशे वृत्तेर्योग्यानुपलम्भबाधः; वृत्तेर्बहिरिन्द्रियायोग्यत्वादिति भावः।

ननु विषयाविशिष्टप्रत्यक्षे ज्ञानस्वरूपानवभासेन तत्स्वरूपं तादृशधीनियामकतया संबन्धः स्यादित्यरुचेराह—**किं च न तावदिति**। **ज्ञानविषयत्वेनैवेति**। ज्ञानस्य तत्तद्विषयमन्तरेण तद्विषयकव्यवहार-

[1] विशिष्टविषय—च.

## दीपनम्

तद्योग्यता च घटादिज्ञाने न निरूपयितुं शक्यते । तस्य च पटादिव्यावृत्तघटसंबन्धाभावेन घटमात्रव्यहारजनकताप्रयोजकरूपाभावात् । साधारणकारणमात्राच्च [1]कार्ये विशेषाभ्युपगमे स्वभाववाद एव । अत एव तदिन्द्रियसन्निकर्षजन्यत्वमेव तत्र विशेष इति निरस्तम् । एतस्य ज्ञानस्य विषयसंबन्धस्वरूपविशेषाभावे पटेन्द्रियसन्निकर्षजन्यज्ञानाविशेषेण [2]तत्सान्निकर्षजन्यत्वस्य दुर्ग्रहत्वात् । न च तत्तद्व्यक्तिरेव विशेषः ; सामान्यालिङ्गितव्यक्तिमात्रस्य सामान्यकार्यकारणताश्रयतया धर्मविशेष विना तत्र कार्यकारणताविशेषायोगात् । तत्तद्व्यक्तित्वस्यापि तदीयताप्रयोजकानतिप्रसक्तसंबन्धाभावात् । तत्तत्क्षणस्य हेतुत्वे च सहकारिमात्रविलोपप्रसङ्गः । किं चैकस्य स्वरूपद्वयस्य वा संबन्धत्वे ज्ञानघटावित्यनुभवाद्धटज्ञानमित्यनुभवस्य विशेषो न स्यात् । न चैकत्र तदीयत्वं [3]भात्यन्यत्र नेति वाच्यम् ; ज्ञानातिरिक्ततदीयत्वस्याभावात् । तज्ज्ञानस्योभयत्राप्यविशेषात् । एवं संबन्धिस्वरूपमात्रस्यैव संबन्धत्वे संबन्धिस्वरूपविशेषकृत एव विशेष इति साकारतापत्तिः ।

## पूरणी

जनकत्वस्याप्यसंभवादित्यर्थः । **न निरूपयितुमिति** । सबंन्धं विनेति शेषः । व्यक्त्यन्वयत्वमात्रं विशेषः तत्तद्विषयसंबन्धित्वं तत्तत्क्षणसहकृतत्वं वेति विकल्प्य क्रमेण दूषयति--**सामान्यालिङ्गितेत्यादिना** । ननु तत्तद्विषयसंबन्धित्वमेव विशेषः, तत्संबन्धश्च व्यवहारदर्शनोन्नेयतत्तत्स्वरूपमिति नातिप्रसङ्ग इत्यस्वरसादाह—**किं चेति** । **साकारतेति** । संबन्धं विनापि तदाकारं ज्ञानमित्यभ्युपगमादित्यर्थः । नन्वस्तु

[1] कार्यविशेषा—**च.** [2] तत्सन्निकृष्टेन्द्रियजन्यत्वस्य—**च.** [3] भात्यपरत्र—**च.**

## दीपनम्

विशेषणताया अपि स्वरूपातिरिक्ताया अभावात्। तस्मान्न संबन्धिमात्रं स्वरूपसंबन्धः ॥

**नापि स्वरूपातिरिक्तो धर्मः स्वरूपसंबन्धः। स हि न तावदभावरूपः; प्रतियोग्यनिरूपणात्। भावरूपोऽपि न जन्यः; ज्ञानस्य जन्यधर्मानाश्रयत्वेन तदयोगात्। नित्योऽपि न तावत्प्रतिज्ञानं भिद्यते, एककार्यमात्रवृत्तिनित्यसामान्ये प्रमाणाभावात्। अन्यथा जातिरूपसामान्यस्याप्यनेकवृत्तित्वानियमप्रसङ्गात, गुणाद्यन्तर्भावेन तस्य सामान्यत्वानुपपत्तेश्च। यदि सकलज्ञानज्ञेयेषु साधारण एव स धर्मस्तर्हि सर्वं ज्ञानं सर्वविषयमिति सर्वस्मात्सर्वव्यवहारप्रसङ्गः। यदपि संबन्धान्तरमन्तरा विशिष्टप्रतीतिजननयोग्यत्वमिति तदप्यत एव प्रत्युक्तम्। किं च विशिष्टप्रत्ययत्वं वैशिष्ट्यविषयप्रत्ययत्वम्। तच्च तेनैव निरूप्य-**

---

## पूरणी

ज्ञानविषययोर्विशेषणतासंबन्ध इत्यत्राह—**विशेषणताया इति**। नित्यत्वेऽपि किं तत्सामान्यरूपं गुणादिरूपं वा। आद्येऽपि किं जातिरूपमुपाधिरूपं वा। नाद्यः; विलक्षणयोर्ज्ञानविषययोरेकासाधारणजात्यनुपपत्तेरित्याभिप्रेत्य द्वितीयं प्रत्याह—**नित्योऽपीति। नित्यसामान्य इति**। नित्ये उपाधिरूपसामान्य इत्यर्थः। एककार्यमात्रवृत्त्यप्येकघटत्वादिकं सामान्यमित्यत उक्त—नित्येति। एतदात्मत्वादिकमेकमात्रवृत्त्यपि नित्यसामान्यमित्यत उक्तं कार्येति। ननु विषये एकविषयानेकज्ञानेषु च तत्सत्त्वान्नैकमात्रवृत्तिरिति चेन्न; यत्रातीतादावेकविषयमेकमेव ज्ञानं जातं तत्र विषये अनेकज्ञानेषु वा तदसत्त्वेनोक्तदोषादिति भावः। ननु तर्हि सामान्यरूपमेव तन्मास्त्वित्यत्याद्यद्वितीयं निरस्यति—**गुणादीति। अत एवेति**। तस्य स्वरूपातिरेकानतिरेकाभ्यामुक्तदोषादेवेत्यर्थः। **तच्च तेनेति**। ज्ञानवैशिष्ट्यं चोक्तरूपमेवेत्यात्माश्रय इत्यर्थः। ननु

## दीपनम्

मित्यात्माश्रयः। विशिष्टस्य ज्ञानमिति लक्षणे सामान्यसंबन्धप्रतीतेरपि संयोगादिबाधदशायां विषयविषयिभावोपस्थितिं विना अपर्यवसानात्। प्रतीतिविषयतायोग्यत्वमित्यत्रापि प्रतीतेर्योग्यताविशेषणत्वे ज्ञानानुव्यवसायस्यापि स्वविषयत्वप्रसङ्गः। उपलक्षणत्वे चोपलक्ष्ययोग्यतास्वरूपं पृथगेव वक्तव्यम्। न च सोपाधिस्वरूपा वक्तुं शक्यते, ज्ञानस्य स्वप्रकाशतया स्वविशिष्टज्ञानाविषयत्वात्। अखण्डोपाध्यङ्गीकारे चाभावत्वादेरप्यखण्डत्वापत्त्या जातित्वापत्तिः। समवायस्यापि तत्र संभवात्। तस्मान्नास्ति ज्ञानज्ञेययोः संयोगातिरिक्तसंबन्धः,

---

## पूरणी

विशिष्टसंबन्धिप्रत्ययत्वं तत् न तूक्तरूपमित्यत्राह—**विशिष्टस्येति**। **ज्ञानानुव्यवसायस्येति**। प्रतीतेर्विशेषणत्वे विशिष्टप्रतीतिलक्षणसंबन्धकार्यान्वयित्वं वाच्यमिति घटं जानामीति विषयविशिष्टज्ञानगोचरप्रतीत्यात्मकानुव्यवसाये स्वभानप्रसङ्गेन स्वविषयत्वं स्यादित्यर्थः। **न च सोपाधीति**। अनुगताननतिप्रसक्तयोग्यतारूपोपाधिर्निर्वक्तुमशक्य इत्यर्थः। गुरुमते उक्तलक्षणस्यासंभवमप्याह—**ज्ञानस्येति**। जातिवत्पृथगनिर्वाच्योपाधिरस्त्वित्यत आह—**अखण्डेति**। समवेताखण्डधर्मत्वं जातित्वप्रयोजकमिति नाभावत्वं जातिरित्यत आह—**समवायस्येति**। लाघवेनाखण्डधर्मत्वस्य समवेतत्वप्रयोजकत्वादिति भावः। **तस्मादिति**। यद्यपि परोक्षस्थले स्वरूपस्यैव विशिष्टधीनियामकत्वं सिद्धान्तेऽपि वाच्यम्। नच तत्र मायैव तत्तद्विशिष्टधीनियामिकेति वाच्यम्; एवमपि मायाचित्संबन्धादौ मायास्वरूपस्यैव विशिष्टधीनियामकत्वात् अविद्याजातित्वपक्षे घटादिविशिष्टबुद्धिजननयोग्यतोपहितस्वरूपविशेषस्यासाधारणस्य तत्तदसाधारणप्रतीतिनियामक-

**परोक्षे तु मनसो बहिरस्वातन्त्र्यान्न निर्गमनम्। अत एवापरोक्षविषयः फलव्याप्यः, परोक्षस्तु वृत्तिव्याप्य एवेति**

---

## दीपनम्

सति संभवे त्यागायोगादिति परोक्षेऽपि क्वचिद्वृत्तिनिर्गमनं वाच्यमिति तत्राह—**परोक्षे त्विति**। चक्षुरादिसहकृतं हि मनो बहिर्गच्छतीति वक्तव्यम्। अन्यथा अन्धादेरपि रूपाद्यापरोक्ष्यप्रसङ्गात्। परोक्षे च तदभावान्न वृत्तिनिर्गमनम्। न च चक्षुरादिरिव लिङ्गादिकमपि तत्सहकार्यस्त्विति वाच्यम्; अविद्यमानलिङ्गज्ञानादप्यनुमितिदर्शनेन लिङ्गाद्यनैयत्यात्। तज्ज्ञानं चान्तरमेवेति न निर्गमने हेतुः। निर्गत्य वा मनोऽ[1]तीतादिस्थले केन संबध्येत। ननु विद्यमानलिङ्गकानुमेये मनस्सन्निकर्षोऽस्तीति चेन्न; मनोनिर्गमनस्येन्द्रियैकहेतुत्वात्। अन्यथानुमेयस्यापरोक्षघटाविशेषप्रसङ्ग इत्याह—**अत एवेति**। वृत्तिव्याप्यः वृत्त्याकारतया

---

## पूरणी

तयाभ्युपगमाच्चेतीदमयुक्तम्, तथापि स्वरूपस्य क्वचिद्विशिष्टधीनियामकत्वेऽपि न संबन्धत्वम्; प्रसिद्धसंबन्धविलक्षणत्वादिति पराभिमतसंबन्धव्यवहारनिराकरणे तात्पर्यम्। नन्वतीतादावनुमितिविषये न वृत्तेर्निर्गमनं संभवति, वृत्त्याकारविषयाभावात्। विषयसमानाकार परिणामविशेषत्वाद्वृत्तेः, अतस्तत्रान्तरेव सर्वमते वृत्तिरिति सर्वत्र तथास्त्वित्यत आह—**सति संभव इति**।

**घटाविशेषेति**। अपरोक्ष इवानुमेयेऽपि रूपपरिमाणादि संशयानुपपत्तेरित्यर्थः। ननु पूर्वं घटो नास्फुरत्, इदानीं स्फुरतीत्यनुभव एव ज्ञानजन्यज्ञातातायां मानम्। नित्यस्फुरणस्य

---

[1] अतीतादौ केन—**च**.

सिद्धान्तः । अभिव्यक्तं विषयावच्छिन्नं चैतन्यं फलं तेन तादात्म्येन संबद्धं फलव्याप्यम् । तच्चपरोक्ष एव संभवति । [1]परोक्षे तु विषयावच्छिन्नचैतन्याभिव्यक्तेरभावात् । तदेव स्फुरणमित्युच्यते । ज्ञानजन्यज्ञातताख्यस्फुरणे [2]प्रमाणाभावात् । ननु परोक्षे वह्निः स्फुरतीत्यनुभवात्तत्र चैतन्याभिव्यक्तिरस्तीति चेत्, [3]आप्तवाक्यादिनाऽवगतेऽपि चन्द्रपरिमाणादौ भ्रमदर्शनेन

## दीपनम्

वृत्तिविषयः । ननु किमयं सिद्धान्तः कुलनिबन्धनः, न ; प्रमाणनिबन्धन एवेत्याह—**अभिव्यक्तमिति** । घटः स्फुरतीति विषयावच्छिन्नत्वेन स्फुरणानुभवादभिव्यक्तेर्ज्ञानसाध्यत्वादभिव्यक्तं विषयावच्छिन्नं चैतन्यमेव फलमित्यर्थः । **चैतन्याभिव्यक्तेरिति** । इदं चानुपदमेव वक्ष्यति । **प्रमाणाभावादिति** । ज्ञानात्पूर्वं घटादौ स्फुरणाभावानुभवस्य तदावरणविषयतयान्यथासिद्धत्वेन तत्तज्ज्ञानजन्यानन्तस्फुरणं न कल्पनीयमित्यर्थः । स्फुरणैक्यं च वक्ष्यत इति भावः । प्रत्यक्षेण हि वह्निः स्फुरतीति स्फुरणं रूपादिमद्वह्निसंबद्धमेवानुभूयते, नैवमनुमेयादिगतमिति स्वसाक्षिकमेव वैलक्षण्यं युक्तितोऽपि तद्व्युत्पादयति—**आप्तेति** । **भ्रमदर्शनेनेति** । प्रादेशिकत्वादिभ्रमदर्शनेनेत्यर्थः ।

अपि च परोक्षज्ञानस्यापि विषयावरणनिवृत्तिरूपाभिव्यक्तिजनकत्वे पर्वतो वह्निमानिति लिङ्गेन शब्देन वावगते इदानीं

## पूरणी

तदानींतनाभावप्रतियोगित्वेन प्रतीत्ययोगादित्यत्राह—**ज्ञानादिति** । नन्विदानीं वह्निमानित्यनुमितौ तथा संशयादर्शनेन तदभिव्यक्ति-

[1] परोक्षेऽपि—ग. [2] मानाभावात्—छ. [3] आप्तवाक्यादवगतचन्द्र—छ.

## दीपनम्

पर्वतो वह्निमान्न वेति संशयो न स्यात्। क्वचित्संशयाभावस्तु तत्समानाकारनिश्चयविरोधात् न स्वज्ञानविरहात्। तत्समानाकारप्रत्यक्षे सति तूक्तसंशयो न भवत्येव। अत एवैतत्कालावच्छेदेन पर्वते वह्नेरनिश्चितत्वात् तत्संशय इति निरस्तम्। अपरोक्षस्थलेऽपि तदभावात्। तस्मान्न परोक्षज्ञानं विषयाभिव्यञ्जकमिति न परोक्षविषयः फलव्याप्य इति। अतो लिङ्गादिज्ञानमहिम्नाऽन्तरेव कश्चिदन्तःकरणपरिणामविशेषो जायते। नापरोक्ष इव तत्र वृत्तिनिर्गमनमित्यर्थः। कस्तर्हि वृत्तेस्तद्विषयेण संबन्धः। [1] न कश्चिदिति। कथं तर्हि वह्निज्ञानमित्यादिव्यवहारः। तवापि कथं? स्वरूपसंबन्धशब्दस्यासंबन्धपर्यायत्वात्। अतीतो घट इत्यादिव्यवहारवदघटितघटनापटीयस्याविद्यया सर्वव्यवहारोपपत्तेः। किं चात्यल्पमिदमुच्यते। सवस्यापि विशिष्टव्यवहारविषयस्य विशेषणविशेष्यभावस्य माययैवोपपाद्यत्वात्।

वस्तुतस्तु चैतन्यं हि सकलार्थावभासकमिति तस्यैव दृश्यवृत्तिसबन्धो वक्तव्यः। तच्च सर्वाधिष्ठानमेकम्। परोक्षे चान्तःकरणावच्छिन्नचैतन्यस्य

## पूरणी

रस्त्वित्यत्राह— **क्वचिदिति**। **अपरोक्षेति**। कालस्य नीरूपद्रव्यतया अपरोक्षवृत्तेस्तत्कालावच्छेदविषयत्वाभावादित्यर्थः। इदं चाभ्युच्चयमात्रम् —— समानविषयज्ञानस्यैवाज्ञाननिवर्तकत्वेनेदानींतनत्वाकारापरोक्षवृत्तिं विना तदज्ञानानिवृत्तेः कथं चित्कालस्याप्यपरोक्षवृत्तिविषयताया वाच्यत्वात्। अत एव वर्तमानतावगाहि प्रत्यक्षमिति पूर्वोक्तमेव सम्यक्। **सर्वस्यापीति**। प्रतियोग्यनुयोगिभावादेरित्यर्थः। नन्वेतन्मायिकत्वप्रकटनमात्रम्। न तन्न्यायसहम्; व्यावहारिकप्रातीतिकसकलसंबन्धापलापप्रसङ्गादित्यस्वरसादाह—**वस्तुतस्त्विति**।

[1] न कथंचिदिति—**च**.

**तत्राज्ञानस्य सत्वात्। वृत्त्याकारतयाऽऽन्तरचैतन्यसंबन्धादेव**

---

## दीपनम्

विषयचैतन्येन स्वाभाविकाभेद एव विवक्षितः। अतिप्रसङ्गस्य तत्तदाकारवृत्तिसहाये अभावात्। वृत्तेश्च तदाकारत्वं तन्निरूपणाधीननिरूपणार्हत्वं तद्व्यवहारार्हत्वं वा। वृत्तिरपि तत्तद्विषयकचैतन्यावच्छेदकतया परम्परासंबन्धेन तद्विषयिणीत्येतत्सर्वमभिप्रेत्याह—**वृत्तीति**।

---

## पूरणी

**स्वाभाविकेति**। तथा चान्तःकरणोपहितचैतन्यरूपसाक्षिणा स्वरूपेण तदभिन्नचैतन्यतादात्म्यमेव परोक्षविषयवह्न्यादेः संबन्ध इति भावः। नन्वेवं सर्वस्य सर्वविषयव्यवहारप्रसङ्ग इत्यत आह—**अतिप्रसङ्गस्येति**। नन्विदं वृत्तेस्तद्विषयत्वं विना न संभवतीत्यत्राह—**वृत्तिरपीति**॥

नन्वेवं वृत्तेर्वह्न्यादिविषयत्वे तदुपहितत्वेन चैतन्यस्य तद्विषयकत्वम्, चैतन्यस्य च तद्विषयकत्वे तादृक्चैतन्यावच्छेदकतया वृत्तेस्तद्विषयत्वमित्यन्योन्याश्रयत्वम्, नच चैतन्यस्य तादात्म्यलक्षणं तद्विषयकत्वं वृत्तिनिरपेक्षमेव, वह्निः स्फुरतीति स्फुरणावच्छेदकत्वानुभव एव तदपेक्षेति वाच्यम्; तथा सति स्फुरणावच्छेदकत्वलक्षणविषयत्व एव तद्दोषतादवस्थ्यादिति चेत्, अत्र ब्रूमः—वृत्तेस्तद्विषयताव्यवहारे तत्तत्स्वरूपविशेष एव नियामकः। न चैवं स्वरूपसंबन्धापातः; तस्य संबन्धत्वानभ्युपगमादित्युक्तत्वात्। चैतन्यस्य तु वृत्तिसापेक्षं चैतन्यावच्छेदकवृत्तिनिरूपकावच्छिन्नत्वलक्षणतद्विषयत्वमिति न काप्यनुपपत्तिः। तदिदमुक्तम्—"वृत्त्याकारतया आन्तरचैतन्यसंबन्धात्" इति॥

**स्फुरतीत्यनुभवोपपत्तेश्च । सा च वृत्तिर्नश्यति । चक्षुरादिजन्यज्ञानपदवाच्यस्य ज्ञानं नष्टमित्यनुभवात् भावकार्यस्य तन्नियमाच्च । अत एव सा नैकेत्युत्पत्तिविनाशवदन्तःकरणवृत्तिरूपमेकं ज्ञानमहंकारतद्धर्मसाधकं तदरिक्तं चैकमिति सिद्धम् ॥**

## अनुभवैकत्वसमर्थनम्

**तच्च ज्ञानमेकम्, तद्भेदे मानाभावात् ।**

---

### दीपनम्

**स्फुरतीति** । अर्थविशेष इति शेषः । वक्ष्यमाणचैतन्यैक्यानुमाने बाधं परिहर्तुं नाशानुभवस्यापि वृत्तिविषयत्वमाह—**सा चेति** । सैवेत्यर्थः । ज्ञानभेदानुभवस्यापि तद्विषयत्वमाह—**अत एवेति** ॥

इदानीं स्फुरणस्याद्वयात्माभेदं वक्तुमैक्यं साधयति—**तच्चेति** । **तद्भेद इति** । घटस्फुरणं [1]न पटस्फुरणमित्याद्यनुभवस्य [2]घटाद्युपाधिविषयतया तत्प्रत्याय्यभेदोऽप्यौपाधिक इति स्वाभाविके तस्मिन्मानाभाव इति भावः । नन्वेवं घटेच्छा न भवति पटेच्छेत्याद्यनुभवस्याप्यौपाधिकभेदविषयत्वप्रसङ्ग इति चेन्न; इच्छाया विषयनिरूप्य-

---

### पूरणी

अपरोक्षविषयसाधारण्यं वारयति—**अर्थविशेष इति** । तत्र साक्षादभिव्यक्तचैतन्यसंबन्धादेव स्फुरणानुभवे संभवति उक्तपरम्पराश्रयणस्यायुक्तत्वादिति भावः । यद्वा अतीतादौ परोक्षविषये उक्तरीत्यापि नान्तरचैतन्येन संबन्ध, इत्यत्राह—**अर्थविशेष इति** । विद्यमानविषय इत्यर्थः । अतीतादौ च तथानुभवः परमते तज्ज्ञानवन्निर्विषय एवेति भावः । **इच्छाया इति** । यदुपाधिज्ञानं यद्भेदज्ञानमात्रप्रयोजकं

---

[1] न भवति–क. च. [2] घटपटाद्युपाधि–क. च.

**अभेदे चानुभवैकाकारा बुद्धिः प्रमाणम्। न चैकाकारा बुद्धिर्जाति-**

## दीपनम्

तया विषयज्ञानस्य तत्प्रयोजकतया भेदज्ञानाप्रयोजकत्वात्। चैतन्यं तु स्वप्रकाशं न विषयनिरूप्यमिति तद्भेदज्ञानमेवोपाध्यधीनम्। किं च स्यादेवं, यदि चैतन्यैक्यवदिच्छैक्ये किंचित्प्रमाणं स्यात्। अभेदे हि प्रामाणिके उपाधिप्रतिसन्धानपूर्वं प्रतीयमानो भेद औपाधिको भवेत्। नच सुषुप्त्यादौ विनाशशीलाहंकारधर्मेच्छाया इष्टज्ञानादिकरणविशेषोपाधिना[1] विच्छिद्य विच्छिद्यानुभूयमानाया एकत्वं प्रामाणिकं संभवि चेत्यभिप्रेत्य संविदैक्यं साधयति—**अभेद इति**। प्रत्यक्षानुमानसिद्ध[2]स्वस्वेतरसंवित्सु संवित्संविदित्येकाकारा बुद्धिरित्यर्थः। एकाकारबुद्धिर्हि अनुगतं किंचिद्विषयीकरोति न तु धर्ममेवेति नियमः, तत्र प्रमाणाभावात्। गवादौ च व्यक्तिभेदः प्रमाणसिद्ध इति तदैक्यासंभवात् गोत्वाद्यनुगतविषया तदप्यनुगतमस्माकं कारणस्वरूपमेवेति न धर्मविषयानुगतबुद्धिः। चक्षुरादिजन्यवृत्त्यतिरिक्तायां संविदि तु न किंचिद्भेदग्राहकं मानमस्तीति सा तदैक्यविषये-

## पूरणी

तद्भेदस्य तदुपाधिकत्वाभ्युपगमादिति भावः। एवं चेच्छाविषयघटादेः प्रतियोगिकोटितया तद्भेदनिरूपकत्वेऽपि न दोष इति मन्तव्यम्। ननु स्वप्रकाशमपि चैतन्यं तत्तद्विषयवृत्त्यधीनस्फुरणभागिति तद्दोषप्रसङ्ग इत्यपरितोषादाह—**किं चेति**। **प्रत्यक्षानुमानेति**। यद्यपि संविदेका नित्यापरोक्षा तथापि तत्तदुपाधिभेदेन भेदं देवदत्ताकाराद्युपाधिसंबन्धस्य यज्ञदत्तं प्रत्ययोग्यतयानुमानगम्यत्वं चाभिप्रेत्येत्थमुक्तम्। **तदप्यनुगतमिति**। अविद्यातिरिक्तजातौ मानाभावस्योक्तत्वा-

[1] न्या- ख. [2] स्वपर–ख

**विषया गत्राद्यनुगतबुद्धिवदिति वाच्यम्; निश्चितभेदव्यक्तौ हि तथा। तत्सन्देहे तु व्यक्त्यैक्यमेवाकाशानुगतबुद्धिवद्विषयीकरोति। अन्यथा अनेका व्यक्तयो जातिश्चेति गौरवम्। एवं घटः स्फुरतीत्यनुभूयमानं स्फुरणं पटादिस्फुरणप्रतियोगिकस्वसमानसत्ताकभेदवन्न भवति स्फुरणत्वात्पटादिस्फुरणवत्। घटादौ**

---

दीपनम्

वेत्याह—**निश्चितेति। आकाशेति।** यथा घटकरकाद्यवच्छिन्नाकाशे अनेकेषु दर्पणेषु मुखप्रतिबिम्बे चाकाशमुखानुगतबुद्धिस्तत्स्वरूपमात्रविषया तद्वदित्यर्थः। अनुगतैकाकारबुद्धेर्जातिविषयत्वे बाधकमाह—**अन्यथेति।** सिद्ध[1]साधनपरिहाराय **पटादिस्फुरणेति।** बाधपरिहारार्थमाह—**स्वसमानसत्ताकेति।** तथा च पारमार्थिकसंविद्यौपाधिकभेदेऽपि न बाध इत्यर्थः। **घटादौ चेति।** व्यावहारिकसत्ताके घटे स्फुरणभेदोऽपि व्यावहारिक इति तत्समानसत्ताक इत्यर्थः। नन्वेवमपि समभिव्याहृतार्थसमानसत्ताकतया भेदः प्रसिध्यति, स्वशब्दस्य समभिव्याहृतार्थत्वात्। संविन्निष्ठभेदस्य च तथाविधत्वं संवित्समानसत्ताकतयैव वक्तव्यमिति सिद्धान्ते तदभावाद्बाध एवेति चेन्न;

---

पूरणी

दिति भावः। **सिद्धसाधनेति।** स्वप्रतियोगिकभेदाभावस्य स्वस्मिन् सर्वसंमतत्वादिति भावः।

घटादिसमानसत्ताकभेदस्य प्रसिद्धत्वेऽपि स्वशब्दस्य पटादिस्फुरणप्रतियोगिकभेदवत्परत्वात् घटादिस्फुरणप्रतियोगिकभेदस्य चौपाधिकस्य घटस्फुरणेऽपि सत्त्वात्तस्यापि स्वशब्दार्थत्वात्तत्समानसत्ताकभेदाऽप्रसिद्ध इति शङ्कते—**नन्वेवमपीति। प्रसिद्ध्यतीत्यनन्तरमिति** त्वया वक्तव्यमिति शेषः। **सिद्धान्त इति।** पारमार्थिकभेदाप्रसिद्धे-

---

[1] साधनता—ख. च.

## दीपनम्

विशेषणाभावप्रयुक्तविशिष्टाभावस्याबाधितत्वात्। विशेषणं च घटसंवित्समानसत्ताकत्वं पटसंवित्स्वरूपे प्रसिद्धमेव। तच्च प्रागुक्तरीत्या न व्यधिकरणम्। पररीत्या विशिष्टप्रसिद्धिश्च घटादौ दर्शितेति भावः।

---

## पूरणी

रनुमानानुदय इत्यर्थः। **विशेषणाभावेति**। स्वसमानसत्ताकत्वावच्छिन्नपटादिस्फुरणप्रतियोगिकभेदाभावः साध्यः। तत्र तद्विशिष्टप्रतियोगिप्रसिद्धिरपेक्ष्यते। विशिष्टं च विशेषणविशेष्यात्मकं न तदतिरिक्तमिति विशिष्टरूपेण तदप्रसिद्धावपि विशेषणविशेष्ययोः प्रत्येकं प्रसिद्धत्वात्तदभावसाधनोपपत्तेरिति भावः। ननु संविद्रूपसत्ताकत्वस्य भेदनिष्ठप्रतियोगितावैयधिकरण्यमित्यत्राह—**तच्च प्रागिति**। सत्तात्मकचैतन्यसंबन्धस्य तद्भेदरूपप्रतियोगिनि सत्त्वात् अवच्छेद्यसंबन्धमात्रस्य चावच्छेदकताप्रयोजकत्वोक्तिर्नोक्तदोष इत्यर्थः। **पररीत्येति**। तन्मते घटादिनिष्ठस्फुरणभेदस्यापि पारमार्थिकतया संवित्समानसत्ताकत्वादित्यर्थः।

वस्तुतस्तु स्वमतरीत्या विशिष्टप्रसिद्धिवर्णनमयुक्तम्; विशिष्टरूपेण तत्प्रसिद्ध्यभावे तद्व्याप[1]कतया हेत्वभावग्रहस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानमन्तरेण तदभावज्ञानानुदयात् तद्व्याप्तिग्रहस्य चानुपपत्तेः। सात्तत्मकचैतन्यसंबन्धस्य प्रतियोगिभेदनिष्ठत्वे तदवच्छिन्नतद्भेदस्य स्फुरणे सत्त्वेन तदभावस्य बाधितत्वाच्च। किंतु परमतरीत्या विशिष्टप्रसिद्धेस्तं प्रति तदभावसाधनमेव सम्यक्। स्वमते तु स्फुरणभेदो न संवित्समानसत्ताकः, भेदत्वात्। चन्द्रभेदवत्। न चाप्रयोजकत्वम्, भिन्नस्फुरणानां कार्यत्वे वृत्ति[2]तुल्यत्वेनाप्रकाशरूपत्वापातात्। कार्यस्फुरणस्य स्वप्नसुषुप्त्या-

---

[1] कत्वेन—ट. [2] तुल्यतया—म.

च निषेध्यप्रसिद्धिः। स्फुरणमात्रं पक्षीकृत्य व्यतिरेकिलिङ्गं वास्तु। घटादौ साध्यव्यतिरेकस्य प्रसिद्धत्वान्न व्याप्तिग्रहानुपपत्तिः। विपक्षे च गौरवं बाधकम्। नच ज्ञानभेदानुभव-

### दीपनम्

**व्यतिरेकेति**। स्फुरणं [1]स्फुरणप्रतियोगिकभेदवन्न भवति, स्फुरणत्वात्, व्यतिरेकेण घटवदित्यर्थः। **घटादाविति**। व्यतिरेकिलिङ्गे हि साध्यसाधनव्यतिरेकयोः साहचर्यज्ञानमनुमित्यङ्गम्। अत्र च भेदाभावरूपसाध्यस्य व्यतिरेकः संविद्भेदः घटादौ तज्ज्ञानं विनापि ज्ञातुं शक्यते। एवं संवित्त्वाभावोऽपीति न तयोः साहचर्यग्रहे साध्यज्ञानमपेक्षत इति पूर्वं तदभावेऽपि न काचिद्धानिरित्यर्थः। ननु यदि स्फुरण[2]सामान्याभावः साध्यते तदा सिद्धसाध्यता, एवं विशेषभेदाभावसाध्येऽपि, स्वस्मिन् स्वप्रतियोगिकभेदाभावादिति चेन्न; संविन्निरूपिताशेषभेदाभावस्य साध्यत्वात्। अशेषत्वं चैकसंविन्मतेऽप्यबाधितमिति भावः।

### पूरणी

दिसाधकत्वाभावेन वृत्त्यतिरिक्तस्फुरणासिद्धिप्रसङ्गात्। नित्यत्वे चाद्वैतश्रुतिविरोधात्। अनन्तस्फुरणकल्पनागौरवप्रसङ्गाच्चेति मन्तव्यम्।

**स्फुरणप्रतियोगीति**। अत्रापि पूर्ववद्बाधवारणाय स्वसमानसत्ताकत्वं विशेषणम्। तदर्थश्च पूर्ववदेवेति स्मर्तव्यम्। ननु स्फुरणमात्रप्रतियोगिकभेदाभावस्य क्वाप्यज्ञानात्कथं तद्व्याप्तिग्रह इत्याशङ्क्याह— **व्यतिरेकिलिङ्ग इति**। यद्व्यापकतया हेत्वभावो गृहीतः तत्प्रतियोगिना हेतुना तदभावः सिद्ध्यतीति प्रतियोगिव्यापकाभावप्रतियोगित्वस्य व्यतिरेकिणि गमकताप्रयोजकतया साध्यभूताभावाज्ञानेऽपि न दोष इत्यर्थः। **सिद्धसाध्यतेति**। स्फुरणे तत्सामान्यभेदस्य केनाप्यनभ्युपगमादित्यर्थः। नन्वेवं वृत्तेरपि जन्यत्वं न सिध्येत्,

[1] स्वप्रति-ख. [2] सामान्यभेदाभावः-च.

**विरोधः; तस्य वृत्तिविषयत्वादौपाधिकभेदाविषयत्वाच्च। अत एवानाद्यनन्तं स्फुरणम्; सकलविषयग्राहिस्फुरणजनकस्य नाशकस्य वाऽसंभवात्। न हि चक्षुरा[1]दीनां तादृक्सामर्थ्यमस्ति॥**

## दीपनम्

**अत एवेति।** निखिलप्रमाणविषयसंबन्धिस्फुरणैक्यादेवेत्यर्थः। अस्य तद्धेतुत्वमुपपादयति—**सकलेति।** तदेवोपपादयति—**न हीति।** शब्दादिस्फुरणे चक्षुरादेः, रूपादिस्फुरणे च श्रोत्रादेः, सुखादिस्फुरणे बाह्येन्द्रियस्य, बाह्यविषयजगत्स्फुरणे मनोमात्रस्य, तथा देवदत्तस्य विषयस्फुरणे तदितरसंबन्धिकरणानां, तदितरविषयस्य स्फुरणे देवदत्तादि[2]करणानां च हेतुत्वं वक्तुं न शक्यत इति स्फुरणमनादि, अत एवानन्तम्। किं च स्फुरणस्य स्वयंप्रकाशस्य स्फुरणान्तराविषयत्वेन तदुत्पत्तिग्राहकप्रमाणाभावान्न तत्सिध्यति। न हि जडवृत्तिमात्रात्किंचित्सिध्यति। एवं नाशोऽपि न सिध्यति, स्वपराविषयस्फुरणव्यावृत्ततद्ग्राहकप्रमाणासंभवादिति॥

## पूरणी

प्रत्येकं चक्षुरादेर्व्यभिचारात् विशेषहेतुत्वं प्रकृतेऽपीत्यरुचेराह—**किं चेति।** स्वप्रकाशत्वं च वक्ष्यत इत्यभिप्रायः। कारणत्वाकारवृत्त्युपहितचैतन्यं तत्साधकम्, तद्विषयत्वं स्वप्रकाशस्फुरणस्य नेति भावः। **स्फुरणव्यावृत्तेति।** स्फुरणावच्छिन्ननाशग्राहकप्रमाणाभावादित्यर्थः। वस्तुतस्तु स्फुरणस्य कार्यत्वे तस्य प्रपञ्चोपादानानात्मकतया सन् घटः घटः स्फुरतीति स्फुरणतादात्म्येन घटादेरनुभवानुपपत्तिः, नित्यज्ञानाभावे सुषुप्तिसुखादिपरामर्शानुपपत्तिः, मुक्तिदशायां कार्यस्फुरणासंभवेनानन्दाप्रकाशे मोक्षस्यापुरुषार्थतापत्तिः, स्फुरणस्य कार्यत्वे प्रतिविषयं भेदापत्त्या वर्णितैक्यानुपपत्तिश्चेति ध्येयम्॥

---

[1] दीनामेतावत्साम—ग. एतादृक्सा—छ. एवं तादृ—ख. [2] कारणा—ख.

**तदेव हि स्फुरणं स्वप्नस्य साधकम्। अन्यथा [1]स्वप्नानुभवासंभवात्। नच स्मृतिरेव स्वप्न इति वाच्यम्; देशविशेषवैशिष्ट्यस्य पूर्वम[2]ननुभूतत्वात्। नच मानसारोपः स्वप्न इति वाच्यम्; बहिर्मनसोऽप्रवृत्तेः। ज्ञानं च न प्रत्यासत्तिः। प्रत्यासत्तिरपि तद्यत्र यद्वैशिष्ट्यं पूर्वमनुभूतं तत्रैवेत्युक्तमन्यत्र। अन्धेनानुभूयमानशौक्ल्यवत्स्वप्नस्य परोक्षतापत्तेश्च॥**

---

## दीपनम्

एवं जाग्रति घटादिज्ञानधारानुसन्धानेन सुखादिव्यवहारेण च सिद्धमहंकारधर्मातिरिक्तं स्फुरणम्। तच्चानाद्यनन्तमेकमित्युक्तम्। इदानीं स्वप्नानुभवस्वरूपनिरूपणेनापि तत्साधयति—**तदेव हीति**। **स्वप्नस्य** स्वप्नविषयगजादेरित्यर्थः। तत्र परिशेषान्नित्यस्फुरणं साधयति—**अन्यथेत्यादिना**। तत्र चक्षुरादिकरणानामुपरतत्वात् अपरोक्षत्वेन लिङ्गादिजन्यत्वानुपपत्तेश्चेति भावः। अपरोक्षत्वेनानुभवादपि न सात्रेत्यहा—**अन्धेनेति**। अन्धो हि मानान्तरोपनीतं शौक्ल्यं बहिः शुक्लो घटोऽस्तीत्यनुभवति, नच तत्तस्यापरोक्षम्। स्वप्ने च रूपादिकं जाग्रति स्फीतालोकमध्यवर्ति चक्षुष्मत इवापरोक्षमिति सर्वानुभवसिद्धं, तन्न स्यात्। यत्तु स्वप्ने दोषादपरोक्षावभास इति, तन्न,

---

## पूरणी

**न सेति**। ज्ञानं प्रत्यासत्तिरित्यर्थः। तत्प्रत्यासत्तिजन्यत्वे अपरोक्षत्वानुभवासंभवमुपपादयति—**अन्धो हीति**। **दोषादिति**। परोक्षदेशान्तरस्थरजते दोषादिदं रजतमित्यपरोक्षज्ञानवत् स्वप्नविषयपरोक्षगजादावपि निद्रादिदोषादपरोक्षभ्रम इत्यर्थः। एवमप्यर्थस्या-

---

[1] स्वप्ने अनु–ग. छ. [2] ननुभवात्–ग. छ.

स च स्वप्नपदार्थोऽन्तःकरणोपहितसाक्षिण्येवाध्यस्यते न तु तद्विशिष्टे, अहं गज इत्यप्रतीतेः ।

दीपनम्

दोषादपि ह्यारोप एवोत्पादनीयः, तदुत्पन्नारोपश्च मानसश्चेत्कथमपरोक्षतार्थस्य । यदपि परोक्ष एव विषये आपरोक्ष्यमारोप्यत इति, तन्न; गजत्वादिरूपेणानुभूयमानस्यैवापरोक्षतादर्शनात् मेर्वादिरपरोक्ष इति भ्रमेऽपि विषयस्यापरोक्षतादर्शनात् । तस्मात्साक्षिस्फुरणेऽविद्यारोपितस्यैव राजादेरनुभवः स्वप्न इति भावः ॥

ननु सिद्धान्तेऽपि बहिष्ठस्य स्वप्नघटादेः कथमपरोक्षत्वमित्याशङ्क्याह—स चेति । ननु तद्विशिष्ट एवाध्यासः किं न स्यादित्यत आह—न त्विति । यदन्तःकरणमुपाधिविधया व्यावर्तयन्निरूपयति तत्तदुपहितमित्युच्यते । उपाधिश्च यावत्कार्यभावी कार्यानन्वयी व्यावर्तकः, कर्णशष्कुलीव श्रोत्रस्य । विशेषणं तु कार्यान्वयि व्यावर्तकमिति तयोर्भेदः । तथा चारोपितस्याधिष्ठानाभेदानुभवनियमादहं गज इति प्रतीतिः स्यात् । उपाधित्वे तु न दोषः । तस्य कार्यानन्वयिनोऽधिष्ठानत्वाभावत् । नन्वेवमिदं रजतमिति

पूरणी

परोक्षत्वं न स्यादित्याह--दोषादपीति । गजत्वादीति । गजादिरपरोक्ष इत्यनुभवस्यापरोक्षत्वारोपनिबन्धनत्वेऽपि स्फीतालोकमध्यवर्तितुल्यतया गजादिस्फुरणं न तदारोपात्, मेर्वादौ तदारोऽपेऽपि तथास्फुरणादर्शनादित्यर्थः । यावत्कार्यभावीति । उपलक्षणव्यावृत्त्यर्थमाद्यविशेषणम् । त्रितयबहिर्भूततटस्थधर्मव्यावृत्तये व्यावर्तकत्वविशेषणम् । विशेषणव्यावृत्तये च कार्यानन्वयित्वमिति भावः । ननु तदर्थमिदमंशो

[1] स्वाप्नः पदार्थः—क.

**नाप्यनुपहितचैतन्ये; "स्वे शरीरे यथाकामं परिवर्तेत" इति श्रुतेः । बाह्यचैतन्यस्यान्तःकरणावच्छिन्नचैतन्यासंबन्धेनानुभवायोगाच्च ।**

---

## दीपनम्

प्रतीतिर्न स्यात्, इदमंशस्य तदधिष्ठानचैतन्योपाधित्वात्, तद्विशिष्टेऽज्ञानाभावादिति चेन्न; न हि तस्याधिष्ठानोपाधित्वप्रयुक्तं रजततादात्म्यम्, किं तु भेदग्रहाभावात् रजतमिव चैतन्ये [1]इदंत्वसंसर्गस्यापि रजत आरोपात् । अहंकारस्य तु नाहं गज इति भेदानुभवान्न तत्र [2]तादात्म्यारोपः । विशिष्टपक्षे तु नैवं स्यादिति भावः । अस्तु तर्ह्यहंकारोपलक्षित एव, अन्यथा स्वस्माद्वि[3]च्छेदानुपपत्तेरिति तत्राह—**नापीति** । उपलक्षणोपाध्योर्व्यावर्तकत्वे समानेऽपि वेदान्तकल्पतरौ भेद उक्तः—

"यावत्कार्यमव[4]स्थाय भेदहेतोरुपाधिता ।
कादाचित्कतया भेदधीहेतुरुपलक्षणम् ॥" इति ।

"**स्वे शरीर इति** । तत्र हि "स यत्रैतत्स्वप्नायाचरति"इति स्वप्नं प्रस्तुत्य "तद्यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इत्यादिना शरीरावच्छिन्न एवात्मनि जीवस्य नानादेशसंचारादिकं स्वप्ने दर्शयन्ती श्रुतिरवच्छिन्नचैतन्यस्यानधिष्ठानत्वं दर्शयतीत्यर्थः । श्रुत्यनुकूलामुपपत्तिमप्याह—**बाह्येति** । बाह्यमन्तः-

---

## पूरणी

**विशेषणमस्त्वित्यत्राह—तद्विशिष्ट इति । विशिष्टपक्ष इति । कार्यान्वयिन एव विशेषणतया तत्तादात्म्यप्रतीतेरावश्यकत्वादित्यर्थः ।**

---

[1] इदंत्वस्यापि—च. [2] अभेदारोपः—ख. [3] विच्छेदप्रतिभासानु—च. [4] स्थायि मे.

**अन्यथान्यस्वप्नानुभवप्रसङ्गः । एवं सुखमहमस्वाप्समिति परामर्शसिद्धसुषुप्तिसाक्ष्यपि स एव । सुषुप्तौ जन्यज्ञाना-**

दीपनम्

करणानवच्छिन्नचैतन्यम् । ननु चैतन्यस्य स्वभाविकैक्यादेवापरोक्षत्वमस्त्विति, तत्राह—**अन्यथेति** । एवंसति देवदत्तस्वप्नविषयोऽपि यज्ञदत्तस्यापरोक्षः स्यात् । न च तदावृतमेवेति वाच्यम्; तस्याप्यननुभवप्रसङ्गात् । साक्षिभेदादृतेऽन्यं प्रत्यावरणकल्पनायोगात् । अतोऽन्तःकरणोपहितसाक्षिण्यध्यासादेव तस्यापरोक्षत्वमुपपद्यते । न चैवं विच्छिन्नदेशानुभवो न स्यादिति वाच्यम्; तस्यापि तत्र कल्पितत्वात् । तदुक्तं पञ्चपादिकायां—"देशोऽपि तादृश एव" इति । **स एवेति** । जाग्रस्वप्नसाक्षी प्राक्साधितो नित्योऽनुभव इत्यर्थः ॥

## सुषुप्तौ साक्षिनिरूपणम्

अस्ति तावदुत्थितस्य सुखमहमस्वाप्समिति ज्ञानम् । न चेदं दिनान्तरानुभूतसुखविषयस्मरणम्; अस्वाप्समिति परामर्शात् । अत एव न स्वप्नानुभूतसुखविषयमपि; न किंचिदवेदिषमिति पराम-

पूरणी

**साक्षिभेदादिति** । तद्भेदश्चान्तःकरणोपहितसाक्षिपक्षे अविद्याप्रतिबिम्बस्य तत्त्वे च तस्यैक्यात् । अतः साक्षिसंबन्धाय तत्रैव तदध्यास इत्यर्थः । **अस्वाप्समिति** । स्वापकालीनत्वेन सुखपरामर्शादित्यर्थः । **अत एव** सुषुप्तिकालीनत्वप्रतिसन्धानादेव । ननु स्वप्नानुभूतस्याप्यस्वाप्समिति प्रतिसन्धानोपपत्तिः, स्वपिधातुव्यपदेशस्योभयत्र तुल्यत्वादित्यत्राह—**न किंचिदवेदिषमिति** । सकलविषयाज्ञानसमानकालीनतया सुखस्यात्र प्रतिसन्धानं, सकलविषयाज्ञानकालश्च सुषुप्तिरेव न स्वप्नसमयः, तदा गजादेरनुभूयमानत्वादिति सुषुप्तिकालीनसुखपरा-

## दीपनम्

र्शश्च। न चायमुत्थितस्य स्वापकालीनसुखविषयानुमित्यात्मक इति वाच्यम्; स्वापकालीनसुखे लिङ्गाभावात्। न च तदा तत्संभवति। नापि दुःखाभावविषयिणीयमनुमितिः; सुखविषयत्वे बाधकाभावस्य वक्ष्यमाणत्वात् दुःखाभावानुमितौ लिङ्गाभावाच्च। न तावद्दुःखाननुभवात्तदभावोऽनुमीयते, समयान्तरीयदुःखाननुभवस्य व्यधिकरणत्वात्। तत्कालीनस्य नित्यज्ञानं विनासिद्धेः। न चेदानीं दुःखास्मरणेन सुषुप्तौ तदननुभवतदभावयोः सिद्धिरिति वाच्यम्; अस्मरणस्याननुभवाव्याप्तत्वात्। नच सुषुप्तित्वेनैव दुःखाद्यननुभवादिसिद्धिरिति वाच्यम्; निखिलज्ञानाभावरूपसुषुप्तेरपि नित्यज्ञानादृतेऽसिद्धेः। एवं तत्कालीनसामग्र्यभावोऽपि दुर्ग्रह इति न ततोऽपि तत्सिद्धिः। अतो वक्ष्यमाणविधया स्वप्रकाशनित्यचैतन्यात्मकसुखमेव सुषुप्तावनुभूतमुत्थितेन परामृश्यत इति सुषुप्तावप्यस्त्येव ज्ञानम्। तच्च जन्यं न संभवतीति नित्यमेव। नन्वेवं पुरुषान्तरीयसुषुप्तिसुखयोरप्य-

---

## पूरणी

मर्श एवायमिति भावः। यद्यपि स्वप्नानुभूतविषयत्वेऽप्युक्तरीत्या अतिरिक्तसाक्ष्यनुभवः सिद्ध्यत्येव, स्वप्नप्रपञ्चस्य साक्षिसंबन्धेनैवापरोक्ष्यात्, तथाप्यभिमतसुषुप्तिकालीनतदनुभवासिद्धिप्रसङ्गेन तन्निराकृतमिति मन्तव्यम्। स्वापकाले जन्यसुखमपि न संभवति; तद्धेतोरिष्टविषयदर्शनादेस्तदा असंभवादित्याह—**न च तदेति। न चेदानीमिति।** अहं सुषुप्तौ दुःखानुभवरहितः, दुःखितया अस्मर्यमाणत्वादिति तदनुभवविरहानुमानम्। तद्विरहलिङ्गेन चाहं तदा दुःखरहितः, तदनुभवरहितत्वादिति तदभावानुमानमिति न वाच्यमित्यर्थः। ननु तदा दुःखसामग्रीविरहात्तद्विरहानुमानमस्त्वित्यत्राह— **एवं तत्कालीनेति॥**

संभवात्। तस्मादनुभव एकोऽनादिरनन्तोऽवस्थात्रयसाक्षीति सिद्धम्॥

स चानुभवोऽविद्योपधानदशायामर्थं प्रकाशयति प्रदीपप्रकाश इव घटादीन्। तदभावे तु मुक्तौ स्वमहिमस्थ [1]एवायं

---

दीपनम्

नुसन्धानप्रसङ्गः; चैतन्यस्यैकत्वात्सुषुप्तौ सकलस्य विलीनतयावच्छेदकोपाधेरभावाच्चेति चेन्न; सुषुप्तावप्यन्तःकरणस्योपाधेर्निरन्वयनाशासंभवेन संस्काररूपसूक्ष्मतासत्त्वात्। [2]ततः सूक्ष्मरूपान्तःकरणावच्छिन्नचैतन्यस्य सत्त्वेनावस्थात्रयेऽप्यन्तःकरणोपहितचैतन्यमेव जीवस्य व्यवहाराङ्गसाक्षीति नातिप्रसङ्ग इति भावः। उपसंहरति—तस्मादिति॥

नन्वयमनुभवः सविषयो निर्विषयो वा। नाद्यः; मुक्तौ स्वातिरिक्तविषयाभावात् स्वाविषयत्वाच्च। न द्वितीयः; निर्विषयज्ञानायोगात्, अर्थप्रकाशस्यैव ज्ञानत्वादिति, तत्राह—स चेति।

---

पूरणी

मुक्ताविति। नन्वतीतप्रपञ्चविषयकं तदापि तज्ज्ञानमस्तु, न चैवं विषयोपप्लवेन संसारादविशेषप्रसङ्ग इति वाच्यम्; तदा तदनर्थासत्त्वेन तद्वैलक्षण्यादिति चेन्न; नित्यज्ञानं हि वर्तमानमेव स्वतो विषयीकरोति न त्वतीतादिकम्, तेन तस्य संबन्धाभावात्। स्वरूपसंबन्धस्य च चिद्विषययोर्निराकृतत्वात्। न चैवं तस्यानागतादिप्रतिसन्धानाभावे सार्वज्ञ्याकोपः; स्रष्टव्यविषयज्ञानं विना स्रष्टृत्वानुपपत्तेश्चेति वाच्यम्; प्राणिकर्मसंजनिताविद्यावृत्त्युपधानेन तदुपपत्तेः।

---

[1] एव स्वयं–ग.छ. [2] तदा–ख.

**प्रकाशते। नन्वेवमर्थप्रकाशत्वाभा[1]वान्न ज्ञानं स्यात्, तस्य तल्लक्षणत्वादिति चेत्,[2] अविद्यानिवृत्त्यनुकूलस्वरूपविशेषप्रकाश-**

दीपनम्

सत्यमर्थप्रकाशो ज्ञानं न तु यावत्सत्त्वमर्थप्रकाशत्वं वक्तव्यम्। तत्र प्रमाणाभावात्। दीपादिवत्स्वत एव प्रकाशस्वभावस्य सतोऽर्थसंबन्धदशायामर्थप्रकशत्वेऽपि तस्य जडव्यावर्तकत्वमुपपद्यत [3]इति भावः। नन्वर्थप्रकाशत्वातिरिक्तस्वरूपलक्षणाभावात्कथं तस्य मुक्तौ जडव्यावृत्तिरिति शङ्कते—**नन्विति**। **अविद्येति**। येन हि विशेषेण ज्ञानमविद्यां निवर्तयति तदेव हि ज्ञानस्य जाडव्यावर्तकं लक्षणम्। न चार्थविषयत्वं तद्भवति, इच्छादेरर्थविषयत्वेऽपि तददर्शनात्। इच्छादिकं च नियमेन सकर्मकमेवानुभूयत इति ज्ञानवत्सविषयमेव। नच ज्ञानाविषये इच्छाऽदर्शनात् ज्ञानप्रयुक्तमेवेच्छायाः सविषयत्वम्, ज्ञानजन्येऽपि सुखादौ तददर्शनात्, ज्ञानाविषयेऽपि जिज्ञासादर्शनात्,

पूरणी

मुक्तिदशायां च प्राणिकर्मविरहेण तद्वृत्त्यनुदयेन तद्द्वारकविषयत्वस्याप्यसंभवादिति दिक्। **दीपादिवदिति**। न चैवमर्थप्रकाशत्वलक्षणं दीपादावेवातिव्याप्तं स्यादिति वाच्यम्; प्रतीत्यनुबन्धितारूपार्थविषयत्वस्य लक्षणप्रविष्टस्य तत्र विरहादिति भावः। **नियमेनेति**। चन्दनसुखमित्यादौ सुखस्यापि कदाचित्संबन्धित्वेनानुभवोऽस्तीति नियमग्रहणम्। ज्ञानजन्यत्वेन सविषयत्वेऽतिप्रसङ्गमप्याह—**ज्ञानजन्य इति**। ननु ज्ञानाधीनस्वभावविशेषवत्त्वं प्रयोजकम्, स्वतः सविषयत्वेऽपि स्वभावविषयस्यैव नियामकतयाभ्युपगन्तव्यत्वादित्यरुचेराह-**ज्ञानाविषयेऽपीति**।

[1] वात्तज्ज्ञानमपि न स्यात्–ख. विज्ञानमपि तत्स्यात्–ग. छ. [2] चेन्न; अविद्या–ग. [3] इत्यर्थः–ख.

## दीपनम्

घटेच्छायाः [1]पृथक्सविषयत्वाभावे पटेच्छाव्यावृत्तरूपाभावेन तज्ज्ञानजन्यत्वायोगाच्च । वस्तुस्वभावकृतमेव तदितीच्छाया अपि सविषयत्वम् । न चार्थविषयप्रकाशत्वमेव तदस्त्विति वाच्यम्; लाघवेन प्रकाशत्वस्यैव प्रयोजकत्वात् । तच्च न जातिः, एकव्यक्तौ तदभावादिति ज्ञानस्वरूपमेव । जातेरिव जात्यन्तरव्यावर्तकविशेषस्य व्यक्तेरपि व्यक्त्यन्तरव्यावर्तकविशेषस्य स्वरूपत्वे बाधकाभावात् । तमोनिवर्तकालोकादिस्वरूप-

---

## पूरणी

पूर्वं निर्णयाविषये निर्णयेच्छादर्शनात्तस्याश्च निर्णयज्ञानं विना जायमानायास्तदधीनसविषयकत्वासंभवादित्यर्थः । ननु तत्र घटनिर्णयो मे भूयादिति नेच्छा, तस्या अप्रसिद्धत्वात् । किं तु घटो मन्निर्णयविषयो भूयादिति । तस्याश्च निर्णयविषयेष्टसाधनताज्ञानाधीनविषयत्वमेवेत्यरुचेराह—**घटेच्छाया इति । ज्ञानस्वरूपमिति ।** प्रकाशपदवाच्यस्वरूपविशेष एव प्रकाशत्वमित्यर्थः । ननु स्वरूपस्य कथं स्वव्यावर्तकत्वमित्याशङ्क्य परमते जातिस्वरूपवदाविरोध इत्याह—**जातेरिवेति । तमोनिवर्तकेति ।** प्रकाशपदाभिधेयस्वरूपविशेषस्य तत्पदाभिधेयालोकादिसाधारणतया तद्व्यावर्तनायाविद्यावृत्त्यनुकूलतया स्वरूपविशेषो विशेषितः । अविद्यापदं च ज्ञाननिवर्त्यभावरूपाज्ञानपरम् । अतोऽप्रकाशात्मकतमोविवर्तकतया आलोकस्य पुनर्नातिप्रसङ्गः । नच वृत्तेरविद्यानिवर्तकत्वपक्षे तत्रातिप्रसङ्गः; तस्याः प्रकाशपदानभिधेयत्वात् । अविद्यानिवृत्त्यनुकूलप्रकाशपदवाच्यस्वरूपविशेषस्य च लक्षणत्वेनाभिमतत्वात् । यदि च प्रकाशचैतन्योपरक्ततया वृत्तिरपि तत्पदाभिधेयेति मन्यसे तथापि न दोषः । स्वरूपविशेषावच्छेदेन यस्याविद्यानिवर्तकत्वं

---

[1] प्रामिसद्ध–ख.

त्वस्यैव[1] तल्लक्षणत्वात् । न चाननुगमः; ज्ञानव्यक्त्यैक्यस्योक्तत्वात् । परमतेऽपि प्रकाशत्वमात्रस्यैव [2]लक्षणत्वे संभवत्यर्थपदवैयर्थ्यात् । कदाचिदर्थप्रकाशत्वेनापि तदुपपत्तेश्च । तस्य

## दीपनम्

वैलक्षण्यार्थमविद्यानिवृत्त्यनुकूलेत्युक्तमिति भावः । न चेति । अविद्यानिवृत्तिकारणस्येत्यर्थः । तथा च ज्ञानत्वेनैव [3]निवर्तकता वक्तव्येति परस्य हृदयम् । व्यक्तीति । ज्ञानैकत्वस्योक्तत्वादित्यर्थः ।

नन्वेवमपीदं ज्ञानं प्रमा अप्रमा वा । नाद्यः; तद्विषयप्रपञ्चमात्रस्य प्रामाणिकतया सत्यत्वप्रसङ्गात् । न द्वितीयः; दोषाजन्यस्य तदयोगादिति, तत्राह—तस्येति । यदि तद्वति तत्प्रकारकं ज्ञानं प्रमा

## पूरणी

तत्त्वस्य विवक्षितत्वात् । वृत्तेश्च चिदुपरक्तत्वेन तन्निवर्तकत्वेऽपि स्वरूपेण तदभावात् । अनुकूलत्वं च स्वरूपयोग्यत्वम्, अतो मुक्तौ तद्विरहेऽपि नानुपपत्तिः । न चासाधारणधर्मस्यैव लक्षणतया कथं स्वरूपविशेषो लक्षणमिति वाच्यम्; व्यावर्तकमात्रस्य लक्षणत्वेन धर्मपदवैयर्थ्यात् । स्वरूपविशेषस्याप्युक्तरीत्या स्वव्यावर्तकत्वात् । तथा चार्थप्रकाशत्वं तटस्थलक्षणम् । अविद्यानिवृत्त्यनुकूलप्रकाशपदाभिधेयस्वरूपत्वं स्वरूपलक्षणमिति भावः । वस्तुतस्त्वर्थपदं प्रकाशमानपरम् । तच्च तद्विषयप्रपञ्चतदभिन्नात्मसाधारणम् । अतो मुक्तिदशायां प्रपञ्चरूपार्थाभावेऽपि स्वार्थप्रकाशत्वात्तस्यापि स्वरूपलक्षणत्वे न काप्यनुपपत्तिरिति ध्येयम् । ज्ञानत्वेनैवेति । ज्ञानत्वजात्यैवेत्यर्थः । तन्निवर्त-

[1] त्वस्य—ग. छ. [2] तल्लक्षणत्वसंभवेऽर्थपद—छ. लक्षणत्वसंभवेऽर्थ—ग.
[3] तन्निवर्तकता—ख.

**पारिभाषिकप्रमाप्रमाबहिर्भावेऽपि न दोषः। पराभ्युपेतनिर्विकल्पकवत्।**

---

## दीपनम्

तदन्यदप्रमा तर्हि स्वरूपज्ञानमपि प्रमैव। असद्विलक्षणाविद्यादिस्वरूपविषयस्य शुक्तिरजतज्ञानस्येव तल्लक्षणोपपत्तेः। यद्यबाधितार्थज्ञानं प्रमा तदन्यदप्रमेति तदा स्वरूपचैतन्यमप्रमैव, तद्विषयप्रपञ्चस्य बाध्यत्वात्। न चैवं दोषजन्यत्वप्रसङ्गः; अनादिप्रमायां गुणस्येवानादिभ्रमे दोषस्याहेतुत्वादिति मतभेदेन चैतन्यं नोभयविलक्षणमिति द्योतयति—**अपीति**। **निर्विकल्पकवदिति**। तद्धि विशेष्यावृत्त्यप्रकारकज्ञानत्वेन प्रमापि तद्वति तत्प्रकारकज्ञानं प्रमेति मते प्रमा

---

## पूरणी

कतावच्छेदकतया तज्जातिरभ्युपेयेति भावः। **असद्विलक्षणेति**। अविद्यादिमति तद्गोचरज्ञानस्य प्रमात्वादित्यर्थः। **नोभयविलक्षणमिति**। अबाधितार्थज्ञानं प्रमा तद्वति तत्प्रकारकज्ञानादन्या अप्रमेति च लक्षणानुरोधेनोभयबहिर्भावोक्तिरिति भावः। **विशेष्यावृत्तीति**। यद्यपि यत्किंचिद्विशेष्यावृत्तिप्रकारकघटज्ञानादावव्याप्तिवारणाय स्वविशेष्यावृत्तित्वं तदर्थो वाच्यः, निर्विकल्पकस्य भासमानवैशिष्ट्यानुयोगिरूपविशेष्याविषयकत्वान्न तल्लक्षलसङ्ग्रहः, तथापि स्वपदं प्रकृतपरम्। तथा च विशेष्यावृत्तिप्रकारकाणि यानि ज्ञानानि तदन्यज्ञानत्वं लक्षणार्थः। स च निर्विकल्पकेऽपीति भवति तत्सङ्ग्रह इति भावः। **तद्वतीति**। तद्वति तत्प्रकारकज्ञानादन्यदप्रमेति मतेनाप्रमापि विशेष्यावृत्तिप्रकारकज्ञानमप्रमेति मते तद्विलक्षणमित्यर्थः।

## अनुभवात्मैक्यम्

स [1]एष न आत्मा, तद्भेदे प्रमाणाभावात्, मयि ज्ञानमित्यादेर्वृत्तिविषयत्वात्। अभेदे च "अत्रायं पुरुषः स्वयंज्योतिः" इत्यादिश्रुतिरुक्ताहंकारानात्मतानुमानं च प्रमाणम्। किं च या वृत्त्यातिरिक्तावस्थात्रयानुगता जन्मविनाशरहिता संविन्निरू-

### दीपनम्

विलक्षणमेव। एवं तद्वति तत्प्रकारकज्ञानान्यत्वेनाप्रमापि विशेष्यावृत्त्यप्रकारकज्ञानत्वेन प्रमेति यथा एवमित्यर्थः।

यदर्थोऽयं प्रयासस्तदाह—**स एवेति**। **अत्रायमिति**। ज्योतिःशब्देन हि प्रकाशरूपचैतन्यं विवक्षितम्। तत्सामानाधिकरण्यात्स्वयमिति विशेषणसामर्थ्याच्च आत्मनश्चिद्रूपत्वं [2]श्रुत्यर्थः। **उक्तेति**। अहंकारोऽहमनुभवे प्रकाशमानस्वव्यतिरिक्तद्रष्टृकः दृश्यत्वादिति प्रागुक्तानुमानम्। तेन हि सिद्धस्याहंकारातिरिक्तद्रष्टुः दृश्यत्वेऽनात्मत्वप्रसङ्गाद्वर्णितदृग्रूपत्वमेव सिद्ध्यतीत्यर्थः। **किंचेति**। वैशेषिकाद्यभिमतज्ञानस्य भट्टाद्यभिमतप्राकट्यस्य च व्यावृत्तये वृत्त्यतिरिक्ता जन्मविनाशरहितेति। अवस्थात्रयेत्यभेदयोग्यतायै स्वरूपकीर्तनम्।

### पूरणी

**स्वयमितीति**। तद्विशेषणस्य घटादिवद्भेदघटिततादात्म्येन तत्सामानाधिकरण्यशङ्कानिवृत्त्यर्थत्वादिति भावः। **प्राकट्यस्य** ज्ञाततायाः। तस्याः ज्ञानजन्यत्वादित्यर्थः। **अभेदेति**। अन्यथा नित्याया अपि तटस्थाया अवस्थात्रयसाक्षिभूतात्माभेदायोगात्। अवस्थात्रयानुगमश्चावस्थात्रयेऽपि जीवव्यहारहेतुत्वम्। अतस्तादृशात्माभेदयोग्यतासिद्धिरिति भावः। **स्वरूपेति**। उक्तार्थस्यानुमिताभेदसंभावनाबुद्धि-

[1] एवात्मा-ग. [2] श्रुत्यर्थ इत्यर्थः-ख.

### दीपनम्

निरूपितेत्याश्रयासिद्धिपरिहाराय । नित्या संविदित्यर्थः । आत्मनि भ्रमसिद्धसंविद्भेदाभावसाधनान्न निषेध्याप्रसिद्धिः ।

---

### पूरणी

हेतुत्वेऽपि उद्देश्यानुमितिप्रतिबन्धकार्थान्तरादिशङ्कावारकत्वाभावादि-त्यर्थः । नन्वात्मभेदमात्राभावे साध्ये अहमुपलभ इति प्रातीतिकात्म-प्रतियोगिकभेदस्य संविदि सत्त्वाद्बाधः, न चात्मसमानसत्ताकतद्भेदा-भावः साध्य इति वाच्यम्; तादृशभेदाप्रसिद्धेरित्यत्राह—**आत्म-नीति** । तत्त्वत आत्मभेदशून्य इति साध्यम् । तत्र चात्मभेदमात्रस्य प्रतियोगित्वान्न निषेध्याप्रसिद्धिः । तत्प्रतियोगिकपारमार्थिकाभावस्य च साध्यत्वान्न तद्भेदानुभवबाधोऽपि, तद्भेदानुभवस्य कल्पितभेदविषयस्य पारमार्थिकतदभावानुमित्यविरोधात् । तदिदमुक्तं—**भ्रमसिद्धेति** । यथाश्रुते आत्मभेदस्य घटादावेव प्रसिद्धतया आत्मनि भ्रमसिद्धिवर्णन-वैयर्थ्यात् । अन्यथा घटादेर्व्यतिरेकदृष्टान्तत्वोपपादनविरोधात् । अत एव भ्रमसिद्धेति संविदात्मभेदाभावसाध्याभिप्रायमिदमिति प्रत्यु-क्तम् । एतत्साध्यव्यतिरेकात्मकसंविदात्मभेदस्य घटादावसंभवेन तद्दृष्टा-न्तासंभवादिति ॥

ननु तत्पारमार्थिकाभावसिद्धौ तदनुभवस्य कल्पितभेदविषयक-त्वम्, तदनुभवस्य तद्विषयत्वेन बाधविरहादुक्तानुमानेन तादृशाभाव-सिद्धिरित्यन्योन्याश्रयत्वम् । नच मानान्तरादेव तद्भेदस्य कल्पितत्वं सिद्धमिति वाच्यम्; तथासति तत एव संविदात्मभेदसिद्धौ तदनुमान-वैयर्थ्यादिति चेन्न; तद्भेदस्य कल्पितत्वनिश्चयमन्तरेणापि चन्द्रादौ कल्पितभेददर्शनेनैतदनुभवस्यापि कल्पितभेदविषयत्वशङ्काकलङ्कितत्वेन पारमार्थिकतत्प्रतियोगिकाभावानुमितौ पीतभ्रमस्य श्वैत्यानुमिताविवा-

पिता सा आत्मनो न भिद्यते, संवित्त्वात्, व्यतिरेकेण घटादिवत्। न चाहं जानामीति तस्य ज्ञानाश्रयत्वानुभवाविरोधः; तस्य वृत्तिविषयत्वादित्युक्तम्। इदानीमेव जानामीति तदाश्रितज्ञाने कादाचित्कत्वानुभवादात्मनो ज्ञानेन संबन्धानिरूपणाच्च न तदाश्रयत्वम्। तत्र न तावत्संयोगः; अयुतसिद्धयोस्तदयोगात्।

---

### दीपनम्

बाधाबाधाभ्यां संविद्घटान्न भिद्यत इत्याभाससाम्यं परिहर्तव्यम्। अनुमानेऽनुकूलतर्कमाह—आत्मन इति।

---

### पूरणी

विरोधित्वात्। अतो नान्योन्याश्रयः। यद्वा संविदात्मभेदस्यापि कल्पितत्वं मानान्तरेण सिद्धम्। [1]नचैतदनुमानवैयर्थ्यम्; संविदात्मनोरैक्यसिद्ध्यर्थत्वात्। न हि भेदकल्पितत्वमात्रेण वास्तवं तयोरैक्यम्। घटपटभेदस्य तथात्वेऽपि तयोरैक्यादर्शनात्। भेदप्रतियोगिसंविदि तद्भेदस्य पारमार्थिकनिषेधे तु तदैक्यं सिद्ध्यति, रज्ज्वां सर्पनिषेधे असर्पात्मकत्ववत्। घटे तु पटभेदस्य पारमार्थिकतन्निषेधविरहान्न तदैक्यम्। न चैवं ब्रह्मणि प्रपञ्चभेदस्य परमार्थनिषेधात्तयोर्वास्तवतदैक्यं सिद्ध्येदिति वाच्यम्; तद्भेदवत्प्रपञ्चस्यापि ब्रह्मणि तथा निषेधेन तदनुपपत्तेः। स्वसमानसत्ताकप्रतियोगिकभेदनिषेधस्यैव वास्तवैक्यपर्यवसायित्वात्। प्रकृते च संविद्रूपाधिकरणस्य प्रतियोग्यात्मनश्च दर्शितरीत्या पारमार्थिकत्वेन संविदात्मप्रतियोगिक[2]परमार्थभेदनिषेधस्य तदैक्यपर्यवसायित्वादिति न किंचिदनुपपन्नम्। बाधाबाधाभ्यामिति। भेदमात्राभावे साध्ये घटमुपलभ इत्यादिभेदानुभवबाधः। घटभेद-

---

[1] नचैवं तदनु—ञ.  [2] भेदपरमार्थनिषेधस्य—ञ.

## अत्र समवायनिराकरणम्

**नापि समवायः; जन्यसंबन्धस्य यावत्संबन्धिजन्यत्वेन[1] तदुत्पत्तिकाले संबन्धाभावेन [2]युतसिद्धिप्रसङ्गात्। समवायस्य समवायान्तरापेक्षायामनवस्थाप्रसङ्गात्। नापि नित्यः समवायः; संबन्धिना रूपादिना तत्प्रतीत्या च विना सतः प्रतीयमानस्य च**

### दीपनम्

प्राभाकरमतं दूषयति—**जन्येति**। **समवायस्येति**। भावकार्यस्य समवायिकारणजन्यत्वनियमात् समवायस्यापि समवेतत्वं वक्तव्यम्। एवं तस्य तस्यापीत्यनवस्था स्यादित्यर्थः। प्रथमं प्रसिद्धसंबन्धस्वभाववैलक्षण्येन वैशेषिकादिमतं दूषयति—**नापीति**।

### पूरणी

प्रतियोगिकपरमार्थाभावस्य संविदि साधने तु सिद्धसाधनम्, ब्रह्मरूपायां संविदि भेदान्तरवत् घटभेदस्यापि वस्तुतो विरहात्। यथा चैवं सति संविदो न घटैक्यं तथानुपदमेव वर्णितम्। न तु संविदि घटभेदाभावानुमाने बाधादत्र च तद्विरहाद्वैषम्यमित्यर्थः। भेदविरहमात्रानुमाने भेदानुभवबाधस्योभयत्रापि तुल्यत्वात् भेदपारमार्थिकाभावसाधने च तत्रापि बाधविरहादिति।

**प्रथममिति**। यद्यपि प्राभाकरमतं पूर्वमेव निराकृतं तथापि प्रथममित्यस्य हेत्वन्वयः न तु निराकरणेन। तथा चादौ संबन्धस्वभाववैलक्षण्यं हेतुः, हेत्वन्तरमपि पश्चात्समवायनिराकरणे वक्ष्यत इत्यर्थः। यद्वा निराकृतमपि प्राभाकरमतं तन्मुखेन समवायनित्यत्वनिराकरणाय पुनरुपस्थाप्य पुनः स्वयं निराकरिष्यत इति तदपेक्षया

[1] जन्यतया–ग. छ. [2] अयुतसिद्ध्यभाव–ख.

**संबन्ध[1]त्वानुपपत्तेः । घटे इदानीं श्यामतासंबन्धो नास्तीत्यनुभवेन तस्य कादाचित्कत्वाच्च । नच श्यामताभावमेवानुभवो**

## दीपनम्

**संबन्धत्वेति ।** संबन्धो हि संबन्धिपरतन्त्रस्वभावतया तन्निरूपणाधीननिरूपणस्तदधीनसत्ताकश्च । यथा संयोगः । रूपघटसमवायश्च शब्दादिसमवायादन्योऽनन्यो वा । उभयथापि संबन्धिनौ विना तिष्ठति प्रतीयते चेति संबन्धत्वव्याहतिः । वायौ विद्यमानस्यापि समवायस्य रूपसमवायाभेदे तस्य तद्विशिष्टप्रतीत्यनियामकत्वादपि न तस्य संबन्धत्वम् । न चासंसर्गाग्रहसहकारिविरहादेव तत्र विशिष्टधीविरह इति वाच्यम् ; तर्हि कस्याचित् कदाचित्तत्रोत्पन्नरूपधियः प्रमात्वं स्यात् । न च तन्निरूपितसमवायो नास्तीति वाच्यम् ; तद्वृत्तिसमवायस्यापि रूपनिरूपितसमवायाभिन्नत्वेन तत्समवाये तन्निरूपितत्वस्यापि सत्त्वात् । अत एव शुक्तौ रजतमिति धीरपि न भ्रमः स्यात् , प्रतीत[2]संबन्धाबाधात् । न चाधाराधेयभावसंबन्ध एव सर्वत्र विशिष्टधीविषय इति वाच्यम् ; सर्वत्राधाराधेयभावनिबन्धनैव विशिष्टधीरिति समवायोऽकिंचित्कर एव स्यात् । तथा च किं तेन नित्यसमवायेन बन्ध्यायमानेनेत्यनित्य एव सोऽभ्युपेय इति भावः । अनुभवतोऽपि रूपादिसंबन्धोऽनित्य इत्याह—**घट इति ।** संबन्धिनिरूपिताभावविषयत्वे संयोगस्यापि नाशो न सिद्ध्येत्तत्रापि तदनुभवस्य विभागादिविषयत्व-

## पूरणी

वैशेषिकादिमतनिराकरणस्य प्राथमिकत्वं द्रष्टव्यम् । **उभयथापीति ।** नित्यसमवायस्य तत्पूर्वापरसमययोरपि सत्त्वादित्यर्थः । **प्रतीतसंबन्धस्येति ।** रजतत्वसमवायस्य शुक्तावपि सत्त्वादित्यर्थः । **विभागादीति ।**

[1] त्वायोगात्—क. ख. ग. छ. [2] संबन्धस्याबाधादिति व्याख्यानुसारी पाठः.

**विषयीकरोति न संबन्धाभावमिति वाच्यम्; अन्यत्र श्यामतायाः सत्त्वात्। अत्र नास्तीति चेत्, तस्यां तत्संबन्धे च**

---

## दीपनम्

संभवात्। दूषणान्तरमप्याह—**अन्यत्रेति**। **तत्संबन्धे चेति** चकारेण प्राक्श्यामघटवृत्तिपीतत्वसमवाये तन्निरूपितत्वमप्यस्तीति दर्शयति। न च घटे भूतलसंयोगे सत्यपि तत्र तदभावान्निदमनुपपन्नमिति वाच्यम्; तन्निरूपितसंयोगाभावात्। श्यामताया घटादिवृत्तिप्रयोजकसमवायस्य वायाविव घटे भूतलस्य वृत्तिप्रयोजकसंबन्धाभावाच्च। किं च घटे तेनैव संबन्धेन तद्वैशिष्ट्यप्रमावद्वायावपि रूपादिवैशिष्ट्यप्रमा

---

## पूरणी

असंयुक्तप्रत्ययस्य संयोगिद्रव्यनिरूपितविभागादिविषयत्वेनान्यथासिद्धेरित्यर्थः। न चैवं विभागस्य संयोगविरोधिगुणतया तेन तन्नाशोऽवश्यं सिद्ध्येदिति वाच्यम्; तर्हि रक्ततासमवायस्यापि श्यामतासमवायविरोधितया तेनापि तन्नाशप्रसङ्गः। लाघवेन विरोधिसन्निपातमात्रस्य भावनाशकत्वादिति भावः। घटवृत्तिसंबन्धस्य श्यामतानिरूपितत्त्वाभावशङ्कापि न कार्येत्याह—**चकारेणेति**। **भूतलस्येति**। संयोगस्याधारताशून्याङ्गुल्यादिसाधारणत्वेन वृत्तिप्रयोजकत्वाभावात् रूपादिसमवायस्य च त्वया तत्प्रयोजकत्वाभ्युपगमादित्यर्थः। वायुवृत्तिसमवाये तन्निरूपितत्वाभावमभ्युपेत्यापि दोषान्तरमाह—**किं चेति**। ननु भूतले घट इति प्रतीतेः प्रमात्वं युक्तम्, घटे भूतलाधारताप्रयोजकसंबन्धाभावेऽपि तदाधेयताप्रयोजकसंबन्धसत्त्वात्। वायौ तु न रूप-

सति तदभावायोगात् । अतो विनिगमकाभावादुभयाभावो [1]वाच्यः । न चैवं कार्यसमवायस्यापि समवायान्तरापत्तिरिति वाच्यम्; तस्यासमवेतत्वात् । समवेतकार्यस्यैव समवायिजन्यत्वात् । अस्य च ध्वंसवन्निमित्तमात्राधीनत्वात्[2] ॥

## दीपनम्

स्यात् । अत एव वायुवृत्तिसमवाये रूपनिरूपितत्वाभावान्न तथा प्रमेति निरस्तम् । घटवृत्तिसंयोगे [3]भूतलवृत्तित्वाभावेऽपि तद्वैशिष्ट्यप्रमादर्शनात् समवायस्वरूपातिरिक्तरूपनिरूपितत्वाभावाच्चेति भावः । किं च रक्ते श्यामतासंबन्धे प्रमाणाभावान्न तद्विनाशबुद्धिरन्यथा नेतव्येत्यभिप्रेत्याह—**अत इति** । श्यामताया अपि समवायवदेकत्वे बाधकाभावाद्विपरीतमेव न्याय्यमित्युक्तं विनिगमकाभावादिति । **अस्य चेति** । एतच्च गुरुमतेनोक्तम् । वस्तुतस्तन्मतमसङ्गतम्, भावकार्यस्यापि समवायवदेवान्यस्यापि निमित्तमात्रादेवोत्पत्तिप्रसङ्गादनित्यसमवायोऽपि मुधैवेत्यर्थः ॥

## पूरणी

निरूपितः कश्चित्संबन्ध इति न तत्प्रतीतेः प्रमात्वमित्याशङ्क्याह—**समवायस्वरूपेति** । नन्वेवं त्वदभिमतनित्यैकश्यामता न सिद्ध्येत्, तन्नाशस्याभ्युपगमादित्यत्राह—**श्यामताया अपीति** । उभयनाशविषयत्वोक्तिर्मुखमात्रमिति भावः । ननु किमनित्यसमवायः सिद्धान्त्यभिमत इत्याशङ्क्य नेत्याह—**एतच्चेति** ।

---

[1] वक्तव्यः—ग. छ. [2] ऽजन्यत्वात्—ग. [3] भूतलनिरूपितत्वाभावेऽपि—ख.

**जन्ययोर्नित्यसंबन्धे प्रमाणाभावाच्च । अभावविशिष्टप्रत्यक्षवद्रूपादिविशिष्टप्रत्यक्षस्य तेन विनाप्युपपत्तेः । क्लृप्तस्वरूपादेवोपपत्तावक्लृप्तसवायकल्पने[1] गौरवात् । किं चैवं त्वन्मते वस्तुत्वमेवैकं गुणगुण्यादिविशिष्टधीविषयः संबन्धोऽस्तु,**

## दीपनम्

एवं समवायस्य नित्यत्वे बाधकमुक्त्वा तत्र प्रमाणमपि नेत्याह— **जन्ययोरिति।** न तावच्छुक्लो घट इति प्रमाणम्; तस्याभेदविषयत्वात्। तत्र श्यामतासंबन्धो नास्तीत्यनुभवाच्चेति । नापि शुक्लो घट इति विशिष्टप्रत्ययो विशेषणविशेष्यसंबन्धविषयः विशिष्टप्रत्ययत्वादित्यनुमानं तत्र प्रमाणमित्याह—**अभावेति।** नच लाघवादेकः समवायः सिद्ध्यति, स्वरूपं च परस्परव्यावृत्तमिति न विशिष्टधीविषय इत्याह— **क्लृप्तेति।** अन्यथा अभावेऽपि स्वरूपं संबन्धो न स्यादिति भावः । संबन्धिपारतन्त्र्यरहितस्यापि समवायस्य संबन्धत्वे सत्ता गगनादिकं वा संबन्धकृत्यं करोतु, किं समवायेनेत्याह—**किं चैवमिति।** स्वरूपसंबन्धस्यापि संबन्धिमात्रत्वे घटादिज्ञानादपि चक्षुरादिव्यवहारः स्यादि-

## पूरणी

**अभावेति** मूलम् । विशेषणविशेष्यसंबन्धमात्रविषयत्वसाध्ये स्वरूपसंबन्धेनार्थान्तरता । स्वरूपातिरिक्तसंबन्धविषयत्वे तु अभावविशिष्टप्रत्यक्षे व्यभिचार इति भावः । **न च लाघवादिति।** संबन्धमात्रविषयकत्वं साध्यम्, न चार्थान्तरता; लाघवादेकसंबन्धसिद्धेरित्यर्थः। **घटादिज्ञानादिति।** चक्षुरादिजन्यघटादिज्ञानस्य चक्षुरादिसंबन्धित्वादित्यर्थः । रूपघटादावतिरिक्तसमवायाभ्युपगमे ज्ञानघटादावपि स्वरूपातिरिक्तं नित्यैकवैशिष्ट्यं किंचित्सिद्ध्येदित्यर्थः ।

[1] वायिकल्पने—ख.

क्लृप्ते विशिष्टधीनियामकत्वकल्पने लाघवात् किं पदार्थान्तरेण। स्वरूपसंबन्धस्यापि स्वरूपादन्यत्वेनैकतया समवायाविशेषाच्च। तस्मान्नास्ति समवायः[1]। नापि तादात्म्यम्। [2]न तावत्तादात्म्यमभेद एव; धर्मधर्मिभावाद्यसंभवात्। अभेदस्य संबन्धत्वायोगात्। नापि भेदाभेदौ; समानसत्ताकयोस्तयो-

दीपनम्

र्व्यतिरिक्तत्वं वक्तव्यम्। एवं च सोऽपि लाघवादेक एव स्यात्, ततश्च न तद्विलक्षणसमवायसिद्धिरित्याह—**स्वरूपेति। अभेदस्येति।** एतच्च प्रागेव निरूपितम्। पराभिमतं तादात्म्यं निराकरोति—**नापीति।** किं विदारणात्मा गुणगुण्यादिभेदस्तदुभयाभेदस्याभावः, किं वान्यस्य कस्यचित्। अन्त्ये घटस्य घटेनेव रूपादिनाप्यभेदस्तुल्य एव स्यात्, [3]तदभेदाभावस्योभयत्रापि तुल्यत्वादिति कुतो गुणगुण्यादिभावः। आद्ये अनुभवविरोधः। न हि प्रमीयमाणभेदस्याभावं कश्चिदनुभवति। किं शुक्तौ रजततदभाववत्तयोर्विषमसत्ता[4] भूतले घटतदभावयोरिव [5]समानसत्ता वा। आद्ये भेदः अभेदो वा सत्यः, नोभयमपीति कुतो भेदाभेदौ। द्वितीय आह—**समानेति।** भावा-

पूरणी

**विदारणात्मेति।** अभेदविरहात्मेत्यर्थः। एतच्च विकल्पोपयोगितयोक्तम्। क्वचित्तु संविदात्मगुणगुण्यादिभेद इति पाठः, तत्र संविदात्मनोर्गुणगुण्यादिरूपेण भेद इत्यर्थः। संविदात्मग्रहणं च प्रकृतत्वाद्द्रष्टव्यम्। **तदभेदेति।** वस्त्वन्तराभेदविरहात्मकभेदे सत्यपि रूपाद्यभेदविरहात्मकभेदस्याभावादित्यर्थः। यद्यपि रूपादिभेदस्यान्याभेदविर-

[1]य इति–ग. छ. [2]न च तत्तदभेद–ख, न तावत्तदभेद–ग. [3]तदभावाभाव–क.
[4] विषमा सत्ता–च. [5] समाना वा–च.

युगपदेकत्रासंभवात् । घटादेर्मृदाद्यभेदे [1]तदुत्पत्त्यनुपपत्तेश्च । [2]भेदोऽप्यस्तीति तत उत्पत्तिरिति चेत्तर्हि जायमानं मृद्भिन्नं प्राङ्नास्तीति वक्तव्यम् । घटादिश्च जायमान एव, प्राक्तच्छब्द-बुद्ध्योरभावात् । प्रागसतश्च सतो भेद इति कुत्राभेदः । एवं मृज्जायते विनश्यतीति बुद्ध्यभावाच्च न जनिविनाशवतो मृदभेदः । तस्माद्यज्जायते विनश्यति तत्तदुपादानादत्यन्तं भिन्नमेव ।

---

## दीपनम्

भावयोरप्येकदा एकत्राभ्युपगमे तन्मूलो विरोधः क्वाऽपि न स्यात् अप्रतीतेश्च । न हि गुणगुण्यादेर्योऽभेदः प्रतीयते तदभावं कश्चिदनुभव-तीत्यर्थः । एवमभेदोऽपि किं कार्यकारणयोः स्वरूपैक्यं किं वा कश्चिद्धर्मो द्रव्यत्वादिः । आद्य आह—**घटादेरिति** । द्वितीयं शङ्कते—**भेदोऽपीति** । अपिशब्दो द्रव्यत्वादिरूपमभेदं समुच्चिनोति । तर्हि [3]घटयोरिव द्रव्ययोः कार्यकारणयोरप्यत्यन्तं भेद एवाभ्युपगतः स्यादि-त्यभिप्रेत्योपपत्तितोऽपि भेद एव युक्त इत्याह—**तर्हीति** । ततः किं तत्राह—**घटादिश्चेति** ।

---

## पूरणी

हात्मकत्वं शङ्कितुमशक्यं तथापि कथंचिन्मतान्तरे संभावितं निराकृतमिति मन्तव्यम् । ननु कार्यकारणव्यतिरिक्तविषय एव भेदाभेदयोर्विरोध इत्यत्राह—**अप्रतीतेरिति** । इतरत्राप्येकत्रोभयाप्रतीत्या विरोधकल्पना । सा चात्र तुल्येति भावः । **कश्चिद्धर्म इति** । स्वरूपेण भिन्नयोरेव द्रव्यत्वा-

---

[1] तत उ—**ग. छ.** [2] तत्र भे—**छ.** [3] घटपटयोरिव—**च.**

कस्तर्हि गुणगुणिनोः संबन्धः? तादात्म्यमिति ब्रूमः। किं तत्, भिन्नत्वे सत्यभिन्नसत्ताकत्वम्, सत्तानवच्छेदकभेदवत्त्वमिति यावत्। घटादिर्हि दण्डादेरिव मृदादेरपि भिन्न एव। अन्यथा प्रागुक्तदोषानपायात्। परं तु [1]मृद्घट इति भेदो विद्यमानोऽपि नात्मसत्तावच्छेदक इत्यसन्। दण्डघटभेदस्तु सत्तावच्छेदक इति सन्। मृद्घट इति प्रतीत्या मृत्सत्त्वं विना

## दीपनम्

ननु भेदे सत्तैक्यमेव कुतस्तत्राह—सत्तानवच्छेदकेति। कथं तर्ह्यभेदप्रतिपत्तिस्तत्राह—परं त्विति। नात्मसत्तेति। स्वतन्त्रयोर्हि धर्मिप्रतियोगिनोर्भेदः स्वाधिष्ठानात्मसत्तामवच्छिनत्ति भिन्नावेतौ सन्ताविस्यपरोक्षानुभवात्, कार्यस्य तु कारणपरतन्त्रतया तथाननुभवाच्च तयोर्भेदः सत्तानवच्छेदक इति वर्तमानोऽप्यसन्नित्यसद्भेदवत्त्वमेव तादात्म्यमित्यर्थः। उक्तेर्थे प्रमाणमाह—मृद्घट इति। अस्ति हि सुवर्णं कुण्डलं मृद्घट इति सामानाधिकरण्यप्रतीतिः। न चेयं घटादेर्मृत्त्वादिजातिसंबन्धविषया; उपादानातिरिक्तानुगतजातौ प्रमाणाभावस्योक्तत्वात्। गुणगुणिजातिव्यक्तीनामपि तादात्म्यप्रतीतिदर्शनात्। न च सर्वत्र

## पूरणी

दिसाधारणधर्मवत्त्वलक्षणोऽभेद इत्यर्थः। स्वतन्त्रयोरिति। युतसिद्धयोरित्यर्थः। स्वाधिष्ठानेति। स्वाधिष्ठानस्वरूपपृथक्सत्तां प्रयोजयतीत्यर्थः। असद्भेदवत्त्वमिति। पृथक्सत्त्वाप्रयोजकभेदवत्त्वमित्यर्थः। यद्यप्यधिष्ठानसत्तैकैव तथाप्यत्र पृथक्सत्तेत्यनेन स्वातन्त्र्येण तदुपलब्धिप्रयोजकं युतसिद्धत्वं विवक्षितम्। तच्च परस्परापरतन्त्रस्वभावत्वमिति न कश्चिद्दोषः। गुणगुणीति। शुक्लो घट इत्यादेः सामानाधिकरण्यानुभवस्य

[1] मृद्घटभेदो—ख. ग. छ.

**सत्ताया अदर्शनेन च तद्भेदस्य ततो विलक्षणत्वात् । ननु स एव भेदोऽन्यत्रापि वर्तते, स च सन्नेवेति चेन्न;**

## दीपनम्

समवायनिबन्धनैव तत्प्रतीतिः; तस्य सत्त्वेऽपि संबन्धिनोरत्यन्तभेदेनाभेदप्रतीत्यनुपपत्तेः। अनुभूयते चेदं नीलमित्यादिनाभेदः। तस्माद्भिन्नयोः सत्तैक्यमेव कार्यकारणयोस्तादात्म्यम्। एवं गुणगुण्यादेरपीत्यनुभवसिद्धं कार्यकारणादीनां दण्डघटविलक्षणं तादात्म्यमित्यर्थः। **स एवेति।** एकप्रतियोगिकानन्तभेदानुपपत्तेरित्यर्थः। यद्यप्यत्यन्ताभाव इव भेदोऽप्यारोपितस्याधिष्ठानान्न भिद्यत[1] इति तदेव कथंचित्तन्निरूपितत्वाकारेण भेदबुद्धिविषयः अन्यत्र विद्यमानस्त्वत्यन्ताभाव इव

## पूरणी

न गुणगुणिगतजातिविषयत्वं संभवति; गुणिगतघटत्वादेः शौक्ल्यगुणाद्यनिष्ठत्वादित्यर्थः। **एकप्रतियोगिकेति।** तथा च कपालपटादिवृत्तिर्घटभेद एक एवेति पटादौ सत्तावच्छेदकस्य कथं कपाले तदनवच्छेदकत्वम्, प्रतियोगितदभावयोरेकत्र [2]विरोधादित्यर्थः। **आरोपितस्येति।** यद्यप्येतावता चैतन्याध्यस्तप्रपञ्चभेदस्य चैतन्यस्वरूपत्वेऽपि कपाले घटभेदस्य न कपालस्वरूपत्वं; तत्र तस्यानध्यासात्, कपालघटयोरुभयोरपि चैतन्य एवाध्यासाभ्युपगमात्, तथा च तादृशभेदस्योपादानाद्भेदे तत्रोक्तदोषप्रसङ्ग एव, तथापि कपालावच्छिन्नचैतन्यमेव घटाद्युपादानं न कपालादिकम्। अतः कपालादेः पृथक् घटादितादात्म्यं नेति मतावष्टम्भेनेदमुक्तम्। यद्वा कपालाद्यवच्छिन्नचैतन्यमात्रोपादानत्वाभिप्रायेण यद्यपीति चोद्यम्। कपालादेरप्युपादानत्वमिति मतावष्टम्भेन तथापीति

---

[1] न्नातिभिद्यत—**च**. [2] विरोधादिति भावः—**झ**.

**तथाप्येतदवच्छेदेन सत्तावच्छेदकत्वाभावात्। समवायस्य वाय्वादिवृत्तित्वेन रूपाद्यनिरूपितत्ववदस्याविरोधात्। अस्मन्मते त्वभेदेऽप्यौपाधिकभेदोऽप्यस्तीति न कोऽपि दोषः। एतदेव सिद्धान्ते [1]कल्पितभेद उपादानोपादेययोरित्युच्यते। अन्यादृशस्य दण्डादिभेदव्यावृत्तस्यासंभवात्[2]। न चायं ज्ञानात्मनोः**

---

दीपनम्

धर्मिणो भिद्यत इति स सत्तावच्छेदक एव, तथापि तदेकत्वमभ्युपेत्याह—**तथापीति। एतदेवेति।** भेदस्य सत्तानवच्छेदकत्वमेवेत्यर्थः।

---

पूरणी

समाधानम्। **तदेकत्वमिति।** भेदस्योपादानातिरेकं तस्य च पटादि[3]वृत्तेरेकत्वं चाभ्युपगम्येत्यर्थः। **तथापीति** मूलम्। उपादानतदतिरिक्तवृत्तित्वलक्षणावच्छेदकभेदात्तदविरोध इति भावः। ननु तद्भेदस्यापारमार्थिकत्वमादाय कल्पितव्यपदेशोऽस्त्वित्याशङ्क्याह—**अन्यादृशस्येति** मूलम्। दण्डादिभेदस्यापि कल्पितत्वेन तद्वैलक्षण्यानुपपत्तेरित्यर्थः॥

नन्वत्र सत्तावच्छेदकभेदाभावो वा संबन्धत्वेनाभिमतः, तदनवच्छेदकभेदो वा। नाद्यः; भेदाभावस्य संबन्धत्वनिरासात्। न द्वितीयः; घटपटयोर्भेदे सत्यपि विशिष्टप्रत्ययादर्शनेन तस्य विशिष्टज्ञानानियामकत्वात्। सुवर्णं कुण्डलमित्यत्र कुण्डले सुवर्णभेदाप्रतीतेश्च। अन्यथा सुवर्णार्थिनस्तज्ज्ञानात्कुण्डले प्रवृत्त्यनुपपत्तेः [4]तद्भिन्नत्वेन ज्ञातघटादौ तददर्शनात्। किं चान्योन्याभावात्मकभेदस्य प्रतियोग्यादिनिरूप्यतया

---

[1] कल्पितो भेद-**घ.** [2] स्याभावात्-**छ.** [3] वृत्त्येकत्वं-**झ.** [4] तद्भिन्नतया-**झ.**

## पूरणी

प्रथमं शुक्लो घट इत्यादितादात्म्यप्रतीत्यनुपपत्तिः, अभावस्य क्वचिदपि संबन्धत्वेनाकल्पनाच्चेति चेत्, अत्रेदमभिसंहितम्—पृथक्सत्त्वाप्रयोजक-भेदस्तादात्म्यम्। भेदश्चानिर्वचनीयो धर्मविशेषो न त्वन्योन्याभावः; नञर्थानुल्लेखेन तत्प्रतीतेः। स चोपादानवृत्तिः पटादिवृत्तिभेदाद्विलक्षण एव। घटः पटो नेतिवद्घटो मृन्नेत्यप्रतीतेः। तद्भेदैकत्वोक्तिरनास्थया, अतिरिक्तान्योन्याभावे मानाभावेन घटादावपि विभागाख्यानिर्वचनीयधर्म एव भेद इति मतावष्टम्भेन वा। अतो न सङ्कटं किंचित्। न चैवं नामान्तरेण समवायाभ्युपगम एवायमिति वाच्यम्; समवायस्यैतादृग्भेद-[1]नियतत्वेन तेनैव तद्व्यवहारोपपत्तौ तदनभ्युपगमात्। अयुतसिद्ध-तत्तत्स्वरूपं वा तादात्म्यमिति सुस्थम्। यत्तु भेदस्यासत्त्वं धर्मिभिन्न-सत्ताकत्वम्। मृद्घटभेदो मृद्भिन्नसत्ताकः। दण्डघटभेदस्तु दण्डसमान-सत्ताक इति तद्वैलक्षण्यम्। न चैवं चन्द्रे चन्द्रभेदभ्रमे च चन्द्रस्य स्वभिन्नसत्ताकभेदवत्त्वात्तादात्म्यापातः; वास्तवस्वरूपैक्याभावे सतीति विशेषणादिति, तदयुक्तम्; मृद्घटभेदस्य व्यावहारिकमृद्भिन्नसत्ताकत्वे पारमार्थिकत्वायोगेन प्रातीतिकत्वं वक्तव्यम्। तथा च चन्द्रवन्मृद्घटयो-रपि स्वरूपैक्यप्रसङ्गः। स्वरूपेणैक्याभावे सतीति विशेषणे तथाभूतयोः साक्षिविषयदर्शनयोस्तादात्म्यानुपपत्तिश्चेति दिक्॥

ननु ज्ञानात्मनोः कथं पारमार्थिकत्वम्, मानाभावात्। न च श्रुतिप्रतिपाद्यत्वात्तदिति वाच्यम्; मायाभूतादेरपि "इन्द्रो मायाभिः" इत्यादिश्रुतिप्रतिपाद्यत्वात्। न च "सत्यं ज्ञानं" इत्यादिना सत्यत्वेन श्रुतिप्रतिपाद्यत्वात्तदिति वाच्यम्; "मृत्तिकेत्येव सत्यं" इत्यादौ

[1] नियततया—झ.

संबन्ध इति वाच्यम्; पारमार्थिकयोर्मिथ्याभेदेऽभेदस्यैव

## दीपनम्

**पारमार्थिकयोरिति।** ज्ञानस्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्येन, "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यादिवाक्येनात्मनश्च तात्पर्येण प्रतिपादितत्वात्तयोः पारमार्थिकत्वमित्यर्थः।

## पूरणी

मृदादेरपि सत्यत्वप्रतिपादनात्तदापत्तेरित्यत्राह—**ज्ञानस्येति**। सर्वेषां वेदान्तानां चिद्रूपब्रह्मतात्पर्यकतया मायाभूतादेर्मृत्तिकासत्यत्वस्य वा तात्पर्येण श्रुतिप्रतिपाद्यत्वाभावादिति भावः। यद्यपि सत्यादिवाक्येऽपि ब्रह्मैव तात्पर्यतः प्रतिपाद्यम्, न ज्ञानम्, तस्यैव प्रकरणित्वात्, तथापि "ब्रह्मविदाप्नोति परं" इति मुक्तिसाधनज्ञानविषयतया पूर्ववाक्यावगतब्रह्मस्वरूपजिज्ञासार्थमिदं ब्रह्मणो ज्ञानादिस्वरूपत्वं प्रतिपादयतीति भवति ज्ञानं तत्तात्पर्यविषयः। न चैवमेतच्छ्रुत्यैव ज्ञानात्मनोरभेदः सिद्ध्यतीति किं तदर्थयत्नान्तरेणेति वाच्यम्; तद्वाक्यार्थस्यैव न्यायानुसरणात्। यद्वा ज्ञानपदमर्शाद्यच्प्रत्ययान्ततया ज्ञानवत्परतयापि संभावितमेवेति श्रुत्यन्तराद्यनुसरणम्। न चैवं तथा मन्यमानं परं प्रति कथं ज्ञानस्य श्रुतितात्पर्यविषयतयोपन्यास इति वाच्यम्; ज्ञानवत्परत्वेऽपि तद्वाक्यस्य ज्ञानतात्पर्यानपायादिति दिक्। न चैवं कर्मश्रुत्या तात्पर्यतः प्रतिपादितस्वर्गज्योतिष्टोमादेरपि सत्यत्वापत्तिः; स्वर्गादिवस्तुस्वरूपस्य श्रुतिप्रमेयत्वाभावात्। तत्साधनत्वांशस्यैव तत्तात्पर्यविषयत्वात्। तस्य च मिथ्यावस्तुसंबन्धितया सत्यत्वानर्हत्वात्। मिथ्यावस्त्वसंबन्धैकस्वभावतया श्रुतितात्पर्यविषयत्वस्य सत्यताप्रयोजकत्वात्। न च तत्र व्यभिचारः; मिथ्यावस्त्वसंबन्धैकस्वभावत्वेन तद्विशेषणात्।

## पूरणी

कर्मकाण्डस्यापि ब्रह्मज्ञानानुकूलकर्मपरतया ब्रह्मण्येव परमतात्पर्याच्चेति दिक्। यद्वा सत्यत्वेन श्रुतितात्पर्यविषयत्वादित्यर्थः। "कतम आत्मा" इत्यत्रापि आत्मनोऽवस्थात्रयानुस्यूतत्वादिनाऽविनाशित्वादिप्रतिपादनेन सत्यत्वस्यैव तात्पर्यतो लाभादिति।

नन्वत्र जीवसंविज्जीवात्मनोरैक्यं न प्रतिपिपादयिषितम्; जीवस्य व्यवहारहेतुतया जाग्रदाद्यवस्थात्रयानुस्यूतवृत्त्यतिरिक्तसंविदो निरूपणात्। जीवव्यवहारार्थायाश्च तस्याः सर्वज्ञब्रह्मधर्मत्वस्याद्वितीयब्रह्मधर्मत्वस्य वा शङ्कितुमशक्यत्वेन तद्भेदस्यासाध्यत्वात्। तयोश्चोदाहृतश्रुतिभ्यां न पारमार्थिकत्वलाभः, सत्यादिवाक्यस्य ब्रह्मज्ञानस्वरूपप्रतिपादकत्वात्। विज्ञानमयादिश्रुतेरपि ब्रह्मपरत्वेन विज्ञानमयाधिकरणे दर्शितत्वात्। तथा हि—विज्ञानमयवाक्यगम्यो जीवो ब्रह्म वेति संशये संसारी जीव एव, आदिमध्यावसानेषु संसारस्य प्रपञ्चनात्। आदौ तावत् "विज्ञानमयः प्राणेषु" इति देहेन्द्रियादिसंबन्धावगमात्, उपसंहारेऽपि "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" इति तस्यैव कीर्तनात्, मध्येऽपि स्वप्नाद्यवस्थाप्रतिपादनादिति पूर्वपक्षिते, ब्रह्मैव तत्तात्पर्यगोचरः। जीवस्वरूपस्य लौकिकाहंप्रत्ययादेव सिद्धत्वात्। संसारप्रपञ्चनं च संसारोपलक्षितात्मानमनूद्य तस्य ब्रह्मैक्यविध्यर्थमिति तत्र सिद्धान्तितम्। ततः कथं तच्छ्रुतितात्पर्यविषयतया जीवसंविदोः पारमार्थिकत्वमुक्तमिति चेन्न; जीवेशयोर्वक्ष्यमाणरीत्या वास्तवैक्यमभिप्रेत्य जीवसंविदोरप्येतच्छ्रुतितात्पर्यविषयत्वोपन्यासादिति। विज्ञानश्रुतेरयमर्थः—विज्ञानमयो लिङ्गशरीरमयः। तेन स्थूलदेहव्यतिरेकः सिद्धः। प्राणेषु चक्षुरादीन्द्रियेषु प्राणादिवायुषु हृदि अन्तःकरणे अन्तरन्तरा वर्तमानः तेन तदाधेयपुरुषस्य आधारेन्द्रियादिशरीरभेदः

## दीपनम्

ननु द्रव्यत्वादात्मनि कस्याचिद्गुणस्य संबन्धो वक्तव्य इत्याशङ्क्य तादृशद्रव्यत्वमेव तस्यासिद्धमित्यभिप्रेत्य ज्ञाने वर्णितं न्यायं सुखादावति-

---

## पूरणी

सिद्धः । आन्तरत्वोक्तया बुद्धिपरिणामरूपकामसङ्कल्पादिभ्यो भेदः सिद्ध्यति । तासां बुद्ध्यनान्तरत्वात् । ज्योतिः तेषां साक्षिपुरुष इति । वस्तुतस्तु सत्यत्वं नित्यत्वं कालत्रयावच्छिन्नत्वमिति यावत् । वृत्त्यातिरिक्तसंविन्नित्यतया निरूपिता । आत्मा च सर्वैर्मोक्षवादिभिर्नित्योऽभ्युपगतः । तथाचोदाहृतश्रुतितात्पर्यविषयत्वहेतुमन्तरापि तयोः पारमार्थिकत्वं सिद्ध्यतीति मन्तव्यम् ॥

**मिथ्याभेद इति** मूलम् । यद्यपि भेदस्य मिथ्यात्वं सत्तानवच्छेदकत्वं न तु कल्पितत्वमनिर्वचनीयत्वरूपम् । तस्य दण्डादिभेदसाधारण्यादित्युक्तम् । अतः पारमार्थिकयोरपि परमते ज्ञानात्मनोरिव सत्तानवच्छेदकभेदेऽपि न वास्तवाभेदलाभः, तथाप्युक्तरीत्यानिर्वचनीयभेदविशेषस्तादात्म्यसंबन्धः । अनिर्वचनीयश्च पारमार्थिकाधिकरणे वस्तुतो नास्त्येव । अन्यथा अनिर्वचनीयतानुपपत्तेः । किं चानिर्वचनीयस्य ज्ञाननिवर्त्यतया तन्नाशानन्तरं ज्ञानात्मनोरभेद आवश्यकः । नच पूर्वं वस्तुतो भिन्नयोः पश्चादभेदः संभवति । तस्माज्ज्ञानात्मनोरुक्ततादात्म्याभ्युपगमात्तदभेद एव सिद्ध्यतीति भावः । **कस्य चिदति** । तथा च ज्ञानमेव तद्गुणः स्यादिति भावः । **सुखादाविति** । ज्ञानतादात्म्यवत्सुखसंबन्धोऽपि मिथ्या । तच्चात्मनः सुखरूपत्वात् दुःखादेश्चात्मनि कल्पितत्वादिति भावः । क्रियादिसत्त्वमपि व्यावर्तयति—

**वस्तुत्वात् । एवं गुणसंबन्धस्य मिथ्यात्वे निर्गुणमेव वस्तु । न चैवं घटरूपादेरप्यभेदो घटादेर्निर्गुणत्वं चेति वाच्यम्; वास्तवभेदाभावरूपाभेदस्यानिवार्यत्वात् । स्वरूपैक्यं तु कार्यकारणादीनां न केनापि वक्तुं शक्यम् । नापि निर्गुणत्वम्; ब्रह्माज्ञानप्रयुक्त-**

## दीपनम्

दिशति—**एवमिति** । **निर्गुणं** निर्धर्मकम् । **वस्तु** ब्रह्मेत्यर्थः । **न चैवं** ब्रह्मणोऽद्रव्यत्वापत्तिः, गुणाश्रयघटादिवैरूप्येऽपि सर्वाधिष्ठानतया रूपादिवैलक्षण्यस्यापि सत्त्वेन द्रव्यत्वोपपत्तेरिति । **ब्रह्माज्ञानेति** । यदज्ञानप्रयुक्तो येन यस्य संबन्धस्तद्धीनं, यथा शुक्तिः

## पूरणी

**निर्धर्मकमिति । सर्वाधिष्ठानेति ।** गुणादिविलक्षणत्वमेव द्रव्यलक्षणमिति भावः । वस्तुतो गुणवत्त्वस्य तल्लक्षणत्वेऽपि कल्पिततद्वत्त्वात्तदुपपत्तिरिति मन्तव्यम् । ननु संविदात्मभेदवद्रूपघटादिभेदस्याप्यनिर्वचनीयत्वेन रूपघटयोरपि वस्तुतस्तद्भेदशून्यतया संविदात्मवदैक्याद्यापत्तिरित्याशङ्क्य निषेधति—**न चैवमिति** मूले । तद्भेदस्यानिर्वचनीयत्वेऽपि न तद्भेदाभावो घटादावस्ति । तस्य पारमार्थिकतद्भेदाभावस्य तथाविधब्रह्मनिष्ठत्वात् । प्रपञ्चमात्रस्य ब्रह्मनिष्ठात्यन्ताभावप्रतियोगितयैव कल्पितत्वात् । स्वसत्ताव्यवहारप्रयोजकाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमिति निरूपितत्वात् । अतो घटादे रूपादिभेदशून्यत्वाभावान्न वास्तवरूपाद्यैक्यप्रसङ्गः, तद्भेदघटितरूपादिसंबन्धशून्यत्वाभावात् । न वा निर्गुणत्वम् । पारमार्थिकात्मनस्तु संविद्भेदशून्यत्वात्तदैक्यम्, तद्भेदघटितसंबन्धशून्यत्वान्निर्गुणत्वं चेत्यभिप्रेत्याह—**वास्तवेति** मूले । रूपादिभेदोऽपि संविद्भेदवदपारमार्थिक एव ।

**गुणसंबन्धस्य मिथ्यात्वेऽपि यावद्व्यवहारमनिवार्यत्वात्। किं चात्मनः केनचित्संबन्धाभावादपि न जन्यज्ञानाश्रयत्वम्। निष्प्रदेश आत्मनि स्वाश्रयवृत्त्यत्यन्ताभावप्रतियोगिसंयोगस्यासंभवेन[1] मनःसंयोगादेरसंभवात्। न च तत्राप्यवच्छे[2]द-**

दीपनम्

स्वाज्ञानाद्रजतसंबद्धमप्यरजतमेव, एवं ब्रह्म स्वाज्ञानात्सर्वाश्रयमपि तद्धीनम्। एवं परमार्थसति ब्रह्मणि गुणसंबन्धस्यापरमार्थत्वादपि। घटे तु गुणसंबन्धो न घटाज्ञानकृतः, किं तु ब्रह्माज्ञानकृत एवेति यावद्घटसत्त्वं गुणसंबन्धो नापैति। एवं तस्य धर्मिसमानसत्ताकत्वादप्यनपाय इति ब्रह्म निर्गुणं घटादिः सगुण इति व्यवस्था सिद्ध्यतीत्यर्थः। प्रागुक्तमपि द्रढीकरणाय पुनरनुवदति—**निष्प्रदेश** इति। अवच्छेदकस्यावच्छेद्याभावसमानाधिकरणत्वे अवच्छेदकत्वानुपपत्तेर्भावाभावावच्छेदक-

पूरणी

न चैवं तदैक्यम्; उक्तरीत्या घटादेस्तद्भेदशून्यत्वाभावादित्यक्षरार्थः। ननु तत्संबन्धस्य तदज्ञानप्रयुक्तत्वं तदज्ञानपर्यन्तावस्थायित्वे प्रयोजकम्, न त्वज्ञानसमयेऽपि गुणसंबन्धशून्यत्वे, अतः सर्वथा ब्रह्म निर्गुणं न सिद्ध्येदित्याशङ्क्य हेत्वन्तरमाह—**एवं परमार्थेति**। कल्पितगुणसंबन्धस्य ब्रह्मणि सर्वदा विरहात्। अन्यथा कल्पितत्वानुपपत्तेरित्यर्थः। **एवं तस्येति**। धर्मिणोऽपि घटादेः कल्पितत्वान्न तत्र गुणसंबन्धविरह इत्यर्थः। एवं नित्यसंविदोऽनात्मधर्मत्वमुक्तम्। अधुना जन्यज्ञानमपि न तद्गुण इत्याह—**किं चात्मन इति** मूले। **प्राक्** वृत्तेरतःकरण-

[1] स्याभावेन—छ. [2] दकमे—छ.

भेदेन संयोगतदभावयोर्वृत्तिरस्त्विति वाच्यम्; व्यधिकरण-नानावच्छेदकं विना तदयोगात्। नानाधर्माश्रय एकत्र तददर्शनात्। न च नित्यज्ञानाश्रयत्वे आत्मनः प्रमाणमस्ति। तस्मान्न ज्ञानं गुणः। न चैवं ज्ञानत्वसंबन्धाभावे [1]ज्ञानमेव न स्यादिति वाच्यम्; न तावत्प्रत्यक्षेण जडव्यावृत्तस्वरूपबोधाय तदपेक्ष्यते; अविद्यानिवृत्त्यनुकूल[2]प्रकाशस्वरूपादेव तस्य

---

दीपनम्

योर्वैयधिकरण्यं वक्तव्यम्। तच्चैकवृत्तिनोः परपक्षे न संभवतीति नावच्छेदकभेदोऽपीत्याह—**व्यधिकरणेति**। धर्मयोः स्वरूपभेदमात्रेणैवासंकीर्णावच्छेदकत्वे बाधकमाह — **नानेति**। संयोगवति देशेऽपि द्रव्यत्ववृक्षत्वाद्यनेकधर्मसत्त्वात्तत्रापि तदभावः प्रमा स्यादित्यर्थः। आत्मा किमनित्यज्ञानाश्रयः, उत नित्यज्ञानस्य। आद्यं निरस्य द्वितीयं प्रत्याह—**न चेति**। इदानीमेव जानामीति ज्ञानेन आत्मधर्मभूते ज्ञाने कादाचित्कत्वानुभवाच्चेत्यपि द्रष्टव्यम्। **एवमिति**। ज्ञानस्यात्मनेव ज्ञानत्वेनापि संबन्धाभाव

---

पूरणी

धर्मतानिरूपणसमये। वर्णितरीत्येति शेषः। **परपक्ष इति**। संयोग-तदभाववद्वृक्षयोरस्मन्मते भेदाभ्युपगमादित्यर्थः। पूर्वोक्तनित्यसंविदः अनात्मधर्मत्वमपि स्मारयति—**नच नित्येति** मूले। प्रमाणमस्तीत्यनन्तरं तदभेदस्य साधितत्वादिति शेषः। तत्रोक्तमपि स्वयं हेतुं स्मारयति—**इदानीमेवेति**। यद्वा साधितवृत्तेः संविद्भेदमभिधाय सामान्यतः परमतसिद्धजन्यज्ञानयोरात्मगुणत्वं निराकरोति—**किं चेत्यादिना**। वस्तुतस्तु संविदात्मनो न भिद्यते, अवस्थात्रयेऽपि

---

[1] ज्ञानमपि तन्न स्यात्—ख. ग. [2] स्वरूपप्रकाशादेव—ख.

सिद्धेः। लिङ्गविधया व्यावृत्तिबोधस्तु कल्पितज्ञानत्वेनाप्युपपद्यत इति संविदात्मेति सिद्धम् ॥

---

## दीपनम्

इत्यर्थः। कल्पितेति। यद्यपि ज्ञानत्वं स्वरूपमेव तथापि कल्पितभेदेनैव तस्य धर्मत्वव्यवहार इति तथोक्तमिति द्रष्टव्यम् ॥

---

## पूरणी

जीवस्य व्यवहारासाधारणहेतुत्वात्, जीवात्मवत्। आद्यविशेषणं वृत्तौ व्यभिचारवारणाय, असाधारणपदं च कालेश्वरादौ। न चाप्रयोजकत्वम्। संविद आत्मधर्मत्वे सा पदार्थान्तरं स्यात् गुणो वा। नाद्यः; परैरपि तथानभ्युपगमात् कल्पनागौरवाच्च। न द्वितीयः; वृत्त्यतिरिक्तस्वप्रकाशैकसंविदो गुणत्वे मानाभावात्। एकेन्द्रियग्राह्यजातिमत्त्वादिघटितहेतूनां तत्रासिद्धेः। अतः परिशेषात्संविदात्मैवेति सारम्।

वस्तुतस्तु कूटस्थताश्रुतिविरोधान्नात्मनो वास्तवगुणवत्त्वम्; तथा सति घटादिवत्परिणामितया कूटस्थत्वानुपपत्तेः। ननु तद्गुणानामुत्पत्तिविनाशवत्त्वेऽप्यात्मनस्तदभावात्कथं कौटस्थ्यभङ्गः; अन्यथा त्वन्मतेऽपि प्रपञ्चोपादानस्य ब्रह्मणः प्रपञ्चात्मनोत्पत्तिविनाशवत्तया तद्भङ्गापत्तिरिति चेत्, सर्वदा असतः कार्यस्योत्पत्त्ययोगेन कारणात्मना सतः साऽभ्युपगन्तव्या। तथा च कारणमेव सहकारिवशात्तत्तत्कार्यभावमापद्यत इति कार्योत्पत्तिविनाशावपि कारणपर्यवसन्नावित्यात्मनो वास्तवगुणवत्त्वे कौटस्थ्यभङ्गः स्यादेव। कथंचिदपि वास्तवोत्पादविनाशशून्यत्वस्य तदर्थत्वात्। अन्यथा आकाशादिसाधारण्येन कूटस्थत्वस्याविशेषकतया तद्विशेषणत्वस्य निष्प्रयोजनत्वापत्तेः। ब्रह्मणस्तु प्रपञ्चभावमापद्यमानाविद्याधिष्ठानत्वमात्रेण प्रपञ्चभवनाद्यु-

## आत्मनोऽसङ्गत्वम्

**स चासङ्गस्वभावो निरवयवत्वात्। "असङ्गो ह्ययं**

### दीपनम्

इदानीं कर्तृत्वादेर्मिथ्यात्वमन्तरेण ज्ञाननिवर्त्यत्वासंभवात्सति च तस्मिन्ब्रह्माभेदलक्षणमुक्त्ययोगात्तन्मिथ्यात्वं वक्तव्यमिति कर्तृत्वादिकमनिर्वचनीयं, स्वाधिकरणताऽयोग्यवृत्तित्वात्, स्फटिकलौहित्यवत्। न च दृष्टान्तासिद्धिः; अन्यथाख्यातिनिरासेन [1]शुक्तिरूप्यस्यानिर्वचनीयविषयताया: साधितत्वात्।* न च स्फटिकलौहित्यधीर्न भ्रमः; जपाकुसुमादिनिष्ठलौहित्यस्य स्फाटिके परम्परासंबन्धस्यैव प्रतीतिविषयत्वात्, तस्य च सत्त्वादिति वाच्यम्; तत्सन्निहिते कुड्यादावपि रक्तं कुड्यमिति धीप्रसङ्गात्। न च तस्यास्वच्छतया परम्परासंबन्धोऽपि हीयते। [2]भ्रमे तु स्वाच्छ्यं दोषतयोपयुज्यते। किं चैवं रक्तः स्फटिक इति ज्ञानमात्रस्य भ्रमत्वाभिमानः सार्वजनीनो बाध्येत। अतस्तत्रारोपितमेव रूपमिति न दृष्टान्तासिद्धिरित्यभिप्रेत्य पक्षे हेतुसिद्ध्यर्थमाह—**स चेति**। कर्तृत्वादिनिमित्तसंयोगशून्य इत्यर्थः। **निरवयवत्वादिति**। [3]निरंशत्वादित्यर्थः।

### पूरणी

क्तिरिति नास्मन्मते तद्व्याहतिः। धर्मिसमानसत्ताकान्यथा [4]भावस्याकौटस्थ्यहेतुत्वादिति दिक्।

**सति चेति**। आत्मसाक्षात्कारानन्तरमपि कर्तृत्वादौ विद्यमान इत्यर्थः। परमार्थसतीति वा। **कर्तृत्वादिकमिति**। अनिर्वचनीयत्वं बाध्यत्वम्। ज्ञाननिवर्त्यत्वमिति यावत्। अतो न हेतुसाध्ययोरविशेषः। ननु तवापि सन्निहितकुड्यादौ रक्तभ्रमः किं न स्यादित्यत्राह—**भ्रमे त्विति**।

[1] भ्रमस्या—ख. [2] भ्रमे हि—च. [3] अनंशा—ख. [4] भावस्य कौट—ट.

**पुरुषः, "असङ्गो न हि सज्जते" इति श्रुतेः। नापि कर्ता भोक्ता वा; ज्ञानानाश्रयत्वात्, घटादिवत्। न च ज्ञानान्यत्व-**

## दीपनम्

एवं च स्वारम्भकावयवशून्यत्वलक्षणनिरवयवत्वस्य ब्रह्मविवर्ते देहादावपि सत्त्वाद्व्यभिचार इति दूषणं निरवकाशम्, तत्रापि सांशतायाः सत्त्वात्। आकाशादिकं चात्रोदाहरणम्। निरवयवसंयोगस्य पाङ्क्तिरस्तत्वात् न दृष्टान्ते साध्यवैकल्यम्। एवं च निमित्तसंयोगशून्यतया चिदात्मा कर्तृत्वाद्यधिकरणतायोग्यो न भवतीत्यर्थः। हेत्वन्तरेणाप्यात्मनोऽकर्तृत्वादिकं साधयति—**नापीति**। **ज्ञानेति**। स्वसमानसत्ताक[1]ज्ञानानाश्रयत्वादिति नासिद्धिः। अन्तःकरणे तु निषेध्यप्रसिद्धिः।

## पूरणी

**स्वारम्भकेति**। स्वारम्भकविनाशभूतावयवशून्यतालक्षणेत्यर्थः। यथाश्रुते अवयवशब्दस्योपादानार्थत्वेन ब्रह्माविद्ययोरपि देहाद्यवयवतयोक्तदोषाप्रसङ्गादिति ध्येयम्। **निरवयवेति**। यद्यप्याकाशादेः संयोगित्वेऽपि तत्संयोगयात्मकर्तृत्वाद्यनिमित्तत्वान्न तत्र साध्यवैकल्यशङ्का, तथापि तस्य दूरोत्सारितत्वसूचनार्थमेवमुक्तम्। **एवं चेति**। आत्मा कर्तृत्वाद्यधिकरणत्वायोग्यः, तन्निमित्तसंयोगशून्यत्वादित्यनुमानमिति भावः। **हेत्वन्तरेणेति**। स्वाधिकरणत्वायोग्याधिकरणकत्वरूपपूर्वोपन्यस्तानिर्वचनीयत्वसाध्यहेतु—मेव विधान्तरेण दर्शयतीत्यर्थः। **अकर्तृत्वादिकं** कर्तृत्वाद्यधिकरणत्वायोग्यत्वम्। कल्पितजन्यज्ञानाश्रयत्वेनासिद्धिवारणायाह—**स्वसमानेति**। **अन्तःकरणे त्विति**। स्वपदं प्रकृतपरम्। स्वसमान-

---

[1] ज्ञानाश्रयताशून्यत्वात्—ख.

मुपाधिः; ज्ञाने साध्याव्यापकत्वात्। निरवयवतया मनस्संयोगाद्यनाश्रये तस्मिन् कर्तृत्वाद्यसंभवाच्च। कथं तर्हि करोमि भुञ्ज इति प्रतीतिः। न च बुद्धिनिष्ठा सेति वाच्यम्; चैतन्यसंबन्धप्रतीतेः। आत्मनः संसाराभावे तन्निवृत्तये

दीपनम्

न चाप्रयोजकत्वम्; चिकीर्षाकृत्योः स्वसमानाधिकरणज्ञानपूर्वत्वेन तदनाश्रये तदयोगादिति [1]पूर्वानुमानसिद्धमप्येतदनुमानप्राबल्यार्थमाह—**निरवयवेति**। स एव सांख्यमतमाशङ्कय निराकरोति—**नच बुद्धीति**। बुद्धिमात्रनिष्ठेत्यर्थः। परिणामलक्षणभोगोऽपि तन्मते बुद्धिधर्म एवेति भावः। चिद्रूपोऽप्यात्मा अहमनुभवे प्रकाशत इति वक्तव्यम्। तदन्यस्यात्मनि प्रमाणस्याभावात्। अहं[2]प्रत्ययविषयस्यानात्मत्वनियमाच्च। स चाहंकरोमि भुञ्ज इति कर्तृत्वादियुक्त एवानुभूयत इत्यात्मैव कर्तेत्याह—**चैतन्येति**। न चात्मनोऽहंकाराविवेकात्तथा व्यवहार इति वाच्यम्; विशिष्टव्यवहारस्य तज्ज्ञानं विना अयोगात्।

पूरणी

सत्ताकज्ञानाश्रयो यदन्तःकरणं तद्भिन्नत्वं हेतुरित्यर्थः। **पूर्वानुमानेति**। तत्र हेतुतया निर्दिष्टमत्र विपक्षे बाधकत्वेनोपन्यस्यतीत्यर्थः। बुद्धिशब्दाभिधेयाहंकारनिष्ठत्वमस्मन्मतेऽप्यस्तीति तद्व्यावृत्त्यर्थमाह—**बुद्धिमात्रेति**। ननु बुद्धिः कर्त्री पुरुषो भोक्तेति तैरभ्युपगमान्न भोक्तृत्वं बुद्धिधर्म इत्यत्राह—**परिणामेति**। द्रष्टृत्वलक्षणभोगस्य पुरुषधर्मत्वेऽपि सुखदुःखपरिणामात्मको भोगो बुद्धिधर्म एवेत्यर्थः। ननु सिद्धान्तेऽप्यन्तःकरणस्यैव श्रवणादिकर्तृत्वम्। तच्चात्मन्यारोप्यत इत्यभ्युपगमेनोक्तदोषात्तस्य स्वतः प्रवृत्तिः कथं स्यादित्यत आह—

[1] आद्यानुमान—क. ख. [2] प्रत्ययाविषय—च.

**श्रवणादिप्रवृत्त्यनुपपत्तेः । न च बुद्धिनिष्ठमेव कर्तृत्वमनुभूय स्वस्मिन्नारोपयतीति वाच्यम्; धर्मिद्वयाप्रतीतेरिति । मैवम्; अहमित्यनुभवस्यैव धर्मिद्वयविषयत्वात् ।**

---

दीपनम्

कर्तृत्वादेश्चैतन्यसंबन्धमन्तरेणापरोक्षत्वायोगाच्चेति भावः । **प्रवृत्त्यनुपपत्तेरिति** । नच बुद्धिरेव कर्त्री, श्रवणादेरिति वाच्यम्; जडस्य स्वातन्त्र्येण प्रवृत्त्यसंभवात् तस्याः प्रयोजनाभावाच्च । न हि स्वनाशायैव स्वयं यतते । पुमांश्चाधेयातिशय एवेति भावः । सिद्धान्तिमतमप्याशङ्क्य निराकरोति—**न चेति** । बुद्धिरन्तःकरणं, तथा च नोक्तदूषणद्वयमपीति भावः । **धर्मिद्वयेति** । अहमित्येकरूप एव कर्ता प्रतीयते । नहि स्फटिककुसुमे इव बुद्धितदतिरिक्तात्मानौ पृथक् प्रतीयेते इति नानुभूयमानारोपोऽयम् । किं त्वात्ममात्रविषयकप्रमेत्यर्थः । सत्यमहमिति प्रकाशमान आत्मनि कर्तृत्वादिरस्त्येव । स त्वहङ्काररूपेदमंशसंभिन्नस्यैव चिदात्मनः न तु केवलस्य; शास्त्रैकसमधिगम्ये तस्मिन् कदाचिदपि तदप्रतीतेः । कर्तुरहंपदार्थस्येदमनिदंरूपत्वादित्यभिप्रेत्याह—**मैवमिति** ।

---

पूरणी

**पुमांश्चेति** । सिद्धान्ते पुरुषः स्वस्मिन्नारोपितकर्तृत्वादिनिवृत्तये स्वयमन्तःकरणं श्रवणादौ प्रवर्तयतीति युक्तमन्तःकरणस्य स्वनाशार्थमप्यन्याधीनं प्रवर्तनं भृत्यस्य राजाधीनयुद्धादिप्रवृत्तिवत् । परमते तु पुंसः कर्तृत्वाद्यारोपाभावेन तन्निवृत्तिलक्षणज्ञानसाध्यातिशयस्याप्यभावेन प्रयोजनाभावात्केवलं परनाशाय तत्प्रवर्तकत्वं नोपपद्यत इति भावः । **उक्तदूषणेति** । चैतन्यसंबन्धप्रतीतिप्रवृत्त्यनुपपत्तिरूपद्वयमित्यर्थः ।

## अहमनुभवस्य चिदचिद्विषयत्वनिरूपणम्

**अस्ति तावदहमनुभवगोचरे दुःखित्वम्, अस्ति च तत्काले तस्मिन्परमप्रेमास्पदत्वम्। अन्यथा तदानीं दुःखे**

---

दीपनम्

आत्मानात्मधर्मद्वयदर्शनेन चाहंपदार्थस्य द्विरूपत्वं दर्शयति— **अस्ति तावदिति**। अहं दुःखीत्यबाधितानुभवादित्यर्थः। परमप्रेमास्पदत्वमनुपाधिप्रेमगोचरत्वम्। एतदेव व्यतिरेकमुखेन द्रढयति— **अन्यथेति**। **दुःखे** दुःखमात्रे। दुःखजनकस्याहिकण्टकादेः स्वरूपेण द्वेष्यत्वं दृष्टम्। एवमहंपदार्थस्यापि स्यान्न तु तद्धर्मदुःखमात्रस्य। अतः प्रेमगोचरत्वादेव न तदा तस्मिन् द्वेष इत्यवश्यं तदानीमपि तस्मिन्प्रेमास्पदत्वमित्यर्थः। किं च पुत्रादौ प्रेमगोचरे तद्दुःखे द्वेषः, तदगोचरे तु न तत्र द्वेष इत्यन्वयव्यतिरेकसिद्धं धर्मिणः प्रेमगोचरत्वं दुःखस्य द्वेष्यत्वनिमित्तमित्यात्मनः प्रेमगोचरत्वं तदानीमपि वक्तव्यम्। तच्चात्मनो न सुखसाधनत्वेन, दुःखसाधनत्वस्यापि सत्त्वेन परमप्रेमा-

---

पूरणी

**अनुपाधीति**। ननु प्रेम रागः, स चेच्छाविशेषोऽन्तःकरणपरिणामरूपः। तथा च दुःखलक्षणान्तःकरणपरिणामदशायां कथं प्रेमगोचरत्वम्, युगपदेकस्य मूर्तस्य परिणामद्वयविरोधादिति चेन्न; सजातीयपरिणामद्वयस्यैवैकदा विरोधात् विजातीयरागदुःखपरिणामद्वयोपपत्तेः। ननु सुखाकारावभासस्य प्रेमहेतुत्वाद्दुःखदशायां चात्मनः सुखाकारेणानवभासात्कथं तदा तत्प्रेमेति चेन्न; वस्तुतो दुःखविरोधिसुखस्वरूपमात्रावभासस्यैव तद्धेतुत्वात्। तत्स्वरूपं च चैतन्यं सर्वदा प्रकाशत इति तत्र प्रेमोपपत्तिरिति दिक्। यद्वा दुःखदशायां प्रेमास्पदत्वं तद्योग्यत्वम्, तच्च दुःखजनकत्वेन प्रतिसन्धीयमानेऽपि द्वेषशून्यत्व-

**द्वेषासंभवात्। उदासीनदुःखे तददर्शनात्। न च दुःखं**

---

## दीपनम्

स्पदत्ववत् परमद्वेषविषयत्वस्यापि प्रसङ्गात्। भाविसुखसाधनत्वप्रतिसन्धानमन्तरेणाप्यात्मनि प्रेमदर्शनात् सुखरूपत्वप्रयुक्तमेवैतदिति सुखरूप आत्मा तावदहमनुभवे प्रकाशत इत्यभिप्रेत्याह—**उदासीनेति**। ततः किमित्यत आह—**न चेति**। ननु मा भूत्परमते दुःखं केवलसुखस्य, सिद्धान्ते तु सुखरूपे तस्मिन् दुःखस्यारोपो न विरुद्ध इति

---

## पूरणी

मिति यावत्। तच्चात्मनः प्रेमास्पदतायोग्यतानिरूपकसुखरूपतां विना न संभवतीति भावः। **परमद्वेषेति**। न चात्मनोऽनुच्छेद्यत्वान्न तत्र द्वेषः, चिकीर्षायाः कृतिसाध्यविषयत्ववत् द्वेषस्याप्युच्छेद्यविषयत्वनियमादिति वाच्यम्; अत्यन्तानुच्छेद्यतया निश्चितेऽपि शत्रौ द्वेषदर्शनेन तथा नियमासिद्धेः। ननु महाव्याधिग्रस्तानामात्मनाशार्थमपि प्रवृत्तिदर्शनात्तत्र द्वेषोऽस्तीति चेन्न; तत्रापि परमप्रेमास्पदात्मनि दुःखासहिष्णुतया तत्तादात्म्यापन्नदेहनाशार्थमेव प्रवर्तनादित्यलमनेन। न चैवमात्मनः सुखरूपत्वे जन्ययोरेव सुखदुःखयोर्विरोधदर्शनान्नित्यसुखस्य जन्यदुःखसंबन्धो न विरुद्ध इति तस्य कल्पितत्वं न सिद्ध्येदिति वाच्यम्; लाघवेन सुखदुःखस्वरूपप्रयुक्तत्वाद्विरोधस्य विरुद्धयोः सामानाधिकरण्यवदाधाराधेयभावस्याप्युपपत्तेश्चेति दिक्। ननु द्वेष्यत्वे सुखासाधनत्वे सति दुःखसाधनत्वं प्रयोजकम्, बहुवित्तव्ययादिना दुःखसाधनेऽपि यागादौ द्वेषादर्शनादित्यात्मनि तदभावान्न द्वेषप्रसङ्ग इत्यपरितोषादाह—**भाविसुखेति**। **परमत इति**। तन्मते सुखस्य गुणत्वेन दुःखाश्रयत्वायोगादिति भावः। **दुःखस्येति**। समानसत्ताकयोरेव सुखदुःखयोर्विरोधेन मिथ्याभूतस्यापि दुःखस्य सुखरूपात्म-

केवलस्य सुखस्य [1]भवितुमर्हति । अन्तःकरणसमवेतज्ञाना-ज्जायमानं तत्तस्यैव धर्मः। न च तस्यानानन्दस्य परमप्रेमा-स्पदत्वमित्यानन्द आत्मा, अन्तःकरणं च कल्पिततादात्म्यादह-

दीपनम्

चेन्न; दुःखित्वभ्रमो ह्यन्तःकरणाद्युपाधिकृत एव, तदभावे सुषुप्तौ तदभावादनिष्टदर्शनकृतं च दुःखं तत्समानाधिकरणमेव वक्तव्यम्, तच्चान्तः[2]करणस्यैवेति [3]तदपि तस्य स्वाभाविको धर्म आत्मन्यारोप्यत इत्यन्तःकरणमप्यहमनुभवगोचर इत्याह—**अन्तःकरणेति** । फलित-माह—**न चेति**। **कल्पितेति** । स्फटिकजपाकुसुमवद्विभक्ततया[4] तयोरप्रतीतेर्जडाजडयोर्वास्तवतादात्म्यायोगाच्च कल्पितमेव तयोः शुक्तिरजतवत्तादात्म्यमित्यर्थः। किं च मामहं जानामीत्यहमर्थकर्म-कानुभवव्यवहारोऽनुभवसिद्धः; [5]स तु तद्गोचरप्रकाशसाध्यः। स च नाहंकारस्वरूपम्; जडस्य तदयोगात्। तस्य स्वप्रकाशत्वे नित्यत्वे च सुषुप्तौ चाहमिति भानमनुभवपराहतम्। अनित्यत्वे चावश्यक[6]सुषुप्तिप्रकाशादेव तद्व्यवहारोपपत्तेर्न तस्य स्वप्रकाशता

पूरणी

न्येवोत्पत्तिसंभवात्। न तस्यान्तः करणधर्मत्वमपि वाच्यमित्यर्थः। ननु सुषुप्तावनिष्टदर्शनादिहेतुविरहादेव तद्विरह इत्यनुशयादाह—**अनिष्टदर्शनेति**। समानाधिकरणत्वेन ज्ञानदुःखादेर्हेतुहेतुमद्भावावधारणात्। अन्यथातिप्रसङ्गादिति भावः। इदं चोपलक्षणम्—योऽहमद्राक्षं सोऽहं दुःखीति ज्ञानसमानाश्रयत्वेनानुभवाच्चेति द्रष्टव्यम्। चिदन्तःकरणयो-स्तादात्म्यसंबन्धे तस्य कल्पितत्वे च हेतुद्वयं दर्शयति—**स्फटिकेति**।

[1] संभवति—ग. छ. [2] करणमेवेति—क. ख. [3] इदमपि—च. [4] विविक्ततया—ख.
[5] स. च—च. [6] सौषुप्तिकप्र—ख.

## दीपनम्

कल्पिनीया। न च जड एवायमहंकारः स्वसमवेतज्ञानकर्मेति वाच्यम्; कर्तृकर्मणोरभेदायोगात्। परसमवेतक्रियाफलशालित्वस्य कर्मत्वव्यापकत्वेन तदभावे तदयोगात्। न चानुमेयवत्कर्मत्वमेव मास्त्विति वाच्यम्; विषयस्य प्रत्यक्षजनकत्वेन कारकविशेषरूपकर्मत्वस्य वक्तव्यत्वात्। न च विषयत्व इव कर्मत्वेऽपि कर्तृभेदोऽप्रयोजक इति वाच्यम्; स्वसमवेतक्रियाफलशालिनो देवदत्तस्याकर्मत्वेन तस्य तद्भेदनियमात्। किं च कर्म हीप्सिततमत्वात्प्रधानम्। कर्ता तु तन्निर्वर्तकतया गुणभूत इति नैकत्रैकनिरूपितयोः तयोः संभव इति कर्तुः कर्मान्यदेव। नच विषयज्ञानादेवात्मकर्मकव्यवहार इति वाच्यम्; संविदन्यव्यवहारस्य स्वगोचरज्ञानसाध्यत्वात्। ततो ज्ञानविषयादहंकारादन्य एव

---

## पूरणी

कर्मत्वमपि न संभवतीत्याह--**परसमवेतेति**। इष्टापत्तिमाशङ्क्य निषेधति—**न चानुमेयेति**। नन्वात्मनः स्वकर्तृकस्व(स्वा)नुमितिविषयत्वात्कर्मत्वमपि स्यादित्याशङ्क्य निषेधति—**न च विषयत्व इति**। **स्वसमवेतेति**। देवदत्तो ग्रामं गच्छतीत्यादौ देवदत्तकर्तृकगमिक्रियाफलभूतसंयोगभागिनो देवदत्तस्य तत्क्रियाकर्मत्वादर्शनादित्यर्थः। न केवलमदर्शनमात्रात्तद्भेदः, किं तु विरोधादपीत्याह—**किं चेति**। गुरुमतमाशङ्क्याह—**न च विषयेति**। **ततो ज्ञानविषयादिति**। ननु मामहं जानामीति संवलितस्यैव कर्मकर्तृत्वानुभवात्त्वत्पक्षेऽपि विरोधस्तुल्य इति चेन्न; उभयोरहंपदार्थत्वेऽपि योग्यताबलादन्तःकरणस्य कर्मत्वं आत्मनस्तु ज्ञातृत्वं तदनुभवविषय इति न विरोधाव-

## दीपनम्

ज्ञाता। स च न तटस्थः; अहं जानामीति तदन्तर्भूतस्यैव तज्ज्ञातृत्वानुभवात्। अन्यथा घटादिवत्तस्य स्वज्ञातृत्वायोगात्। न चाहंकारस्य घटादाविव स्वस्मिन् [1] स्वव्यवहारोऽस्ति। चैतन्यसंबन्धस्तु घटादिसाधारणः। स्वरूपसंबन्धविशेषस्तु नेत्युक्तम्। तस्य स्वविषयतासाधारण्याच्च न द्रष्टृताप्रयोजकता। तस्य च

## पूरणी

काश इति भावः। **न तटस्थः** नाहमनुभवेऽप्रकाशमान इत्यर्थः। **तदन्तर्भूतस्य** अहमनुभवे प्रकाशमानस्यात्मनः। केवलान्तःकरणस्य स्वज्ञातृत्वासंभवं विधान्तरेणापि दर्शयति—**अन्यथेति**। आत्मनोऽहमनुभवे प्रकाशमानत्वाभावे मामहं जानामीत्यहमर्थस्य ज्ञातृत्वानुभवविरोधः। जडस्य तदसंभवादित्यर्थः। यद्वा **तदन्तर्भूतस्य** अतिरिक्तात्मावच्छिन्नस्यैव। ननु केवलाहंकार एव ज्ञातास्त्वित्यत्राह—**अन्यथेति**। किं स्वाकारवृत्तिविशेषाश्रयत्वेन तस्य ज्ञातृत्वं, स्वज्ञानात्मकचैतन्यसंबन्धित्वेन वा। नाद्य इत्याह—**न चाहङ्कारस्येति**। न ह्यत्यन्तशिक्षितोऽपि नटपटुः स्वस्कन्धमारुह्य नृत्यतीति न्यायादिति भावः। द्वितीयं निरस्यति—**चैतन्येति**। ननु परस्परतादात्म्येनाध्यासलक्षणसंबन्धविशेषो घटादिव्यावृत्तोऽन्तःकरणेऽस्ति, घटादौ चैतन्यस्य तादात्म्येनानध्यासात्, अन्तःकरणे च तथा स्वीकारादित्यपरितोषादाह—**स्वविषयतेति**। चैतन्यतादात्म्यं तद्विषयताप्रयोजकं न द्रष्टृताव्यवहारोऽपीत्यर्थः। ननूक्तेतरेतरतादात्म्यं तद्व्यवहारेऽपि निमित्तमस्तु, अनतिप्रसङ्गादित्यनुशयादाह—**तस्य चेति**। आत्मनोऽहमनुभवे प्रकाशमानत्वाभावेऽहंपदार्थः सर्वथा भिन्नरूपो वाच्यः।

---

[1] स्वव्यापारोऽस्ति—च.

**मित्येकतया प्रतीयत इति मिथ्याविशिष्टात्मधर्म एव कर्तृत्वादिरिति नात्मनो वास्तवं कर्तृत्वं न वा तस्य मुक्तये प्रवृत्त्यनुपपत्तिः ।**

---

## दीपनम्

[1]नैकस्वभावत्वे अहं मुक्तः स्यामिति मुक्त्यर्थिप्रवृत्त्यनुपपत्तेश्च । तस्मादहंपदार्थ इदमनिदंरूप एवेत्यभिप्रेत्य तन्निरूपणफलमाह—**इति मिथ्येति** । कर्तृत्वमिति भोक्तृत्वस्याप्युपलक्षणम् । एवं सति सांख्यं प्रत्युक्तदूषणद्वयमप्यत्र नेत्याह—**न वेति** ।

---

## पूरणी

अहङ्कारस्य मुक्तिकालीनत्वाभावात् । तथाचाहं मुक्त इत्यहंपदार्थगतमुक्त्युद्देशेन प्रवृत्त्यनुपपत्तेः स्वनाशाय प्रवृत्त्यदर्शनाच्चेति भावः । **नैकस्वभावत्वे** भिन्नरूपत्वे । वस्तुतस्तु अहमिहैवास्मीत्यहंपदार्थस्य परिच्छिन्नत्वानुभवादिदमनिदं रूपत्वम् । न च केवलस्यात्मनः परिच्छिन्नत्वं संभवति; तस्य परमते सर्वगतत्वात् अस्मन्मतेऽप्यविद्याप्रतिबिम्बस्य तस्य बिम्बब्रह्मवद्व्यापकत्वात् । न च देहपरिमाणस्यात्मन्यारोपात्तत्प्रादेशिकत्वानुभव इति वाच्यम्; देहपरिमाणविशेषग्रहमन्तरेणापि निमीलितनयनादे[2]स्तदापरिच्छेदानुभवात् । न च तदाप्युपनीततत्परिमाणस्य तत्रारोप इति वाच्यम्; ज्ञानप्रत्यासत्तेर्निरासात् मनसः पृथक्प्रामाण्यनिषेधाच्च । किं च तदारोपस्य ज्ञानप्रत्यासत्तिजन्यत्वेनालौकिकत्वेऽहंपदार्थवदपरोक्षतया तत्परिच्छेदस्फुरणानुपपत्तिः । अलौकिकज्ञानविषयस्य परमाण्वादेस्तथा स्फुरणविरहादिति दिक् ।

---

[1] तदेक-क. ख.  [2] स्तथा-ख.

## पूरणी

ननु सिद्धान्तेऽहंकारतद्धर्मवद्देहतद्धर्माणामप्यात्मनि तादात्म्येनाध्यासात्तेषां साक्षिमात्रवेद्यत्वेन देहपरिमाणाद्या[1]कारेणैन्द्रियकवृत्तिं विनापि तदनुभवसंभवात् आत्मपरिच्छेदानुभवस्य तद्विषयत्वेनोपपत्तेर्नान्तःकरणस्याहमनुभवान्तर्भावः सिद्ध्यतीति चेन्न, अहंकारवद्देहस्याभेदेना[2]ध्यासविरहादन्यथा ममायं देह इति भेदानुभवानुपपत्तेः। देहस्वरूपमात्रस्य तादात्म्येनाध्यासेऽपि पृष्ठगतरूपपरिमाणादौ संशयदर्शनेन रूपपरिमाणादेस्तत्र तादात्म्येनानध्यासाच्च। अत एव देहस्य रूपस्वरूपेण प्रातीतिकत्वं रूपादिविशिष्टस्वरूपेणाप्रातीतिकत्वं च। अहङ्कारस्य तु कदापि भेदाननुभवात्तद्धर्मेषु संशयादर्शनाच्च तद्धर्मविशिष्टाहङ्कारस्याभेदेनाध्यासः। तस्माद्देहरूपपरिमाणादेर्घटादिवदैन्द्रियकवृत्तिद्वारकसाक्षिगम्यत्वात् आत्मपरिच्छेदानुभवस्य तत्परिमाणविषयत्वे निमीलितनयनादेस्तदानुभवाभावप्रसङ्गात् परिच्छिन्नान्तःकरणतादात्म्यादेव तथानुभव इति सिद्धमहमनुभवस्यान्तःकरणतादात्म्यापन्नालम्बनत्वम्।

## मनसोऽणुत्वनिराकरणम्

न च मनसोऽणुत्वात्तत्परिमाणस्य चाप्रत्यक्षत्वात्कथं तद्विशिष्टतया परिच्छेदानुभव इति वाच्यम्; मनसोऽणुत्वे पञ्चावधानादौ युगपन्नानाज्ञानानुदयप्रसङ्गात्। नचेष्टापत्तिः; शब्दादीन्युगपत्प्रत्येमीत्यनुभवस्य बाधकं विना प्रमाणत्वात्। द्वित्रिच्छिन्नगोधाशरीरादौ युगपच्चेष्टानुपपत्तेश्च। नच तत्र मनोऽन्तरकल्पना; मानाभावात्। न च व्यासङ्गानुपपत्त्या तदणुत्वसिद्धिः; अदृष्टविशेषादिप्रतिबन्धेन तदुपपत्तेः।

[1] आकारैन्द्रियकवृत्तिमन्तरेणापि—ञ्च. [2] अध्यासाभावादन्था—ञ्च.

## पूरणी

वर्णितरीत्या मनसः सुखाद्युपादानत्वेन तदणुत्वे तदप्रत्यक्षताप्रसङ्गाच्च। अणुगुणानामप्रत्यक्षत्वात्। नापि विभु, मानाभावात्। न च निस्पर्शद्रव्यत्वादिना विभुत्वानुमानम्; गगनादौ सर्वत्रोपलभ्यमानकार्यवत्त्वस्योपाधित्वात् विपक्षे बाधकाभावेनाप्रयोजकत्वाच्च। न च स्पर्श'वत्त्वस्य द्रव्यसमवायिकारणतावच्छेदकतया निस्पर्शस्य तदारभकत्वानुपपत्तिः; तथा नियमस्याप्यासिद्धेः। निस्पर्शगगनादेरप्यारम्भाभ्युपगमाच्चेति संक्षेपः; तस्मादन्तःकरणं मध्यमपरिमाणमेव। न चैवं सावयवत्वप्रसङ्गः; इष्टत्वात्। ब्रह्मविद्यादेरेव तदवयवत्वादिति तत्त्वम्।

## दुःखादीनां विशिष्टाश्रयत्वप्रतिपादनम्

नन्वहंपदार्थस्य चिदचित्संबलितत्वे कथं केवलान्तःकरणधर्माणां दुःखादीनां विशिष्टाश्रयत्वेनानुभवः। न च विशिष्टमेवोपादानं न तु केवलान्तःकरणमिति वाच्यम्; विशिष्टस्य विशेषणविशेष्यानतिरेकात्। अतिरिक्तत्वे च तस्य जडतया चेतनकार्यानुपपत्तेः। न च निमित्तसमवधानादिना अन्तःकरणात्मनोर्युगपदेव दुःखाद्युत्पत्तिरिति वाच्यम्; आत्मनः स्वातन्त्र्येण निमित्तसंयोगादिविरहात्। अन्तःकरणवतत्रापि दुःखादेः स्वाभाविकत्वापाताच्च। न चान्तःकरणधर्माणामात्मन्यारोपात्स इति वाच्यम्; न तावत्स्मर्यमाणारोपः; पूर्वाननुभूतदुःखादेरप्यारोपात्। नचानादौ संसारे तादृशदुःखविशेषस्य कस्मिंश्चित्पूर्वजन्मनि संभवेन पूर्वजन्मानुभूतस्यैवेदानीं स्मर्यमाणस्यारोप इति वाच्यम्; तथापीदानीमनिष्टदर्शनविशेषाज्जायमानान्तःकरणगतदुःखविशेषस्वरूपस्यैवारोप इति नियन्तुमशक्यत्वात्। [1]जीवादृष्ट-

[1] जीवनादृष्ट—ट

**न चैवं तस्य द्रष्टृत्वादिश्रुत्या कर्मकाण्डेन वा विरोधः ;**

---

## दीपनम्

**द्रष्टृत्वादिश्रुत्या।** "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति श्रुत्येत्यर्थः। **कर्मकाण्डेन वेति।** तत्र हि यजेतेत्याख्यातेन कर्तृव्यापाररूपभावनादेरभिधाना-

---

## पूरणी

स्यैव प्राग्भवीयसंस्कारोद्बोधकतया जन्मान्तरानुभूतस्य स्मरणानुपपत्तेश्च। नापि स्फटिके जपाकुसुमलौहित्यवदन्तःकरणधर्माणामनुभूयमानानामेवारोप इति वाच्यम् ; तथा सत्यन्तःकरणे दुःखाद्युत्पत्त्यनन्तरं तदनुभवे सति तदारोपो वाच्यः ; तथा च दुःखादेर्बहुकालत्वापत्तिः। अन्तःकरणात्मगतदुःखादेर्भेदानुभवप्रसङ्गाच्च। किञ्चान्तःकरणदुःखादेरात्मन्यारोपे आरोपितस्य शुक्तिरजतादेः स्वोचितकार्याकरत्वादात्मनि दुःखादिप्रयुक्तव्यावहारिकोद्वेगादिकं न स्यात्। तथा च तन्निवृत्तये श्रवणादौ प्रवृत्तिरपि न स्यादिति चेन्न ; अन्तःकरणधर्माणामनुभूयमानानामेवारोपात्। न च दुःखादेर्बहुकालत्वापातः ; तेषां साक्षिमात्रवेद्यत्वेन स्वोत्पत्तिदशायामेवानुभवे सति तदारोपेण तदसंभवात् न च भेदानुभवप्रसङ्गः ; अयःपिण्डवद्धर्मिणोरभेदाध्यासेन तत्संभवात्। न चारोपितस्य स्वोचितकार्यकरत्वासंभवः ; स्वप्नकल्पितस्त्रीसंभोगादेर्व्यावहारिकसुखादिजनकत्वदर्शनात् ॥

अथवा दुःखादिविशिष्टाहङ्कारस्यैवात्मन्यभेदेनाध्यासाद्दुःखादेः पृथगात्मन्यध्यासमन्तरापि विशिष्टाश्रयत्वानुभवः अयोभिन्नतयानुभूयमानायःपिण्डे अयो दहतीति दाहकत्वानुभववत्। न चैवं दुःखादेरात्मन्यसत्त्वे कथं तन्निवृत्तये प्रवृत्तिरिति वाच्यम् ; दुःखधर्म्यभेदनाशायैव तत्संभवादिति सर्वं सुस्थम् ॥

द्रष्टृत्वादिश्रुतेरुक्तकर्तृत्वाद्यनुवादकत्वात् । न हि प्रत्यक्षसिद्ध-

दीपनम्

त्कर्ताऽऽक्षिप्यते । स्वर्गकामादिपदैश्च भोक्ता प्रतिपाद्यत इति तेन विरोध इत्यर्थः । द्रष्टृत्वादीति । "एष हि द्रष्टा" इत्यादिश्रुतिः साक्षिसिद्धकर्तृत्वादिविशिष्टं विज्ञानात्मस्वरूपमनुवदति न तु प्रतिपादयतीत्यर्थः । नन्वनुवादस्यापि स्वार्थे तात्पर्यं किं न स्यात्तत्राह—न हीति । फलवद्धि श्रुत्या प्रतिपादनीयम्, न चैवमत्र, तत्प्रतिपादने प्रयोजनाभावात् कर्तृत्वादिज्ञानाधीनप्रयोजनस्य प्रत्यक्षादेवोपपत्तेः । किं च तस्मिन्नर्थे श्रुतेस्तात्पर्यं (न) कल्पनीयम्? यस्य येन मानाभावप्रयुक्तासत्त्वशङ्का न निवर्तते । अन्यथा वायुक्षेपिष्ठत्वादेरपि श्रुत्यर्थत्वप्रसङ्गः । कर्तृत्वादेश्चासत्त्वशङ्का प्रत्यक्षत एव व्यावृत्तेत्यतोऽज्ञातं फलवच्च श्रुत्यर्थ इति न कर्तृत्वादिस्तथा । अपि च

"विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य स सर्वतः सर्वमेवाविवेश" ॥

इति वाक्यशेषेण विज्ञानात्मनो लयप्रतिपादनपूर्वकं तदधिष्ठानाक्षरवेदनस्यैव सर्वात्मभावफलप्रतिपादनान्न कर्तृत्वादि श्रुतेर्विवक्षितोऽर्थ इति

पूरणी

ननु स्वस्य पाककर्तृत्वादिज्ञाने पाकान्तरेऽपि यतत इत्यस्ति प्रवृत्त्यादिरूपं तज्ज्ञानस्य प्रयोजनमित्यत्राह—कर्तृत्वादीति । ज्ञातत्वादपि न तच्छ्रुतिप्रमेयमित्याह—किं चेति । विज्ञानात्मेति । यत्राक्षरे ब्रह्माणि विज्ञानात्मादयः सम्प्रतिष्ठन्ति विलीयन्ते तदक्षरं ब्रह्म यो वेद स ब्रह्मभावापत्त्या सर्वात्मको भवतीति श्रुत्यर्थः । कर्तृत्वादीति । अन्यथा कर्तृत्वादेः श्रुतिप्रमेयत्वेन सत्यत्वे तद्विशिष्ट-

**मपि श्रुत्या प्रतिपादनीयम् । "तत्केन कं पश्येत्" इति विरोधाच्च । अत एव न कर्मकाण्डस्यापि तत्र तात्पर्यम् । किं त्वन्यतोऽनवगतसाधनत्वादिमात्रे । कर्तृत्वादेर्वस्तुत्वे मुक्त्यसंभवाच्च । लोके सत्यस्य ज्ञानान्निवृत्त्यदर्शनात् ।**

## दीपनम्

भावः । मुक्तिदशायां तन्निषेधाच्च न तदात्मनः स्वाभाविकमित्याह—**तत्केनेति** । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति श्रुतिविरोधादित्यर्थः । **साधनत्वादि** श्रेयस्साधनत्वादि । यद्यपि कर्तुरिष्टाभ्युपायं[1] बोधयति विधिः, तथापि कर्तृत्वाद्यंशे सोऽनुवाद इत्यर्थः । किं च कर्तृत्वादेर्मुक्तावपि सत्त्वे संसारादविशेषः । तद्वा तदभावश्च न तावत्कर्मणा, तस्य शुद्धविविदिषामात्रहेतुत्वात्, मुक्तेश्च ज्ञानैकसाध्यत्वात्, ज्ञानं च न सत्यनिवर्तकमित्यभिप्रेत्याह—**लोक इति** । लोके हि घटादिज्ञानं तदुपादानज्ञानं वा न घटादि[2] निवर्तयति इति

## पूरणी

विज्ञानात्मनो लयप्रतिपादनेन विरोधाद्वाक्यभेदापत्तेश्चेति भावः । **कर्तृत्वाद्यंश इति** । तथा च मिथ्याभूतकर्तृत्वादिमानेव यागादौ श्रवणादौ चाधिकारीति भावः । ननु मिथ्याभूतकर्तृजन्यत्वे मोक्षस्य स्वर्गवन्मिथ्यात्वं स्यादिति चेन्न; मोक्षस्य तज्जन्यत्वाभावात् । नन्वेवं ज्ञानवैयर्थ्यम्, न चाविद्यानिवृत्त्यर्थं तदिति वाच्यम् ; तस्यापारमार्थिकत्वादिति चेन्न ; आनन्दस्वरूपस्याप्यविद्यावृतत्वेनाप्रकाशमानतया तदावरणनिवृत्त्यर्थं ज्ञानानुसरणात् प्रकाशमानानन्दस्यैव पुरुषार्थत्वादिति दिक् ।

---

[1] भ्युपेयं—क. [2] टादीन्—ख.

**शुक्तिरजतादिकं च ज्ञानान्निवर्तते । सिद्धान्ते घटादिकं च तदुपादानाज्ञाननिवर्तकज्ञानाभावान्न निवर्तते ।**

---

## दीपनम्

मिथ्यात्वज्ञाननिवर्त्त्यत्वयोर्व्यतिरेकं दर्शयित्वान्वयमप्याह—**शुक्तीति** । **ज्ञानात्** शुक्त्यादिज्ञानात् । नन्वेवं सिद्धान्तेऽपि तन्त्वादिज्ञानात्पटादिः किमिति न निवर्तेतेति चेत्तत्राह—**सिद्धान्त इति** । यज्ज्ञानं यदुपादानाज्ञानं निवर्तयति तत्तन्निवर्तकम् । मृदादिज्ञानं च न घटोपादानमज्ञानं निवर्तयतीति न तत्तन्निवर्तकमित्यर्थः । ननु नायमस्ति नियमः, रज्ज्वामध्यस्तस्य सर्पस्य तत्र दण्डादिभ्रमान्निवृत्तिदर्शनात् । तस्यात्यन्तिकी निवृत्तिर्नेति चेत्तद्वदेव घटादेरप्यनात्यन्तिकी निवृत्तिः किं न स्यात् । ततश्च मिथ्यात्वेऽपि निवर्त्त्यस्य स्वरूपविशेषो वक्तव्यः[1] । स च [2]सत्यत्वेऽपि किं न स्यादिति चेन्न; रज्जुसर्पादिर्हि न भ्रमान्तरेण निवर्तते । अपि तु विवेकाग्रहधर्मिज्ञानादिकारणविनाशेन । अन्यथान्यत्र घटादिज्ञानदशायां तन्न नश्येत् । घटादिकं तु कल्पितमपि स्वाज्ञानदशायां विद्यत इति नैवम् । अतो ज्ञानमविद्यानिवृत्तिद्वारैव तदन्यन्निवर्तयतीति नोक्तनियमभङ्गः । ज्ञानं च वक्ष्यमाणमेवेति न ज्ञानस्य

---

## पूरणी

**मिथ्यात्वेति** । सत्यत्वेनाभिमतघटादेर्मिथ्यात्वं विना मृदादिज्ञाननिवर्त्त्यत्वाभावादित्यर्थः । **स्वरूपविशेष इति** । प्रातिभासिकत्वलक्षण इत्यर्थः । **विवेकाग्रहेति** । रज्जौ दण्डभ्रमदशायां सर्पभेदाग्रहादिसहकारिविरहादित्यर्थः । **घटादिकं त्विति** । आगन्तुकभेदाग्रहदोषाद्यजन्यस्य घटादेरज्ञानदशायां नाशहेत्वभावात्पाकाद्यर्थक्रियानुपपत्तेश्च तत्कल्पनानुपपत्तेरिति भावः । ननु घटादिध्वंसजनके प्रतियोगिप्रत्यक्षे व्यभिचार इत्यत आह—**ज्ञानं चेति** । वृत्त्युपहितस्वरूपज्ञानेऽविद्या-

---

[1] योऽपि वक्तव्यः—च. [2] सत्त्वेऽपि—च.

**नच सुहृज्ज्ञानाद्दुःखं पुण्यवस्तुज्ञानात्पापं च निवर्तेत इति वाच्यम्; सुहृज्ज्ञानस्य सुखद्वारा दुःखोत्पत्तिप्रतिबन्धकमात्रत्वात्।**

## दीपनम्

घटादिध्वंसजनकत्वेऽपि विरोधः। एतेन यथा दण्डादिभ्रमो विरोधिविषयतया सर्पादिकं निवर्तयति, एवं कर्तृत्वाद्यभावविशिष्टात्मज्ञानमपि सत्यमेव निवर्तयत्विति [1]प्रत्युक्तम्। तन्मिथ्यात्वमन्तरेण तन्निवृत्तेः पूर्वं तदाश्रयस्य तदभावविशिष्टसाक्षात्कारासंभवाच्च। परोक्षज्ञानस्य च निवर्तकत्वेऽतिप्रसङ्गादिति [2]। **न चेति**। दुःखहेत्व[3]ज्ञानानिवर्तकादपीत्यर्थः। दुःखे ज्ञाननिवर्त्यत्वमेव नेत्याह—**प्रतिबन्धकेति**। नच दुःखादिकं स्वविषयज्ञानादपि निवर्तेत इति वाच्यम्; तथा सति तस्य क्षणिकत्वप्रसङ्गात्। तदुत्पत्तिकालेऽपि साक्षिरूपस्य तज्ज्ञानस्य सत्त्वात्। अतस्तत्कारणनाशत्तन्नाश इति। यद्यपि पापस्यापि सत्यत्व-

## पूरणी

निवर्तकेऽयं नियमः। घटादिध्वंसे घटादिवृत्तेरेव जनकत्वान्न व्यभिचार इति भावः। **एतेनेति**। दण्डादिभ्रमस्य तन्निवर्तकत्वाभावेनेत्यर्थः। विरोधिविषयतयेत्यनन्तरमुपादानाज्ञाननिवृत्तिमन्तरापीति शेषः। तथा चाज्ञाननिवृत्तेः कार्यस्य ज्ञाननिवर्त्यतायामप्रयोजकत्वे सत्यस्यापि कर्तृत्वादेस्तथात्वलाभ इति भावः। विरोधश्च दण्डसर्पयोस्तादात्म्येनानवस्थानलक्षणो द्रष्टव्यः। ननु सिद्धान्ते दुःखादेर्मिथ्यात्वेन सुहृदादिज्ञानादेस्तन्निवर्तकत्वेऽपि न नियमविरोध इत्यत्राह—**दुःखहेत्विति**। ज्ञानमविद्यानिवृत्तिद्वारैवेत्युक्तनियमस्य व्यभिचार इति भावः। **दुःखे ज्ञानेति**। यद्यपि शुक्तिज्ञानादेरपि रजतनिवर्तकत्वं तदुत्पत्तिप्रतिबन्धत्वं,

---

[1] निरस्तम्—ख. च. [2] प्रसङ्गः स्यादिति—ख. [3] अज्ञाननिवर्तकादपि—क.

**पापादिकं च ज्ञानमात्रान्न निवर्तते, श्रद्धानियमादेरप्यपेक्षितत्वात्। ब्रह्मज्ञानं तु नान्यदपेक्षते, "नान्यः पन्था" इति श्रुतेः।**

दीपनम्

मसम्प्रतिपन्नमेव, सत उत्पत्तिविनाशयोरयोगात्, तथाप्यभ्युपेत्याप्याह—**पापादिकमिति। नियमः** ब्रह्मचर्यादिनियमः। निवर्त्यातिरिक्तानपेक्षज्ञाननिवर्त्यं मिथ्येति नियमः। पापादिकं च न तथा, श्रद्धादेरीश्वरप्रसादादेश्च साधारणहेतोरपेक्षितत्वेन व्यभिचारादित्यर्थः[1]। ननु ब्रह्मज्ञानमपि नैतादृशम्; तत्रापि श्रवणादिनियमस्येश्वरप्रसादादेश्चापेक्षितत्वादिति, तत्राह—**ब्रह्मेति।** श्रवणादिनियमो ज्ञान एव हेतुः; ज्ञानोद्देशेनैव तद्विधानात्। आचार्येश्वरप्रसादोऽपि तत्रैव हेतुः,

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिताः ह्यर्थाः प्रकाशन्ते महात्मनः॥

तपःप्रभावाद्देवप्रसादाद्ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्" इत्यादिश्रुतिभिस्तथैव दर्शितत्वात्। ननु कालादिः सर्वकार्यहेतुरिति चेत्सत्यम्,

पूरणी

न तु तन्नाशकत्वम्; उत्पन्नरजतस्य तत्कारणभेदाग्रहादिविरहादेव नाशात्। तच्च सुहृज्ज्ञानेऽप्यस्तीति व्यभिचार एव। तथापि शुक्तिज्ञानं नियमेन रजतोत्पत्तिप्रतिबन्धकम्, सुहृज्ज्ञानं तु नैवम्; दुःखसामग्रीप्राबल्येन तस्मिन्सत्यपि दुःखोत्पादनात्। यद्वा सुहृज्ज्ञानजनितसुखमेव विरोधितया दुःखोत्पत्तिप्रतिबन्धकं न तु तज्ज्ञानम्, तदिदमुक्तं सुखद्वारेति भावः। **अभ्युपेत्यापीति।** इदं चोपलक्षणम्—स्वोक्त[2]नियमव्यभिचारनिरासार्थमपि पापस्य ज्ञानैकनिवर्त्यत्वनिरसनमिति मन्तव्यम्। नन्वेवमपि पूर्वोक्तनियमस्य व्यभिचारः; सेतुदर्शनादेस्तन्मूलाज्ञाननिवर्तकाभावादित्याशङ्क्य नियमान्तरमाह—**निवर्त्यातिरिक्तेति।** निवर्त्यातिरिक्तानपेक्षं ज्ञानं मिथ्याभूतमेव निवर्तयतीति

[1] नव्यभिचार इत्यर्थः—च.   [2] नियमे—ग.

## पूरणी

नियमः। अतः कर्तृत्वादेः सत्यत्वे तादृशात्मसाक्षात्कारान्निवृत्तिर्न स्यादिति भावः। ब्रह्मचर्यादिनियमोपेतसेतुदर्शनादेव ब्रह्महत्यादिपापनिवर्तकत्वेन श्रवणादिति भावः॥

नन्वेवमपि ज्ञानमविद्यानिवृत्तिद्वारैव मिथ्याभूतवस्तुनिवर्तकमिति नियमस्य भङ्गः; सिद्धान्ते पापादेर्मिथ्यात्वात्, तस्य च नियमोपेतसेतुदर्शनादिना निवृत्त्यभ्युपगमादिति चेत्, आत्यन्तिकनिवृत्तेरेव तथा नियमात्। सेतुदर्शनादिना पापादेरत्यन्तमनिवृत्तेः, स्वोपादाननिवृत्तिजन्यनिवृत्तेरेवात्यन्तिकत्वादिति। नन्वेवमपि निवर्त्यातिरिक्तानपेक्षं ज्ञानं मिथ्याभूतमेव निवर्तयतीत्यपि नियमोऽसिद्धः; "अग्निचित्कपिला सत्री"इत्यादिना श्रद्धानियमाद्यनपेक्षाग्निचिदादिदर्शनमात्रस्य पापनिवर्तकत्वेनावगमात्, "दृष्टमात्राः पुनन्त्येते" इति मात्रचा श्रद्धानियमादेर्व्यावर्तनादिति चेत्; भावोपहतकर्मानुष्ठानस्य निष्फलतया स्मृतिचोदितत्वेन तत्रापि श्रद्धादेरवश्यापेक्षणात्। मात्रचश्चाभिवादनादिनैरपेक्ष्येण दर्शनस्य पापनिवर्तकतामात्रपरत्वात्।

वस्तुतस्तु—इदं वाक्यमग्निचिदादिदर्शनविधायकं न तु याहच्छिकदर्शनात्पापनिवृत्तिमात्रपरम्। तथा सति वाक्यस्याप्रवर्तकत्वापातात्। सति संभवे सर्वस्यालौकिकवाक्यस्य विधिपरत्वत्यागायोगात्। अविहितस्यापि दर्शनस्य पापनिवर्तकत्वे प्रायश्चित्तविधिव्याकोपप्रसङ्गाच्च। न चात्राग्निचिदादिदर्शनस्य विधिः संभवति; तस्य प्रमाणस्वभावजनितस्य पुरुषप्रयत्नसाध्यत्वाभावात्। तत्कृत्यसाध्यस्य विध्यनर्हत्वात्। तथा च दर्शनानुकूलचक्षुरादिव्यापार एव विधेयः। एवं सेतुदर्शनादिवाक्येऽपीति सर्वत्र प्रायश्चित्तवत्क्रियाया एव पापनिवर्तकत्वं न ज्ञानस्येति नोक्तनियमव्यभिचारः। यदि च चक्षुरादिव्यापारद्वारा कृतिसाध्यत्वाद्दर्शन-

## दीपनम्

क्रियासाध्यं हि कार्यम्, अविद्यानिवृत्तिस्तु नैवम्। कालादेरविद्याकार्यस्य तत्संबन्धस्य[1] वाविद्यानिवृत्त्यनधिकरणत्वाच्च न तद्धेतुत्वम्। अत एव लौकिकाविद्यानिवृत्त्यादावपि व्यभिचारान्न कालादिर्हेतुरिति

## पूरणी

स्यापि विधेयत्वमभिमतम्, तदापि विहितजन्यवृत्तेरेव तन्निवर्तकत्वेन स्वरूपज्ञानस्य तथात्वाभावान्न व्यभिचारलेश इत्यलमधिकेन॥

नन्वेवं क्रियालक्षणकार्ये कालादेर्हेतुत्वं न स्यात्, तस्याः क्रियान्तरासाध्यत्वात्, अत उत्पत्तिमत्त्वावच्छेदेन कालादेर्हेतुत्वमित्यविद्यानिवृत्तावपि तथा स्यादित्यरुचेराह—**कालादेरिति**। **कार्यस्येति** तपनपरिस्पन्दाद्युपाधिकालाभिप्रायेण। अस्मन्मते सृष्टेः पाञ्चभौतिकत्वनियमेनाविद्याकार्यस्य कालरूपद्रव्यस्यासंभवात्। अत एवानुपाहितकालतया नित्यस्याविद्याबिम्बेश्वरस्य जगद्धेतोर्न तत्कार्यत्वमित्यरुचेराह—**तत्संबन्धस्येति**। अविद्याबिम्बेश्वरादेस्तत्संबन्धित्वादित्यर्थः। केचित्तु ब्रह्माविद्यासंबन्धस्य कालरूपत्वात्तस्य न तन्निवृत्त्यधिकरणत्वमित्येवंपरतया वर्णयन्ति। कालादेः कार्याधिकरणतया तन्निमित्तत्वम्। तच्च स्वाधेयकार्यत्वावच्छेदेन। अविद्याप्रयोज्यस्य तस्य तन्निवृत्त्यनधिकरणत्वान्न तत्र तद्धेतुतेत्यर्थः। नन्ववस्थाज्ञाननिवृत्त्यधिकरणतया कालादेस्तद्धेतुत्वे [2]तदविद्याकार्यादावुक्तलक्षणस्याव्याप्तिरित्यत आह—**अत एवेति**। मूलाविद्यानिवृत्तौ व्यभिचारान्नाविद्यानिवृत्तिमात्रे तद्धेतुतेत्यर्थः। ननु स्वाधेयकार्यत्वावच्छेदेन तद्धेतुत्वे मूलाविद्यानिवृत्तौ व्यभिचारो न दोषायेत्याशङ्क्य एतदस्वर-

---

[1] संबन्धस्यैव वा—च.

[2] अविद्यातत्कार्या—ञ.

**न वा पापादि ज्ञानैकनिवर्त्यम्। तस्माद्यज्ज्ञानमात्रनिवर्त्यं [1](यच्च ज्ञानैकनिवर्त्यं) तन्मिथ्यैवेति कर्तृत्वादिकमपि मिथ्या। तस्मादसङ्गोदासीन [2]आत्मा ॥**

---

## दीपनम्

न नियमग्रहानुपपत्तिरिति। किं च ज्ञानासहकृतकारणानिवर्त्यत्वे सति यज्ज्ञाननिवर्त्यं तन्मिथ्येति नियमः। पापादिकं तु केवलक्रियया निवर्त्येत इति न तत्र व्यभिचारः। ब्रह्माज्ञानतत्कार्यकर्तृत्वादिकं तु ज्ञानं विना न निवर्तेत इति तन्मिथ्यैवेत्यभिप्रेत्याह—**न वेति**। ननु कर्तृत्वादेर्मिथ्यात्वे कथं तदैहिकामुष्मिकपुरुषार्थ इत्याशङ्क्य व्यावहारिकत्वात्तस्य न कोऽपि दोष इत्युपसंहरति—**तस्मादिति**। अतस्तस्य ज्ञानान्निवृत्तिरुपपद्यत इत्यर्थः। अतो निष्प्रपञ्च एवात्मेत्यकर्तृत्वादिनिरूपणफलमुपसंहरन्नाह—**तस्मादिति** ॥

---

## पूरणी

सादेव मूले कल्पान्तरमित्यभिप्रेत्याह—**किं च ज्ञानेति**। एतादृशं ज्ञाननिवर्त्यत्वं मिथ्यात्वव्याप्यं न तु तत्समनियतम्। सिद्धान्ते मिथ्याभूतपापादौ व्यभिचारापत्तेरिति ध्येयम्। **क्रिययेति**। प्रायश्चित्तादिक्रिययेत्यर्थः। **ब्रह्माज्ञानेति**। कर्तृत्वादावुक्तरूपं ज्ञाननिवर्त्यत्वं मिथ्यात्वं विनानुपपन्नमिति तत्रासिद्धिरित्यर्थः। **व्यावहारिकत्वादिति**। व्यावहारिकस्य कर्तृत्वादेस्तादृशार्थक्रियाकारित्वेनोपपत्तेरित्यर्थः ॥

---

[1]अयं क्वाचित्कःपाठः. [2] एवात्मा–ग. छ.

## आत्मनः सुखरूपत्वसाधनम्

स चात्मा सुखान्न भिद्यते, "एषोऽस्य परम आनन्द" इति श्रुतेः, अनौपाधिकप्रेमगोचरत्वाच्च। व्यतिरेकेण दुःखादिवत्। न चाप्रयोजकत्वम्, सुखसमवायित्वेनापि तदुपपत्तेरिति

---

### दीपनम्

एवं चिद्रूपस्यात्मनो "यो अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इति श्रुतिप्रसिद्धाकर्तृभोक्तृस्वरूपप्रतिपादनेन निष्प्रपञ्चमात्मस्वरूपं दर्शितम्। इदानीं तस्य प्रेक्षावदुपादेयत्वसिद्धये श्रुतिसिद्धानन्दस्वरूपतामाह—स चेति। अनुपाधिप्रेमगोचरत्वं ह्यनन्यप्रयुक्तेच्छाविषयत्वम्। तच्च सुखरूपस्यैवास्ति। [1]अन्येच्छायास्तत्प्रयुक्तत्वात्। न च सुखमप्यात्मीयत्वेनैवेष्यते, वैरिसुखेच्छाया अदर्शनादिति

---

### पूरणी

**अनन्यप्रयुक्तेति।** तथा चात्मा सुखं, अनन्यप्रयुक्तेच्छाविषयत्वात्, व्यतिरेकेण घटादिवदित्यनुमानम्। नन्वत्र न सुखत्ववैशिष्ट्यं साध्यम्, त्वन्मते सुखत्वजात्यसिद्धेः, नापि सुखपदवाच्याभेदः; वृत्तिविशिष्टस्य सुखपदवाच्यत्वेन केवलस्य तदभेदाभावेन बाधादिति चेन्न; सुखपदवाच्यधर्म्यभेदस्य साध्यत्वात्। विशिष्टरूपेण केवलस्य तदभेदविरहेऽपि स्वरूपेण तदभेदस्य सत्त्वेन बाधविरहात्। अत एव मुक्तिदशायामपि न साध्याभावः; सुखपदवाच्यस्वरूपाभेदस्य तदानीमपि सत्त्वात्। न च दुःखाभावे व्यभिचारः; तस्य सुखशेषतया

---

[1] तदन्येच्छायाः—क. च.

वाच्यम्; दुःखसमवायितया निरुपाधिद्वेषप्रसङ्गात्। आगामिसुखे संशयदशायां दुःखदशायामप्यात्मनि प्रेमदर्शनात्।

## दीपनम्

वाच्यम्; सुखव्यक्तेरेकत्वात्। वैरिसंबन्धस्तु तस्य नेष्यते। आत्मीयत्वं तु दुःखसाधारणं न सुखस्येच्छाविषयत्वे प्रयोजकम्। न चात्मीयसुखत्वं तत्प्रयोजकमिति वाच्यम्; गौरवात्। नन्वेवमहं सुखं स्यामिति कामना स्यादिति चेन्न, मुमुक्षोरेवमेव। सुखाभेदमजानतामपि मम सुखं भूयादिति कामना तु स्वसाक्षात्कारविषयसुखगोचरा; प्रकाशमानस्यैव सुखस्य पुरुषार्थत्वात्। न तु[1] सुखसमवायगोचरा; तस्यापुरुषार्थत्वादित्यात्मनोऽनुपाधिप्रेमगोचरत्वे सुखाभेदः प्रयोजको न तु सुखसमवायित्वम्; गौरवात्। दूषणान्तरमप्याह—**दुःखेति**।

## पूरणी

पुरुषार्थत्वमिति वक्ष्यमाणत्वेन तत्र हेतुविरहादिति भावः। **वैरिसंबन्ध इति**। नित्यसुखव्यक्तितादात्म्यापन्नवैरिसंबन्धिवृत्तिविशेषो नेच्छाविषयः, तत्सुखव्यक्तेश्च[2] स्वरूपेणेच्छाविषयत्वमस्त्येवेत्यर्थः। किं चात्मीयत्वं तत्सुखत्वं वा न तत्र प्रयोजकमिति स्वरूपेणैव सुखमिच्छाविषय इत्याह—**आत्मीयत्वमिति**। **एवं** आत्मनः सुखात्मकत्वे। **मुमुक्षोरिति**। आत्मनः सुखरूपतां जानत इत्यर्थः। **स्वसाक्षात्कारेति**। आत्मनो वस्तुतः सुखरूपत्वेन तत्संबन्धित्वेन सुखस्य काम्यत्वायोगात् ममेत्येतत्सुखप्रकाशान्वयीति मम प्रकाशमानं सुखं भूयादिति तदर्थः। नित्यसिद्धसुखस्य स्वतः काम्यत्वायोगेन तत्साक्षात्कारविषयत्वेन तस्य तथात्वादिति भावः। **समवायगोचरेत्यनन्तरं** आत्मनः सुखाभेदादिति शेषः। दोषान्तरमाह—**तस्येति**। इदं च वक्तुं शक्यत्वादुक्तम्।

---

[1] सुखस्य सम—च. [2] स्व—ग

**आत्मनः स्वत इच्छायोग्यत्वाभावे [1]उपेक्षणीयस्य सुख इव [2]स्वसुखेऽपीच्छाया असंभवात् ।**

## दीपनम्

सुखसमवायी हि दुःखसमवाय्यपि भवति । तथा च यथा सुखनिमित्तात्पुत्रादेस्तत्समवायिन्यधिका प्रीतिरेवं दुःखनिमित्ताच्छत्रोस्तत्समवायिन्यधिको द्वेषः स्यात् । दृश्यते ह्यनुच्छेद्यतया निश्चितेऽपि शत्रौ वस्तुस्वभावकृत एव द्वेषः । अस्माकं तु दुःखसमवायिनि द्वेष एव, तस्य निवर्त्यत्वात् । तथा च नात्मनः सुखसमवायित्वकृतं प्रेमेति भावः । संशयेत्युपलक्षणम्, अनुपस्थितेत्यपि द्रष्टव्यम् । परस्पराश्रयमप्याह— **आत्मन इति** । परमते हि सुखस्येच्छाविषयत्वं न सुखत्वप्रयुक्तम्, अतिप्रसङ्गात् । नाप्यात्मीयसुखत्वेन; पुत्रादिसुखेऽनिच्छाप्रसङ्गात् । न च तदपि सुखसाधनमिति वाच्यम्; प्रमीयमाणस्यापि [3]पुत्रसुखे कामनादर्शनात् । तस्मादिष्यमाणसुखसंबन्धिसुखत्वे-

## पूरणी

वस्तुतस्तु मम सुखं भूयादिति कामना अहं सुखीतिवदानन्दवृत्तिगोचरा । अन्यथा ज्ञानस्याप्यात्मस्वरूपतया जिज्ञासानुपपत्तेरिति ध्येयम् । नन्वात्मनोऽनिवर्त्यत्वान्न तत्र द्वेषः, स्वनिवर्त्यवस्तुविषयत्वात्तस्येत्यत्राह— **दृश्यते हीति** । ननु सुखसाधनत्वेनैव पुत्रादिसुखेच्छा, न स्वत इत्याशङ्क्य निषेधति— **नच तदपीति** । **तस्मादिष्यमाणेति** । नच स्वपदवाच्यसंबन्धिसुखत्वेन कामनास्तु, पुत्रादेरपि स्वपदवाच्यत्वात्; अतो नान्योन्याश्रय इति वाच्यम्; दुष्टपुत्रसुखे तददर्शनात् ।

[1] उपेक्षणीयसुखस्य सुखे—ग. [2] स्वीयसुखे—छ. [3] पुत्रादिसुखे—च.

दीपनम्

नैव तत्र कामना वक्तव्या। आत्मन्यपि यदि न स्वतः कामना तदेष्यमाणसुखसंबन्धित्वेनैव कामना वाच्या। अनिष्यमाणसुखसंबन्धि-पुत्रादौ तददर्शनादिति परस्पराश्रयः। अतो न[1] सुखसाधनत्वे-

पूरणी

स्वपदवाच्यज्ञातिसुखे तदभावाच्च नोक्तरूपेण सुखस्येच्छाविषयत्वमिति भावः। नन्वात्मनि स्वत्वेन कामनास्त्वि[2]त्यत्राह—**अनिष्यमाणेति**। स्वपदवाच्येऽपि दुष्टपुत्रादौ तदभावादित्यर्थः।

ननु त्वन्मतेऽपि स्वसाक्षात्कारविषयत्वेन सुखव्यक्तेः कामना-विषयत्वे पुत्र[3]सुखस्य तत्त्वेन कामना स्यादिति इष्यमाणसंबन्धिसाक्षा-त्कारविषयत्वेन तत्कामनाया वाच्यत्वेन परस्पराश्रयदोषः समानः। यदि च स्वसुखाभिव्यक्तिसाधनसंबन्धिसाक्षात्कारविषयत्वेन कामना, स्वसुखाभिव्यक्तिसाधनता च पुत्रादेरप्यस्ति, प्रमीयमाणस्यापि पुत्रादि-दर्शनेन तथा सुखाभिव्यक्तेः, तत्कालीनसुखाभिव्यक्तिसाधनतया पुत्रादेस्तत्सुखे कामना, अन्यथा तदनुपपत्तेः "आत्मनस्तु कामाय सर्वं प्रियं भवति"ति श्रुतेश्च न परस्पराश्रय इत्यभिमतम्, तदा स्वसुखसाधनसंबन्धिसुखत्वेन कामनेति नास्मत्पक्षेऽप्युक्तदोषप्रसङ्ग इति [4]चेदत्र ब्रूमः, अस्ति तावदात्मनि निरूपाधिक[5]प्रेमगोचरत्वम्। तच्च न सुखसमवायितया। तद्धि न नित्यम्; तत्समवेतनित्यसुखे मानाभावात् अहमिदानीं सुखीत्यनुभवस्येष्टदर्शनजनितसुखविषयत्वात्। [6]नापि तज्जन्यम्; तत्साधितस्याहंकारातिरिक्तासङ्गस्वभावात्मनो वास्तव-तत्समवायित्वायोगात्। कल्पिततत्समवायित्वेन प्रेमगोचरत्वे वास्तव-

[1] सुखसमवायित्वेन—क. च. [2] त्यत आह—ख. [3] सुखे—ख. [4] चेदत्राह—ख. [5] प्रेमास्पदत्वम्—ख. [6] नापि जन्यम्—ख.

## दीपनम्

नात्मनः प्रेमगोचरत्वमित्यर्थः । एतेन [1]दुःखप्रागभावत्वेन तद्ध्वंस्त्वेन वात्मनि प्रेमेति निरस्तम्, दुःखाभावस्य स्वतोऽपुरुषार्थत्वाच्च । तत्कामनायाः पश्वादिकामनावदन्यथोपपत्तेः। नच वैपरीत्यम्, न तावद्दुःखानुत्पादशेषता सुखस्य, दुःखानुत्पादस्य पुरुषार्थत्वे बहुदुःखसाध्ये कर्मणि प्रवृत्त्यभावप्रसङ्गात् । बहूनां पुरुषार्थभूतानां तेषां विनाशात् प्रसक्तकारणविघटनेन तस्य साध्यत्वसंभवाच्च । ततो [2]जायमानसुखस्यापुरुषार्थत्वे तदधिकप्रयोजनाभावाच्च। नित्यनैमित्तिकनिषेधशास्त्र[3]प्रमाणबलादेव निखिलदुःखानुत्पादसंभवे काम्यशास्त्रवैयर्थ्यप्रसङ्गाच्च । नापि दुःखध्वंसशेषता सुखस्य; स्वर्गादिसुखे तदुत्पत्ति-

---

## पूरणी

तत्समवायिन्यन्तःकरणे ततोऽपि प्रीतिः स्यात्। ततश्च मुक्त्यर्थिप्रवृत्त्यनुपपत्तिः। अनौपाधिकप्रेमगोचरस्यान्तःकरणस्य नाशप्रसङ्गादिति सुखाभिन्नतयैवात्मनः प्रेमगोचरत्वं वाच्यमिति संक्षेपः ॥

**एतेनेति**। [4]दुःखित्वेन परमद्वेषप्रसङ्गेनेत्यर्थः । **अन्यथेति**। सुखशेषत्वेनेत्यर्थः । ननु प्रायश्चित्तादिसाध्यस्य दुःखानुत्पादस्य पुरुषार्थता यागादि[5]कर्तृत्वानुषक्तदुःखहेतुदुःखानुत्पादस्य त्वसाध्यत्वान्न पुरुषार्थतेत्यत्राह—**प्रसक्तेति**। यागादौ प्रसक्तस्य तन्निवृत्तौ तत्कारणविघटनेन तत्साध्यत्वमपि संभवतीत्यर्थः। ननु ततोऽप्यधिकसुखार्थं दुःखमभ्युपगम्यापि प्रवर्तेतेत्यत्राह—**ततो जायमानेति** । त्वया सुखस्य दुःखानुत्पादशेषत्वेन पुरुषार्थत्वाभ्युपगमेन स्वतस्तस्य पुरुषार्थत्वाभावादित्यर्थः। **तदुत्पत्तीति** । दुःखासंभिन्नसुखस्य स्वर्गशब्द-

---

[1] दुःखाभावत्वेन—च. [2] जन्यसुखस्य—च. [3] प्रामाण्यबलादेव—च.

[4] दुःखवत्वेन—ग्र. [5] कर्मानु—ग्र.

## दीपनम्

ज्ञप्त्योरभावात्। दुःखस्य स्वविषयज्ञानकारणविनाशनाश्यत्वेन लोकेऽपि तत्र तस्यानुपयोगात्। [1]तस्माद्भारपीडितस्य तदपगमे तज्जन्यदुःखापाया-दिदानीं सुखमित्यनुभवात् दुःखाभाव एव[2]सुखशेषः। तच्च [3]जन्यं न संभवतीति नित्यात्मस्वरूपमेव सुखं तेनाभिव्यज्यते। नाप्यात्मत्वा-देवात्मनि प्रेम; इच्छायाः सुखविषयत्वनियमात्। अतो नाप्रयोजको हेतुः। ननु कथं सिद्धे इच्छा, तस्याः साध्यैकगोचरत्वादिति चेन्न; सिद्धस्यापि सुखी स्यामिति कामनावद्भूयासमित्यग्रिमसमयसंबन्धित्वेन कामनाया उपपत्तेः। तत्र च समयतत्संबन्धयोः स्वतोऽपुरुषार्थत्वेन स्वरूपप्रयुक्तैव कामना। दृश्यते हि सा लोकेऽपि प्राप्तस्यैवेष्टस्याक्षय्यत्व-विषयिणी। "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" इति श्रुतिरप्यात्मनि निरतिशयां प्रीतिं दर्शयति। एवं

---

## पूरणी

वाच्यतया तद्दशायां दुःखस्य तन्नाशकज्ञानस्य वानुत्पादेन तदानीं दुःखध्वंसानुत्पादात् पूर्वकालीनदुःखध्वंसस्य च तदा अपुरुषार्थत्वादिति भावः। ननु लोके सुखस्य दुःखध्वंसशेषता, स्वर्गादौ तु स्वतस्तस्य पुरुषार्थ-तास्त्वित्यत्राह—**दुःखस्येति**। **इदानीं सुखमिति**। नच दुःखाभाव एवायं सुखत्वारोप इति वाच्यम्; प्रमात्वे बाधकाभावादिति भावः। **सिद्धस्यापीति**। एतच्चापाततः। परमार्थतस्तु सिद्धस्यापि सुखस्या-सिद्धसाक्षात्कारविषयत्वेन कामना। अन्यथा नित्यसुखेऽग्रिमसमय-संबन्धस्यापि सिद्धतया तद्रूपेणापि कामनानुपपत्तेरिति ध्येयम्। उक्तहेतोरात्मनि श्रुतिप्रमेयत्वान्नासिद्धिशङ्केत्याह—**तदेतत्प्रेय इति**।

---

[1] तस्मान्महारोगपीडितस्य-च.　[2] सुखत्वशेषः-क.　[3] तज्जन्यं-च.

[4] अत एव ना-च.

दीपनम्

"आत्मनस्तु कामाय सर्वमिदं प्रियं भवति" इति श्रुतिरपि प्रीतिगोचरस्य सर्वस्यात्मार्थतया प्रीतिविषयत्वं दर्शयन्त्यात्मनोऽनन्यनिमित्तां प्रीतिं दर्शयतीति नासिद्धिरिति नित्यानित्ययोरभेदोऽनुपपन्न इति

---

पूरणी

वस्तुतस्तु नित्यसुखस्यानभ्युपगमे मुक्त्यर्थं यत्नानुपपत्तिः, नित्यानन्दप्रकाशस्यैव मुक्तिरूपत्वात्। नच दुःखध्वंस एव मोक्ष इति वाच्यम्; मुक्तिदशायामानन्दसत्त्वश्रुतिविरोधात्। दुःखाभावस्य सुखशेषतया पुरुषार्थत्वोपपादनाच्च। अपि च दुःखध्वंसस्य कृत्यसाध्यत्वादपि न पुरुषार्थत्वम्। उत्पन्नदुःखस्य स्वत एव नाशात् अनागतस्य च ध्वंसयितुमशक्यत्वात्। नच स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसस्य पुरुषार्थता; तादृशदुःखस्याप्युत्पत्तौ स्वत एव नाशसंभवात्। नच चरमदुःखोत्पत्त्यर्थमेव तद्यत्न इति वाच्यम्; तथा सति दुःखस्योपादेयत्वापातात्। एवमपि ध्वंसस्यासाध्यतया पुरुषार्थत्वालाभाच्च। उत्पन्नदुःखस्यावश्यवेद्यत्वनियमेन स्वविषयानुभवेनैव तन्नाशात्। दुःखद्वारा ध्वंसस्य कृत्युद्देश्यत्वाभ्युपगमे तद्दुःखस्यापि स्वर्गजनकापूर्ववदात्मसाक्षात्कारे व्यापारत्वं स्यात्। नच तत्संभवति; प्रतियोगिनो ध्वंसकार्ये क्वापि व्यापारत्वादर्शनात्। दुःखाभावस्य मुक्तिरूपत्वे मानाभावाच्च। "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतिश्च तत्काले दुःखाभावमात्रं दर्शयति न तु तस्य पुरुषार्थत्वम्। नापि "तरति शोकमात्मवित्" इति श्रुतिस्तत्र मानम्; अविद्याया एव शोकपदाभिधेयत्वात्; शोच्यतेऽनेन पुमानिति व्युत्पत्त्या शोकपदस्य तत्रापि व्युत्पत्तेः। लोके ज्ञानस्याज्ञाननिवर्तकत्वावधारणेन तन्निवर्त्यवाचिशोकपदस्य तत्परत्वकल्पनाया एवोचितत्वाच्च। अन्यथा

सुखोत्पत्तिविनाशप्रतीतिस्तु सुखपदवाच्यवृत्तिविषया। सुखरूपस्यात्मनः सुखपदमद्वाक्यार्थतया तदेकदेशसुखपदवाच्यत्वायोगेनानन्दवृत्तेरेव सुखात्मकसुखत्वतादात्म्येन सुखपदवाच्यत्वात्। परैरपि सुखत्वविशिष्टव्यक्तेरेवोत्पत्त्याद्यभ्युपगमात्। परं त्वस्माकं

दीपनम्

बाधमाशङ्क्याह—सुखोत्पत्तीति। नन्वात्मा सुखं वृत्तिश्च सुखपदाभिधेयेत्यसङ्गतमिति तत्राह—सुखरूपस्येति। एतच्च ज्ञानपदाभिधेये कृतोपपादनाभिप्रायम्। एवं सति सुखोत्पादविनाशस्यात्मन्मते नाप्रसिद्धविषयत्वकल्पनमपीत्याह—परैरपीति। सुखत्वविशिष्टेति। सुखपदवाच्याया इत्यर्थः। विवादपदमाह—परं त्विति। सुखमित्यनुभवे हि नित्यमनित्यं च प्रकाशते। नित्यं च पराभ्युपेतं सुखत्वमिति तदेव सुखं लाघवात्, न त्वनित्यं गौरवात्। सुखत्ववत्सुखमिति तु परपरिकल्पितानुभवो नार्थसाधक [3]इति भावः। ननु सुखस्यानाद्यनन्तत्वेनैकत्वात् कथं तद्वैचित्र्यानुभव इत्याशङ्क्य

पूरणी

"ब्रह्मवेद ब्रह्मैव भवति" इत्यादिबहुश्रुतिव्याकोपात्। अस्मन्मते त्वविद्यावरणनिवृत्तिरूपानन्दाभिव्यक्तेः कृत्युद्देश्यत्वमिति न कश्चिद्विरोधः। तस्मान्नित्यसुखं मोक्षार्थिभिरभ्युपगन्तव्यम्। न तदात्मधर्मः, मानाभावादित्यात्मैव सुखरूप इति तत्त्वम्। विशेषणीभूतसुखत्वस्य नाशभ्रमं व्यावर्तयति—सुखपदवाच्याया इति। ननु सुखपदवाच्यतावच्छेदकात्मकस्य सुखत्वस्य सुखपदवाच्यधर्मित्वलक्षणसुखरूपत्वं कथमित्याशङ्क्याह—सुखमित्यनुभव इति। परमतसिद्ध-

[1] इत्यभिप्रायः—ख.

[1]सा न सुखम्, सुखत्वमेव सुखमिति विभागः। न चासुखस्य सुखपदवाच्यत्वासंभवः; त्वन्मतेऽपि जातेस्तदभावप्रसङ्गात्। वृत्तिवैचित्र्याच्च सुखवैचित्र्यप्रतीतिरुपपद्यते। एतेन सुखविनाशादिप्रतीतेस्तद्व्यञ्जकवृत्तिविषयत्वकल्पनमयुक्तम्, अर्थविषयबुद्धेर्ज्ञानविषयत्वकल्पनायोगादिति निरस्तम्, चन्दनाद्यनुभवजन्यस्यैव हि नाशानुभवः, स तथैवास्मन्मतेऽपीत्यन्याविषयत्वाभावात्।

एवं सुखमहमस्वाप्समिति परामर्शादप्यात्मा सुखम्। न च दुःखाभाव एव [2]तथा परामृश्यत इति वाच्यम्; प्रकाशात्मकसाक्षिसुखविषयत्वे बाधकाभावात्। दुःखाभावस्य सुषुप्तावननुभूतस्य स्मर्तुमशक्यत्वाच्च। नचोत्थितस्य तद्गोचरानुमितिरेव न स्मृतिरिति वाच्यम्; स्मृतित्वानुभवविरोधात्। स्वापकालीनसुखानुभवव्यति-

---

दीपनम्

सुखतादात्म्येन सुखपदवाच्यवृत्तिवैचित्र्यविषयः स इत्याह—वृत्तीति। वृत्तिशब्दप्रयोगात्तस्याः [3]सुखज्ञानत्वं मन्वानस्य भ्रान्तस्य शङ्कामनूद्य निराकरोति—एतेनेति। एवं सुखमिति परामृश्यमानं हि स्वापकालीनं सुखं न विषयजन्यं भवतीति नित्यं तद्वक्तव्यम्। न च नित्यस्यात्मभेदे प्रमाणमस्तीति नात्मा सुखभिन्न इत्यर्थः। स्वापकालीनेति। उत्थितस्य दुःखाभावज्ञानमनुमितिर्न संभवतीत्यवर्णयम्।

---

पूरणी

सुखपदवाच्यतावच्छेदकस्य नित्यस्यास्माभिः सुखपदवाच्यधर्मित्वमभ्यु-

---

[1] सा असुख दुःखत्वमेव सुख—छ. [2] तत्र परा—ख. ग. [3] तत्सुखज्ञानत्वं—ख.

रेकेण तदनुमानायोगाच्च । नच साक्षिरूपसुखप्रकाशस्याविनाशात्संस्काराभावेन न तत्स्मृतिरिति वाच्यम्; सुखाद्याकाराविद्यावृत्त्यभ्युपगमेन घटाद्यविशेषात् । तस्मादात्मा सुखम् ॥

---

## दीपनम्

कथं तर्हि सिद्धान्तेऽपि निर्दुःखमहमस्वाप्समिति ज्ञानम् । उत्थितस्य [1]स्मृतिसिद्धदुःखविरुद्धानुभूयमानसुखान्यथानुपपत्त्या तज्ज्ञानं सिद्धान्त उपपद्यते । परस्य तदभावात्तदपि न संभवतीत्यर्थः ॥

नन्वसङ्गत्वादिनिरूपणमभित्तिचित्रकर्मायते, अहंकारातिरिक्तात्मनि प्रमाणाभावात् । उक्तानुमानं तु बाधितमेव । अहंकारातिरिक्तस्यापि तस्य दृश्यत्वेऽनात्मत्वं व्यभिचारो वा, अदृश्यत्वे न [2]तत्सत्त्वम्, मानाधीनत्वान्मेयसत्तायाः । अत एव "अत्रायं पुरुषः स्वयं ज्योतिः" इति श्रुतिरपि स्वज्ञाने स्वयमेव कर्तृकारकमित्येवंपरतया व्याख्येयेति नातिरिक्तात्मसिद्धिरित्याशङ्क्यात्मनः स्वयंप्रकाशत्वसाधनाय यतते—

---

## पूरणी

पेतमित्यर्थः । सुखाद्याकारेति मूलम् । नन्वविद्यावृत्तेः कल्पितार्थविषयत्वात्कथं पारमार्थिकसुखाकाराविद्यावृत्तिः । न चान्तःकरणाद्युपहितस्यापारमार्थिकत्वात्तदुपपत्तिरिति वाच्यम्; तदा तदुपाधिविलयादहमभिमानाभावाच्च । न चाविद्योपाधिस्तदानीमप्यस्तीति वाच्यम्; सुखस्वरूपमात्रस्यैव प्रतिसन्धानदर्शनेन तदुपहितस्वरूपेण तदा तज्ज्ञानासिद्धेरिति चेन्न; सुखमहमस्वाप्सं न किंचिदवेदिषमित्यज्ञानोपहितत्वेनैव तत्प्रतिसन्धानदर्शनेन तदातनाविद्यावृत्तेरपि तदाकारत्वात् । अन्तःकरणवृत्तेः कल्पितविषयत्ववदविद्यावृत्तेः पारमार्थिकविषयत्वस्यापि संभवेन तथा नियमासिद्धेश्चेति दिक् । उत्थितस्येति ।

---

[1] स्मृतिसिद्धं दुःख—ख. [2] तत्सिद्धिः—ख.

## आत्मनः स्वप्रकाशत्वसाधनम्

एवमसङ्गोदासीनानन्दात्मा स्वप्रकाशः। "अत्रायं पुरुषः

---

### दीपनम्

एवमिति। अत्र हि ज्योतिःपदं चैतन्यमात्रमुपस्थापयति न तु तत्कर्तारम्, ज्ञाननित्यतायाः प्रागुपपादितत्वेन तत्कर्तुर्बाधितत्वात्। ज्ञानकर्तरि तात्पर्ये गौरवाच्च। ततश्च ज्योतिःपदसामानाधिकरण्या-

---

### पूरणी

ननु नित्यसुखं न दुःखविरोधि, जाग्रदादावपि तद्विरहप्रसङ्गादिति चेन्न, सुखानुभवस्य दुःखविरोधितया तदन्यथानुपपत्तेरेव तद्विरहमानत्वादिति भावः॥

### ज्योतिः पदस्य ज्ञानसाधनपरत्वनिरासः।

ज्ञाननित्यताया इति। इदं चोपलक्षणम्—ज्योतिःपदस्य ज्ञानसाधनपरत्वे लक्षणादोषश्च। न च ज्ञानपरत्वेऽप्ययं दोषः; ज्योतिः-पदस्य तेजस्येव रूढत्वादिति वाच्यम्; प्रकाशपदपर्यायज्योतिः-पदे प्रकाशपदवाच्यज्ञानलक्षणाया अन्तरङ्गत्वात्। वस्तुतस्तु ज्योतिः-पदं न तेजस्येव रूढम्, तेजोमात्रे तथा प्रयोगाभावात्, तप्तवारि-स्थोष्मादौ तद्दर्शनात्। किं तु प्रकाशपदस्येव विषयावरणनिवृ-त्त्यनुकूलस्वरूपविशेषमात्रं ज्योतिःपदार्थः। विषयावरणत्वं च विषयेण संबद्धय तत्स्फूर्तिप्रतिबन्धकत्वम्। तच्चाज्ञानतमस्साधारणम्। तन्निवृत्त्यनुकूलत्वमपि ज्ञानालोकसाधारणमिति आलोकवज्ज्ञानमपि ज्योतिःपदवाच्यमिति न ज्ञानपरत्वे लक्षणा। अत एव ज्योतिरधि-करणे भाष्यकारैः ज्योतिःपदमवभासकमात्रार्थकमित्युक्तम्। तस्मा-

स्वयंज्योतिः" इति श्रुतेः। आत्मव्यवहारः स्वगोचरप्रकाशजन्यः, व्यवहारत्वात्, संमतवत्। स च प्रकाशो लाघवा-

## दीपनम्

रिसद्धस्य ज्योतिरात्मकपुरुषस्य स्वयमिति [1] विशेषणाज्ज्योतिरन्तरव्यावृत्ते-[2]रात्मनः स्वप्रकाशत्वं श्रुत्यर्थ इति भावः। आत्मव्यवहार इति। अहंकारातिरिक्तात्मव्यवहार इत्यर्थः। स्वस्य शब्दाभिलापरूपव्यवहारस्य यो गोचरो विषयः तत्प्रकाशजन्य इत्यर्थः। घटादिप्रकाशस्वभावस्यात्मनोऽस्वप्रकाशत्वेऽपि स्वकर्तृकव्यवहारविषयतयार्थान्तरपरि-

## पूरणी

न्मुख्यार्थानुपपत्तेरभावाल्लक्षणया ज्ञानसाधनपरत्वं ज्योतिःपदस्यानुपपन्नम्। एतेनात्र पुरुषपदमीश्वरपरम्, तथा चात्र स्वप्नदशायामीश्वर एव जीवस्य ज्ञानसाधनम्, स्वयंपदं च तस्य प्राधान्यार्थमिति श्रुत्यर्थवर्णनं प्रत्युक्तम्; मुख्यार्थे संभवति लक्षणाया अयोगात्। अयमितीदंशब्देन सन्निहितजीवस्यैव परामर्शात् मनसोऽपि तज्ज्ञानसाधनस्य सत्त्वेनेतरव्यावृत्त्ययोगात्। जाग्रत्यपि जीवस्येश्वरपरतन्त्रतया विशिष्य तत्काले स्वातन्त्र्योपन्यासवैयर्थ्याच्चेति संक्षेपः। ज्योतिरन्तरेति। अन्यविषयकज्ञानात्मकस्याप्यात्मनः स्वविषयकज्ञानान्तरवत्त्वशङ्काव्यावृत्त्यर्थत्वात्तद्विशेषणस्येति भावः। एवं "आत्मैवास्य ज्योतिर्भवति" इति श्रुत्यन्तरमपि तत्र प्रमाणं द्रष्टव्यम्। स्वकर्तृकेति। आत्मविषयकज्ञानसाध्येऽप्यात्मव्यवहारे आत्मनः कर्तृ-

[1] विशेषणेन ज्योति—ख. ग. [2] रात्मनः—ख.

त्परिशेषान्नात्मैव । स्वगोचरप्रकाशत्वं च स्वगोचरसंशयादि-निवर्तकप्रकाशत्वम् ॥

अथ वा वर्णितानुभूतिः स्वप्रकाशा अनुभूतित्वात्, यन्नैवं तन्नैवं यथा घटः। ननु यदि स्वप्रकाशत्वं प्रकाशस्वभावत्वं तदा सिद्धसाधनम्, वेद्यानुभूतेरपि [1]स्वप्रकाशत्वात्। नापि ज्ञानाविषयत्वम्; अनुभूतेरपि वृत्तिविषयत्वात्। फलव्याप्यत्वं

---

दीपनम्

हाराय स्वगोचरेति। **परिशेषादिति**। स च वक्ष्यत इत्याशयः। ननु स्वगोचरेत्यादिना स्वगोचरविषयप्रकाशजन्यत्वे साध्ये बाधः, तद्रूपप्रकाशजन्यत्वे च [2]घटादिदृष्टान्ते साध्यवैकल्यम्। तत्राह—**स्वेति**। स्वगोचर[3]विषयसंशयादिनिवर्तकप्रकाशत्वमित्यर्थः। स च दृष्टान्ते विषयातिरिक्तिः। साक्षिणि तु स एव, तद्रूपप्रकाशबलादेव कोटिस्मरणादौ सत्यपि तत्संशयानुदयादिति न बाध इत्यर्थः॥

चित्सुखाचार्यानुमानमप्याह—**अथवेति**। एकमनाद्यनन्तं स्फुरणमित्यर्थः। **वृत्तीति**। स्वयंप्रकाशत्वादिसाधकप्रमाणजन्यवृत्ति-

---

पूरणी

तया प्रकाशजन्यत्वमात्रे साध्ये कर्तृत्वेन घटादिप्रकाशरूपात्मजन्यतया-र्थान्तरतेत्यर्थः। **बाध इति**। स्वप्रकाशत्ववादिना तदनभ्युपगमादिति भावः। **स्वप्रकाशस्वभावत्वमिति मूलम्**। स्वयंप्रकाश[4]रूपत्व-मित्यर्थः। **वेद्यानुभूतेरिति मूलम्**। ज्ञानान्तरवेद्याया अपि स्वयं

---

[1] स्वप्रकाशस्वभावत्वात् ख. [2] घटादिव्यवहारदृष्टान्ते-ख. च. [3] विषय-कसंश-च. [4] रूपवत्त्व ट.

नास्तीति चेत्, तद्यदीन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्यविशिष्टान्यत्वं तर्हि नित्यपरोक्षेष्वतिप्रसङ्गः। नापि चैतन्याविषयत्वम्; चैतन्येऽपि तदभावात्। अन्यथा तद्व्यवहारानुपपत्तेरिति, मैवम्;

---

### दीपनम्

विषयत्वादित्यर्थः। इन्द्रियेति। इन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्यविशिष्टं फलव्याप्यम्, तदन्यत्वं फलाव्याप्यत्वमित्यर्थः। अत्रेन्द्रियजन्यपदं स्वरूपकीर्तनम्। अवेद्यत्वमिति। वेद्यान्यत्वमित्यर्थः। तच्च चैतन्य-स्वरूपमिति न सर्वधर्मानधिकरणे मुक्तावव्याप्तिरित्यर्थः। नन्वेवं "तं त्वौपनिषदं" इति श्रुतिविरोधः, न ह्यवेद्यस्योपनिषद्गम्यत्वं संभवति। "शास्त्रयोनित्वात्" इति [1]सौत्रप्रत्यभिज्ञाविरोधश्च। नच शास्त्रजन्यं ज्ञानं ब्रह्मण्यध्यस्तमविद्यादिकं निवर्तयतीति तस्यौपनिषद[2]त्वादिसिद्धिरिति वाच्यम्; ज्ञानस्य तद्विषयत्वमन्तरेण तदविद्याद्यनिवर्तकत्वात्। न च [3]तदाकारमात्रेण ज्ञानं तन्निवर्तयतीति वाच्यम्; धर्मादेस्तदाकारताया

---

### पूरणी

घटादिप्रकाशरूपवत्त्वादित्यर्थः। सौत्रप्रतिज्ञेति। श्रुतिप्रमाणकत्वस्य तत्सूत्रे प्रतिज्ञातत्वादित्यर्थः। धर्मादेरिति। परोक्षे धर्मादौ विषयदेशव्याप्तिवृत्तेरनुत्पत्त्या अपरोक्षघटादाविव वृत्तिसंयोगित्वलक्षण-तद्विषयताया असंभवेन तदाकारतामात्रेण तद्विषयताया वाच्यत्वात् आत्मनि च तत्सत्त्वे वृत्तेस्तद्विषयता स्यादेवेत्यर्थः। तदनभ्युपगमे

---

[1] सात्रप्रतिज्ञाविरोध इति व्याख्यानुसारो पाठः. [2] त्वासिद्धिरिति-च. [3] तदाकारतामा- ख.

अवेद्यत्वं स्वप्रकाशत्वम्, तच्च चैतन्यागोचरत्वम्। न चासंभवः; चैतन्यस्यैकत्वेन तस्मिंस्तद्गोचरत्वासंभवात्। कल्पितभेदाधीनविषयत्वेऽपि न वास्तववेद्यत्वसिद्धिः।

---

## दीपनम्

एव तद्विषयतारूपत्वात्। शास्त्रजन्यज्ञानस्य निर्विषयत्वानुपपत्तेश्च। एवं स्वयंप्रकाशत्वादिसाधकानुमित्यविषयत्वे तदुपन्यासवैयर्थ्यञ्चेति, तत्राह—तच्चेति। न तु [1]वृत्त्यगोचरत्वमिति शेषः। तथा च नोक्तदोष इति भावः। चैतन्यस्येति। विषयत्वं हि संबन्धविशेषः, स च भिन्नयोरेव, [2]अभेदसंबन्धस्य निरस्तत्वात्। अतश्चैतन्यं न स्वविषय इत्यर्थः। न वास्तवेति। तथात्वे च परमार्थचैतन्यस्य स्वसमानसत्ताकविषयत्वानाश्रयतया स्वप्रकाशत्वमेव। घटादौ च वेद्यत्वं कल्पितमपि तत्समान[3]सत्ताकत्वमेवेति घटादिर्वेद्य इति भावः। असंभवे हेतुमाह—

---

## पूरणी

दोषमाह—शास्त्रजन्येति। तथा च नोक्तेति। ननु वृत्तिमात्रं न वस्तुसाधकम्, किं तु तदुपहितचैतन्यम्। तथा चात्मनः स्वयंप्रकाशत्वानुमित्युपहितचैतन्यविषयत्वं विना तत्सिद्धिर्न स्यादिति चेन्न; वस्तुनः सिद्धिर्हि तदसत्त्वसंशयादिनिवृत्तिः। एवं चात्मनस्तदनुमित्युपहितप्रकाशविषयत्वमन्तरापि तदुपहितस्वरूपप्रकाशादेव स्वगोचरसंशयादिवत्स्वप्रकाशत्वसंशयस्यापि निवृत्तिसंभवान्न तदुक्तेनात्मनो वेद्यत्वसिद्धिरिति भावः। ननु ज्ञानत्वेन व्यवहारहेतुत्वे उपेक्ष-

---

[1] वृत्तिगो—च. [2] तदभेदः—च. [3] सत्ताकमेवेति—क. ख.

नन्वेवं तद्व्यवहारासंभवः, व्यवहारस्य स्वगोचरचैतन्य-साध्यत्वात्। नच वृत्त्यैव तद्व्यवहार इति वाच्यम्; तस्या इच्छादिव्यवहारे व्यभिचारेण व्यवहारमात्राहेतुत्वात्। घटादि-व्यवहारे क्वचिदेव तस्या अपेक्षणादिति चेन्न, व्यवहारसामान्ये व्यवहर्तव्यज्ञानत्वेन ज्ञानं न हेतुर्गौरवात्, किं तु ज्ञानत्वेन।

दीपनम्

व्यवहारस्येति। इच्छादीति। इच्छादेः केवलसाक्षिभास्यत्वेन तद्व्यव-हारस्य वृत्त्यजन्यत्वादित्यर्थः। ननु चैतन्ये सत्यपि वृत्तिविरहदशायां घटादिव्यवहारादर्शनेन वृत्तिरेव व्यवहारे कारणमितीच्छादिव्यवहारेऽपि वृत्तिः कारणमिति चेन्न; व्यवहारो ह्यर्थप्रकाशसाध्यस्तेन विना न भवतीति व्यवहारविषयस्य प्रकाशविषयत्वं वक्तव्यम्। प्रकाशश्च चैतन्यमेव न वृत्तिरिति न सा व्यवहारमात्र उपयुज्यते। घटादिव्यवहारे तु सा तस्यापरोक्षतासम्पादकतया साक्षाद्व्यवहारप्रति-बन्धकविषयाज्ञाततोत्तम्भकतया वोपयोगिनी, तत्रैव तदन्वयव्यतिरेक-दर्शनादित्याह—घटेति। सत्यं व्यवहारमात्रे अर्थप्रकाशो हेतुः, न त्वर्थविषयप्रकाशत्वेन, प्रमाणाभावादित्याह—नेति। परेषामुपेक्षाज्ञाना-दिव्यावृत्तये यद्विशेषणमभिमतं तेन रूपेण ज्ञानं हेतुरित्याह—ज्ञानत्वेनेति। अस्मन्मते तु ज्ञानमेकमेवेति न विशेषणीयमिति भावः। एवं सति घटज्ञानात्पटादिव्यवहारः किमिति न स्यादित्याशङ्क्याह—

पूरणी

णीयज्ञानेऽतिप्रसङ्ग इत्यत आह—परेषामिति। प्रयत्नहेतुसमान-विषयकज्ञानं प्रवृत्तिहेतुः। प्रयत्नहेतू रागो द्वेषश्च। तयोः प्रवृत्ति-निवृत्तिप्रयत्नयोर्हेतुत्वात्। ततश्चेष्टानिष्टविषयकं ज्ञानं व्यवहारहेतुरिति नातिप्रसङ्ग इति भावः। न विशेषणीयमिति। ज्ञाने विषयविशेष-

न चैवमतिप्रसङ्गः; अनात्मव्यवहारे व्यवहर्तव्यज्ञानस्यापि हेतुत्वात्। आत्मव्यवहारे तु तदभिन्नप्रकाशो हेतुः, न तु तद्विषयः; तदसंभवस्योक्तत्वात्। नच ज्ञानजन्यव्यवहारविषयश्चेदात्मा तर्हि ज्ञानविषय एव, तस्यैव तत्त्वादिति वाच्यम्; औपचारिकज्ञान[1]विषयत्वसत्त्वेऽपि व्यवहारविषयत्वातिरिक्तज्ञान-

---

## दीपनम्

नचैवमिति। व्यवहर्तव्यज्ञानस्य व्यवहर्तव्यविषयज्ञानस्येत्यर्थः। तथा च विशेषकारणाभावान्नोक्तातिप्रसङ्ग इति भावः। नन्वेवं यत्सामान्यन्यायेनात्मव्यवहारे आत्मप्रकाशो हेतुरिति तत्राह—आत्मव्यवहार इति। किं च यथा ज्ञानसामान्यसामग्रीतोऽसति दोषे मीमांसकानां प्रमा, यथा वा असति संस्कारे तत एव नित्यानुभवः, एवं व्यवहारसामान्यसामग्रीतोऽसति ज्ञानज्ञेयभेदे आत्मविषयव्यवहारः। एवमात्मगोचरसंशयादिनिवृत्तिरपि विनैव चैतन्यविषयत्वं भवतीति भावः।

---

## पूरणी

घटितं नोक्तविशेषणमुपेक्षाव्यवहारव्यावृत्तये देयम्, एकस्य तस्य सकलविषयत्वात्। प्रयत्नहेतुसमानविषयकवृत्त्युपहितत्वं तु विशेषणं देयमेव अन्यथातिप्रसङ्गादिति भावः। यत्सामान्येति। यत्सामान्ययोः कार्यकारणभावस्तत्रासति बाधके तद्विशेषयोरपि तथेति व्यवहारमात्रे ज्ञानसामान्यस्य हेतुतायां तत्तद्व्यवहारे तत्तद्विषयज्ञानं हेतुरित्यात्मविषयकव्यवहारेऽपि तद्विषयकधीर्हेतुः स्यादित्यर्थः। तदसंभवस्येति मूलम्। असति बाधक इति तत्र विशेषणान्नोक्तदोष इति भावः। सामान्यसामग्रीमात्रात्तत्संभवमुपपादयति—किं चेति। एवमात्मगोचरेति। न च समानविषयनिश्चयस्य संशयनिवर्तक-

---

1 विषयत्वेऽपि—छ.

**विषयत्वस्य घटादिवदात्मन्यसत्त्वात्। एतेन वस्तुत्वादिति वेद्यत्वानुमानं निरस्तम्॥**

**अथ वा अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाश-**

---

दीपनम्

**एतेनेति।** आत्मनि ज्ञानविषयत्वेन विनानुपपत्त्यभावे[1]नाभेदविषयत्वासंभवेन बाधाभावाच्चेत्यर्थः।

चित्सुखाचार्योक्तमपि लक्षणमाह—**अथ वेति।** अत्र यद्यप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यतात्यन्ताभावानधिकरणत्वमेव लक्षणं तैरुक्तम्, तथाप्यत्यन्ताभावानधिकरणत्वांशो योग्यतास्थिरीकरणायोक्तः। यो यदत्यन्ताभावानधिकरणं स तद्वानिति नियमात्। न तु लक्षणतया, उपयोगाभावात्। ननु मुक्तौ योग्यताया अप्यभावादव्याप्तिपरिहाराय तत्। न चैवं सत्यसं[2]भवः, योग्यताया मिथ्यात्वेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिति वाच्यम्; तत्समानसत्ताकस्य वा योग्यतात्वावच्छिन्नप्रतियोगिताकस्य वात्यन्ताभावस्य धर्मादौ प्रसिद्धस्य चैतन्येऽभावात्। आरोपितस्य हि सत्त्वावच्छिन्नप्रतियोगिताको वास्तव एवात्यन्ताभावो मिथ्यात्वघटकतयाधिष्ठाने वक्तव्य इति नासंभवः न वा तेन विना अव्याप्तिपरिहार इति चेन्न; योग्यताया इव मुक्तौ

---

पूरणी

त्वाभिधानाविरोधः; आत्मव्यतिरिक्तविषयसंशयविषयत्वात्तन्नियमस्येति भावः। **तत्समानसत्ताकस्येति।** तादृशात्यन्ताभावानधिकरणत्वं विवक्षितमिति भावः।

---

[1] अभेदे विषय—च. [2] भव एव स्यात्—च.

त्वम्। तत्र चावेद्यत्वमिन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्याविषयत्वम्। साक्षिमात्रभास्यान्तःकरणतद्धर्मशुक्तिरूप्यादौ च न तद्योग्यम्। तद्योग्याधिष्ठानाभेदादेव तेष्वपरोक्षव्यवहारस्यान्यथासिद्धत्वेन तद्योग्यतायां मानाभावात्। घटादिकं चापरोक्षप्रमाण[1]गम्यत्वात्तद्योग्यम्॥

---

## दीपनम्

तदत्यन्ताभावाधिकरणताया अप्यभावात्। न चात्यन्ताभावाधिकरणत्वमधिष्ठानस्वरूपमिति वाच्यम्; योग्यताया अपि तथात्वोपपत्तेः। अतो योग्यतायाः स्थिरीकरणार्थमेव तदित्यभिप्रेत्य योग्यतान्तमेव लक्षणमनूदितम्। तत्र ह्यवेद्यत्वं फलाव्याप्यत्वमिति तत्स्वरूपमाह—तत्र चेति। घटादौ नित्यातीन्द्रिये चातिव्याप्तिपरिहाराय विशेषणद्वयम्। ननूक्तफला[2]व्याप्यत्ववत्यन्तःकरणादावपरोक्षव्यवहारगोचरेऽतिव्याप्तिरिति, तत्राह—साक्षीति। कथं तर्हि तदयोग्ये तद्व्यवहार इत्याशङ्क्य व्यवहारस्यान्यथोपपत्तिमाह—तद्योग्येति। यथा सद्विलक्षणे रजते सदधिष्ठानतादात्म्यात्[3] सदिति व्यवहारः एवमपरोक्षव्यवहारायोग्यान्तःकरणादावपरोक्षचैतन्यतादात्म्यादेवापरोक्षव्यवहार इति न तत्र तद्योग्यता। अनन्यथासिद्धव्यवहार एव योग्यताकल्पक इति भावः। नन्वेवं सति घटादेरपि सा न स्यात्, ततश्चावेद्यत्वपदं व्यर्थमिति, तत्राह—घटादिकं चेति। यदि चैतन्यतादात्म्यप्रयुक्त एव घटादेरपरोक्षत्वव्यवहारः तर्हि [4]शुक्तिरजतादेरिव तत्प्रमाणं विनैवापरो[5]क्षव्यवहारविषयः स्यात्। अनावृतसंवित्तादात्म्यमपि शुक्तिरजता-

---

[1] गम्यत्वेन—ग. छ  [2] व्याप्यत्वमन्तःकरणादावप—च.  [3] तत्सिद्धिव्यवहारः—क.  [4] शुक्तित्वादेरिव—च.  [5] रोक्ष्यव्यव—ख.

## दीपनम्

देर्भ्रमदशायामस्त्येव। किं तु तत्प्रमाणकृत्यमिति घटादिकं [1] व्यावहारिकमिति [2]तस्य पृथगेवापरोक्षव्यवहारयोग्यतेति नोक्तदोष इत्यर्थः॥

ननु किमपरोक्षो यो व्यवहारः, अपरोक्षस्य वा यो व्यवहारः, अपरोक्ष इति यो व्यवहार इति वा विवक्षितः। नाद्यः; शब्दाभिलापे अपरोक्षत्वाभावात् यदि ज्ञानं व्यवहारस्तच्छुक्तावेद्यत्वेन विरोधादसंभवः। अत एव न द्वितीयः; अर्थे अपरोक्षज्ञानविषयताया एवा-

## पूरणी

ननु शुक्तित्वाद्यंशे तदाकारवृत्तिविरहदशायां तदवच्छिन्नसंविद आवृतत्वान्नानावृतसंवित्तादात्म्यं शुक्तित्वादेरित्याशङ्क्याह—[3]किंचेति। शुक्तित्वादिप्रमाणवृत्तिं विना तदनावृतसंवित्तादात्म्यासंभवादित्यर्थः। तथा च प्रमाणाधीनानावृतसंवित्तादात्म्यप्रयुक्तापरोक्षव्यहारविषयत्वं तद्योग्यतां विना न संभवतीत्यर्थः। घटादिगोचरप्रमाणं न तत्त्वावेदकमिति व्यावहारिकेत्युक्तम्। ननु साक्ष्यध्यस्तस्यापि धर्मादेरपरोक्षव्यवहारादर्शनेन स्वरूपयोग्यतैव तन्नियामिकेत्यन्तःकरणादावपि तद्योग्यतावश्यकीति चेन्न; एवमपि वक्ष्यमाणरीत्यान्तःकरणादावपरोक्षप्रमितियोग्यत्वासत्त्वेनानातिप्रसङ्गादिति भावः। **शब्दाभिलाप इति।** शब्दाभिव्यक्तिहेतुवक्तृप्रयत्नविशेषात्मकस्य शब्दाभिलापस्य श्रोतुरपरोक्षत्वाभावादित्यर्थः। नच शब्दाभिलापो नामाभिलप्यमानशब्द एव, स चापरोक्ष एवेति वाच्यम्; तथा सति नित्यातीन्द्रियधर्मादावपि तच्छब्दस्यापरोक्षतयातिप्रसङ्गादिति भावः। **अतएवेति।** विरोधादेवेत्यर्थः। विरोधमेव दर्शयति—**अर्थ इति।** नन्वत्र

[1] सांव्यवहारिकमिति—च. [2] तत्र पृथ—खं. [3] किंत्विति

## दीपनम्

परोक्षाताशब्दार्थत्वात् । नन्वर्थापरोक्षत्वं संवित्तादात्म्यमेवेति चेत्तर्हि संविन्मात्रे आत्मनि तदभावः स्यात् । न च संविद्रूपत्वमेव तदिति वाच्यम्; घटादेरनपरोक्षत्वप्रसङ्गात्, व्यवहारपदवैयर्थ्याच्च । न तृतीयः; अलौकिकप्रत्यक्षविषयधर्मादेरपरोक्ष इति व्यवहारविषयत्वादिति चेदुच्यते; अपरोक्ष इति व्यवहारस्य विवक्षितत्वात् । न चोक्तदोषः; तत्र वादिकल्पिततादृशव्यवहारसत्त्वेऽपि पृथग्जनसाधारणस्य [1]तस्यासंभवात् । लौकिकसाधारणो ह्यपरोक्ष इति व्यवहारः स्पष्टमर्थं विषयीकरोति । स्पष्टता च विषयस्याज्ञाततारहित्यमिति न धर्मादौ कस्यचिदपरोक्षत्वव्यवहारसंभवः । अथवा अपरोक्षः सन् यो व्यवहार[2] योग्यस्तत्त्वमित्यर्थः । अर्थे चापरोक्षत्वं प्रकाशमानसंवित्प्रतियोगिकसत्तावच्छेदकभेदशून्यत्वम् । तच्चापरोक्षात्मनि घटादौ चास्तीति नासंभवो न वा व्यर्थविशे-

---

## पूरणी

लक्षणे उक्तरूपमपरोक्षत्वं विवक्षितम्, न सर्वत्रेत्यत आह—**व्यवहारेति** । **स्पष्टता चेति** । तथा च व्यवहारकालीनाज्ञाततारहित्यगोचरव्यवहार एवापरोक्षताव्यवहार इति प्रमेयत्वादिसामान्यप्रत्यासत्तिजन्यप्रत्यक्षविषयधर्मादौ स्वसंशयाधायकाज्ञाततारहित्याभावान्न तादृशापरोक्षव्यवहार इति नातिप्रसङ्ग इति भावः । ननु नित्यातीन्द्रियधर्मादौ नाज्ञानविषयता, धर्मिस्वरूपस्यायोग्यतयैवापरोक्षप्रतिभासविरहोपपत्तौ तत्राज्ञानकल्पनायां मानाभावादित्यज्ञाततारहित्यं धर्मादावपीत्यपरितोषादाह—**अथ वेति** ।

---

[1] तस्याभावात्—च.  [2] योग्यस्तत्वमि—क.

**न चात्र साध्याप्रसिद्धिः; वेद्यत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वाद्रूपादिवत् । प्रमेयत्वादेरपि स्ववृत्त्यत्यन्ता-**

## दीपनम्

षणता । धर्मादौ च तन्नास्तीति नातिप्रसङ्गः । नापि व्यवहारयोग्यपदवैयर्थ्यम् ; वर्णितरीत्यान्तःकरणादावतिव्याप्तिपरिहारार्थत्वात्तस्य । वस्तुतस्तु व्यवहारपदेन प्रमाणवृत्तिर्विवक्षितेति न [1]कोऽपि दोष इति भावः ॥

**न चेति** । यद्यपि फलव्याप्यत्वं धर्मादौ प्रसिद्धं, इतरच्च घटादौ, तथापि विशिष्टं क्वापि न [2]सिद्धमिति साध्याप्रसिद्धिरिति न वाच्यमित्यर्थः । यद्यप्यपरोक्षव्यवहारगोचराऽनुभूतिः संविद्विषया न भवति, अनुभूतित्वात्, व्यतिरेकेण घटवदित्यनुमानेन पक्षधर्मताबलाद्विशिष्टसिद्धिर्भवत्यत्र, तथापि चित्सुखाचार्योक्तं प्रकारमाह—**वेद्यत्वमिति** । सामान्यतो वेद्यत्वनिषेधे फलव्याप्यत्वाभावोऽपि सिद्ध्यत्येवेति नाभिमतावेद्यत्वासिद्धिरिति द्रष्टव्यम् । **स्ववृत्तीति** । एतच्च पररीत्योक्तम् । सिद्धान्ते

## पूरणी

ननु यत्किंचिद्व्यवहारयोग्यताविवक्षायामन्तःकरणादावेवातिप्रसङ्गः, [3]अन्तोऽन्तःकरणादिव्यवहारयोग्यत्वात् । अपरोक्षव्यवहारयोग्यताविवक्षायां च पूर्वापरोक्षपदवैयर्थ्यम्, पूर्वोक्तविकल्पदोषश्चेत्यस्वरसादाह—**वस्तुतस्त्विति** । तथा चापरोक्षप्रमाणवृत्तिविषयत्वं तदर्थः । प्रमाणेति विशेषणं अहमाद्याकारापरोक्षाविद्यावृत्तिविषयान्तःकरणादावतिप्रसङ्गवारणायेति भावः । **संविद्विषयेति** । ननु संविद्विषयत्वाभावरूपं

[1] कापि—ख. [2] सिद्ध्यतीति—च. [3] अन्तःकरणादि.

**भावप्रतियोगित्वान्न व्यभिचारः, ततश्चापरोक्षव्यवहारविषयाऽनुभूतिः अवेद्या अनुभूतित्वाद्व्यतिरेकेण घटादिवदिति**

---

### दीपनम्

तु विरुद्धयोर्नाधाराधेयभावः न वा घटादौ पटादिवृत्तितत्प्रमाविषयतारूपं तत्प्रमेयत्वमिति न तन्नानेति भावः। एवं साध्यप्रसिद्धिरनुमानमात्रान्नमिति मतेन साध्यं सामान्यतोऽवेद्यत्वं प्रसाध्य पक्षे विशिष्टसाध्यसिद्ध्यर्थं तदेकदेशं पक्षविशेषणं कृत्वा अवेद्यत्वं साधयति—**ततश्चेति**। अनुभूतेश्चाहमनुभवामीति सर्वजनसिद्धव्यवहारत्वान्न विशिष्टपक्षा-

---

### पूरणी

साध्यमप्रसिद्धम्, तथा च कथं तद्व्यतिरेकव्याप्त्यादिग्रहः। [1]न चासति तत्प्रसिद्धिः; तस्य निर्धर्मकत्वात्। न चेन्द्रियजन्यवृत्त्यभिव्यक्तसंविद्विषयत्वाभावः साध्यः, तस्य च घर्मादावेव प्रसिद्धेरिति वाच्यम्; तस्यान्तःकरणादिसाधारणत्वेनाभिमतस्वप्रकाशत्वासिद्धेरिति चेन्न; संविद्विषयत्वव्यापकतया हेत्वभावग्रहे तत्प्रतियोगिहेतुना तदभावसिद्धिसंभवेन व्यति[2]रेकसाध्यप्रसिद्धेरकिंचित्करत्वादिति भावः। **तन्नानेति**। घटादिप्रमाविषयत्वं घटादिनिष्ठात्यन्ताभावप्रतियोगीति न व्यभिचार इति भावः। भावसाध्यकव्यतिरेकिणि साध्यप्रसिद्धिरपेक्षिता न त्वभावसाध्यकेऽपि, प्रतियोगिभूतभावप्रसिद्ध्यैव तद्व्यापकतया हेत्वभावग्रहे तद्विरहानुमानोपपत्तिरित्यशङ्क्याह —**एवं साध्येति**। आत्मनः सिद्धिरित्यत्र विषयसंविदा आत्मज्ञानोत्पत्तिरभिप्रेता, आत्मनि सत्त्वादिसंशयनिवर्तकतया विषयसंविदेवात्मसिद्धिरिति वा। नाद्य इत्याह—

---

[1] नचात्मनि-म.  [2] रेकि-ट.

**विशिष्टसाध्यसिद्धौ वर्णितव्यतिरेकिणा तदाकारप्रतीतिसिद्धेः, उपायान्तरेणात्मापरोक्ष्यासिद्धेश्च[1] ॥**

---

## दीपनम्

सिद्धिः । **वर्णितव्यतिरेकिणा** अनुभूतिः स्वप्रकाशा, अनुभूतित्वादित्युक्तव्यतिरेकिणा । आत्मनः परिशेषात्स्वप्रकाशात्वमुक्तं स्मारयति—**उपायेति** । न तावद्विषयसंविदाश्रयत्वेनात्मनः सिद्धिः; विषयसंविद्व्यतिरिक्तज्ञानरूपायाः [2]सिद्धेरसंभवात् । न हि निर्विषया सिद्धिर्भवति न वा तन्मते आत्मा तद्विषयः । न च तद्विषयज्ञानात्तत्संशयादिनिवृत्तिरेव तत्सिद्धिरिति वाच्यम्; ज्ञानस्य स्वस्मादन्यस्मिन्स्वविषय एव संशयादिनिवर्तकत्वेन तदयोगात् । न च ज्ञानतदाश्रयान्यस्यैव ज्ञानविषयत्वं संशयादिनिवृत्तौ प्रयोजकमिति वाच्यम्; गौरवात् । नापि स्ववृत्तिज्ञानकर्मैवात्मा; कर्तृकर्मविरोधप्रसङ्गस्योक्तत्वात् । मनसो ज्ञानापादानतया प्रमाणसहकारित्वाच्चाप्रमाणतया न तद्ग्राह्य आत्मा । आत्मनः स्वयंप्रकाशत्वे बाधकाभावेन मनसः पृथक्प्रमाणत्वकल्पनागौरवाच्च । नापि नित्यानुमेयः; तदपरोक्षत्वानुभवविरोधात् ॥

---

## पूरणी

**विषयेति** । सापि सिद्धिः किं निर्विषया सविषया वेति विकल्प्याद्यं निरस्य द्वितीयं निरस्यति—**न वेति** । आद्यद्वितीयं निरस्यति—**नच तद्विषयेति** । नैयायिकमतं निरस्यति—**नापि स्ववृत्तीति** । ननु तन्मते नात्मनो ज्ञानकर्तृत्वं, तदनुकूलकृतिमत एव तत्कर्तृत्वात्, जीवस्य स्वज्ञाने चिकीर्षाकृत्योरसंभवात् । किं त्वीश्वर एव तत्कर्तेति न कर्तृकर्मभावविरोध इत्यपरितोषादाह—**मनस इति** । ननु शब्दादेः स्वविषयज्ञानसहकारिणोऽपि पृथक्प्रामाण्यदर्शनादेकत्र सहकारिणोऽपि विषयान्तरे पृथक्प्रामाण्यं न विरुद्धमित्यनुशयादाह—**आत्मन इति** ॥

---

[1] क्ष्यासंभवाच्च—ख, ग, छ. [2] असिद्धेः—च.

## अनुव्यवसायभङ्गः

अनुव्यवसायस्तु न संभवति ; मनसो बहिर्विषयासंबन्धेनोपायाभावात् । ज्ञानस्यापि पूर्वमननुभूतज्ञानवैशिष्ट्ये तस्मिन्नप्रत्यासत्तित्वात् । एकस्मात्संयो[1]गादनेकज्ञानाभ्युपगमे

---

### दीपनम्

एवमनुभूतित्वहेतोरनुग्राहकतया [2]तस्याप्यनन्यवेद्यत्वं साधयति—**अनुव्यवसाय इति** । तुरवधारणे, न संभवत्येवेत्यर्थः । विशिष्टज्ञाने विशेषणसन्निकर्षः कारणमित्युक्तम् । अनुव्यवसाये च घटो विशेषणम् । मनसश्च तेन सन्निकर्षाभावान्न तत्संभव इत्याह—**मनस इति** । अननुभूतं ज्ञाने वैशिष्ट्यं यस्य विषयस्य तस्मिन्नित्यर्थः । एतच्चान्यत्र [3]ज्ञानस्य प्रत्यासत्तित्वमुपेत्योक्तम् । वस्तुतस्तु तस्य प्रत्यासत्तित्वमेव नेत्युक्तमिति भावः । किं च येनात्ममनःसंयोगेन घटादि[4]ज्ञानमजनि तेनैव तदनुव्यवसायो जायते, संयोगान्तरेण वा । नाद्य इत्याह —**एकस्मादिति** । अत्र चाभ्युपगम इत्यनन्तरं प्रत्यभिज्ञानद्वयमेव स्यादिति शेषः । स्मृत्यनुभवसामग्रीसत्त्वात् । अनुभवसामग्रीमात्रप्राबल्ये तु स्मृतिरेव न स्यात् । [5]तत्तायां च ज्ञानस्य

---

### पूरणी

**एवमनुभूतित्वेति** । तस्यास्वप्रकाशत्वे तद्गोचरज्ञानान्तरासंभवेन तद्व्यवहारानुपपत्तिरूपविपक्षबाधकसूचनायेत्यर्थः । ननु वैशिष्ट्यं तदुभयस्वरूपं, तत्रानुभूतविषयांशे ज्ञानं ज्ञानांशे तु संयुक्तसमवायः प्रत्यासत्ति[6]र्भवेदित्याशङ्क्याह— **वस्तुत इति** । **स्मृतिरेवेति** ।

---

[1] गाद्बहुज्ञाना—छ. [2] तस्या अप्य—क. ग. [3] ज्ञानप्रत्या—च. [4] ज्ञानं जन्यते—च. [5] तत्र च नानुभवसामग्री । ज्ञानस्य—ख. च. [6] भवतीत्या—ख.

ऽनुव्यवसाय[1]धाराया अविरमप्रसङ्गात् ।

दीपनम्

प्रत्यासत्तित्वेऽप्यलौकिकप्रत्यासत्त्यजन्यस्मृतिसामग्री अनुमानादिवल्लौकिकीति[2] प्रबला । एवं युगपदेकविषयानेकज्ञानसामग्रीसत्त्वादपि तत्केन वारणीयम् । स्वभावकल्पनायां च सा यदि कार्यस्य स एवायं स्वभाववादः, कारणस्य सतोऽप्यकिंचित्करत्वात् । अथ मनसस्तद्वात्मन्येवायं स्वभावोऽस्त्विति किं मनसेत्युक्तम् । तथा च न क्वाप्यनुव्यवसायः । स्वभावमप्युपेत्याप्याह—**अनुव्यवसायेति** । यथा संयुक्तसमवाया-द्व्यवसायविषयकं ज्ञानं जनयति एवं [3]तत्तदनुव्यवसायानामपि संयुक्त-समवायेन ज्ञानं मनो जनयेदित्यनुव्यवसायधारैव स्यान्न बाह्यज्ञानान्तरं, न वा सुषुप्तिरित्यर्थः ।

ननु जिज्ञासितं ज्ञानं गृह्यत इति नाजिज्ञासितानुव्यवसायस्य ग्राह्यत्वमिति नोक्तदोष इति चेत्, अनिष्टज्ञाने व्यभिचारेण जिज्ञासाया ज्ञानमात्राहेतुत्वात् । तस्या अपि धर्मिज्ञानाधीनतया अन्योन्या[4]श्रयत्वाच्च । यत्तु सकलज्ञानविषयस्मृत्यनन्तरोत्पन्नव्यवसायस्य स्मृतिरूप[5]धर्मिज्ञानजिज्ञासायां सत्यामनुव्यवसायः, अतो न परस्पराश्रय

पूरणी

समानविषयकानुभवसामग्र्या एव स्मृतिप्रतिबन्धकत्वम् । अन्यथा सर्वदा यत्किंचिदनुभवसामग्र्या आवश्यकत्वेन कदापि स्मृतिर्न स्यादित्यर्थः । समानविषयकानुभवसामग्री च तत्रांशे नास्तीत्याह—**तत्र च नानुभवेति । अलौकिकेति** । अन्यथा उपनीतप्रत्यक्षानुभवसामग्र्याः सदा संभवेन स्मृत्युच्छेदापत्तेरित्यर्थः । **स्वभाववाद इति** ।

[1] धाराविश्रान्ति—**ग. छ.** [2] किकी—**क.** [3] तदनु—**च.** [4] श्रयाच्च—**च.**
[5] धर्मज्ञान—**ख.**

## दीपनम्

इति । तन्न; सामान्यलक्षणाया निरस्तत्वात् । सर्वत्रानुव्यवसाय एवं प्रणालीकल्पने प्रमाणाभावात् , जिज्ञासां विना प्राक्तनसामान्यज्ञानानुपपत्तेश्च । न चादृष्टविरहादेव क्वचिज्ज्ञानविरह इति वाच्यम्, दृष्टसामग्र्यां सत्यां तद्विरहस्यापि कार्यविरहप्रयोजकत्वेऽतिप्रसङ्गात् । किं चैवं ज्ञानानुपलम्भस्य सहकारिवैकल्यप्रयुक्तत्वाशङ्काया दुरुच्छेदतया क्वापि तदभावज्ञानं न स्यात् । यत्तु सत्यामपि सामग्र्यां प्रतिबन्धादेव क्वचिदनुव्यवसायाभाव इति, तन्न; तत्र न तावददृष्टं प्रतिबन्धकं संभवति ; उक्तदोषात् । नापि बाह्यज्ञानसामग्री ; तस्यां सत्यामेवेमं पश्यामीत्यनुभवात् । इच्छादिघटितबाह्यज्ञानधारासामग्र्यां सत्यामपि नृत्यादिज्ञानस्यानुभूयमानत्वाच्च ॥

यत्तु क्वचित्काचित्सामग्री बलवतीति किं तत्प्राबल्यप्रयोजकनिरूपणेनेति , तन्न ; [1]स्वेच्छया प्राबल्यकल्पने व्यासङ्गेऽपि चक्षुरादेरेव तथात्वसंभवेन तदनुपपत्त्या मनःकल्पनानुपपत्तेः । सुखादिज्ञानं च नित्यमित्युक्तम् । ततस्तस्मादेव संयोगादनुव्यवसायोत्पत्तौ नोक्तदोषनिरोध[2] इति भावः ॥

---

## पूरणी

निर्हेतुककार्योत्पत्तिरभ्युपेता स्यादित्यर्थः । **प्राक्तनेति** । सकलज्ञानविषयकानुभवं विना तत्स्मृतेरसंभवात्तस्य च जिज्ञासासाध्यत्वे पूर्वोक्तान्योन्याश्रय इत्यर्थः । **अतिप्रसङ्गादिति** । सत्यप्यन्त्यतन्तु[3]संयोगे कदाचित्कार्यानुदयप्रसङ्गादित्यर्थः । ननु सुखादिसाक्षात्कारानुरोधेन मनस्सिद्धिर्न व्यासङ्गानुपपत्त्येत्यत आह—**सुखादीति** ।

---

[1] स्वेच्छाया—च. [2] निस्तर इति—ख. [3] संयोगादौ—झ.

**संयोगभेदे च विनष्टज्ञानस्य तदनुपपत्तेः ।**

## दीपनम्

नान्त्य इत्याह—**संयोगेति ।** क्रियाविभागन्यायेन चतुर्थक्षणे संयोगान्तरोत्पत्तेः प्रागेव व्यवसायस्य नष्टत्वेन न प्रत्यक्षरूपोऽनुव्यवसायः संभवति, [1]विषयस्य तत्कारणस्याभावात् । न च ज्ञानमपि तावत्कालव्याप्यमेवेति वाच्यम्; द्वितीयक्षणोत्पन्नसुखदुःखसंस्कारादिभिस्तस्यावश्यं विनाशादित्यर्थः ॥

ननु विनश्यदवस्थमनःसंयोगोत्पन्नमेव ज्ञानमनुव्यवसीयत इति चेन्न; तस्यापि ज्ञानत्वज्ञानजनकसंयोगान्यसंयोगसमयस्थित्यनुपपत्तेः । संयोगस्थितिसमयोत्पन्नज्ञानस्याप्यनुभवदर्शनात् । किं च ज्ञानं यदि स्वप्रकाशं न स्यात् तर्ह्यर्थापरो[2]क्ष्यानुपपत्तेरायातमान्ध्यमशेषस्य जगतः । प्रकाशमानसंवित्तादात्म्यं ह्यपरोक्षत्वमित्युक्तम् । किं च गेहे घटो दृष्टो

## पूरणी

**विनश्यदवस्थेति ।** संयोगान्तरजनकक्रियातो विभागदशायां पूर्वमनस्संयोगोत्पन्नज्ञानस्य तत्तृतीयक्षणजातसंयोगात्तदा [3]विनश्यदवस्थया विद्यमानस्य तदुत्तरक्षणे अनुव्यवसायासंभवादित्यर्थः । ननु ज्ञानत्वनिर्विकल्पकमन्तरापि विषयांशे सविकल्पक, ज्ञानांशे निर्विकल्पकात्मकनरसिंहाकारानुव्यवसायस्य संयोगान्तरविरहेऽप्युपपत्तेरित्यनुशयादाह—**संयोगेति ।** मनःसंयोगस्यातीन्द्रियतया तत्स्थितिसमयोत्पन्नत्वं न निश्चेतुं शक्यमिति तादृशज्ञानस्यानुव्यवसायासिद्धिरित्यस्वरसादाह—**किं चेति ।** नन्विदं त्वन्मतं न त्वस्मन्मतमित्याशङ्क्य विधान्तरेण जगदान्ध्यमाह—**किंच गेह इति ।** ननु घटादौ

[1] तद्विषयस्य–ख. [2] क्षत्वानु. [3] विनाश्यमानस्य तदु–ख.

## दीपनम्

न वेति ज्ञानसंशयदशायां न दृष्ट इति व्यतिरेकनिश्चयदशायां च तत्र घटसंशयो न निवर्तेत इति सर्वजनसिद्धम्। तत्र दृष्ट इति ज्ञाननिश्चयदशायां तु संशयो निवर्तेत इति च सर्वसंप्रतिपन्नम्। ततश्चान्वयव्यतिरेकाभ्यां यत्संशयव्यतिरेकनिश्चयाविति न्यायेन च ज्ञानसत्तानिश्चयोऽर्थसंशयनिवृत्तौ कारणमिति नाज्ञायमानाज्ज्ञानादर्थसंशयनिवृत्तिरूपः प्रकाशः संभवति। तज्ज्ञानं च यदि ज्ञानान्तरात्तर्ह्यनवस्थाप्रसङ्गादायातमान्ध्यमशेषस्य। न च संशयदशायां संदिह्यमानज्ञानाभावादेव न तत्संशयनिवृत्तिः, न तु तत्प्रकाशाभावादिति वाच्यम्; घटादेर्यावत्सत्त्वं चैतन्यसंबन्धानपायात्॥

अपि चागृह्यमाणप्रामाण्यं ज्ञानं[1] नार्थसंशयनिवर्तकमित्यनभ्यासदशायामवगतम्, तत्र संशयनिवृत्तौ तज्ज्ञानेऽर्थवैशिष्ट्यघटितप्रामाण्यसंशयायोगात्। अतोऽन्वयव्यतिरेकाभ्यां लाघवात्प्रामाण्यनिश्चयस्यार्थसंशयनिवृत्तौ हेतुत्वं [2]नाप्रामाण्यशङ्काशून्यज्ञानस्येत्यनुव्यवसायेन[3] तदयोगात्स्वयंप्रकाश एवायमनुभवः। स चाजन्य एव, जन्यस्य तत्कल्पने प्रमाणाभावात्। अनुभूयमाने घटे कस्यापि कदाचिदिदानीं मया घटोऽनुभूयते न वेति संशयादर्शनादपि ज्ञानं स्वप्रकाशम्। कोटिस्मरणादिसंशयसामग्र्यां सत्यामपि ग्राह्यनिश्चयादेव [4]तदभावस्य वक्तव्यत्वादिति भावः॥

## पूरणी

विद्यमानोऽपि चैतन्यसंबन्धो न प्रयोजकः; वृत्तेरेव व्यवहाराङ्गत्वादित्यपरितोषादाह—**अपि चेति। तदयोगादिति।** अनुव्यवसायस्य

[1] प्रामाण्यज्ञानं. [2] न स्वप्रामाण्य. [3] व्यवसाये. [4] तदनुदयस्य.

**धाराकालीनात्मनि तदसंभवाच्च । तस्मात्स्वप्रकाशचैतन्यानन्दात्मकः कर्त्रादिविलक्षण आत्मेति सिद्धम् ॥**

## जीवपरभेदस्यौपाधिकत्वम्

**स चात्मा परमस्मान्न भिद्यत इति वक्ष्यते । भेदस्तू-**

---

### दीपनम्

इतोऽप्यात्मा स्वप्रकाश इत्याह—**धारेति ।** युगपद्ज्ञानद्वयासंभवेन घटज्ञानधाराकाले आत्मनि ज्ञानासंभवात्तदवश्यंभावस्य चोक्तत्वादिति भावः । त्वंपदलक्ष्यशोधितजीवस्वरूपनिरूपणमुपसंहरति—**तस्मादिति ॥**

एवं ब्रह्मादिपुत्तिकान्तप्राणिधीसाक्षिचैतन्यमेकं तदेवात्मा स्वप्रकाशचैतन्यं जीवस्येत्युक्तम् । नन्विदमनुपपन्नम्, जीवस्य चिद्रूपात्परस्माद्भेदस्य प्रत्यक्षसिद्धत्वात् । ज्ञानस्य च प्रामाण्यमौत्सर्गिकम् । न च भेदज्ञानं रजतज्ञानवद्बाध्यत इत्याशङ्क्येदानीं जीवपरविभागस्यौपाधिकत्वं वक्तुमनन्तरविचारस्योद्देश्यमर्थमाह—**स चेति ।** **वक्ष्यत इति ।** द्वितीयपरिच्छेदे समन्वयसूत्रतात्पर्यनिरूपणे वाक्यार्थविचारावसरे "तत्त्वमसि" इत्यादिश्रुतेर्वर्णितजीवस्वरूपं परमात्माभिन्नमिति वक्ष्यत इत्यर्थः । भेदानुभवस्य तर्हि का गतिरित्यत आह—**भेदस्त्विति ।**

---

### पूरणी

प्रामाण्यनिश्चायकत्वेऽपि भिन्नविशेष्यकत्वेन ततः संशयनिवृत्त्ययोगात्तदनन्तरमर्थविशेष्यकज्ञानान्तरकल्पनायां च मानाभावादिति भावः । वस्तुतो मनसो बहिरस्वातन्त्र्येण बाह्यार्थघटितप्रामाण्यस्य मानसानुव्यवसायेन ग्रहासंभवादित्यर्थः । **तदेवात्मेति ।** जीवस्य स्वरूपमित्यर्थः । **चिद्रूपादिति ।** यद्यपि चिद्रूपब्रह्माभिन्नस्यापि जीवस्य वर्णितरीत्या स्वप्रकाशत्वं नानुपपन्नम् । तथाप्युक्तसंविदैक्यमयुक्तम्; ब्रह्मसंविदो भिन्नत्वादिति चोद्यार्थः । **अनन्तरविचारस्येति ।** भेदौपाधिकत्व-

**पाधित[1] एव। नियमेनोपाधिप्रतिसंधान एव तत्प्रतीतेः। तादृशस्य च भेदस्य घटाकाशादिभेदस्येवौपाधिकत्वात्॥**

### दीपनम्

नन्वन्यस्मिन् प्रतीयमान एवान्यत्र धर्मो यदि प्रतीयेत स तत्रौपाधिक इति वक्तुं शक्यं, यथा लाक्षासन्निहिते स्फटिके लौहित्यम्, अन्यादृशं तु स्वाभाविकमेव यथा लाक्षादौ तदेव। न च नाहं [2]ब्रह्मेत्यतिरिक्तः कश्चिद्भेदधर्मी प्रतीयत इति भेदस्तन्निष्ठ एवेत्याशङ्क्याहमनुभवस्य चिदचिदुभयविषयत्वं प्रागुपपादितं स्मरेत्याशङ्क्याह — **नियमेनेति**। तथा च प्रमाणसिद्धाभेदस्योपाधिप्रतीतिदशायामेव प्रतीयमानो भेद औपाधिक एवेत्याह—**तादृशस्य चेति**। नन्वौपाधिकोऽपि जीवब्रह्म-भेदो घटाकाशादिभेदवत्सत्य एवास्त्वित्येकदेशिशङ्कां चकारेण निवर्तयति। घटाकाशभेदस्य परमार्थत्वे तत्राकाशबुद्धेः स एवायमिति

### पूरणी

विचारस्य [3]शोधितजीवस्वरूपनिरूपणस्य वा वास्तवाभेदसिद्धिं प्रयोजनं दर्शयतीत्यर्थः। नन्वहंकारभेदस्यात्मौपाधिकत्वमस्त्विति वैपरीत्यं निरस्यति—**प्रमाणसिद्धेति**॥

ननु जीवब्रह्मभेदस्य कथमन्तःकरणोपाधिकत्वं, अहमनुभवस्यान्तःकरणालम्बनत्वासिद्धेः। नच तस्मिन्प्रतीयमाने [4]तद्भेदप्रत्ययमात्रेण तस्य तदुपाधिकत्वम्; तथा सति अहमज्ञ इत्यनुभूयमानाज्ञानादेरप्यन्तःकरणोपाधिकत्वापातात्। नच तत्त्वमस्यादिवाक्यैरभेदस्य सिद्धत्वाद्भेदस्य तदुपाधिकत्वं कल्प्यत इति वाच्यम्; भेदग्राहिप्रत्यक्षप्रमाणविरोधेनाभेदश्रुतेस्तथार्थावधारणासंभवात्, तदनुरोधेनोपासनाविधि-

[1] नूपाधिकृतः–क. [2] ब्रह्मेत्यत्रात्मातिरिक्तः–ख. ग. [3] उपपादित–ङ. [4] तद्भेदस्य प्र–ट.

## पूर्णी

परत्वस्यैव कल्पयितुं युक्तत्वाच्च। अन्यथा भेदस्यौपाधिकत्वे तद्ग्राहकप्रमाणविरोधाभावाच्छ्रुतेरभेदार्थनिर्णयः, तन्निर्णये सति भेदस्यौपाधिकत्वकल्पनेत्यन्योन्याश्रयात् ॥

ननु भेदप्रत्यक्षासंभवः; तत्प्रतियोगिब्रह्मणोऽयोग्यत्वेन तद्भेदस्य प्रत्यक्षायोग्यत्वात्। नच प्रतियोगियोग्यत्वमन्योन्याभावयोग्यतायां न तन्त्रम्, स्तम्भपिशाचान्योन्याभावादेः प्रत्यक्षगम्यत्वादिति वाच्यम्; एवमपि योग्यानुपलब्धिविरहात्तत्प्रत्यक्षासंभवः, तर्कितप्रतियोगिसत्त्वविरोध्यनुपलम्भस्य तद्ग्राहकत्वात्। न हि पिशाचादिवद्ब्रह्मत्वं जातिः, येन तस्य जीवनिष्ठत्वेन आत्मत्ववदुपलम्भः स्यादित्यापादनं भवेत्। नापि सर्वशक्तित्वादिब्रह्मोपाधिर्योग्यः। अतो न ब्रह्मभेदः प्रत्यक्ष इति चेन्न; सर्वज्ञत्वोपाधेर्योग्यतया तदुपलम्भापादनसंभवात्। जीवस्य सर्वविषयकज्ञानवत्त्वे घटादिज्ञानवदुपलम्भप्रसङ्गात् ॥

ननु परमते ज्ञानस्यावश्यवेद्यत्वनियमाभावात्सर्वविषयज्ञानोपलम्भापादनमसंभवीति चेन्न; सत्यपि मनःप्रणिधानादौ कदाचिदपि तदनुपलम्भसंभवेन कदाचित् तदापादनसंभवात्। अन्यथा घटादेर्यावत्सत्त्वमुपलम्भानियमेन तदभावस्याप्यप्रत्यक्षत्वप्रसङ्गात्। अशोकत्वोपाधेर्योग्यतया दुःखदशायां तदुपल[1]म्भापादनसंभवेन तदवच्छिन्नब्रह्मभेदस्य प्रत्यक्षत्वे बाधकाभावात्। आकाशत्वस्य घटवृत्तित्वे अनेकव्यक्तिकत्वेन जातित्वापत्त्या तत्र तदुपलम्भापादनवद्ब्रह्मत्वस्यापि जीवात्मवृत्तित्वे जातित्वप्रसङ्गेन तत्संभवाच्च। अन्यथा तवापि नाहं ब्रह्मेति सर्वानुभवसिद्धभेदप्रत्ययस्य का गतिः। अभावस्यानुपलब्धिप्रमाणगम्यत्वपक्षेऽपि योग्यानुपलब्धेरेवातीन्द्रियाभावाद्यननुभवानुरोधेन प्रमाणतया वाच्यत्वात्।

[1] म्भत्वापादन--ट.

## पूरणी

न चास्मन्मते भेदप्रत्ययो भ्रमः, स योग्यानुपलब्धिमन्तरापीति वाच्यम्; घटानुपलम्भदशायामेव घटवति घटाभावभ्रमदर्शनेन प्रतियोगिसमानाधिकरणयोग्यानुपलम्भस्यैवाभावभ्रमे हेतुत्वात्। न चास्मन्मते भ्रमोऽविद्यावृत्तिविशेषः, तस्य च न करणान्तरापेक्षा, दोषमात्रजन्यत्वादिति वाच्यम्; एवमप्युक्तयोग्यानुपलम्भविशेषस्यैव तत्र दोषतया वाच्यत्वात्। आगन्तुकभ्रमेऽविद्यामात्रस्य दोषत्वासंभवात्। नच साक्षिमात्रवेद्यो भेदः; सर्वज्ञत्वादिगुणविशिष्टब्रह्मणा नित्यपरोक्षत्वेन साक्षिणस्तदनवभासतया तद्भेदस्य तथात्वायोगात्॥

यत्तु भेदो न स्वरूपमात्रम्, तस्य प्रतियोगिनिरूप्यत्वानुपपत्तेः। नाप्यन्योन्याभावः; तस्य प्रतियोग्यनिरूपणात्। न तावद्घटादिस्तत्प्रतियोगी; संसर्गाभावसांकर्यापातात्। प्रतियोगिभेदस्याभावभेदप्रयोजकत्वात्। नापि घटत्वादिः; पटो घटो नेति घटप्रतियोगितयानुभूयमानस्य तदन्यप्रतियोगिकत्वानुपपत्तेः। नापि वैधर्म्यं भेदः; तद्यदि परस्परात्यन्ताभावसमानाधिकरणवत्त्वम्, तदा जीवस्य स्वतो भेदप्रसङ्गः। सुखादेरव्याप्यवृत्तितया स्वस्मिंस्तदत्यन्ताभावसत्त्वात्॥

किं चाश्रयानिरूपणादपि भेदपदार्थो दुर्निरूपः। न तावद्धर्मिमात्रं तदाश्रयः; स्वस्मिन् स्वभेदप्रसङ्गात्। नापि भिन्नधर्मिणस्तदाश्रयत्वम्; भेदान्तराभ्युपगमेऽनवस्थापातात्। तद्भेदस्यैव तदाश्रयतावच्छेदकत्वे चात्माश्रयात्। तस्माद्भेदस्य स्वरूपमेवाप्रामाणिकमिति, तच्चिन्त्यम्; सर्वजनसिद्धभेदानुभवस्यापह्नवायोगेन तदालम्बनस्य कस्याचिद्वाच्यत्वात्। न च मायावादिनां दुर्निरूपत्वं भूषणमेव, अतो न तत्स्वरूपनिरूपणावश्यकतेति वाच्यम्; दुर्निरूपत्वं हि सद्विल-

पूरणी

क्षणत्वं न तु पदार्थस्वरूपासत्त्वम्, असत्ख्यात्यनभ्युपगमात् स्वाभिप्रेतसाक्षिव्यावृत्त्यादिस्वरूपनिरूपणवैयर्थ्यापाताच्च। तस्मादन्योन्याभावरूपो भावात्मकविभागरूपो वा कश्चिदनिर्वचनीयधर्मविशेषो भेदप्रतीत्यालम्बनतया स्वीकर्तव्यः। सजातीयाभावभेद एव प्रतियोगिभेदस्य प्रयोजकत्वेन [1] विरूपात्यन्तान्योन्याभावयोः प्रागभावात्यन्ताभाववत्प्रतियोग्यैक्येऽपि भेदसंभवात्। एवं च भेदानुभवालम्बनस्य कस्यचिदावश्यकत्वे तस्य मिथ्यात्ववर्णनमभेदप्रमाणसद्भावाधीनम्। भेदप्रत्यक्षाविरोधे च तदभेदार्थश्रुतेरप्रसारेण कथं तद्भेदस्यौपाधिकत्वम्॥

किं च जीवो ब्रह्मणो भिद्यते, तद्विरुद्धधर्मवत्त्वात्, घटवदित्यनुमानमपि तत्र मानम्। अपि च "भिन्नोऽचिन्त्यः परमो जीवसङ्घात्" इति श्रुतिरपि स्पष्टं तद्भेदं प्रतिपादयति। तस्माज्जीवब्रह्मस्वरूपवत्तद्भेदोऽपि प्रमाणगोचरत्वात्सत्य एवेति चेत्, न तावत्तद्भेदे प्रत्यक्षं मानम्, प्रतीयमानस्य तस्यान्तःकरणोपाधिकत्वात्। अन्तःकरणस्याहमनुभवालम्बनत्वेन दर्शितत्वात्। सुषुप्तावन्तःकरणविरहे सति तद्विरहादर्शनात्। न च तदा प्रतियोगिब्रह्मोपस्थितिविरहादेव तद्विरहो न त्वन्तःकरणविरहादिति वाच्यम्; "सता सोम्य तदा सम्पन्नो भवति" इति श्रुत्या तदवस्थायां ब्रह्मस्वरूपानुसन्धानस्य दर्शितत्वात्॥

किं च "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्यादिश्रुत्या तद्भेदनिषेधपूर्वकमभेदप्रतिपादनात् प्रतीयमानभेदस्यान्तःकरणोपाधिकत्वं कल्प्यते। न च भेदप्रत्यक्षविरोधे श्रुतीनामभेदार्थप्रत्यायकत्वासंभवः; चन्द्रादिभेदवत्कल्पितभेदविषयत्वेनान्यथासिद्धिशङ्काकलङ्कितस्य श्रुतिबाधाक्षमत्वात्। अयोग्यतासंशयस्य च शाब्दबोधानुगुणत्वात्।

[1] विलक्षणरूपा–म.

## पूरणी

न च भेदश्रुतिविरोधाच्चतोऽभेदार्थप्रतीत्यसंभवः ; तस्या अपि "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्" इत्यादिश्रुतेः कल्पितसूर्यादिभेदविषयत्वदर्शनेन कल्पितजीवभेदविषयत्वेनान्यथासिद्धिशङ्का[1]कलङ्कनात् । भेदस्य प्रत्यक्षप्रमाणसिद्धत्वेन तत्र श्रुतेस्तात्पर्यानुपपत्तेश्च । न च प्रत्यक्षसिद्धार्थस्याप्यसत्यत्वशङ्कानिवृत्त्यर्थं श्रुत्यानुवाद इति वाच्यम् ; श्रुत्यनुवादमात्रेण सत्यत्वे "अथ रथान् रथयोगान्" इत्यादि[2]स्वप्नकाण्डप्रपञ्चितप्रपञ्चस्यापि सत्यत्वापातात् ॥

किं च न तावत्प्रतीयमानभेदस्य मानान्तरेणासत्यत्वशङ्का, अभेदबोधकमानान्तराभावात् । न च श्रुत्या तच्छङ्का ; तथा सति भेदश्रुतितिरस्कारेणाभेदश्रुत्या प्रथमं तद्बोधावश्यक[3]त्वेन न तद्विरुद्धार्थप्रमितिः । प्रत्युत [4]पूर्वसंभावितश्रुत्यनुसारेण भेदानुवादद्वारा तत्प्रतिपाद्य तन्निषेध एव तात्पर्यकल्पनं युक्तम् । न चाभेदश्रुतावन्यथासिद्धिशङ्का संभवति, येन ततोऽप्यभेदस्य निर्णयो न स्यात् । भेदश्रुतेर्वा प्रथममर्थनिर्णयः स्यात् । न चाभेदश्रुतेरपि तन्निषेधपरभेदश्रुतिशेषत्वमास्तामिति वाच्यम् ; जीवब्रह्माभेदस्य मानान्तराप्रसक्तत्वेन तन्निषेधवैयर्थ्यात्, श्रुत्येकप्रसक्तस्य निषेधायोगात् । न च षोडशिग्रहणाग्रहणवद्भेदाभेदयोः श्रुतिद्वयप्रामाण्यबलेन विकल्पोऽस्त्विति वाच्यम् ; समानसत्ताकभेदाभेदयोरेकत्र विरोधात् ; षोडशिग्रहणादौ त्वनुष्ठाने विरोधः ; तस्य च प्रयोग[5]भेदेनापनयो युक्तः । न चात्रापि संसारदशायां भेदः मुक्तिदशायामभेदोऽस्त्विति वाच्यम् ; सत्यस्य भेदस्य ज्ञाननिवर्त्य-

---

[1] कलङ्कात्–झ. [2] स्वप्नकार्यप्रपञ्चस्यापि–झ. [3] तया न तच्छब्दार्थ–ट.

[4] पूर्वभावितच्छ्रुत्यनुरोधेन–ट. [5] वादपन–झ.

पूरणी

त्वायोगात् । भेददशायामभिन्नब्रह्मसाक्षात्कारासंभवाच्च । प्रत्यक्षे विषयस्य हेतुत्वात् । अन्यथा नष्टपुत्रादिसाक्षात्कारवदयथार्थत्वापातात् । विरोध्यभेदसाक्षात्कारमन्तरा भेदनिवृत्त्यनुपपत्तेः ॥

अपि च क्वापि भेदश्रुतौ नाभेदश्रुतिवन्नञ् श्रूयते, येन तच्छ्रुतीनामभेदनिषधपरतया तच्छेषत्वमभेदश्रुतीनां शङ्क्येत । न च भेद एवाभेदनिषेधात्मा ; स्वसमानसत्ताककल्पिताभेदनिषेधार्थत्वेनापि तदुपपत्त्या वास्तवाभेदनिवृत्त्यर्थत्वालाभात् । भेदस्य वस्तुतोऽभेदविरहात्मकत्वेऽपि न भेदपदमभेदनिषेधार्थकम् । तथा सति घटपदादेरप्यघटव्यावृत्त्यर्थत्वप्रसङ्गात् । घटः पटाद्भिन्न इत्यादौ घटः पटाभेदरहित इत्यप्रतीतेश्च । न चाभेदो न भेदाभावः, किं तु स्वरूपं, तदभावश्च तदन्योन्याभावात्मकस्तद्भेदः, स च भेदशब्दार्थः, प्रतीयते च तथेति वाच्यम् ; तथा सति "नेह नानास्ति किंचन" "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतौ भेदाभावरूपाभेदस्याप्रतिपादनेन भेदपदस्य तन्निषेधार्थत्वाभावे अभेदश्रुतीनां तच्छेषतयान्वयानुपपत्तेः । न च "नान्योऽतोऽस्ति द्रष्टा" इति श्रुतिरीश्वरान्तरनिषेधपरेति वाच्यम् ; ईश्वरभेदस्याप्रसक्तत्वात् । अत इति लोकप्रसिद्धात्मावधिकभेदनिषेधस्यैव श्रूयमाणत्वात् । मानान्तरप्रसिद्धभेदनिषेधपरत्वे संभवति कथंचिदाभासप्रसक्तभेदनिषेधपरत्वकल्पनायोगाच्च ॥

वस्तुतस्तु श्रोत्रन्तरादिनिषेधोऽत्र वाक्यार्थः । श्रोतृत्वादिकं च तत्तदिन्द्रियजन्यज्ञानवत्त्वं न तु ज्ञानमात्रम् ; अनुमानादिना शब्दादिज्ञानवति श्रोत्रादिशब्दाप्रयोगात् । तच्च श्रोतृत्वादि जीवधर्मः, तस्यैवेन्द्रियाभिमानित्वात् । तथा चेदं वाक्यमीश्वरावधिकजीवभेदनिषेधपरमेव । न चातःशब्देन तत्परामर्शानुपपत्तिः ; "एष त आत्मा-

## पूरणी

न्तर्याम्यमृत" इत्यादावन्तर्यामीश्वरस्यापि प्रकृतत्वेन तदुपपत्तेः। न चैवं जीवान्तरनिषेधकमेतत्स्यात्, अतःशब्देन जीवपरामर्शसंभवात्, द्रष्ट्रादिपदैरपि तत्परामर्शेन तद्भेदनिषेधस्य स्फुटत्वादिति वाच्यम्; जीवभेदनिषेधस्यापुरुषार्थत्वात्। ईश्वरभेदनिषेधस्य ब्रह्मभावापत्ति-फलोपयोगितया सार्थकत्वात्। जीवाभेदस्यापि ब्रह्माभेदमन्तरेणासंभवाच्च। भिन्नस्वभावधर्माणां जीवानां ब्रह्मप्रतिबिम्बतामन्तरेणाभेदायोगादित्य-लमतिकथया ॥

अपि च भेदप्रत्यक्षं न निर्विशेषब्रह्मभेदमालम्बते; अहमनुभवे प्रकाशमानचैतन्यस्यैव निर्विशेषब्रह्मतया तस्मिंस्तद्भेदग्रहासंभवात्, किं तु सार्वज्ञादिगुणविशिष्टब्रह्मभेदम्। तत्त्वमस्यादिश्रुतयस्तु निर्वि-शेषंब्रह्माभेदं बोधयन्तीति क्व तद्विरोधवार्ता। अत एव भेदश्रुतयो बिम्बप्रतिबिम्बभावापन्नजीवब्रह्मभेदबोधका इति न तद्विरोधशङ्कापि। उक्तानुमानमपि कल्पितभेदविषयत्वेन सिद्धसाधनतादुष्टम्, पार-मार्थिकभेदस्याप्रसिद्धतया तत्साधनासंभवात्। यत्त्वभेदश्रुतय उपासना-परा इति, तन्न; तत्रोपासनादिशब्दाश्रवणात् श्रुतहान्यश्रुतकल्पना-पाताच्च ॥

## सत्यंभिदेति श्रुत्यर्थः

यदपि "सत्यं भिदा सत्यं भिदा सत्यं भिदा" इति श्रुतेर्भेदस्य सत्यत्वमिति नैयायिकाभिमानिवर्णनम्, तन्न मनोरमम्; तत्सद्भावे मानाभावात्। तादृशश्रुतिसत्त्वेऽपि तस्याः सत्यतया प्रतीतभेदानुवादमात्र-त्वात्। भेदग्राहकप्रत्यक्षादिना भेदस्य सत्यतयैवावधारितत्वेन तत्र तात्पर्यकल्पनायोगात्। अत एव भेदश्रुत्य[1]न्तरवदस्या अपि तन्निषेध-

[1] त्यन्तरस्यापि—ङ.

### दीपनम्

प्रत्ययस्य चाप्रामाण्यप्रसङ्गः। भेदाभेद (इति) वचनस्य च प्रागुक्तरीत्या कल्पितभेदविषयकत्वात् सोपाधिकानां च यावदुपाधिसत्त्वं विद्यमानत्वनियमात् तत्प्रतीतेः शुक्तिरजतादिप्रतीतिवैलक्षण्योपपत्तेश्च। एतावता सत्यत्वाभिलापश्चेत्काममस्त्विति भावः ॥

---

### पूरणी

प्रमितिपरत्वमेव। वस्तुतस्तु सत्यपदं पञ्चभूतात्मकप्रपञ्चपरम्, "सच्च त्यच्चाभवत्" इति श्रुतेः। भिद्यते जीवेशावनयेति व्युत्पत्त्या भिदापदं मायार्थकम्। तथा च प्रपञ्चस्य मायात्मकतया कल्पितत्वमेव दर्शयतीति न त्वदभिमतसत्यत्वसिद्धिः। नच योगाद्रूढेर्बलवत्तया नोक्तार्थसंभव इति वाच्यम्; प्रसिद्धभेदपरत्वे वाक्यानर्थक्यप्रसङ्गेन योगाश्रयणस्य युक्तत्वात्। स्त्रीलिङ्गनिर्देशस्वारस्येन पुराणेतिहासादिषु स्त्रीत्वेन प्रसिद्धमायाशक्तिपरत्वस्य योगेनापि न्याय्यत्वाच्च ॥

किं च "सच्च त्यच्चाभवत्", "उपाधिना क्रियते भेदरूप" इत्यादिसन्निहितवाक्यावगतयोगस्यैवाश्रयणं युक्तम्। "आज्यैः स्तुवत" इत्यत्र "यदाजिमीयुः" इत्याजियानार्थवादावगतयोगाश्रयणात्। न चात्र तत्सन्निधानमसिद्धम्; वेदान्तभागैकवाक्यतायाः कथंचित्सर्वैरभ्युपगमात्। न चैवं "सत्यं ज्ञानमनन्तं" इत्यादावपि सन्निहितयोगाश्रयणप्रसङ्गः; "तत्सृष्ट्वा तदेवानुप्राविशत्" इति वाक्यशेषेण ब्रह्मणः प्रपञ्चात्मकत्वबोधेन पुनस्त[1]त्पदेन तदुपादानवैयर्थ्यादिति तत्त्वम्। यद्यपि जीवब्रह्मभेदः अविद्योपाधिको नाहंकारनिबन्धनः; अनादिभेदस्य तदयोगादिति वक्ष्यमाणत्वात्, तथापि नाहं ब्रह्मेति प्रतीयमानभेदेऽहंकारस्योपाधित्वमिति तथोक्तमिति मन्तव्यम्। **शुक्तिरजतादीति।** ननु किं घटाकाशादिभेदो व्यावहारिकः प्रातीतिको वा।

---

[1] तद्दर्शेन तदुपपादनवै—ङ्क.

## जीवानां भेदस्यौपाधिकत्वम्

**एवं जीवानामपि परस्परभेद औपाधिक एव। एकस्येवेतरेषामपि प्रविष्टब्रह्मस्वभावत्वात् ॥**

---

### दीपनम्

अत एव जीवानामपि परस्परं भेदो न स्वाभाविक इत्याह—**एवमिति**। अथ वा जीवानां परस्परं विलक्षणत्वात् कथं ब्रह्माभेद इत्याशङ्कयासिद्धो हेतुरित्याह—**एवमिति**। भेदस्यौपाधिकतासिद्ध्यर्थमभेदमुपपादयति—**एकस्येवेति**। तथा च प्रविष्टस्य प्रतिबिम्बस्य जीवस्य बिम्बभूतब्रह्माभिन्नत्वेन तदभिन्नाभिन्नस्य तद्भेदानुपपत्तेर्भेदप्रतीतिर्भ्रान्तिरित्यर्थः। एवं च देवदत्तात्मा मैत्रात्मनः स्वतो न भिद्यते, तदभिन्नाभिन्नत्वात्, यदेवं तदेवं, यथैकघटाकशात् घटान्तराकाशः, ब्रह्माभिन्नत्वाद्ब्रह्मत्ववदिति वानुमानं सूचितम्। न चासिद्धिः; "तत्त्वमस्या"दिश्रुतेः, स्वाभाविकभेदे प्रमाणाभावाच्च तत्सिद्धेः। न चैवं सुखादिवैलक्षण्यानुपपत्तिः; एकस्मिन्नप्यवच्छेदकभेदेन संयोगतदभाववद्युगपदाकाशे तारमन्दादिशब्दवच्च तदुपपत्तेः सुखित्वदुःखित्वादेरहङ्कार-

---

### पूरणी

अद्येऽभेदस्यापि व्यावहारिकतया तयोर्विरोधासंभवः। द्वितीये शुक्तिरजतादितुल्यतेति चेन्न; व्यावहारिकस्यौपाधिकस्वाभाविकत्वाभ्यां सत्ताद्वैविध्येन तदविरोधादिति भावः ॥

**न स्वाभाविक इति**। अविद्यैक्यात्तत्प्रतिबिम्बो जीवोऽप्येकः, तद्भेदस्त्वहंकारोपाधिक इत्यर्थः। इदानीं मिश्रमतानुसारेणापि योजयति—**अथ वेति**। एवं च सामान्यतो जीवभेदस्य मतद्वयसाधारण्येनौपाधि-

## दीपनम्

धर्मत्वाच्च। न चैवं देवदत्तस्य ममास्मिञ्छरीरे सुखमन्यत्र दुःखमित्याद्यनुसन्धानप्रसङ्गः; अग्रे तस्य निरसिष्यमाणत्वात्॥

## जीवाणुत्वनिराकरणम्

किं च न तावदयं जीवोऽणुः; अप्रत्यक्षत्वप्रसङ्गात्, तद्धर्मज्ञानसुखादीनां शरीरव्यापित्वानुपपत्तेः, युगपद्विच्छिन्नदेशद्वये सुखदुःखाद्यनुपलम्भप्रसङ्गाच्च। नापि सर्वगतः; तत्र न तावत्प्रत्यक्षं प्रमाणम्; अहमिहैवास्मीति परिच्छिन्नस्यैव तद्विषयत्वात्। न चायं भ्रमः, दुःखादिपरिणामिन इतोऽधिकपरिमाणे प्रमाणाभावेन तस्य यथार्थत्वात्। न च सर्वदा अस्पर्शद्रव्यत्वेन तदनुमानम्; मनसि

---

## पूरणी

कत्वस्य "एवं जीवानां" इति मूलग्रन्थे प्रदर्शनं, 'नन्वि'त्यादिना प्रदर्शिताविद्यकजीवभेदाक्षेपेण तत्समर्थनमिति भावः। अहंकारोपाधिकजीवभेदपक्षे दोषमाशङ्क्याह— **न चैवमिति**।

जीवस्याविद्याप्रतिबिम्बतां वक्तुं मतान्तरं निराचष्टे—**किं चेति**। ननु त्रसरेणुवद्योग्याणुत्वस्वीकारान्नायं दोष इत्यरुचेराह—**तद्धर्मेति**। गुणस्य गुणिनं विना अन्यत्रागमनादित्यर्थः। नच प्रदीपप्रभावद्वायूपनीतपुष्पगन्धवच्च तदुपपत्तिरिति वाच्यम्; प्रभाया रूपवत्त्वेन द्रव्यतया गुणत्वासिद्धेः, पुष्पभागानामप्यागमनकल्पनाच्च। नच सुखमपि द्रव्यमेवेति वाच्यम्; एवमपि कार्यद्रव्यस्य स्वोपादानेन विनान्यत्र गमनायोगेन शरीरव्यापितानुपपत्तेः। नच प्रभादृष्टान्तेन गमनम्; प्रभाया दीपादिसंसर्गिद्रव्यत्वेन तदुपादेयत्वासिद्धेः। अल्पारब्धद्रव्यस्य महत्त्वानुपपत्तेश्च। अपि चैकस्यात्मनो द्रव्यारम्भकत्वानुपपत्तिः। नच संयुक्ता-

## पूरणी

त्ममनसोस्तदारम्भकत्वम्; तथा सति मनसोऽपि सुखाद्याश्रयत्वाभ्युपगमापातात्। नचैकस्यैवात्मनोऽविद्यावत्सुखादिरूपेण परिणाम इति वाच्यम्; तथा सत्यनित्यत्वापातात् निरंशस्याणोर्महत्परिणामायोगाच्च। नचाणुप्रियङ्गुबीजादेर्महदङ्कुरादिपरिणामो दृष्ट इति वाच्यम्; तत्रापि बीजतुल्यरूपेण परिणताङ्कुरादेरेव समयभेदेन वर्धनात्। अन्यथा अनन्तरसमय एव महदङ्कुरोपलम्भप्रसङ्गात्। नच तद्वदेव सुखादिवृद्धिरस्त्विति वाच्यम्; उत्पत्तिसमय एव शरीरव्यापित्वानुभवात्। नच व्यापित्वानुभवो भ्रमः; बाधकाभावात्। सुखादेराशुविनाशित्वेन कालभेदेन वृद्धिकल्पनायोगाच्च॥

अपि च न बीजादेरङ्कुरात्मना परिणामः, वर्ष[1]वायुभूतादिना तन्नाशात्। अपि तु वैशेषिकादिमते परमाण्वादिक्रमेणाङ्कुरोत्पत्तिः। अस्मन्मते तूपहतबीजावच्छिन्न[2]मायाया अङ्कुरात्मना [3]परिणाम इति न तन्निदर्शनं युक्तम्। यत्तु—

"वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते"॥

इत्यादिश्रुत्या आत्मनोऽणुत्वसिद्धौ तदन्यथानुपपत्त्या सुखादेः कथंचित्स्वाश्रयादन्यत्र गमनकल्पनमिति, तच्चिन्त्यम्; तत्राणुत्ववाचकपदाभावात्। नच वालाग्रायुतभागोपमितत्वं अणुत्वं विना न संभवतीति तत्सिद्धिरिति वाच्यम्; वैशेषिकादिमतसिद्धाणोस्तद्भागोपमानाभावेन ततोऽप्यपकृष्टाणुस्वीकारे तस्य व्यवहाराक्षमत्वापातात्, "अङ्गुष्ठमात्रो रवितुल्यरूपः" इति पूर्वश्रुतिविरोधात्, "आराग्रमात्रो ह्यवरोऽपि

[1] यूपघातादिना—ट. [2] माया. [3] परिणमते—झ.

## पूरणी

दृष्टः" इत्याद्याम्नातश्रुतिविरोधाच्च तच्छ्रुतेर्मुख्यार्थसंभवात्। नापि "एषोऽणुरात्मा चेतसा वेदितव्य" इति श्रुत्या तदणुत्वसिद्धिः; तस्याः परात्मपरत्वात्, अहमनुभवे प्रकाशमानस्य जीवस्य वेदितव्यत्वनिर्देशानुपपत्तेः, उक्तप्रमाणानुरोधेन तच्छ्रुतेर्मुख्यार्थानुपपत्तेश्च। अन्यथा "अणोरणीयान्" इति श्रुतेः परमात्मनोऽप्यणुत्वापातात्। नच "महतो महीयान्" इति वाक्यान्तरविरोधान्नैवमिति वाच्यम्;

"घटसंवृतमाकाशं लीयमाने घटे यथा।
घटो लीयेत नाकाशं तद्वज्जीवो नभोपमः"॥

इत्यादिश्रुतिविरोधस्य प्रकृतेऽपि तुल्यत्वात्।

अपि चाहं सुखीति प्रत्यक्षं यावत्सुखदेशत्वमात्मनोऽप्यालम्बत इति तत्प्रत्यक्षविरोधान्नाणुत्वसिद्धिः। बाधकं विना तद्भ्रमत्वस्य वक्तुमशक्यत्वात्। न चेदं देहपरिमाणारोपादित्युक्तम्। यदपि "ममैवांशो जीवलोके" इति भगवद्वचनाज्जीवस्यैकदेशता प्रतीयते, सा च मध्यमपरिमाणत्वे मानाभावादनित्यत्वापत्तेश्चाणुत्वे पर्यवस्यतीति, तदपि न मनोरमम्; अंशशब्दो ह्यवयवार्थः नच जीवो ब्रह्मणोऽवयवः, तथा सति तस्य सावयवत्वेनानित्यत्वापातात्। जीवानां [1]विच्छिन्नदेशतया च्छिद्रपटवद्ब्रह्मणो विच्छिन्नदेशतापत्तेः। अवयविनोऽवयवपरतन्त्रतया ब्रह्मणो जीवपारतन्त्र्यप्रसङ्गाच्च। न चौपाधिकः स्वांश इति वाच्यम्; तथासत्यौपाधिकस्य वास्तवत्वायोगेन [2]घटाकाशादिवत्कल्पितत्वापातात्। तस्माज्जीवस्य किंचिज्ज्ञत्वकिंचिच्छक्तित्वादिना ब्रह्मापेक्षया अल्पत्वप्रतिपादकमिदं वचनम्। तदपि जीवस्य ब्रह्मनियम्यत्वसिद्ध्यर्थम्। एवं वालाग्रादिश्रुतयोऽप्यल्पशक्तित्वादिपराः। ब्रह्माणुत्वश्रुतयस्तु दुर्ज्ञेयत्व-

---

[1] विभिन्न—झ. [2] घटादिराकाशादिवत्—ट.

## दीपनम्

तमसि च व्यभिचारात्प्रत्यक्षबाधाच्च। न चादृष्टकार्यस्य सर्वत्रोपलम्भादात्मा सर्वगत इति वाच्यम्; अदृष्टस्य पराभिमतस्वरूपसंबन्धादात्मनः सर्वगतत्वमन्तरेणापि तदुपपत्तेः। अन्यथा आकाशे अदृष्टकार्यस्य शब्दस्याभावप्रसङ्गात्। न च योगिनां कायव्यूहशास्त्रप्रामाण्याय जीवस्य सर्वगतत्वमिति वाच्यम्; तच्छास्त्रस्य त्वत्पक्षे ज्ञाननित्यत्वशास्त्रवदीश्वरविषयतया "तत्त्वमस्या"दिशास्त्रव-

---

## पूरणी

पराः। महत्त्वश्रुतयोऽपि सर्वज्ञसर्वशक्तित्वादिना जगत्कर्तृत्वनियन्तृत्वपरा इति न किंचित्सङ्कटमित्यलं विस्तरेण॥

**न चादृष्टेति।** अग्न्यूर्ध्वज्वलनादेरदृष्टसाध्यतया तत्कारणवह्न्यादेरदृष्टसंबन्धो वाच्यः। संबन्धान्तराभावात्संयुक्तसमवाय एवेति बाह्यवह्न्यादिना आत्मसंयोगसिद्धिः। एवमदृष्टकार्यवद्द्रव्यान्तरेणापि। तथा चात्मा सर्वमूर्तद्रव्यसंयोगी, तत्समवेतकार्यजनकादृष्टसमवायित्वादित्यनुमानात्सर्वगतत्वसिद्धिरिति न वाच्यमित्यर्थः। **आकाश इति।** त्वया विभुसंयोगानङ्गीकारादिति भावः। **न च योगिनामिति।** "एकधा भवति त्रिधा भवति" इत्यादिश्रुत्या "आत्मनो वै शरीराणि बहूनि मनुजेश्वर" इत्यादिस्मृत्या च योगिनां नानादेहसंबन्धोऽवगम्यते। स च सर्वगतत्वमन्तरा युगपन्न संभवतीत्यर्थः। **ईश्वरविषयतयेति।** ईश्वरस्य नानालीलाशरीरसंबन्धप्रतिपादकत्वेनापि तदुपपत्तेरित्यर्थः। नन्वीश्वरस्य न युगपन्नानादेहसंबन्धः, तद्विग्रहधारणस्य लोकसंरक्षणार्थत्वेन युगपत्तद्वैयर्थ्यात्। श्रीरामाद्याविर्भावानां क्रमेण श्रवणाच्चेत्यनु-

## दीपनम्

दुपासनापरतया वोपपत्तेः। किं चैवमात्मनः शरीरातिरिक्तदेशत्वे पुत्रादिशरीरादेरपि देवदत्तादृष्टारब्धत्वेन तदवच्छेदेनापि देवदत्तस्य कर्तृत्वभोक्तृत्वप्रसङ्गः। देवदत्तादृष्टमात्रारब्धं देवदत्तशरीरमपि न भवत्येव॥

किं चैतन्मते नादृष्टस्यापि नियमः संभवति, सर्वात्मनामपि तज्जनकक्रियावद्देवदत्तशरीरसंबन्धस्याविशिष्टत्वात्। क्रिया च स्वाश्रयसंबन्धिनि संयोगादिकमिवादृष्टमपि जनयेत्। न च प्रयत्नात्तन्नियम इति वाच्यम्; तस्यापि तज्जनकमनस्संयोगशालिनि सर्वत्र प्रसङ्गात्। न च मनस्संयोगव्यक्तिविशेष एव प्रयत्नादिनियामक इति नातिप्रसङ्ग इति वाच्यम्; तर्हि तत एव भोगव्यवस्थोपपत्तेरदृष्टस्य तदप्रयोजक-

---

## पूरणी

शयादाह—**उपासनापरतयेति**। क्रमेणाविर्भूतनानाशरीरावच्छिन्नतया तदुपासनाविधिपरत्वोपपत्तेरित्यर्थः। एवं सर्वगतत्वे साधकाभावमुक्त्वा बाधकमप्याह— **किं चेति**। **देवदत्तशरीरमिति**। तस्य पुत्राद्यदृष्टेनारंभादित्यर्थः॥

ननु तदवच्छिन्नतद्भोगनिमित्तादृष्टारब्धशरीरावच्छेदेन भोगनियम इत्याशङ्क्याह—**किं चेति**। यागादिक्रियावद्देवदत्तशरीरेण यज्ञदत्तात्मनोऽपि संबन्धात्तदात्मन्यपि तददृष्टमुत्पद्येतेत्यर्थः। ननु तत्तत्प्रयत्नजनितक्रियया तत्तदात्मन्यदृष्टमुत्पद्यते नान्यत्रेत्याशङ्क्य निषेधति—**न च प्रयत्नेति**। **तस्यापीति**। देवदत्तमनस्संयोगस्य यज्ञदत्तात्मन्यपि सत्त्वेन तत्प्रयत्नोत्पत्तिरिपि तत्र स्यादित्यर्थः। **तत एवेति**। तत्तन्मनस्संयोगविशेषार्जितप्रयत्नजनितक्रियया तस्यैव भोग इत्यदृष्टं विनापि व्यवस्थोपपत्तेरित्यर्थः। नन्विदानींतनक्रियया काला-

## दीपनम्

त्वप्रसङ्गात्। अदृष्टोत्पन्नस्य पदार्थस्य सर्वात्मसंबन्धितया सर्वान्प्रत्य-विशिष्टत्वात्। किं च मनस्संयोगस्याप्येतदीयत्वमेव। तत्समवेतत्वेन समवायश्च सर्वात्मवृत्तिरिति सर्वत्र समवेत एव। न हि जनकसाधारण्ये संबन्धे च समाने क्वचिद्वर्तते क्वचिन्नेति व्यवस्था युज्यते। अन्यथा-न्यवृत्तिरेव स किं न स्यात्॥

एतेन एतददृष्टारब्ध[1]शरीरे एतददृष्टाकृष्टमनस्संयोगादुत्पन्नमेत-दीयम्, अदृष्टभेदाच्च नान्योन्याश्रय इति प्रत्युक्तम्। समवायेनैतदी-यत्ववत्तस्मिन् परकीयत्वस्यापि तत्र प्रसङ्गात्। सर्वात्मसान्निध्यविशेषेणै-तज्जन्यत्वस्यैव वक्तुमशक्यत्वात्। एवमपि पुत्रादिशरीरक्रियोत्पन्ना-

## पूरणी

न्तरभाविभोगस्यादृष्टं विना न संभव इत्यत आह—**अदृष्टोत्पन्नेति**। **अविशिष्टत्वात्** अविशिष्टत्वापातात्। तदभ्युपगमेऽपि न व्यवस्था सिद्धिरित्यर्थः। ननु तददृष्टोत्पन्नत्वादेव विशेष इत्याशङ्क्य तन्नियम-हेतुभूतमनस्संयोगविशेषासंभवमाह—**किं चेति**। **न हि जनकेति**। आत्ममात्रस्य मनस्संयोगजननयोग्यत्वादिति भावः। सत्यपि निमित्ते क्वचित्संयोगाभावं निमित्तं विनापि क्वचिदन्यत्र स स्यादित्याह— **अन्यथेति**॥

नन्वेतददृष्टारब्धत्वाच्छरीरादेरेतदीयत्वं, अदृष्टस्य चैतच्छरीरादि-जन्यत्वादेतदीयत्वमित्यन्योन्याश्रय इत्यत आह—**अदृष्टभेदादिति**। शरीरादिजन्यादृष्टं तदारम्भकादृष्टं च भिन्नम्। तदारम्भकादृष्टस्य पूर्व-तच्छरीरारभ्यत्वेन तदीयत्वम्। एवं तच्छरीरस्यापि तददृष्टारभ्यत्वेन तदीयत्वमिति प्रवाहरूपेण शरीरादृष्टादेरनादित्वान्नान्योन्याश्रयः। नाप्यनवस्था बीजाङ्कुरवत्प्रामाणिकत्वादिति भावः। ननु तत्तदात्म-जन्यत्वेन तदीयत्वमित्यत्राह—**एतज्जन्यत्वस्येति**। **पुत्रादीति**।

[1] शरीरेण-च.

## आविद्यकजीवभेदाक्षेपः

ननु नास्त्येव जीवभेदः, विवादास्पदानि शरीराणि ममैव भोगायतनानि, शरीरत्वान्मच्छरीरवत् । न चैव[1]मस्मिञ्छरीर इवान्यस्मिन्नप्यहं सुखीत्यनुभवप्रसङ्गः ; पादाद्यवच्छिन्न-

### दीपनम्

दृष्टस्यापि पित्रात्मवृत्तित्वप्रसङ्गः । तस्मात्सर्वगतात्मवादिनां [2]सर्वेषामपि भोगानुसन्धानप्रसङ्ग इति प्रमाणाभावाद्बाधकसत्त्वाच्च न कर्तृभोक्तृजीवस्य सर्वगतत्वम् । मध्यमपरिमाणं च स्वाभाविकं चेदनित्यत्वापत्तिरित्यौपाधिकमेव तदिति न जीवानां परस्परं स्वाभाविको भेद इति भावः ॥

इदानीमाविद्यकमपि भेदमाक्षिपति—**नन्विति** । **विवादास्पदानीति** । [3]मदन्यशरीराणीत्यर्थः । आविद्यकभेदेऽपि पारमार्थि-

### पूरणी

तच्छरीरस्य [4]पित्रात्मजन्यत्वेन तदीय[5]त्वादित्यर्थः । यद्यपि स्वरूपसंबन्धविशेषस्य नियामकत्वाभ्युपगमादेव नायं दोषप्रसङ्गः, तद्विशेषस्य फलबलकल्प्यत्वात् । अन्यथा प्रतिबिम्बजीवपक्षेऽप्यदृष्टादेः साधारणत्वेनान्तःकरणाद्यध्यासानियमप्रसङ्गे भोगव्यवस्थानुपपत्तेः, तथापि स्वरूपसंबन्धविशेषादेव परिच्छिन्नदेशस्थेनाप्यदृष्टविशेषेण वह्न्यूर्ध्वज्वलनादिकार्योपपत्तेर्न नानाप्रतिबिम्बजीवानां सर्वगतत्वे किंचिन्मानमित्यत्र तात्पर्यम् ॥

---

[1] मस्मिन्निवान्यस्मिन्नपि शरीरे—ग. [2] सर्वेषामेव—ख. [3] एतदन्य—च.
[4] पितृजन्यत्वेन—झ. [5] स्वाभावादित्यर्थः—झ.

**स्येव शिरआदिगते उपाधिभेदादभिमाना[1]भावेनोपपत्तेः। अज्ञानभेदाभावेन तदुपाधिकस्यानेकत्वायोगाच्च। न चान्तःकरणमेव जीवोपाधिः; सुषुप्त्यादौ तदभावप्रसङ्गादिति चेन्न;**

## दीपनम्

कोऽभेदोऽस्तीति सिद्धसाधनताव्यावृत्तय एवकारः। तथा च तच्छरीरे भोक्ता जीवोऽपि स्वयमेवेति न सिद्धसाधनमिति भावः। स्वशरीरे च रूपस्पर्शादिद्रष्टृभेदे प्रत्यभिज्ञानात् साध्यसिद्धिरित्यर्थः। **शिरआदिगते** सुखादाविति शेषः। किं चौपाधिकभेदः स्वतन्त्रौपाधिकभेदाद्वक्तव्यः। स चात्र न संभवति; अज्ञानस्य वक्ष्यमाणविधया एकत्वादित्यभिप्रेत्याह—**अज्ञानेति**। नन्वहमिति प्रतीयमानमन्तःकरणमेव जीवोपाधिः, तच्च नानेत्यत आह—**न चेति**। सुषुप्त्यादावन्तःकरणाभावेन भेदाभावप्रसङ्गात्पुनरुत्थानं न स्यात्। न चान्तःकरणान्तरोत्पत्त्योत्थानमिति वाच्यम्; प्रतिदिनमपि चैत्रात्मभेदप्रसङ्गात्। तात्कालिकजीवव्यवहाराभाव[2]प्रसङ्गाच्च। न च तदापि सूक्ष्मरूपमन्तःकरणमस्तीति वाच्यम्; स्थूलसूक्ष्मयोर्भेदनियमात् तदा तत्सत्त्वे प्रमाणाभावाच्चेति भावः। **न चैत्रेति**। तत्र च व्यावहारिकत्वं भेदविशेषणं

## पूरणी

**तच्छरीर इति**। तज्जीवोपाध्यवच्छिन्नभोगायतनत्वं साध्यम्। जीवोपाधिश्चाज्ञानमिति तत्प्रतिबिम्बैक्यसिद्धिरिति भावः। **प्रतिदिनमिति**। तदन्तःकरणोपाधिकात्मनस्तन्नाशे[3] सुषुप्तौ नाशादित्यर्थः। **तात्कालिकेति**। सुखमहमस्वाप्समिति सुषुप्तिकालीनत्वेनोत्थातुः प्रतिसन्धानं न स्यादित्यर्थः। **प्रमाणेति**। तदन्तःकरणस्य नाशेऽपि स्वप्नदशायामन्तःकरणान्तरोत्पत्त्या व्यवहारोपपत्तेरिति भावः। अन्तःकरणोपाधिकभेदमादाय सिद्धसाधनवारणायाह—**व्यावहारिकत्वमिति**।

[1] भावोपपत्तेः—ख. ग. छ. [2] प्रसङ्गश्च—च. [3] तन्नाशेन—झ.

**चैत्रशरीरवृत्त्यात्मा मैत्रात्मप्रतियोगिकभेदवान्, तद्गतदुःखाननुसन्धातृत्वात्, घटादिवत्। न चैवं तद्वदेव स्वाभाविक-**

दीपनम्

देयम्। असिद्धिवारणाय तद्गतेति। नन्वेकस्मिन्नपि जीवे व्यावहारिकशरीरोपाधिभेदात्सिद्धसाधनमिति चेत्सत्यं, चैत्रशरीरवर्तिसुषुप्त्यवस्थापन्न आत्मा मैत्रस्य [1]तादृशात्मप्रतियोगिकभेदवानिति प्रतिज्ञार्थः। अत्र च दुःखाननुसन्धातृत्वमात्रं हेतुः। तत्रापि दुःखपदमज्ञानाद्य[2]नुसन्धातर्यसिद्धिपरिहाराय। अथ वा अखण्डाभावे न वैयर्थ्यम्। न च तदा शरीरादिप्रयुक्तो भेदः [3]संभवतीत्यविद्याप्रयुक्तभेद एव वाच्य इति नानाजीवसिद्धिरिति। न च जडत्वमुपाधिः; ब्रह्मणि साध्याव्यापकत्वादिति भावः। **स्वाभाविकेति**। तथा च [4]सति जीवस्य स्वाभा-

पूरणी

अन्तःकरणस्य च प्रातीतिकत्वान्न दोष इति भावः। **नन्वेकस्मिन्निति**। इदं चोपलक्षणम्—अन्तःकरणस्य प्रातीतिकत्वपक्षेऽज्ञानस्यापि तथात्वेन तद्भेदस्य प्रातीतिकतया बाधप्रसङ्गाच्चेति द्रष्टव्यम्। **तादृगात्मेति**। तदा शरीराद्युपाधेर्नाशात्तत्सूक्ष्मरूपस्य व्यवहारानर्हत्वाद्व्यावहारिकतद्भेदे साध्ये न सिद्धसाधनमिति भावः। ननु व्याप्तिग्रहानौपयिकतया असिद्धिवारकविशेषणं हेतौ विफलमित्यनुशयादाह—**अथवेति**। [5]दुःखाननुसन्धातृत्वविशिष्टाभावस्य केवलाभावापेक्षयाऽतिरिक्तत्वेन तत्र तदप्रवेशान्न वैयर्थ्यमित्यर्थः। ननु स्वाभाविकभेदोऽपि घटमैत्रात्मभेदवत्कल्पित एव स्यादिति नानिष्टापत्तिरित्यत्राह—**तथा चेति**। स्वाभाविकत्वं धर्मिसमानसत्ताकत्वम्। जीवस्य तथाविधभेदा-

[1] तादृगात्म—च. [2] नुसन्धानतयासि - क. [3] संभवीत्य—क. [4] सत्यजीवस्य—च. [5] दुखानु—ट.

**भेदप्रसङ्गः ; अप्रयोजकत्वात् । न चैवं शिरःपाण्याद्यवच्छिन्ने व्यभिचारः ; साध्यस्यापि तत्र सत्त्वात् । "तद्यो यो देवानां" इत्यादि श्रुतेश्च जीवभेदः ॥**

---

## दीपनम्

विकभेदे स पारमार्थिक एवेति [1]सिद्धान्तविरोधः स्यादिति भावः । व्यावहारिकभेदादेव जाग्रद्दशायामन्यस्यान्यदुःखाद्यननुसन्धानोपपत्तौ स्वाभाविकभेदं विना न काचिद्धेतोरनुपप[2]त्तिरिति नायं तत्प्रयोजक इत्याह -- **अप्रयोजकत्वादिति** । यथाश्रुतसाध्ये सामान्यव्याप्तौ व्यभिचारमाशङ्क्य परिहरति—**न चैवमिति** । शिरआद्युपलक्षिते हेतुर्नास्ति, अवच्छिन्ने च साध्यस्यापि सत्त्वान्न व्यभिचार इत्याह—**साध्यस्यापीति** । **तद्यो य इति** । "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति श्रुतितोऽपि जीवभेद इत्यर्थः ॥

ननु शरीरोपाधिप्रयुक्तभेदादेवाननुसन्धानोपपत्तौ विवक्षितसाध्ये अप्रयोजको हेतु, श्रुतिरपि स्थूलदेहप्रयुक्तभेदानुवादिनीति चेन्न, शरीरभेदेऽपि बाल्यकौमारादौ देवदत्तस्य जातिस्मृतिमतश्चानुसन्धान-स्मरणदर्शनादविद्याप्रयुक्तभेद एव तत्प्रयोजकः । 'स एव तदभवत्' इति श्रुतिश्च [3]प्राक्तनानां ब्रह्मभावं दर्शयति । स च नाविद्या[4]निवृत्तिं

---

## पूरणी

भ्युपगमे तु सोऽपि तद्वत्पारमार्थिकः स्यादित्यद्वैतसिद्धान्तबाध इत्यर्थः । **यथाश्रुतेति** । विवक्षितसाध्ये दुःखाननुसन्धातृत्वहेतोः पादाद्यव-च्छिन्नेऽसंभवेन विशेषव्याप्तौ तद्भूतेत्यस्य मैत्रात्मपरतया तत्प्रतियोगिक-भेदस्य च पादाद्यवच्छिन्ने सत्त्वेन व्यभिचारासंस्पर्शादिति भावः ।

---

[1] सिद्धान्तेविरोध.—**च.** [2] हेतोरुपप—**ख.** [3] प्राक्तनं—**ख.** [4] निवृत्त्या विना—**च.**

**अन्यथैकमुक्तौ सर्वमुक्तिप्रसङ्गः। नचेष्टापत्तिः; विवेकिनां बहूनां श्रवणादावप्रवृत्तिप्रसङ्गात्। फलस्यैकप्रवृत्त्यापि सिद्धेः। शुकादेर्मुक्तत्वेनेदानीं संसारानुपलम्भप्रसङ्गात्[1]। महत्तमानामप्यमुक्तावर्वाचीनानां तत्र को विस्रम्भः। गुरुशिष्यादिव्यव-**

---

दीपनम्

विनोपपद्यत इत्यविद्याप्रयुक्तभेद एव श्रुत्यर्थ इत्यभिप्रेत्याह—**अन्यथेति**। तथा च 'तदृषीणां' इति देव इव ऋषिर्मनुष्यो मुक्तोऽभवदिति बहूनां मुक्तिप्रतिपादकं वाक्यमिदानींतनसंसारोपलम्भश्च विरुद्ध्येत इत्यर्थः। नन्वेतद्वाक्यमर्थवादमात्रमिति न प्राक्तनमुक्तिसिद्धिरिति सर्वमुक्तिप्रसञ्जनमिष्टमित्याशङ्क्याह—**न चेति**। अर्थवादादपि देवताविग्रहवद्बाधकाभावात्प्राक्तनमुक्तिसिद्धिः। दूषणान्तरमप्याह—**विवेकिनामिति**। [2]यद्यकैवाविद्येत्येको जीवस्तर्हि तस्या एकज्ञानादेव निवृत्तिसंभवेन बहूनां तदुद्देशेन प्रवृत्तिर्विफलेत्याह—**फलस्येति**। ननु पुरुषान्तरे ज्ञाननिश्चयाभावादन्यस्यापि प्रवृत्तिरविरुद्धेति चेत्सत्यम्, तथापि सकलेतिहासपुराणप्रसिद्धशुकादिमुक्तौ तेषां तत्त्वज्ञानेन सर्वेषां मुक्तिप्रसङ्गात् नेदानीं कस्यापि प्रवृत्तिः स्यादित्यभिप्रेत्याह—**शुकादेरिति**। **अमुक्ताविति**। मुक्तितदुपायज्ञानाभाव इत्यर्थः। अथ वा पूर्वं श्रुतिबलेन देवादीनां मुक्तौ संसारानुपलम्भप्रसङ्ग इत्युक्तम्। इदानीं श्रुत्यर्थोपबृंहितेतिहासबलादपि शुकादिमुक्तिसिद्धेः[3] संसारानुपलम्भप्रसङ्ग इत्याह—**शुकादेरिति**।

---

[1] प्रसङ्गः—क. [2] यदेकैवा-ख. [3] प्रसिद्धेः—ख. च.

स्यानुपपत्तेश्च। न ह्यविद्वान् गुरुर्भवति, "श्रोत्रियं ब्रह्मनिष्ठम्" इति गुरुविशेषणश्रवणात्। न चैवं शिष्यादिभेदाप्रतीतेर्न तस्योपदेशादिप्रवृत्तिः स्यादिति वाच्यम्; प्रारब्धकर्मप्रयोजकलेशवशात्तदुपपत्तेः। न चोपाध्यैक्याज्जीवभेदानुपपत्तिः, स्वस्वानुभवसिद्धाज्ञानस्य दुःखादिवद्भेदात्। एकस्याज्ञाननिवृत्तावप्यन्यस्य तत्र [1]तद्दर्शनात्। "इन्द्रो मायाभिः" इत्यादिश्रुत्या

दीपनम्

**न ह्यविद्वानिति।** तथा च गुरुविद्ययैव निखिलभेदानिवृत्तेर्न शिष्यस्य संसारोपलम्भो न वा तन्निवृत्तये प्रवृत्तिः स्यादित्यर्थः। नन्वस्तु गुरोर्विद्या, सा च परोक्षज्ञानमेवेति संसारनिवर्तकापरोक्षज्ञानाभावान्न शिष्यस्योक्तदोष इत्याशङ्क्याह - **श्रोत्रियमिति।** ब्रह्मनिष्ठत्वं तु ब्रह्मसाक्षात्कार [2]एवेत्यर्थः। **एवं** साक्षात्काराभ्युपगम इत्यर्थः। **स्वस्वेति।** न जानामीति स्वस्वसमवेतज्ञाननिवर्त्यतया सर्वैरज्ञानमनुभूयते, अन्यथा तदुच्छेदाय स्वप्रवृत्त्यनुपपत्तेरिति प्रतिपुरुषमज्ञानं भिन्नम्, परज्ञाननिवर्त्यस्य तथानुभवायोगात, स्वस्य पराज्ञाननिवृत्तये प्रवृत्त्यनुपपत्तेश्चेति भावः। "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतावुपक्रमावगतजीवप्रतिबिम्बहेत्वज्ञानमेव

पूरणी

**ब्रह्मनिष्ठत्वं त्विति।** अन्यथा श्रोत्रियपदादेव साङ्गवेदाध्येतृत्ववाचिनो ब्रह्मज्ञानमात्रलाभे तद्विशेषणवैयर्थ्यादिति भावः। **उपक्रमावगतेति।** रूप्यते अभिव्यज्यतेऽत्रेति रूपमन्तःकरणशरीरादिकम्। सर्वत्र शरीराहंकारादिषु अस्य ईशस्य प्रतिबिम्बो बभूव। तत्प्रतिबिम्बात्मको

[1] अज्ञानदर्शनात्—ख. ग. छ. [2] एवेति भावः—च.

च तद्बहुत्वम्। न चात्रावस्थाज्ञानमादाय तद्बहुत्वमुपपादनीयम्। "रूपं रूपं प्रतिरूपो बभूव" इति प्रतिपन्नजीवभावहेत्वज्ञानस्यैव बहुत्व[1]धर्मित्वात्। न चावस्थाज्ञानं तथा। न चान्तःकरणस्यापि [2]स्पष्टजीवविभागनिमित्तत्वात्तद्बहुत्वमत्र प्रतिपाद्यते; शब्दान्तरार्थे तस्मिन्मायाशब्दायोगात्। तस्य "युक्ता ह्यस्य हरयः" इति वाक्यशेषावगतेन्द्रियाद्यहेतुत्वाच्च। न चाजामेका-

## दीपनम्

मायाभिरिति प्रतिपाद्यत इति नावस्थाज्ञानं तदित्यभिप्रेत्याह—**रूपमिति। मायेति।** मायाशब्दस्य तत्र मुख्यवृत्त्या प्रवृत्त्ययोगादित्यर्थः। **वाक्यशेषेति।** "मायाभिः पुरुरूप ईयते। युक्ता ह्यस्य

## पूरणी

जीवः शरीराहंकारतादात्म्यापन्नः सन् संसरतीति यावत्। कथमीशस्य प्रतिफलनमित्याशङ्क्य उपाधिनेत्याह—तदस्येति। तत् न जानामीत्यनुभवस्मृत्यादिषु प्रसिद्धं रूपं प्रतिफलनयोग्यं वस्तु अज्ञानमिति यावत्। अस्य प्रतिचक्षणाय प्रतिफलनाय अभवत्। अविद्योपाधिकं प्रतिफलनम्। एवं ब्रह्मणो जीवरूपेण संसारित्वमुपपाद्य प्रपञ्चात्मकतामपि दर्शयति—इन्द्रो मायाभिरिति। इति श्रुत्यर्थमभिप्रेत्य प्रतिबिम्बहेत्वज्ञानस्य उपक्रमावगतत्वमुक्तम्। न चाद्यरूपपदस्यैवाज्ञानमर्थः, तथा सति "रूपं रूपं" इति पदवीप्सयैवाज्ञानभेदस्य स्फुटत्वेन मायाभिरिति बहुवचनप्रत्ययनिर्देशमात्रस्य प्रमाणत्वेनोपन्यासानुपपत्तेः।

[1] धर्मत्वात्–ग. [2] स्पष्टस्वस्थ–ग.

**मित्यादिना [1]मायैकत्वनिश्चयः; तस्या "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति वाक्यशेषावगतविद्वदविद्वज्जीवसंबन्धानुसारेण प्रतिपुरुषं संसारमूलाज्ञानैकत्वपरत्वात्। न ह्येकैवाविद्या अविदुषा भुज्यतेऽन्येन त्यज्यते। एवं "तरत्याविद्यां" इत्येकवचनमपि द्रष्टव्यम्। तस्मादविद्याकल्पितजीवभेदे बाधकाभावात्तदभेदे च तत्सत्त्वाज्जीवा भिद्यन्त इति नानाजीववादिनः॥**

## एकजीववादः

**अपरं मतम्—अविद्याप्रतिबिम्बात्मा तत्प्रतिबिम्बप्रतियोगिकभेदवान्न भवति, एकबिम्बैकोपाधित्वात्, यदेवं तदेवम्,**

---

### दीपनम्

हरयः शता दश" इति वाक्यं हि मायाभिः कृत्वैवेन्द्रस्य स्थावरजङ्गमादिभावमिन्द्रिययोगादिकं च दर्शयतीति भावः॥

एवमाविद्यकजीवभेदं सपरिकरमुपपाद्य सकलवृद्धसंमतं मतान्तरमाह—**अपरं मतमिति**। बाधपरिहाराय साध्ये तदिति। तस्यामविद्यायां प्रतिबिम्बितं यच्चैतन्यं तत्प्रतियोगिकभेदवान्न भवति। एवं

---

### पूरणी

अतो वर्णितरीत्यैव श्रुत्यर्थोऽभिमत इति मन्तव्यम्। **मायाभिः कृत्वेति**। "युक्ता ह्यस्य" इति वाक्यस्य ब्रह्मण इन्द्रियादितादात्म्यलक्षणयोगो मायाकृत इत्येवमर्थकत्वादिति भावः॥

**बाधेति**। मुखादिप्रतिबिम्बप्रतियोगिकभेदस्याविद्याप्रतिबिम्बात्मनि सत्त्वादित्यर्थः। **एवं चेति**। न च तत्प्रतिबिम्बप्रतियोगिका-

---

[1] मायैकत्वसिद्धिः—क.

## दीपनम्

चाविद्यकप्रतिबिम्बमेकमेवेति न जीवभेद इत्यर्थः। न च सत्त्वप्रधानाविद्याप्रतिबिम्बादीश्वराज्जीवस्य भेद इति वाच्यम्; बिम्बचैतन्यस्यैव सर्वगतस्य सार्वज्ञ्यादिसंभवेनेश्वरत्वात्। तमःप्रधानाविद्याप्रतिबिम्बेति वा पक्षसाध्ययोर्विशेषणं देयम्। **एकेति**। एकस्यैव ब्रह्मणो नानाजीववादिभिरपि जीवरूपप्रतिबिम्बताभ्युपेयते। अविद्या चैकेत्यनुपदमेव वक्ष्यतीति नासिद्धिः। एकस्य चन्द्रस्यानेकोदकपात्रप्रतिबिम्बेषु अनेकेषां चैकस्मिन्प्रतिबिम्बेषु व्यभिचारवारणाय हेतौ विशेषणद्वयम्।

---

## पूरणी

न्तःकरणोपाधिकभेदसत्त्वादेवमपि बाध इति वाच्यम्; तत्प्रतिबिम्बत्वावच्छिन्नप्रतियोगिकभेदविरहस्य साध्यत्वात्। अन्तःकरणोपाधिकभेदस्यातथात्वादिति भावः। नन्वविद्याबिम्बचैतन्यं सत्त्वगुणप्रतिबिम्बितं सत् जगत्कर्तृ। तथा च तत्प्रति[1]बिम्बप्रतियोगिकभेदाभावे साध्ये बाध इत्याशङ्क्य निषेधति—**न च सत्त्वेति**। बिम्बचैतन्यस्यैव सत्त्वादिगुणसहायेन कर्तृत्वाद्युपपत्तौ पुनः प्रतिफलनमसिद्धमित्यभिप्रेत्याह—**बिम्बेति**। अभ्युपेत्याप्याह—**तम इति**। न च तत्पक्षे संहर्तुरीश्वरस्य तमोगुणकाविद्याप्रतिबिम्बतया तद्भेदसत्त्वादुक्तदोषः; सकर्तृकव्यापारमात्रे ईश्वरस्य सत्त्वसहायतया तमोमात्रविशिष्टाविद्याप्रतिबिम्बत्वाभावात्। सकर्तृकत्वस्य ज्ञानाधीनत्वात्। ज्ञानस्य च "सत्त्वात्सुखं च ज्ञानं च" इति स्मृत्या सत्त्वाधीनत्वोपगमात्। अन्यथा सार्वज्ञ्यानुपपत्तेश्च। जीवस्यैव तादृशत्वादिति भावः।

---

[1] बिम्बत्वावच्छिन्नप्रति—झ.

**यथैकास्मिन् दर्पणे एकस्य मुखप्रतिबिम्बः। देवदत्तशरीराभिमानी जीवो न यज्ञदत्तशरीराभिमानिभेदवान्, सर्वज्ञत्वानधिकरणत्वे सति चेतनत्वात्, तद्वत् किंचिज्ज्ञत्वादिति वा।**

---

## दीपनम्

**शरीरेति।** तत्राहमित्यभिमानीत्यर्थः। ब्रह्मणि घटादौ च व्यभिचारवारणाय हेतौ विशेषणद्वयम्। **तद्वत्** यज्ञदत्तात्मवत्। **किंचिज्ज्ञत्वात्** सकृत्किंचिन्मात्रज्ञत्वात्। अतो नासिद्धिः ब्रह्मणि व्यभिचारो वा॥

ननु पारमार्थिकभेदनिषेधे निषेध्याप्रसिद्धिः, नच धर्मिसत्तासमानसत्ताकभेदनिषेधः; आविद्यकनानाजीववादिनामप्यात्मनि तदभावात्। व्यावहारिकभेदस्तु व्यावहारिकशरीरोपाधिकः तद्भेदस्यापि सुखादिव्यवस्थापकस्य व्यावहारिकत्वात् निषेद्धुं न शक्यते, अनुभवविरोधात्। नच सुषुप्त्यवस्थापन्नदेवदत्तात्मा तदवस्थापन्नयज्ञदत्तात्म-

---

## पूरणी

समष्ट्यभिमानिविराड्भेदाभावेनार्थान्तरतावारणायाह— **अहमित्यभिमानीति।** विराजस्तत्र स्रष्टृत्वाभिमानेऽप्यहमभिमानाभावादिति भावः। प्रातिस्विकाहमभिमानी वेत्यर्थः। **ब्रह्मणीति।** तस्य जीवप्रतियोगिकाविद्यकभेदसत्त्वादिति भावः। ननु सर्वज्ञस्यापि ब्रह्मणः किंचिज्ज्ञत्वाद्व्यभिचारः, किंचिन्मात्रज्ञत्वं च क्रमेण ब्रह्मसाक्षात्कारा[1]दूर्ध्वं तावत्सर्वज्ञ जीवेऽसिद्धमित्यत आह—**सकृदिति।** कदाचिदित्यर्थः॥

**देवदत्तेति।** देवदत्ताविद्याप्रतिबिम्बात्मा तज्ज्ञानानिवर्त्योपाधिप्रयुक्ताविद्याप्रतिबिम्बात्मप्रतियोगिकभेदाभाववानिति साध्यम्। एवं

---

[1] दूर्ध्वं वा सर्वज्ञ—ट.

## दीपनम्

प्रतियोगिकभेदवान्न भवतीति[1] साध्यत इति वाच्यम्; तदानीमपि देवदत्तस्य यज्ञदत्तसुषुप्त्यननुसन्धानप्रयोजकतया सूक्ष्मान्तःकरणो-पाधिकभेदस्य वक्तव्यत्वेन बाधादिति चेदुच्यते—यज्ञदत्तज्ञानानिवर्त्यो-पाधिप्रयुक्तभेदराहित्यं साध्यम्। नानाजीववादिनां हि देवदत्ताज्ञानं यज्ञदत्तज्ञानानिवर्त्यमिति न निषेध्याप्रसिद्धिः। एकजीववादिनां तु तदपि तज्ज्ञाननिवर्त्यमिति तत्कार्यप्रयुक्त[2]भेदसत्त्वेऽपि न विरोधः। अथ वा यज्ञदत्तान्तःकरणवृत्त्यनिवर्त्यदेवदत्तघटावस्थाज्ञानावच्छिन्न-

## पूरणी

तादृशोपाधिप्रयुक्तयज्ञदत्ताहंत्वाभिमानिप्रतियोगिकभेदाभावो वेत्यर्थः। नन्वेकजीवमते कृत्स्नस्याविद्यातत्कार्यस्य देवदत्तज्ञाननिवर्त्यतया अप्र-सिद्धिरित्यत आह—**एकजीवेति**। परमतसिद्धभेदस्य विरहः परं प्रति साध्यत इति नास्मन्मते प्रसिद्धिरपेक्षिता, साध्यमानार्थस्य बाधविरहमात्रं त्वपेक्षितम्, तच्चास्त्येव; ज्ञाननिवर्त्योपाधिप्रयुक्तभेदे सत्यपि तदनिवर्त्योपाधिप्रयुक्तभेदविरहस्या[3]बाधादित्यर्थः। इदं च वस्तुगतिमनुरुद्ध्योक्तम्। निर्बन्धे तु सापि सुलभेत्याह—**अथ वेति**। यज्ञदत्तग्रहणं चानास्थया, देवदत्तात्मज्ञानानिवर्त्यत्वस्यैव प्रकृतत्वात्। घटावस्थाज्ञानावच्छिन्नतदनवच्छिन्नचैतन्यभेदस्य तदज्ञानोपाधिकत्वा-दित्यर्थः। अतोऽवस्थाज्ञानावच्छिन्नबिम्बचैतन्यदेवदत्तात्मभेदस्य मूला-विद्योपाधिकत्वेन तादृशावस्थाज्ञानानुपाधिकत्वान्निषेध्यप्रसि[4]द्धिदुर्भिक्ष-तैवेति दूषणमनवकाशम्। न चाविद्याप्रतिबिम्बविशेषणादेव नायं प्रसङ्गः, विषयचैतन्यस्य तत्प्रतिबिम्बत्वाभावादिति वाच्यम्; अविद्यावच्छिन्नस्य

---

[1] साध्यमिति—च. [2] भेदानुभवसत्त्वेऽपि—ख. [3] अबाधितत्वादित्यर्थः—ट. [4] द्धेर्दुर्भिक्षैवेति—झ.

**नचैवं मनआदेरप्यभेदानुमानम्; बाधानवतारदशायामिष्टत्वात्।**

---

## दीपनम्

चैतन्यभेदस्य निषेध्यस्य प्रसिद्धिरेकजीववादेऽपि सुलभा। तदवच्छिन्नेन देवदत्तजीवाभेदोऽप्यस्मन्मते यज्ञदत्तजीवाभेदवदेवेति न बाध इति भावः॥

**न चैवमिति**। देवदत्तमनो न यज्ञदत्तमनःप्रतियोगिकभेदवत्, मनस्त्वात्तद्वदित्याभाससाम्यं न वाच्यम्; तस्य बाधितत्वात् अत्र तु

---

## पूरणी

तत्प्रतिबिम्बशब्दार्थत्वात्, विषयचैतन्यस्याप्यवस्थाज्ञानावच्छिन्नत्वात्, मूलाज्ञानवदवस्थाज्ञानस्यापि प्रतिफलनयोग्यतया तत्प्रतिबिम्बस्याप्युपपत्तेश्च। नन्वेवं प्रथमानुमाने तदज्ञानावच्छिन्नविषयचैतन्यभेदस्य देवदत्तजीवात्मनि सत्त्वाद्बाध इत्यत आह—**तदवच्छिन्नेनेति**। विषयावच्छिन्नमूलाविद्याबिम्बचैतन्येन यज्ञदत्तघटावस्थाज्ञानावच्छिन्नेन देवदत्तजीवभेदस्य देवदत्तान्तःकरणवृत्तिनिवर्त्यमूलाविद्योपाधिकत्वेन तदनिवर्त्ययज्ञदत्तघटावस्थाज्ञानोपाधिकत्वाभावेन विवक्षितसाध्यसत्त्वान्न बाध इत्यर्थः। ननु तन्निवर्त्यत्वं फलोपधानं स्वरूपयोग्यत्वं वा। आद्ये नष्टशरीराहंकारादेस्तज्ज्ञाना[1]निवर्त्यतया तदुपाधिकभेदमादाय बाधप्रसङ्गः। द्वितीये यज्ञदत्तघटावस्थाज्ञानस्यापि देवदत्तज्ञाननिवृत्तियोग्यतया निषेध्याप्रसिद्धिः। मूलाविद्यानिवृत्तौ तत्प्रयोज्यावस्थाज्ञानानामपि निवृत्तेरावश्यकत्वादिति चेन्न; यज्ञदत्तात्मप्रतियोगिकाविद्योपाधिकभेदाभावस्य साध्यत्वात्। तद्भेदस्य च ब्रह्मणि प्रसिद्धत्वादिति नोक्तदोषावकाश इति तत्त्वम्॥

**बाधितत्वादिति**। धर्मिग्राहकमानादिनेति शेषः। ननु साधारण्येन निवर्त्यत्वानुभवे नियमेन तन्निवृत्तये स्वस्य प्रवृत्तिर्न

---

[1] निवर्त्यत्वादौपाधिक—ड्ढ.

**न चाद्यानुमाने एकोपाधिकत्वमसिद्धमिति वाच्यम्; अज्ञानस्य जीवोपाधेर्भेदे प्रमाणाभावात्। अनुभवस्यैकाज्ञानविषयत्वेनाप्युपपत्तेः। नच देवदत्तेन न जानामीति स्वज्ञाननिवर्त्यत्वेनानुभूयमानमज्ञानं कथमन्यज्ञाननिवर्त्यं स्यादिति वाच्यम्; मूलाज्ञाने स्वमात्रवृत्तिज्ञाननिवर्त्यत्वस्याननुभवात्। स्ववृत्तिज्ञाननिवर्त्यत्वस्य तस्मिन्नन्यज्ञाननिवर्त्यत्वेऽप्यविरोधात्। नच चैत्रस्याज्ञान-**

## दीपनम्

तदभावादित्यर्थः। तत्र न तावत्तदनुभवः प्रमाणमित्याह—**अनुभवस्येति**। निखिलशरीरवर्त्यज्ञानानुभवस्येत्यर्थः। **अननुभवादिति**। न चैवं तन्निवृत्तिरनुपपन्नेति वाच्यम्; प्रवृत्तिमात्रस्य स्वज्ञाननिवर्त्यत्वज्ञानमात्रेण संभवात्। तन्नियमे तूपपत्तिर्वक्ष्यत इति। ननु देवदत्ताज्ञानं यज्ञदत्ताज्ञानाद्भिद्यते, तस्मिन्निवृत्तेऽप्यनुवर्तमानत्वात्। यज्ञदत्तस्याधिष्ठानसाक्षात्कारध्वंससमानकालीनत्वाद्वा, सम्प्रतिपन्नवदित्याशङ्क्याह—**नच चैत्रस्येति**। किं चैत्रस्य ब्रह्माज्ञाननिवृत्तिदशायां मैत्रस्य तस्मिंस्तदनुभवेन ब्रह्माज्ञाने भेदः सिसाधयिषितः, उत घटाद्यज्ञाने। आद्ये अज्ञानभेदाज्जीवभेदे सिद्धे सर्वेषां युगपन्मुक्तौ प्रमाणाभावादेकस्मिन्मुक्तेऽपि इतरस्मिन्नज्ञानानुभवो भवतीति[1] स कल्प्येत, तदन्यस्य तस्मिन्प्रमाणस्याभावात्, एवं च जीवभेदे सिद्धे उक्तविधया अज्ञाने भेदसिद्धिः, तत्सिद्धौ च तत्सिद्धिरिति परस्पराश्रय

## पूरणी

स्यादित्यत आह—**तन्नियमे त्विति**। परकीयज्ञानात्तन्निवृत्तेरनिश्चयात्तदुपपत्तिरित्यर्थः। साक्षात्कारसमानकालीनत्वं तदुत्पत्तिसमानकालीने यज्ञदत्ताज्ञाने व्यभिचारीत्यत उक्तं—**ध्वंससमानकालीनत्वादिति**।

[1] वः संभवतीति—च.

**निवृत्तिदशायामपि मैत्रस्य तस्मिन्नज्ञानदर्शनेन तद्भेदः; तस्य जीवभेदसिद्ध्युत्तरकालीनत्वात्। घटाद्यज्ञानबहुत्वेऽपि न काचित्क्षतिः, जीवैक्येऽप्यहंकारभेदेन व्यवहर्तृभेदस्य वक्ष्यमाणत्वात्। "मायया ह्यन्यदिव" इति श्रुत्या चाविद्यैक्यं सिद्ध्यति। नच मायाभिरिति तद्बहुत्वम्; लाघवानुगृहीततदेकत्वश्रुतिविरोधेनान्यपरवाक्यात्तदसिद्धेः। अत एव "अजामेकां" [1]इत्येकत्वश्रुतिरपि न प्रतिपुरुषमजैकेति व्याख्येया। वाक्यशेषश्च**

---

दीपनम्

इत्याह—**तस्येति**। द्वितीय आह—**घटादीति**। ननु जीवभेदाभावे एकस्य घटाद्यज्ञानं परस्य नेति कथम्, तत्राह—**जीवैक्य इति**। वस्तुतस्तु तत्रापि भेदो दुस्साधन इति पूर्ववाक्यस्थापिशब्देन सूचयति। श्रुतिविरोधमप्याह—**माययेति**। इयं श्रुतिः "कोशांश्च सृष्ट्वा प्रविश्य" इत्यादिवाक्योक्तप्रतिबिम्बभाव[2]हेतुमायां दर्शयतीति जीवोपाध्यैक्यमित्यर्थः। **अन्यपरेति**। आत्मनः सर्वात्मतापरेत्यर्थः। यत्तु "अजो ह्येको जुषमाण" इति वाक्यशेषात्तदेकत्वं सामान्यगतमिति, तत्राह—**वाक्यशेष इति**। तत्र हि जुषमाणस्तत्कार्यकरणसङ्घाताद्यभिमानी तामनुशेते [3]तया संसरति। अन्यः कार्यकरणसङ्घाताद्यो विलक्षणमात्मानमनवच्छिन्नं पश्यति असौ तां त्यजति

---

पूरणी

**वस्तुतस्तु तत्रापीति**। अवस्थाज्ञानेऽपीत्यर्थः। मूलाज्ञानस्यैव घटादिविषयावरकत्वमिति वक्ष्यमाणत्वादिति भावः। **इयं हीति**। कोशानन्नमयादीन्। अत्रान्यत्वोद्देशेन मायाविधानाद्विधेयगतत्वेन

---

[1] मित्यादिश्रुतिरपि—**क**. [2] हेतुं मायां—**च**. [3] तदा न् संसरति—**ख. च**.

## दीपनम्

निवर्तयतीत्येकस्मिन्नेव पुरुषेऽविद्यातदभावदशायां [1]संबन्धं तदभावं च दर्शयति । अन्यथैनामिति प्रकृतपरामर्शित्वायोगात्, एकवाक्यतोपक्रमस्य प्रबलत्वात्, एकामित्येकत्वप्रतिपादकश्रुतिविरोधाच्च न

## पूरणी

पश्वेकत्वादिवत्तदेकत्वस्यापि विवक्षितत्वात् मायाभिरिति श्रुतेस्त्वात्मनः सर्वात्मताविधिपरतया मायाविधिपरत्वाभावेन तद्बहुत्वस्याविवक्षितत्वादिति भावः। एकस्मिन्नेवेति। एकान्यशब्दयोः सङ्घाताभिमानवैशिष्ट्यतद्वैशिष्ट्यार्थपरत्वात्तयोश्च जीवैक्येऽपि समयभेदेनोपपत्तेरित्यर्थः। नन्वेवं तत्पदासामञ्जस्यमित्याशङ्क्य प्रबलपदान्तरानुरोधेन तदसामञ्जस्यं युक्तमित्याह—अन्यथेति। एकवाक्यगतेति। यद्यप्युपक्रमशब्दस्य संबन्धिशब्दतया तत्तद्वाक्योपक्रमस्तत्र तत्र बलवानित्यर्थो लभ्यत इत्येकवाक्यगतत्वविशेषणं व्यर्थम्; तथाप्येतदर्थस्पष्टीकरणार्थं तदुपादानम्। वस्तुतस्तु सर्वं वेदान्तवाक्यजातमेकब्रह्मपरतयैकवाक्यम्। तत्र चोपक्रममात्रस्य बलवत्त्वे "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मण उपक्रमात् आनन्दमयादिशब्दानामपि कयाचिद्वृत्त्या ब्रह्मार्थत्वं स्यात्। अतस्तद्विशेषणम्। तद्विशेषणे च यावत्पदकदम्बकमेकवाक्यतयैकार्थप्रत्यायकं तत्र तदुपक्रमस्य बलवत्त्वं लभ्यते। आनन्दमयादिवाक्यानि तु जीवादिस्वरूपप्रतिपादनद्वारेण वाक्यैकवाक्यतया निर्विशेषब्रह्म बोधयन्तीति न तत्र ब्रह्मोपक्रमानुरोध इति भावः। उपक्रमं दर्शयति—एकामिति। नन्वत्र मायां तरन्तीति मायायास्तरणमात्रं प्रतीयते न तु निवर्त्यत्वम्। तरणं च मायाप्रयुक्त-

[1] मायाबन्धं—ख. च. [2] र्शायोगात्—च.

यो विद्वान् परिपूर्णः स तां त्यजति अन्यस्तु मज्ञाताभिमानदशायां भुङ्क्त इति [1]नास्मिन्मते प्रतिकूलः। श्रीभगवानपि—

"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।"

इत्येकस्यैवाज्ञानस्य बहुतर्तव्यत्वं दर्शयन्नविद्यैक्यमाह। तस्मान्नाविद्योपाध्यैक्यासिद्धिः ॥

नन्वन्तःकरणमेव जीवभेदकम्, अहमिति तस्यैवोपाधित्वानुभवात्। नच सुषुप्तौ [2]जीवाभावप्रसङ्गः; तदाप्यन्तःकरणस्यानिर्वचनीयसूक्ष्मरूपतासत्त्वात्। [3]अन्यथात्र असत उत्पत्त्यनुपपत्तेः, अन्तःकरणाश्रितकर्मज्ञानादिवासनाविरह-

---

दीपनम्

वाक्यशेषात्तद्बहुत्वसिद्धिरिति भावः। तर्तव्यत्वं निवर्त्यत्वम्। अन्तःकरणेति। तथा च जीवस्य पुनरुत्थानं न स्यात्, उत्थितस्याप्यनुसन्धानादिपूर्वव्यवहारो न स्यात्। तस्य चैतन्यस्वरूपमात्राधीनत्वे

---

पूरणी

बन्धविरहः। भगवन्मायाया विद्वद्बन्धाजनकत्वात्। अतो नेदं वाक्यं त्वदभिमतज्ञाननिवर्त्याविद्यैकत्वे मानमिति चेन्न; सत्यामुपादानमायायां तदुपादेयबन्धनिवृत्त्ययोगात्, तरणशब्दस्य शोकस्तीर्ण इत्यादौ निवृत्तावपि प्रयोगदर्शनात्, "भूयश्चान्ते विश्वमायानिवृत्तिः" इति तन्निवृत्त्यवगमाच्च निवृत्तिरेवाभिप्रेतेत्याह—तर्तव्यत्वं निवर्त्यत्वमिति। नन्वन्तःकरणान्तरोत्पत्त्या पुनरुत्थानं स्यादित्यनुशयादाह—उत्थितस्यापीति। सुखमहमस्वाप्समित्यन्तःकरणसंवलिताहंपदार्थोल्लेखेन सुषुप्तिकालीनसुखादिप्रतिसंधानं स्यादिति घृतादिवद्द्रवीभूतं तदन्तःकरणं

---

[1] नास्मिन्मते—छ. [2] तदभावप्रसङ्गः—ग. छ. [3] अन्यथासत.—छ.

**प्रसङ्गाच्च । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेश्चेति चेन्न; प्रमात्रुपाधिभेदाभिप्रायत्वादस्य वाक्यस्य ।**

---

### दीपनम्

चातिप्रसङ्ग इति भावः । इयं हि श्रुतिर्जीवशब्दप्रवृत्तिनिमित्तं प्राणधारणमुपाधिमाह न तु जीवस्य ब्रह्मविभाजकोपाधिम्; अज्ञानकार्यस्य स्वातन्त्र्येणोपाधित्वासंभवात् । प्राणधारणं चान्तःकरणविशिष्टस्यैवेत्यभिप्रेत्याह—**प्रमात्रुपाधिभेदेति** ।

---

### पूरणी

तदाप्यस्ति स्वरूपेणानुभूयते चेत्यवश्यं स्वीकर्तव्यमित्यर्थः । न चैवं तदाप्यहमभिमानः स्यादिति वाच्यम्, कठिनावस्थापन्नस्यान्तःकरणस्यैव तदभिमानादिहेतुत्वादिति भावः । यद्वा सुषुप्तावन्तःकरणस्यात्यन्तविनाशे अहं पूर्वेद्युरेवमकरवं अद्यैवं करिष्यामीति तत्रैक्यानुसन्धानादिपूर्वकव्यवहारो न स्यादित्यर्थः । ननु चैतन्यांशैक्यात्तदनुसन्धानमित्याशङ्क्याह—**तस्येति** । तथा सति यज्ञदत्तादि[1]कृतेऽपि कर्त्रैक्यानुसन्धानापत्तेरित्यर्थः । **अन्तःकरणाश्रितेति मूलम्** । कर्मवासना अदृष्टम् । ज्ञानवासना भावनासंस्कारः । अन्तःकरणस्य सर्वथा विनाशे कृतहान्यकृताभ्यागमप्रसङ्गादित्यर्थः । **कार्योपाधिरिति मूलम्** । कार्यमन्तःकरणरूपमुपाधिर्ब्रह्मविभाजको यस्येत्यन्तःकरणं जीवस्य ब्रह्मविभाजकोपाधिः । कारणं सत्त्वप्रधानाविद्या उपाधिः प्रतिबिम्बस्थानं यस्येश्वरस्येति सत्त्वप्रधानाविद्याप्रतिबिम्ब ईश्वर इति श्रुत्यर्थ इति पूर्वपक्षिणोऽभिमानः । **जीवशब्देति** । कार्यान्तःकरणोपाधिविशिष्टं चैतन्यं जीवशब्दप्रवृत्तिनिमित्तप्राणधारणावच्छिन्नतया तच्छब्दवाच्यं

---

[1] कृतेऽप्यैक्यानु—ग.

अहमित्यनुभवेनापि स एवानुभूयते । एकस्मिन्नपि जीवे

---

दीपनम्

जीवस्य हि प्रमातृत्वं नाविद्योपहितस्वरूपेण ; सुषुप्त्यादौ तदभावात् । अन्तःकरणमात्रवृत्तिप्रमां प्रति कर्तृत्वस्य केवले अयोगादित्यन्तःकरण[1]विशिष्ट एव प्रमाता । स च [2]प्राणधारण एक एवेत्यभिप्रायकमिदं वाक्यमित्यर्थः । इतोऽप्येकाविद्यावादेऽन्तःकरणविशिष्टस्यैव प्रमातृत्वमित्याह—**एकस्मिन्निति** । लोके हि प्रतिशरीरमेको घटं प्रमिणोति नापरः, एकश्च तत्करोति तत्फलं च भुङ्क्ते नान्य इति व्यवस्थायै प्रमात्रादीनां भेदो वक्तव्यः। एवं वेदेऽपि ब्राह्मणादीनां तत्तन्नियोगप्रमातृत्वतत्कर्तृत्वतत्फलभोक्तृत्वभेदः प्रसिद्ध एवेत्येकजीववादेऽपि प्रमात्रादिभेद आवश्यक इत्यर्थः ।

---

पूरणी

कारणाविद्योपहितं चैतन्यमीश्वरपदवाच्यमित्येतत्परेयं श्रुतिरिति भावः । तत्र कथमन्तःकरणविशिष्टस्यैव प्राणधारकत्वमित्याशङ्क्य शरीरावच्छिन्नप्राणसंयोगो ज्ञानहेतुतया प्रमातृधर्मः । प्रमाता च विशिष्ट एवेति तदपि तद्धर्म इत्याह—**जीवस्य हीति** । **अन्तःकरणेति** । प्रमातृत्वं प्रमाश्रयत्वम् । तच्च न स्वरूपप्रमाश्रयत्वेन । किं तु वृत्तिप्रमाश्रयतया। तच्च केवलात्मनि स्वतो न संभवतीति वृत्त्युपादानान्तःकरणविशिष्टात्मन एव प्रमातृत्वमित्यर्थः । अन्तःकरणविशिष्टस्य प्रमातृत्वेऽनुभवं प्रमाणमाह—**अहमित्यनुभवेनेति** । नानाविद्यावादेऽविद्योपाधिकप्रमातृभेदादपि लौकिकादिव्यवहारव्यवस्थासिद्धिरित्यत उक्तम्—**एकाविद्येति** । "एषा माया" इति श्रुतौ स्वाव्यातिरिक्तानि स्वात्मकानि परिपूर्णा-

---

[1] विशिष्टस्यैव प्रमातृत्वं—ख. [2] प्राणाधार—ख.

लौकिकवैदिकव्यवस्थितव्यवहाराय प्रमातृकर्तृभोक्तृभेदस्याव-
श्यकत्वात् । तत्र चान्तःकरणातिरिक्तोपाध्यसंभवात् ।

"तद्भाव[1]भावमापन्नस्त[2]तोऽसौ परमात्मना ।
भवत्यभेदो[3] भेदश्च तस्याज्ञानकृतो भवेत्" ॥

इति स्मृतेश्च । अत [4]एव न तत्रोपाध्यन्तरमाशङ्कनीयमिति न जीवो भिद्यते । न चैवं चैत्रो न भवति मैत्र इति प्रतीतिर्भेदसाधिका ; एवं शङ्कमानस्य तव देहात्मवादप्रसङ्गात् । न च चैत्रात्मा न भवति मैत्रात्मेति प्रत्यक्षा प्रतीतिः संभवति ।

---

## दीपनम्

तत्र चेति । स्थूलदेहविशिष्टस्य परलोकगमनाद्यसंभवेन कर्तृत्वाद्ययोगात् कामादेरन्तःकरणधर्मत्वाच्च तद्विशिष्ट एव [5]कर्त्रादिरिष्ट इत्यर्थः। पूर्वं "मायया ह्यन्यदिव" इति श्रुत्या अज्ञानप्रयुक्त एव जीवभेद इत्युक्तम्। "एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति" इति श्रुतिरपि स्पष्टमेव मायिकं भेदं दर्शयति। तथा स्मृतिरपीत्याह—तद्भावेति। अत एव अज्ञानोपाधिकत्वस्मरणादेव । तत्र अभेदानुमाने। एवमसिद्धिमुद्धृत्य भेदप्रमाणविरोधं परिहरन् प्रथमं प्रत्यक्षाविरोधं परिहरति—न च चैत्रात्मेति। न तावच्चक्षुषेयं प्रतीतिः संभवति ; आत्मनि चक्षुषोऽसाम-

---

## पूरणी

न्यनन्तानि क्षेत्राणि शरीराहंकाराद्यभिव्यक्तिस्थानानीत्यर्थः । तद्भावेति मूलम् । ब्रह्मभावसाक्षात्कारवान् जीवः परमात्मनाभिन्नो भवति, तद्भेद-

---

[1] भावनापन्नः—छ. [2] दासौ—छ. [3] भेदी—छ. [4] एव च नोपाध्यन्तर—ख.
[5] कर्तृत्वादिरित्यर्थः—च.

## दीपनम्

र्थ्यात्। नापि मनसा, तस्य पृथक्प्रामाण्यस्य निरस्तत्वात्। अपि च नात्र योग्यानुपम्भोऽस्ति; परमात्मनोऽमानसत्वात्। ननु परमात्मनोऽपि चैत्राभेदन[1] स्वात्मैव सोऽप्यनुभूयेतेति तदनुपलम्भात्तद्भेदोऽनुभूयत इति चेन्न; चैत्रेणानुभूयमानात्मस्वरूपस्यैव मैत्रात्मतयानुपलम्भासिद्धेः। न चैवं चैत्रोऽहमिति प्रतीतिप्रसङ्गः; एतदहंबुद्धिविषयदेहात्तस्य भिन्नत्वात्। स्वशरीरसंबन्ध्यात्मनि मैत्रशरीरसंबन्धस्त्वननुभूयमानोऽपि तव विभ्वात्मनि घटादिसंबन्धवन्न भेदसाधकः। तत्सुखदुःखादिकं तु स्वशरी[2]रानवच्छिन्नदेशवृत्तित्वेनायोग्यत्वान्नानुभूयत इति योग्यानुपलब्ध्यभावान्नात्मभेदः प्रत्यक्ष इति भावः। इदानीं तत्रानुमान-

---

## पूरणी

स्याज्ञानकृतत्वादित्यर्थः। विभ्वात्मनीति। ग्राहकाभावाद्घटादिसंबन्धाननुभवेऽपि यथा आत्मनि [3]तदसंबन्धासिद्धिस्त्वन्मते तथा एतत्साक्षिणस्तच्छरीरादि[4]संबन्धित्वेन ग्राहकाभावात्तदननुभवेऽपि न तत्संबन्धविरहसिद्धिरित्यर्थः।

ननु जीवैक्ये तदन्तःकरणोपहितस्यैव एतदन्तःकरणोपहितत्वेन साक्ष्यैक्याद्दूरस्थघटादिवच्छरीरान्तरसंबन्धोऽनुभूयेत तदवच्छिन्नसुखादिकं च प्रतिसन्धीयेतेति चेन्न; अन्तकरणोपाधिकजीवभेदस्यैवाभ्युपगमेन तदभावोपपत्तेः। न चैवं भिन्नस्य जडतया अनुभवितृत्वं न स्यादिति वाच्यम्; चिद्रूपस्यैव तस्य भेदेन भिन्नचन्द्रस्य चन्द्रत्ववत्तदुपपत्तेः। नन्वेवं योगिनां कायव्यूहादौ प्रतिशरीरमन्तःकरणभेदेन तदुपाधिकजीवभेदप्रसङ्गः। न चेष्टापत्तिः; प्रारब्धशरीरावच्छिन्न-

---

[1] दे तेन—ख. [2] रानच्छिन्न—च. [3] न तदसंबन्धसिद्धिः—झ. [4] संबन्धेन.

**नन्वानुमानिकीयं प्रतीतिः। एकस्मिन्नेव समये चैत्रश्चेष्टते न मैत्र इति तावत्सिद्धम्। एवं तयोर्विरुद्धा चेष्टा दृश्यते। [1]तदुभयाश्रयात्मनि तत्तन्निमित्तप्रयत्नतदभावौ विरुद्धप्रयत्नौ च विना न सङ्गच्छत इति सिद्धो विरुद्धधर्मवत्त्वादात्मनो**

---

### दीपनम्

विरोधमाशङ्कते—**नन्विति**। तद्विरुद्धा विरुद्धदेशीयविषयचेष्टा तदभावाश्रयत्वं हेयतदभावाश्रयत्वं विरुद्धतदभावाश्रयत्वं च, **तदुभयाश्रयात्मनि** तयोश्चेष्टातदभावयोर्निमित्ते प्रयत्नतदभावौ विना तयोर्विरुद्धचेष्टयोर्निमित्ते विरुद्धविषयप्रयत्नौ च **विना न सङ्गच्छत इति**। तथा चैतौ भिन्नौ विरुद्धधर्माधिकरणत्वात्, दहनतुहिनवदित्यनुमानात्तत्सिद्धिरित्यर्थः[2]।

---

### पूरणी

जीवस्य व्यूहशरीरावच्छिन्नजीवभेदे तदुपभोगेन तदवच्छिन्नकर्मक्षयानुपपत्तेः, समानाधिकरणभोगस्यैव कर्मक्षयहेतुत्वात्। अन्यथा अतिप्रसङ्गादिति चेन्न; [3]तत्तत्कर्मार्जितशरीरावच्छिन्नोपभोगस्य [4]तत्तत्कर्मक्षयहेतुत्वात्। शरीरव्यूहस्य पूर्वशरीरावच्छिन्नकर्मार्जिततया तदुपभोगेन तत्क्षयोपपत्तेः। यज्ञदत्तशरीरादेर्देवदत्तशरीरावच्छिन्नकर्मानिमित्तत्वेन तदवच्छिन्नोपभोगेन यज्ञदत्तकर्मक्षयाप्रसङ्गात्। अत एव नानाशरीरसुखानुसन्धानमपि योगिनां सङ्गच्छते। अथ वा पूर्वान्तःकरणस्यैव योगप्रभावेन वैपुल्यापेक्षया नानाशरीरेषु भोगोपादानत्वोपपत्तेर्नान्तःकरणभेद इति न किंचिदनुपपन्नम्।

तत्पदैरुक्तविरुद्धवस्तुद्विकयोः सङ्ग्रहं दर्शयति—**विरुद्धदेशीयेत्यादिना**। ननु प्रयत्नतदभावाधिकरणत्वं हेतुः पर्यवस्यति। न च

---

[1] तत्तदुभ—**क. छ.** [2] °द्धेरित्यर्थः—**च.** [3] तत्कर्मा—**झ.** [4] तत्कर्म—**झ.**

**भेद इति, मैवम् ; सिद्ध्यत्वेवं निखिलशरीरसंबन्धः, तद्भेदस्तु नैव सिद्ध्यति। एकस्मिन्नपि प्रयत्नतदभावविरुद्धप्रयत्नादीनामनेकावच्छेदनोपपत्तेः। प्रयत्नादेरन्तःकरणतद्विशिष्टधर्मत्वाच्च।**

## दीपनम्

अत्र यद्यपि प्रयत्नाभावमात्रान्नात्मभेदः सिद्ध्यति, अनात्मनोऽपि तत्संभवात्; तथापि [1]लिङ्गान्तरात्तत्सद्भावसिद्धौ वर्णितानुमानात्तद्भेदसिद्धिर्विवक्षिता। अथ वा प्रयत्नस्य कादाचित्काभावो विवक्षित इति ततस्तत्सिद्धिरिति भावः। उक्तरीत्या नात्मभेदः सिद्ध्यतीति दूषयति—**सिद्ध्यत्विति**। स्वमतेनाह-**प्रयत्नादेरिति**। तथा च न ततः केवलात्मासिद्धिरिति भावः। भोक्ता अधिकारी। आदिपदान्नियोज्य उक्तः।

## पूरणी

तावता आत्मप्रतियोगिकभेदसिद्धिः ; आत्मघटयोर्व्यभिचारादिति शङ्कते—**यद्यपीति**। **तथापीति**। परस्परभेदमात्रमत्र साध्यम्। परस्परात्मप्रतियोगिकभेदस्तु तद्विरुद्धप्रयत्नाश्रयत्वादिलिङ्गान्तरादित्यर्थः। ननु तर्हीदं व्यर्थमित्यनुशयादाह—**अथ वेति**। **कादाचित्केति**। तस्य च घटादावभावान्न व्यभिचार इति भावः। **तथा च न तत इति**। एतेन चैत्रात्मा धर्मिज्ञानानिवर्त्यमैत्रात्मप्रतियोगिकभेदवान्, तद्विरुद्धधर्मवत्त्वात्, घटवदिति वास्तवात्मभेदसाधनमपि प्रत्युक्तम्। औपाधिकभेदेनैव तदुपपत्तेः। आत्मभेदस्य ब्रह्मसाक्षात्कारैकानिवर्त्यत्वेन जीवात्मज्ञानानिवर्त्यतया धर्मिज्ञानानिवर्त्यभेदे साध्ये सिद्धसाधनात्। जीवब्रह्मणोः पारमर्थिकभेदनिरासेन तदभिन्नजीवानां तात्त्विकभेदसाधनस्य बाधितत्वाच्चेति

---

[1] लिङ्गात्तद्भावसिद्धौ–च.

अत एव कर्मकाण्डबलाज्जीवभेद इति प्रत्युक्तम्। तस्यान्तःकरणविशिष्टकर्तृभोक्त्रादिभेदसाधकत्वेऽप्यविद्याप्रयुक्तजीवभेदे उदासीनत्वात्। न च तद्यो य इति वाक्यं जीवभेदे प्रमाणम्, [1]तस्यान्यतः सिद्धभेदानुवादेनानियतोपाधिविदुषो ब्रह्मभावमात्रे तात्पर्यात्। न चैवं चैत्रस्य मैत्रदृष्टसुखाद्यनुसन्धानप्रसङ्गः; शरीरभेदेन जन्मान्तरीयवत्तदुपपत्तेः। न च बालादिशरीरेऽप्यनुसन्धानं दृश्यत इति तन्न तत्र प्रयोजकमिति वाच्यम्; तत्रापि [2]शरीरप्रत्यभिज्ञादर्शनात्। तदारम्भकादृष्टे सति तद्विनाशायोगात्, प्रथमशरीरे क्लृप्तकारणाभावेन तदारम्भानुप-

---

## दीपनम्

तस्येति। लोकसिद्ध[3]भेदानुवादेन यदा यच्छरीरावच्छिन्न आत्मनि ब्रह्मसाक्षात्कारस्तदा जीवस्तद्भावं प्राप्नोति, न तूत्कृष्टहिरण्यगर्भशरीरस्थस्यैव मुक्तिरित्येवं परं तदित्यर्थः। तत्रापि शरीराभेद इत्याह—तत्रापीति। न च सा प्रत्यभिज्ञा भ्रमः; प्रमात्वे बाधकाभावात्, प्रत्युत भ्रान्तित्व एव बाधकमस्तीत्याह—तदारम्भकेति। न हि

---

## पूरणी

द्रष्टव्यम्। कर्तृभोक्त्रादीति मूलम्। तद्भेदमन्तरा ब्राह्मणाधिकारिविशेषसंबन्धितया कर्मविध्यनुपपत्तेरिति भावः। अनियतोपाधीति। मूलम्। अनियत उपाधिर्देवर्षिमनुष्यशरीरादिः। तत्र तदवच्छेदेन विदुषो ब्रह्मज्ञानवत इत्यक्षरार्थः। नन्वेवं देवादीनां पृथक्कीर्तनवैयर्थ्यमित्याशङ्क्य मानुषाणामपि प्रवृत्तिदार्ढ्यायेत्याह—लोकसिद्धेति।

---

[1] तस्यान्यथासिद्ध–ख. [2] शरीरे–छ. [3] तद्भेदा–ख. च.

**पत्तेश्च। जातिस्मृतिमतः शरीरभेदेऽपि स्मरणं दृश्यत इति चेन्न; अदृष्टविशेषरहितस्याननुसन्धाने शरीरभेदस्य प्रयोजकत्वात्। अन्यथा तद्वदेव [1]त्वन्मते अन्यः किमिति न स्मरेत्। यदन्तःकरणोपहितसाक्षिणा यदनुभूयते तस्यैव तत्स्मरणमिति नातिप्रसङ्गः।**

---

## दीपनम्

राज्यादिप्रापकादृष्टे सति तदारब्धं शरीरं विना विनष्टुमर्हति, कारणाभावादारम्भवैयर्थ्याच्चेत्यर्थः। क्लृप्तकारणं शुक्लशोणितव्यतिकरादि। न चैवं परिमाणान्तराभावप्रसङ्गः; जलूकादिशरीरवत् सङ्कुचितविस्तृतपटादिवच्च भेदं विनापि तदुपपद्यत इति भावः। जातिस्मृतिमतः शरीरभेदेऽपि जन्मान्तरीयस्मरणं नात्मैक्यकृतम्, किं त्वदृष्टविशेषकृतम्, योगिनामात्मान्तरेऽपि तद्दर्शनात्। ततोऽस्मदादीनामननुसन्धाने नात्मभेदः प्रयोजकः, किं तु शरीरभेद इत्याह—**अदृष्टेति**। तत्स्मरणस्यात्मैक्यप्रयुक्तत्वे बाधकमाह—**अन्यथेति**। किं च स्मृतिः संस्कारसमाश्रया, संस्कारश्चान्तःकरणोपहितसाक्ष्यनुभवजन्यस्तदाश्रय इति तद्भेदेन नातिप्रसङ्ग इत्याह—**यदन्तःकरणेति**।

---

## पूरणी

**सङ्कुचितविस्तृतेति** प्रौढवादः। तत्र संवलनादिना पूर्वमनुपलभ्यमानस्यैव परिमाणस्य पश्चादुपलम्भमात्रत्वेन तत्र परिमाणा-

---

[1] त्वन्मतेऽप्यन्यः—**ग.**

न चैवमपि बहूनां युगपच्छ्रवणादौ प्रवृत्त्यनुपपत्तिः ; किं बहव एव न सन्तीति तदनुपपत्तिः ; सन्तोऽपि वा युगपन्मुमुक्षवो [1]न भवन्ति परस्य मुमुक्षयैव मोक्षसिद्धेः किं वा फलाभावनिश्चयात्। नाद्यः ; बहुजीवप्रवृत्तेरभावात्। ननु दृश्यत इति चेन्ननूक्तं देहात्मवाद्यसीति। एकस्यैव जीवस्यानेकान्तःकरणावच्छेदभेदेन भिन्नस्य [2]युगपदेकप्रवृत्तौ किं बाधकम्। नापि द्वितीयः ; स्वसंबन्धिदुःखस्यासह्यस्वभावतया परस्येव स्वस्यापि [3]तन्निवृत्तिकामनासंभवात्। लोके ह्यन्यायत्ततया निश्चितेऽपि विलम्बमसहमानाः प्रवर्तमाना दृश्यन्ते। अत्र तु नान्यायत्तत्वनिश्चयः। न हि बाह्यचेष्टामात्रं [4]तत्त्वज्ञाने [5]सामग्री, किं त्वीश्वरानुग्रह [6]तदेकोपायलभ्यशुद्धिविवेकवैराग्यशमदमाचार्यप्रसादादि। तच्च परस्मिन् दृष्टजातिवेषादिना न निश्चेतुं शक्यम्, किं तु कार्यैकसमधिगम्यमिति ततः प्राक्सर्व

---

## दीपनम्

**एवमपि** अननुसन्धानोपपत्तावपीत्यर्थः। **फलाभावेति**। महतां शुकादीनां मुक्त्यभावे कथमर्वाचीनानां सेति तदभावनिश्चयादित्यर्थः। नन्वसह्यस्वभावस्यापि दुःखस्य स्वप्रवृत्त्या विनैव निवृत्तौ किं स्वस्य तत्कामनादिना, तत्राह– **लोके हीति**। **प्रवर्तमानाः** कामनापूर्वमिति शेषः। तत्

---

## पूरणी

न्तरानुत्पत्तेः। अन्यथा सङ्कोचदशायां तत्परिमाणाभावे विस्तृतपटतुल्य गुरुत्वाभावप्रसङ्गादिति। अन्यार्थप्रवृत्तिं वारयति–**कामनापूर्वमिति**।

---

[1] न भवन्तीति–क. [2] युगपदनेक–ग. [3] तन्निवृत्तौ काम–क. [4] तत्र ज्ञाने–ग. [5] सहकारी–क. [6] तल्लभ्यशुद्धि–क.

एव मुमुक्षवः प्रवर्तेरन् । यदि कथंचित्कश्चित्पुरुषान्तरेऽपि विद्यासामग्रीं निश्चिनुयात् मा भूत्तस्य प्रवृत्तिः । का नो हानिः । सोऽपि प्रवर्तेत इति चेत्तर्ह्यसौ जीवतत्त्वे भ्रान्तः । नहीदं संभवति, देवदत्ते[1] एतज्जन्मन्येव ज्ञानं भविष्यति, तच्च समूलं संसारं निवर्तयिष्यति, [2]स्वयं च दृष्टसुखविमुखः श्रवणादौ प्रवर्तेत इति । एतेनेदं निरस्तम् । मुनिर्मनुते मूर्खो विमुच्यत इत्येतत् "शास्त्रफलं प्रयोक्तरि" इति न्यायविरुद्धम् । तथा चाभाणको लोके—

"काचिन्निषादी तनयं प्रसूते कश्चिन्निषादस्तु कषायपायी ॥"

इति ॥

मुनिकर्तृकश्रवणादिविधिफलस्य साक्षात्कारस्य मूर्खेऽनभ्युपगमात्, तत्फलस्याप्यविद्यानिवृत्तेर्मुनिप्रत्यङ्मात्रगततया [3]ताव-

---

दीपनम्

ईश्वरानुग्रहादि । **जीवतत्त्व इति** । जीवानेकत्वभ्रमवानित्यर्थः । भ्रान्तिमेवोपपादयति—**न हीदमिति** । इदमर्थमेवाह—**देवदत्त इति** । कुतूहलादिप्रवृत्तिं वारयति—**दृष्टसुखेति** । [4]ततः प्रवर्तेत चेन्न भ्रान्त इत्यर्थः । **एतेनेति** । एकजीववादे हि यमनियमादिबहिरङ्गैः शान्ताद्यन्तरङ्गैश्च विशिष्टेन पुरुषेणानुष्ठितश्रवणादिनोत्पन्नतत्त्वसाक्षात्काराद्बालिकोऽपि विमुच्यत इति वक्तव्यम् । तत् "शास्त्रफलं प्रयोक्तरि" इति न्यायविरुद्धम् । तत्र हि दर्शपूर्णमासादिकर्तुर्यजमानस्य फलं नाध्वर्य्वादेरिति प्रतिपादितमिति तदप्येतेन निरस्तमित्यर्थः । एतेनेत्यस्यार्थमाह—**मुनिरिति** ।

---

[1] देवदत्तस्य—ख. [2] तीति निश्चिनोति, स्वयं—ग. [3] तावन्मात्रतया—ग. छ.
[4] अन्ततः—च.

न्मात्रगततया वा मूर्खनिष्ठत्वाभावात् । दृष्टफलानां च यथादर्शनमुपपत्तेश्च । एतेनैतत्परास्तम् । यो यस्यानर्थमिच्छति स एव तस्यानर्थनिवृत्त्यर्थं कथं यतेतेति । [1]निश्शेषं विगलितविषयदृष्टेरेव श्रवणादावधिकारात् । अपि च परस्य हितमपि [2]स्वयं तदेकाहितोपायः करोत्येव । न हि दहनसन्दीप्तवेश्मान्तर्गतः शत्रोर्हितं [3]भवतीति न निर्गमनोपायं रचयति । अत एवेदमपि निरस्तम् । ज्ञानस्य स्वसमानाधिकरणाज्ञाननिवर्तकत्वात्कथं प्रमात्रन्तरसमवेतं ज्ञानमन्यप्रमात्रज्ञानं निवर्तयेदिति । अज्ञानैकत्वस्योक्तत्वात् । नन्वेवं शुकादेर्मुक्तत्वादिदानीं संसारानुपलम्भप्रसङ्ग इति ॥

---

## दीपनम्

मूर्खनिष्ठत्वेति । मूर्खो हि शरीरादिविशिष्टः, न च तस्मिन्नविद्यानिवृत्तिरस्ति । तदानीं तस्याभावाच्चेत्यर्थः । दृष्टेति । अविद्यानिवृत्तिर्हि ज्ञानस्यान्वयव्यतिरेकसिद्धं फलं न वैधमिति न तस्याः कर्तृनिष्ठत्वनियम इत्यर्थः ॥

शुकमुक्तिशास्त्रस्य श्रूयमाणेऽर्थे प्रामाण्येऽभ्युपेते इदानीं संसारोपलब्धौ संभावितप्रकारानुपन्यस्य दूषयति । तत्रादौ शुकस्य ब्रह्मलोकवास एव श्रूयते न परममुक्तिरिति सप्रमाणमाशङ्कते—

---

## पूरणी

स्वस्वकामनयेत्यर्थः । न च तस्मिन्निति । अविद्यानिवृत्तेश्चिन्मात्र-

---

[1] निर्विशेषं—क. [2] स्वैकहितोपायं—ख. [3] भवेदिति स्वयं—ख. च. [4] विरचयति—ख. च. [5] व्यतिरेकदृष्टं फलं—ख.

अत्र केचित्—न हि शुकस्य परममुक्तिरासीत्, तस्य पुराणे आदित्यादिमार्गश्रवणात्। न हि परममुक्तेर्मार्गोऽस्ति, "अत्र ब्रह्म समश्नुते" इति श्रुतेः। किं तु ब्रह्मलोक एव। तत्रापि दुःखाभावेनोपचारान्मुक्तिशब्दोपपत्तेरिति, तन्न; तस्यात्मसाक्षात्काराभ्युपगमे मार्गभोगयोरयोगात्। तत्र गमनानन्तरोत्पन्नसाक्षात्कारेण जीवन्मुक्तस्य भोग इति चेत्, तर्ह्यज्ञानावरणस्य नष्टत्वेन तस्येवान्यस्यापि ब्रह्मतत्त्वावरणायोगात्। अत एव वामदेवादयोऽपि इहैव जीवन्मुक्ता एव तिष्ठन्तीति प्रत्युक्तम्॥

अपरे तु विदुषो भोगमसहमाना इत्थं कल्पयन्ति। शुकादिः किलोत्पन्नसाक्षात्कारत्वादत्यन्तं निवृत्तकामकर्माशयः

---

दीपनम्

**अत्र केचिदिति। पुराण इति।** भारते हि शुकः किल मुमुक्षुरादित्यमण्डलमुपगतो व्यासेनानुगतस्तेनाहूतो भो इति प्रतिशुश्रावेति तस्य मार्गोऽवगम्यत इत्यर्थः। **अत्रेति।** इहैव निर्गमनमन्तरेणैव। "न तस्य प्राणा उत्क्रामन्ति" इति विदुषः प्राणोत्क्रान्तिनिषेधाच्च न मार्ग इति द्रष्टव्यम्। मुक्तेरिव तस्य ब्रह्मसाक्षात्कारस्यापि [1]श्रूयमाणत्वान्नोक्तविषया गौणी मुक्तिरादित्यप्रतिश्च सशरीरस्यैव तस्येत्यभिप्रेत्याह—**तस्यात्मेति। अज्ञानावरणस्येति।** जीवन्मुक्तस्य विक्षेपावभासशक्तिमदज्ञानांशे स्थितेऽपि नावरणशक्तिमदज्ञानम्। तस्य ब्रह्मणि कदापि संशयविपर्यासादर्शनादिदानीन्तनानामपि तस्मिन्स न स्यादित्यर्थः। कामकर्मादिकमाशेतेऽस्मिन्निति आशयो लिङ्गशरीरम्। निवृत्तस्थूलसूक्ष्मोपाधिद्वय इत्यर्थः। ननु सत्यपि ज्ञाने यद्यज्ञानानिवृत्तिः

---

[1] श्रवणान्नो—च.

केवलाविद्याप्रतिबिम्बात्मनावतिष्ठते । कारणे सत्यपि कार्यनिवृत्तेर्दर्शनाद्दर्श[1]नानुसारेण चरमजीवज्ञानस्यैवाविद्यानिवर्तकत्वात्। तस्यां चावस्थायां दुःखाभावात् "तरति शोकमात्मवित्" इति श्रुतिप्रतिपन्ना मुक्तिरविद्याव्यवधानसत्त्वान्न[2] ब्रह्मभावरूपा । कामकर्मशरीरादेश्चात्यन्तिकविनाशात्सुषुप्तेर्विशेष [3]इति क्व शिक्षितेयमन्तरालावस्था—

"निवृत्तकामकर्मापि द्वैतोपासनतःपुमान् ।
अद्वैतोपास्तिविरहादज्ञो नैति परं पदम्" ॥

इति या भर्तृप्रपञ्चैरुत्प्रेक्षिता। अविद्यासमान[4]विषयज्ञानाभ्युपगमे तन्निवृत्तेरावश्यकत्वाच्चरमज्ञानत्वेनाहेतुत्वात् । न चेदानीं प्रतिबन्धादनिवृत्तिः ; ज्ञानसमानाधिकरणस्य तस्याभावात् व्यधिकरणस्य चाप्रतिबन्धकत्वात् "ब्रह्म वेद"इति ब्रह्मप्राप्ति-

---

## दीपनम्

कदापि तर्हि न निवर्तेत, तत्राह—**दर्शनेति**। **द्वैतोपासनतः** सविशेषहिरण्यगर्भोपास्तितः ।

**ज्ञानसमानाधिकरणस्येति** । ज्ञानेन शरीरद्वयतद्धर्माणामात्यन्तिकनिवृत्तेस्त्वयाभ्युपेतत्वादित्यर्थः । **अप्रतिबन्धकत्वादिति** ।

---

## पूरणी

निष्ठत्वादित्यर्थः। कारिकायां **निवृत्तकामेति** मूलम्। सविशेषहिरण्यगर्भाद्युपासनयापि स्थूलसूक्ष्मदेहद्वयनिवृत्तिर्न तु ब्रह्मैक्यम् ; तस्याद्वैतोपासनामात्रसाध्यत्वादिति मतेनेदं तुल्यं, ब्रह्मैक्यमन्तरा सूक्ष्मोपाधिनिवृत्तौ मानाभावेन तद्वदिदमप्ययुक्तमिति भावः । **प्रतिबन्धादिति**

---

[1] दृष्टत्वाद्दर्श—छ. [2] ब्रह्मस्वरूप-ग. [3] इति तत्र क-ग. [4] विज्ञाना—छ.

लक्षणमुक्तेरपि ज्ञानसमानकालत्वश्रवणात् कारणे सति कार्यस्यात्यन्तिक[1]निवृत्त्यनुपपत्तेः एवंविधाविद्यायां प्रमाणाभावाच्च ॥

अन्ये तु तत्त्वसाक्षात्कारादविद्यानिवृत्तिर्नेत्यसङ्गतमिति मन्वाना इत्थं कल्पयन्ति। यदन्तःकरणे साक्षात्कार उत्पद्यते तदन्तःकरणोपहितसाक्षिणं प्रति ब्रह्मस्वरूपावरणतदन्तःकरणादिविक्षेपशक्तिमदज्ञानांशो निवर्तते। अनिर्वचनीयाज्ञानेंऽशकल्पनोपपत्तेः। ततश्च तदन्तःकरणो[2]पहितसाक्षिणो ब्रह्मभावः संसारनिवृत्तिश्चोपपद्यते। पुरुषान्तरेऽविद्यादर्शनं चेति वार्तमेतत्। अज्ञानानुभवस्य सर्वपुरुषनिष्ठस्यैकाज्ञानतदावरणविषयतया आवरणशक्तिभेदे प्रमाणाभावात्। तस्याश्चैकज्ञानान्निवृत्तावन्येषामावरणतदनुभवायोगात् अनिवृत्तौ च पूर्वस्य ब्रह्माभेदायोगात् अखण्डाज्ञानप्रतिबिम्बात्तदवयवप्रतिबिम्बस्यान्यत्वेनानेकजीववादप्रसङ्गाच्च ॥

---

## दीपनम्

लोके तथाऽदर्शना[3]दिति भावः। **ज्ञानसमानकालत्वेति**। तथा च न तस्य चरमजीवज्ञानप्रतीक्षोपपद्यत इत्यर्थः। सुषुप्त्याद्यवस्थातो वैलक्षण्यमपि न स्यात्, तच्च ज्ञानिनो न युक्तमित्याह—**कारण इति**। **एवं विधेति**। अपरोक्षनिश्चयसमानकालीनावारकाविद्यायामित्यर्थः ॥

एकदेशनिवृत्तिमावरणनिवृत्तिं चाभ्युपेत्याह—**अखण्डेति**। **अवयवः** अंशः। खण्डाज्ञानमिति यावत्।

---

## पूरणी

**मूलम्**। दुरदृष्टप्रतिबन्धादित्यर्थः। **ज्ञानसमानेति** मूलम्।

---

[1] नाशानुपपत्तेः—क. [2] पहितसंसारिणो ब्रह्माभेदः—ख. ग. छ. [3] दित्यर्थः—च.

**अस्मदीयास्तु केचिन्मुक्तदृष्ट्या कोऽपि भेदो न विषयीक्रियत इत्येको जीव एकमुक्त्या सर्वमुक्तिरित्यस्याभि[1]प्राय इत्याहुः । [2]तच्चाविद्यकनानाजीववादान्न विशिष्यते ॥**

**कथं तर्हि शुकादिमुक्त्यनन्तरमपि संसारोपलब्धिरिति[3] चेन्न ; शुकादिमुक्तिसद्भावे प्रमाणाभावात् प्रपञ्चोपलम्भविरोधेनार्थवादमात्रात्तदसिद्धेः । न चान्यत्तत्सत्वे प्रमाणमस्ति ॥**

दीपनम्

**आविद्यकेति** । तत्रापि मुक्तस्य भेददर्शनाभावात् ब्रह्मरूपेण तद्दृष्टत्वमन्यत्रापि समानमित्यर्थः ।

इदानीं प्रश्नपूर्वकं सिद्धान्त्यभिमतप्रकारमाह—**कथं तर्हीति** । **प्रमाणाभावादिति** । प्रत्यक्षानुमानयोस्तत्रासत्त्वादित्यर्थः । वेदोऽपि श्रोतृपुरुषार्थपर्यवसायी, अन्यथा तस्य तदध्ययनवैयर्थ्यात् । न च शुकादिमुक्तिज्ञानेनास्य साक्षात्किंचित्फलमस्ति । तस्माज्ज्ञानप्रशंसाद्वारेण श्रोतृप्रवृत्तिस्तत्फलमित्यन्यपराद्वाक्यादिदानीं संसारोपल[4]म्भविरोधान्न तन्मुक्तिः सिद्ध्यतीत्याह—**प्रपञ्चेति** ॥

पूरणी

त्वया साक्षात्कारवतः कर्मादिनिवृत्त्यभ्युपगमादित्यर्थः । **तस्माज्ज्ञानेति** । तथा च शुकादीनां ब्रह्मसाक्षात्कार एवासिद्धः । साक्षात्कारद्वारा तन्मुक्तिप्रतिपादनं तु तेषां ब्रह्मनिर्णयमात्रेण शरीरादिबन्धो नात्यन्तमस्मदादिवदुद्वेगकरः, किमुत ब्रह्मसाक्षात्कारवतामिति

[1] प्रायमाहुः—ग. छ. [2] तत्तु—क. ग. [3] चेत्, शुकादि—छ. [4] म्भावि—ख.

**अस्तु वा शुकादिरपि व्यासशङ्करभगवत्पादादिवद्विष्णो-रेवांशावतारः। शुकवामदेवादेर्गर्भ एव ज्ञानैश्वर्यादिश्रवणात्।**

## दीपनम्

अविरुद्धं मतान्तरमाह—**अस्त्विति। व्यासेति।**

"द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिः।"

इति वचनात् व्यासस्य,

"व्याकुर्वन्व्याससूत्रार्थं श्रुतेरर्थं यथोचिवान्।
श्रुतेर्न्याय्यः स एवार्थः शंकरः सविता न ना॥"

इति शिवपुराणवचनात् शंकराचार्यस्य च भगवद्रूपतया नित्यमुक्तत्व-मिव शुकादीनामपि।

"द्वैपायनाच्छुको जज्ञे भगवानेव शंकरः।
अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदम्॥"

इत्यादिकूर्मपुराणवचनात्तदिति नेतः पूर्वमविद्यानिवृत्तिरित्यर्थः। तत्र लिङ्गमाह—**शुकवामदेवादेरिति।** "गर्भ एवैतच्छयानो वामदेव

## पूरणी

तत्प्रशंसार्थमित्यर्थः। **शंकर इति।** शंकरः सविता ईश्वरः न तु ना जीव इति वचनार्थः। ननूक्तवचनेन शुकस्य भगवतः शंकरपदा-भिधेयरुद्रात्मकत्वं प्रतीयते। रुद्रश्च जीव एव, "नारायणाद्रुद्रो जायते" इत्यादिश्रुतेरिति चेन्न, "ते देवा रुद्रमपृच्छन् को भवानिति, सोऽब्रवीत्, अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इति श्रुत्या सृष्टिप्रथमकालीनत्वादिना ईश्वरत्वप्रतिपादनात्, "सर्वो ह्येष रुद्रः" इत्यादौ सर्वात्मकत्वप्रति-पादनाच्च। न ह्यनीश्वरस्य तत्संभवति। न चात्र रुद्रशब्दस्य कथं-

## पूरणी

चिद्विष्णुपरत्वमिति वाच्यम्; विष्णुशब्दस्यापि रुद्रार्थत्वमिति वैपरीत्यस्यापि वक्तुं शक्यत्वात्। 'नारायणाद्रुद्रः' इति नारायणपदनिर्देश्यबिम्बब्रह्मणः रुद्रलीलादेहोपाधेरुत्पत्तिं दर्शयति। तदुत्पत्तिप्रतिपादनं च शैवाभिमतनीलकण्ठदेहसत्यत्वशङ्कावारणार्थं श्रीकृष्णो देवकीपुत्र इत्यादिवत् देहोपाध्याविर्भावस्थानत्वेन वा। वस्तुतस्त्विदं वाक्यं जीवात्मकदेवगणान्तर्भूत[1]रुद्रोपाधीनां विष्णोरुत्पत्तिप्रतिपादनपरम्। न चैकवचनानुपपत्तिः; तेषां गणत्वप्रसिद्ध्या तेन रूपेण तन्निर्देशोपपत्तेः। नच तदतिरिक्तरुद्रसद्भावे मानाभावः; उदाहृतश्रुतेः,

"उमासहायं परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्॥

इति श्रुतेश्च मानत्वात्। देवगणान्तर्भूतरुद्राणां भूतयोनित्वादेरसंभवात्। अत एव विष्णुर्जीव इत्यपि निरस्तम्। 'नारायणाद्रुद्रः' इति श्रुतौ नारायणपदाभिधेयविष्णोर्जगत्स्रष्टृत्वेन श्रवणात्। नच नारायणपदं जीवसमूहनियन्त्रर्थकं तच्छिवपरत्वेऽपि युज्यत इति वाच्यम्; पुराणादिषु चतुर्भुजादिदेहोपाधिमत्येव नियतप्रयोगेण [2]योगादपि तदर्थस्यैव लाभात्। अत एव पङ्कजादिपदानां यौगिकत्वेऽपि न तेभ्यः कुमुदादिप्रतीतिः। 'प्रयोगनियमात्' इति मीमांसकसिद्धान्तात्। नारायणाद्रुद्र इति रुद्रस्य पृथङ्निर्देशाच्च। किं चैवं रुद्रादिशब्दानामपि संहारकत्वाद्यर्थकानां विष्णौ वृत्तिसंभवेन वैपरीत्यप्रसङ्गः। एतेन सहस्रशीर्षमित्यादिनारायणवाक्यजातं शिवपरमेवेति निरस्तम्॥

[1] रुद्राणां—झ. [2] यौगिकादपि—ट.

तेषां श्रवणादिव्यापारस्तु श्रीकृष्णादेरिव गुरुकुलवासोऽप्यन्यथोपपद्यत इति नैतावता तेषु बन्धः [1]कल्पयितुं शक्यते। हिरण्यगर्भस्तु कर्मफलत्वात् [2]जीवः सर्वज्ञोऽपि सृष्टौ सर्वज्ञः

---

## दीपनम्

एवमुवाच" इत्यादिना श्रवणात्। नच गर्भे तत्त्वज्ञानं संसारिणः संभवतीत्यर्थः। **अन्यथा** लोकसङ्ग्रहार्थम्। **कर्मेति**। अश्वमेधाद्युपा-

---

## पूरणी

वस्तुतस्तु व्यासभगवान् परमाप्तत्वेन प्रसिद्धः। स च विष्णुशिवयोरुभयोरपि परमेश्वरत्वमवर्णयत्। नच तत्र किंचिद्वाक्यं कंचित्पुरुषं प्रत्येव प्रमाणभवितुं युक्तम्, शब्दस्य साधारणप्रमाणत्वात्। प्रतीतिविकल्पानुपपत्तेश्च। अतः कृत्स्नश्रुतिस्मृतीतिहासपुराणवचनसामञ्जस्याय उभावपि परमात्मानावभ्युपगन्तव्यौ। नच तयोर्भेदे जगन्नियन्तृत्वादिकं पृथगुपपद्यते। अनेकमहाजनाधिष्ठिताप्रहारवज्जीवानामतिकष्टदशाप्रसङ्गात्। तस्मादुभयोरैक्यमिति शङ्करावतारशुकाचार्याणामपि परमात्मत्वं सिद्धम्॥

अत्रेदं चिन्त्यम्—शुकादेर्बिम्बात्मकत्वे प्रमाणाभावात्। नच 'द्वैपायना' दित्युक्तस्मृतिवाक्यं तत्र मानम्, तद्वाक्यं हि न शुकस्याहत्येश्वरत्वं प्रतिपादयति, प्रयोजनाभावात्। नच तदुपासनादिसिद्धिः प्रयोजनम्; तद्विधायकवाक्यान्तराभावात्। अस्यैव तद्विधायकत्वे तदीश्वरत्वोपासनात्मकविधेयद्वैविध्येन वाक्यभेदप्रसङ्गात्। तस्मादिदं वाक्यं तत्प्रवर्तितपुराणादौ विश्वासार्थं भगवत्स्वरूपाभिज्ञतामात्रप्रदर्शनपरमिति न शुकादेरीश्वरत्वंसिद्धिः;। नापि गर्भस्थस्य

---

[1] कल्प्यः—क. [2] जीवोऽसर्व—ख.

न तत्त्ववित्, तत्र [1]मानाभावात्। अशनायादिश्रवणाच्च। स हायमीक्षांचक्र इत्येतत्तु विवेकमात्रतयाप्युपपद्यत इत्यतो नेदानीं प्रपञ्चानुभवविरोधः। यत्तु हिरण्यगर्भस्यापि दुर्लभं ज्ञानमर्वाचीनानां भविष्यतीति का प्रत्याशेति तन्न; निरतिशयकर्मफलभोगाशावशीकृतस्य नानाविधसृष्टिव्यापारविक्षिप्तचित्तस्य ज्ञानाभावेऽपि विरक्तस्य शान्तिदान्त्यादिसम्पन्नस्य ज्ञाने बाधकाभावात्। न ह्यन्धो रूपं न पश्यतीति चक्षुष्मतः सुन्दरदिदृक्षा न भवेत्। तव वा अनादिपरम्परायाममुक्तस्येदानीं कथं मुमुक्षा। नह्यनादिपूर्वजन्मसु त्वमतिप्राकृत एव, इदानीमेधमानजातिशीलैश्वर्यस्याकस्मिकत्वप्रसङ्गात्। अज्ञस्य विवेकवैराग्यादिसम्पन्नस्य तत्त्वज्ञानान्मोक्ष इति शास्त्रप्रामाण्यविश्वासात्तवेदानीं मुमुक्षा सान्यत्रापि समाना॥

नन्वेवं गुरोर्विद्यया निखिलमुक्तौ शिष्यो न विद्यार्थं यतेत। न चाज्ञानाद्गुरोः कश्चिद्विद्यां प्रार्थयत इति चेत्,

दीपनम्

सनारूपकर्मफलत्वादित्यर्थः। **अशनायेति**। "मृत्युनैवेदमावृतमासीदशनायया सोऽबिभेत्"इत्यादिना अशनायादिश्रवणादित्यर्थः॥

पूरणी

वामदेवादेर्ज्ञानश्रवणलिङ्गात्तात्सिद्धिः; जडभरतादेरपि तच्छ्रवणात्। किं चैवमपि गोपिकाशिशुपालादिमुक्तिप्रतिपादकागमानां का गतिः। नच तेषामपि बिम्बान्तर्भाव इति साहसं युक्तम्। तस्मात्पूर्वोक्तमेव सम्यक्॥

[1] प्रमाणा—ग.

मैवम्; परोक्षादपि ज्ञानादुपदेशादिसंभवात् । तत्त्वनिर्णयः खलूपदेशेऽपेक्ष्यते न तु साक्षात्कारोपि, धर्मादेरनुपदेशप्रसङ्गात् । ब्रह्मनिष्ठता च परोक्षज्ञानिनोऽपि कृतसन्न्यासस्य तदेकव्यापारतारूपा संभवति ॥

"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।"

[1]इत्यत्रापि ज्ञानं युक्त्याद्युपकरणविषयम्, तत्त्वदर्शनं तु ब्रह्मनिर्णय इति न ततोऽप्युपदेष्टुरपरोक्षज्ञानापेक्षा । एतच्च शिष्यो जानन्नप्यप्रतिबद्धापरोक्षज्ञानं स्वयं सम्पादयिष्यामीत्याचार्यमुपसर्पति । गुरुरप्येकजीवत्वं जानन्नपि स्वस्मिन्नपरोक्षज्ञानाभावदर्शनात्तदर्थं मुख्यमधिकारिणं प्राप्योपदिशतीति न कोऽपि दोषः । [2]एतेन फलाभावनिश्चयादिति पक्षोऽपि निरस्तः[3] ॥

केचित्त्वनुत्पन्नतत्त्वज्ञान एव गुरुः शिष्येण [4]तद्वत्त्वेन कल्पित इति शिष्याविद्याकल्पितो गुरुः शिष्यमुपदिशतीति

## दीपनम्

परोक्षादिति । प्रतिबद्धापरोक्षज्ञानादित्यर्थः । [5]अपरोक्षे ब्रह्मणि परोक्षज्ञानाभावात्साक्षात्कारः प्रतिबद्धः इति शेषः । **ब्रह्मनिर्णय** इति । दर्शनस्य चाक्षुषस्य तत्त्वगोचरस्यासंभवाल्लक्षणायाश्चावश्यकत्वादित्यर्थः ॥

## पूरणी

**परोक्षज्ञानिन इति** मूलम् । श्रोत्रियविशेषणादापातब्रह्मज्ञानलाभेऽपि तन्निर्णयालाभात्तदर्थं ब्रह्मनिष्ठत्वविशेषणं सार्थकमिति भावः ।

---

1 इत्यादिवाक्यादावपि—ग. 2 एतेन तृतीयोऽपि पक्षः—क. 3 क्षोऽपास्तः—ख.
4 विद्वत्त्वेन—ग. 5 इदं वाक्यमधिकमिव भाति । तत्र च—परोक्षे ब्रह्मण्यपरोक्ष इति—अप्रतिबद्ध इति भवितव्यम्.

वर्णयन्ति, तदन्यथाप्युपदेशोपपत्तेरयुक्तम्। एकजीवत्वं जानतः शिष्यस्य स्वस्मिन्नज्ञानानुभवविरोधेन तस्मिन्विद्याकल्पनायोगात्। कल्पनेऽपि च वैयर्थ्यनिश्चयेन प्रवृत्त्ययोगात्। [1]तद्वृत्तयापि कल्पितस्य गुरोः स्थाणुपुरुषवदुपदेशायोगात्। ननु स्वप्ने कल्पितो गुरुर्मन्त्रमुपदिशति, तेन च फलमित्येवमादिकं दृश्यत इति [2]चेत्तत्रापि प्राक्तनजन्मानुभूतमन्त्रविशेषस्मरणम्। उपदेशस्तु भ्रममात्रम्। न चेह तथा संभवति। अथवा तस्य पुण्यवशात्परमेश्वर एव [3]तथा विग्रहं परिगृह्योपदिशतीति कल्प्यताम्। जाग्रत्यपरोक्षज्ञानिन एवोपदेश इति

दीपनम्

गुरौ ज्ञाने सत्यपि स्वस्मिन्नज्ञानानुवृत्तिश्चेदग्रेऽपि न ततस्तन्निवृत्तिः संभवति, न च तया विना ब्रह्मप्राप्तिरिति तस्य वैफल्यनिश्चयेन न तदर्थं प्रवर्तेतेत्याह—**कल्पनेऽपि चेति**। **न चेहेति**। ब्रह्मतत्त्वस्य प्रागननुभूतत्वादन्यथेदानीं संसारोपलब्धिर्न स्यादित्यर्थः। **अथवेति**। जाग्रत्यप्यपरोक्षज्ञानिन एवोपदेश इति नियमाभ्युपगमे ईश्वर एवोपदिशतीति संबन्धः। ननु परमेश्वरस्य स्वशरीरेऽपि सत्त्वा-

पूरणी

**परमेश्वर एवेति** मूलम्। न तु कल्पितशरीरविशिष्टात्कस्माच्चिद्गुरोस्तथाविधो मन्त्रोपदेश इत्यर्थः। न चैवमीश्वरविग्रहस्य स्वप्नकल्पितत्वे तस्य तत्साक्षिण्यध्यस्ततया तदवभासानुपपत्तिः, इन्द्रियव्यवधानमन्तरा बिम्बाध्यस्तस्यावभासायोगादिति वाच्यम्; आन्तरबिम्बचैतन्यस्य तदन्तःकरणोपधाने तत्साक्ष्यैक्यात्तदध्यस्तविग्रहस्य

[1] विद्वत्तयापि—ग. [2] चेन्न; तत्रा—ख. छ. [3] तथाविधं विग्रहं—ग.

**नियमे "आचार्यवा"नित्यादिशास्त्रा[1]नुरोधेन परमेश्वर एव विग्रहं परिगृह्योपदिशतीति स्त्रीशरीरेण कबन्ध [2]आथर्वण इव शिष्यविश्वासास्पदं शरीरविशेषं परिगृह्य तच्छरीरेणोपदिशतीत्यनवद्यम्। तस्मादेक एव जीव इति ॥**

---

## दीपनम्

त्किमुपदेशाय शरीरान्तरपरिग्रहेणेत्यत आह—**आचार्यवानिति। कबन्धेति।** "मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्जलं काप्यं"इत्यादिना स्त्रीशरीरे प्रविश्य कबन्धाख्यो गन्धर्वः सूत्रमन्तर्यामिणं चोपदिदेशेति श्रूयते यथा तद्वदीश्वरोऽपीत्यर्थः। नन्वेवं मूर्खशरीरे प्रविश्य किमिति नोपदिशेत्, तत्राह— **शिष्येति** ॥

---

## पूरणी

शुक्तिरजतादिवत्केवलसाक्षिभास्यत्वोपपत्तेरिति दिक्। **आचार्यव निति** मूलम्। जीवस्येश्वरोपदेशानुकूलव्यापारवच्छरीरतादात्म्याध्यासेनोपदेष्टृत्वाभिमान इति भावः। **सूत्रं** जगदुपादानत्वाक्रान्तम्। यद्यप्युपादानान्तर्यामिणोर्न भेदः, तथापि तद्धर्मभेदेनौपाधिकभेदमाश्रित्य चकारः। सूत्रपदं लक्षणया अद्वितीयब्रह्मपरं वेति मन्तव्यम्। अथ वा सूत्रपदेन वायुरभिधीयते। "वायुना वै गौतम सूत्रेण" इत्यादिश्रुतौ तत्र सूत्रपदप्रयोगात्। जगद्व्यापितया ब्रह्मवैलक्षण्याय तस्य ज्ञातव्यत्वाचेति।

---

[1] नुविधानेन—ख. [2] आथर्वणवच्छिष्य—ग. छ.

## बिम्बप्रतिबिम्बवादः

स चाविद्योपाधिक इत्युक्तम्। औपाधिकभेदश्च बिम्बप्रतिबिम्बरूपेण न त्ववच्छिन्नानवच्छिन्नरूपेण।

"यथा ह्ययं ज्योतिरात्मा विवस्वा-
नपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा॥"

"एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।"

इत्यादिप्रतिबिम्बादित्यचन्द्रदृष्टान्तश्रुत्या [1]दर्शितजीवभेदस्य

---

### दीपनम्

एकदेशिसंमतादौपाधिकजीवभेदात्स्वमते विशेषमाह—**औपाधिकेति**। यथा लोके एकस्माद्दर्पणाद्युपाधेर्बिम्बप्रतिबिम्बमुखभेदः एवमेकस्मादज्ञानाज्जीवेश्वररूपबिम्बप्रतिबिम्बभेद इति चकारार्थः। उपपत्तिविरुद्धश्चायं पक्षः। किं त्वन्मते ईश्वरस्वरूपमनवच्छिन्नचैतन्यं सर्वत्रानुगतमखण्डमेव, किं वा जीवव्यावृत्तरूपवत्। नाद्यः; "यो विज्ञाने तिष्ठन्" इत्यादिशास्त्रेणैव तस्य जीवव्यावृत्तरूपेण सर्वनियन्तृत्वसर्वज्ञत्वादिप्रतिपादनात्। अन्यथा सर्वज्ञत्वादिसाङ्कर्यप्रसङ्गात्। द्वितीय

---

### पूरणी

**यो विज्ञान इति**। "यो विज्ञाने तिष्ठन्विज्ञानमन्तरो यमयति" इति श्रुतौ विज्ञानपदाभिधेयमनोमयत्वादिविशिष्टजीवस्य पृथिव्यादिवदधिष्ठानत्वेनेशनियम्यत्वमीश्वरस्य च तदाधेयतया नियन्तृत्वं श्रूयत

---

[1] दर्शितप्रभेदस्य—छ.

**घटाकाशकल्पत्वायोगात्। अवच्छेदकस्यावच्छिन्नस्य वा अभाव-विशिष्टत्वानवच्छिन्नत्वस्याव्याप्यवृत्तितया तद्विशिष्टस्य सर्वगत-त्वायोगात्। तथा च सर्वज्ञत्वादिगुणकस्य ब्रह्मणः सर्वसंबन्धा-भावात्सर्वनियन्तृत्वसर्वोपादानत्वासंभवः। बिम्बत्वं तु लोके स्वरूपं व्याप्यैव दृष्टमिति न बिम्बब्रह्मणः सर्वगतत्वाद्यनुपपत्तिः।**

---

दीपनम्

आह—**अवच्छेदकस्येति।** यथा आकाशस्वरूपमात्रस्य सर्वगत-त्वेऽपि घटानवच्छिन्नत्वविशिष्टानवच्छिन्नाकाशस्य न सर्वगतत्वं, एव-मनवच्छिन्नेश्वरस्यापीत्यर्थः। **सर्वसंबन्धाभावादिति।** तथा च सर्वज्ञत्वमपि न स्यादिति भावः। **बिम्बत्वं त्विति।** लोके हि मुखादेः प्रतिबिम्बावस्थायां प्रतिबिम्बनिरूपितं बिम्बत्वं मुखमात्रस्यैव

---

पूरणी

इत्यवश्यं नियन्तृनियम्ययो रूपभेद आश्रयणीय इत्यर्थः। नन्वेवं द्रष्टृद्वयस्य कथमेकशरीरेऽन्तःकरणावस्थानम्। तथा सति तत्र विरुद्ध-चेष्टादिप्रसङ्गात्, "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधाच्चेति चेन्न; एकस्यैव सर्वानुस्यूतचैतन्यस्य बिम्बप्रतिबिम्बरूपेण भिन्नस्य नियन्तृनियम्यात्मकतयाभयरूपेण वृत्त्यविरोधात् ब्रह्मणः स्वातन्त्र्येण प्रवर्तकतया विरुद्धचेष्टादेरप्यसंभवात्। श्रुतेश्च वास्तव द्रष्टृभेदनिषेधपर त्वादिति भावः। **एवमनवच्छिन्नेति।** अविद्यानवच्छिन्नत्वविशिष्ट-चैतन्यस्यावच्छिन्नचैतन्यानुस्यूतिविरहेण तादृशेश्वरस्याविद्यावच्छिन्न-ब्रह्माण्डाद्बहिर्भावः स्यादित्यर्थः। **अवच्छेदकस्येति मूलम्।** अविद्यान-वच्छिन्नत्वम्। तत्त्ववच्छेदकाविद्याभावविशिष्टत्वं अविद्यावच्छिन्नत्वा-भावविशिष्टत्वं वा। उभयमप्यव्याप्यवृत्तीति तदवच्छिन्नप्रदेशे तन्ना-स्तीत्यर्थः। **मुखादेरिति।** ग्रीवास्थत्वावच्छेदेन मुखमात्रस्य बिम्बत्व-

**ननु जीवस्य प्रतिबिम्बत्वे ब्रह्मणो भेदप्रसङ्गः; लोके हि बिम्बप्रतिबिम्बयोरिमौ चैत्रतत्प्रतिबिम्बाविति**

---

दीपनम्

व्यवह्रियते न तु तदेकदेशस्य। यत्र त्वेकदेशस्यैव बिम्बत्वव्यवहारस्तत्र प्रतिबिम्बत्वमपि तावन्मात्रस्यैवेति तावदेव बिम्बम्, तथैवानुभवादित्यनवच्छिन्नत्ववन्न बिम्बत्वमेकदेशवृत्तीति तद्विशिष्टं ब्रह्म सर्वगतमित्यर्थः। ननु नीरूपस्य कथं प्रतिबिम्ब इति चेत् लोके तादृशरूपादीनामपि प्रतिबिम्बदर्शनात्। न च नीरूपद्रव्यस्य तन्नास्तीति वाच्यम्; गुणाश्रयतालक्षणद्रव्यत्वस्यात्मन्यभावात्। 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिशास्त्रेण नीरूपस्यापि तस्य प्रतिबिम्बाभ्युपगमे बाधकाभावाच्च। दृश्यते च तादृशस्याप्याकाशस्य परिमितजलेऽपि पात्रे अतिदूरदेशस्थितस्य साभ्रनक्षत्रस्य प्रतिफलनमिति न

---

पूरणी

वदविद्याश्रयत्वावच्छेदेन बिम्बत्वं चैतन्यस्वरूपमात्रस्यापीत्यर्थः। न चातीन्द्रियाकाशस्य कथं प्रत्यक्षभ्रम इति वाच्यम्; अभ्राद्याकारवृत्त्युपहितानावृतसंवित्तादात्म्येन तस्यापि घटादिवदपरोक्षत्वादिति भावः। जलान्तरस्थाकाशनिष्ठतया अभ्रनक्षत्रादेरेव प्रतिफलनमिति शङ्कां व्यावर्तयितुं परिमितेत्यादिविशेषणम्। यद्वा परिच्छिन्नस्य मुखादेः प्रतिफलनं दृष्टम्। ब्रह्मणस्त्वपरिच्छिन्नस्य कथं प्रतिफलनमित्याशङ्कयानवच्छिन्नस्याप्याकाशस्य परिच्छिन्नजलोपाधावपि प्रतिफलनं दृश्यत इति परिच्छिन्नाविद्योपाधावपरिच्छिन्नब्रह्मणः प्रतिफलने न किञ्चिद्बाधकमिति दर्शयितुं परिमितादिविशेषणम्। जलदेशस्थाकाशनिष्ठतयाभ्रनक्षत्रादिप्रतिफलनशङ्काव्यावृत्त्यर्थमतिदूरेति। जलान्तरे दूरदेशस्थतयोपलभ्यमानेत्यर्थः। जलदेशाकाशस्य च तदयोगादिति भावः॥

**भेदस्य प्रत्यक्षसिद्धत्वात्, स्वाभिमुखत्वादिविरुद्धधर्मैस्तदनुमानाच्च। न चाभेदे मानमस्ति। न च ममेदं मुखमिति ग्रीवास्थमुखाभेदानुभव इति वाच्यम्; दर्पणे मुखच्छायां पश्यामीत्यनुभवेन प्रत्यङ्मुखत्वदर्पणस्थत्वभेदाना[1]मनेकेषामनुभवेन च मुखत्वसंसर्गाभेदानुभवद्वयस्याप्रामाण्य[2]कल्पनात्। अस्तु वा मुखान्तरं न तदेव तदिति, मैवम्, दर्पणे मुखं पश्यामीत्यनुभवेन तस्मिन्मुखत्वसंसर्गस्य ग्रीवास्थ-**

## दीपनम्

किंचिदनुपपन्नमिति भावः। **प्रत्यङ्मुखत्वं** स्वाभिमुखत्वम्। **मुखत्वेति**। मुखत्वसंसर्गस्य तदाश्रयग्रीवास्थमुखाभेदानुभवस्य चेत्यर्थः। **अप्रामाण्यकल्पनात्** अप्रामाण्यकल्पनस्योचितत्वादित्यर्थः।

## पूरणी

वस्तुतस्तु जन्यप्रतिफलने अन्वयव्यतिरेकाभ्यां रूपवत्त्वस्य हेतुत्वेऽपि नानादिचित्प्रतिफलनस्य तेन विनानुपपत्तिरिति स्मर्तव्यम्। न चाज्ञानस्य नीरूपतया कथं तत्र प्रतिफलनमिति वाच्यम्; प्रतिफलनं हि तदवच्छिन्नतयाभिव्यक्तिः। तत्र रूपवत्त्वं न प्रयोजकम्; नीरूपान्तःकरणावच्छेदेनाप्यभिव्यक्तिदर्शनात्। किं तु फलबलकल्प्याभिव्यक्तियोग्यतात्मिका स्वच्छता तत्प्रयोजिका। सा च सत्त्वगुणप्रधानाविद्यायामप्यस्तीति तदुपपत्तिः।

**मुखच्छायामिति** मूलम्। दर्पणेऽनुभूयमानं छायात्मकं वस्त्वन्तरमेवेति भावः। **अस्तु वेति** मूलम्। तत्तुल्यमुखान्तरमुत्पद्यता-

[1] मनेकशोऽनुभवेन–क, [2] अप्रामाणिकत्वक–छ.

मेवेदमिति तास्मिन् ग्रीवास्थत्वतदाश्रयाभेदयोर्नास्ति दर्पणे मुखमिति तदभाववैशिष्ट्यस्य चानुभवेन [1] त्वत्पक्षेऽप्यनेकप्रत्ययाप्रामाण्यात् । एवं विजातीयानेकाकारदन्तकेशादिप्रत्ययानामप्रामाण्यप्रसङ्गः । धर्मिकल्पनागौरवं च ।

---

## दीपनम्

नास्ति दर्पणे मुखं प्रतीयमानमिति शेषः । परमते बहुप्रत्ययाप्रामाण्यमाह---एवमिति । अत्र यद्यपि सिद्धान्ते केशादिछायात्वादिप्रत्ययानामप्रामाण्यमविशिष्टं तथापि छायात्वादिचतुष्टयाकारप्रत्ययानामेवाप्रामाण्यम् । परपक्षे त्वनेकाकारबहु[2]प्रत्ययस्याप्रामण्यमिति गौरवमिति भावः । किं च दर्पणे मुखच्छाया पदार्थान्तरमेवेति मते धर्मी धर्माश्च कल्पनीयाः, सिद्धान्ते तु ग्रीवास्थ एव मुखे भेदादिधर्ममात्रं कल्पनीयमिति लाघवमित्याह---धर्मिकल्पनेति । किं च परपक्षे मुखादिप्रातिबिम्बप्रत्ययानां यथानुभवं तात्त्विकं प्रामाण्यमुपपद्यते । न हि कठिनद्रव्यदर्पणाद्यन्तस्तद्व्यवहितदेशे वा [3] छायाद्रव्यान्तरस्य वोत्पत्तौ (ज्ञप्तौ) किंचित्तज्जातीयं कारणमस्ति । न हि जानुमात्रजले बहुदूरेऽनुभूय-

---

## पूरणी

मित्यर्थः । छायात्वादीति । नानाविशेष्यकप्रत्ययेष्वपि छायात्वप्रत्यङ्मुखत्वदर्पणस्थत्वभिन्नत्वलक्षणचतुष्टयमेव प्रकारः । परपक्षे तु दन्तत्वादिप्रकाराणामाधिक्यमिति तावत्प्रकारप्रत्ययाप्रामाण्यमयुक्तमिति भावः । जानुमात्रेति । एतेन दर्पणोपाध्यवयवानामेव मुखाद्यात्मना परिणाम इति निरस्तम् । अल्पजले बहुदूरदेशस्थतयानुभूयमानवृक्षादे-

---

[1] त्वत्पक्षे पुनरनेक–ग. [2] प्रत्ययानाम–ख. [3] छायाया–च.

## दीपनम्

मानाकाशवृक्षादेस्तत्क्षण एवोत्पादकं किंचित्तज्जातीयमस्ति । अत एवोपाधेरुपरिदेश एव वस्त्वन्तरोत्पत्तिरिति निरस्तम्; आन्तरत्वानुभवस्य प्रमात्वे सति दर्पणादौ बाधकाभावात्, तत्रापि झटिति तदुत्पत्त्यसंभवात् । एवं दर्पणादौ पर्वतादिसमपरिमाणद्रव्यान्तरोत्पत्तौ दुर्वहत्वप्रसङ्गः । कस्तूरिकाप्रतिबिम्बादौ सौरभप्रसङ्गश्च । एवं व्यवहितदेशोत्पन्नस्योपलम्भकमपि दुर्निरूपम् । एवं चक्षुषः पृथिव्या[1]द्यन्तस्थत्वग्रहणेऽतिप्रसङ्गात्तदन्यस्य च रूपवद्विषयग्रहेऽसमर्थत्वात् । तस्मात्तासां

## पूरणी

गाधजलावयवानां तद्देशासंबन्धेन तत्परिणामत्वायोगादिति ध्येयम् । **आन्तरत्वेति** । दर्पणस्थत्ववत्तदान्तरस्थत्वस्याप्यनुभूयमानतया तदन्तरेव तदुत्पत्तिः स्यादित्यर्थः । इदं चोपलक्षणम्-वस्तुतस्तु तदनुभवस्य भ्रमत्वेऽप्युपरिप्रदेशोत्पन्नमुखच्छायादेस्तदान्तरत्वारोपस्यावश्यकत्वे लाघवेन ग्रीवास्थमुखस्यैव तदान्तरस्थत्वारोपस्य युक्तत्वादिति द्रष्टव्यम् । **तत्रापि** उपरिप्रदेशेऽपि । क्लृप्तसामग्रीविरहेणेति शेषः । **पर्वतादिसमेति** । पर्वतादेरुत्पद्यमानवस्तुनः सत्यत्वात्सत्यक्लृप्तजातीयपरिमाणादेरावश्यकत्वादित्यर्थः । **एवं चक्षुष इति** । जलान्तरस्थवृक्षादौ चाक्षुषानुभवो न स्यादित्यर्थः । ननु त्वन्मतेऽपि कथमान्तरत्वानुभवस्तत्राह—**तस्मात्तासामिति** । छायाद्रव्यान्तरयोरुक्तरीत्योत्पत्त्यसंभवात्तत्राविद्यमानच्छायामुखयोरेवारोपस्तथा वाच्य इति तत्प्रतीतीनामप्रामाण्यम् । अस्मन्मतेऽपि ग्रीवास्थमुखस्य दर्पणस्थत्वादेर्वस्तुतो विरहादप्रामाण्यं समानमेवेत्यर्थः । ननु भ्रमरूपोऽप्यन्तर्देशस्थत्वानुभवः कथम्, अन्तर्देशस्येन्द्रियसन्निकर्ष-

[1] मन्तरग्रहे—च,

**अनेकदूरदेशस्थतया प्रतीयमाननक्षत्राभ्रादिप्रतिबिम्बोत्पत्ति-ज्ञप्तिकारणाभावाच्च । तस्मात्स्पष्टदन्तादिना प्रसिद्धच्छाया-[1]विलक्षणत्वात् तच्छायारहितादित्यादेरपि प्रतिबिम्बदर्शनाच्च**

---

## दीपनम्

प्रतीतीनामप्रामाण्यमुभयवादिसम्मतमेव । मुखतदभेदादिप्रत्ययस्य त्वप्रामाण्यं तवैवेत्यभिप्रेत्याह—**अनेकेति** । कथं तर्हि दर्पणे मुखच्छायेति व्यवहारस्तत्राह—**तस्मादिति** । दन्तादीत्यादिपदेन प्रत्यातपदेशत्वादि गृह्यते । एवं बिम्बात्प्रतिबिम्बस्य भेदो निरस्तः । कथं तर्हि दर्पणे मुखमित्यनुभवः, न च तत्रारोपितं तदिति वाच्यम्;

---

## पूरणी

विरहेण तदनुभवायोगात् । नच दर्पणान्तर्देशस्थत्वं प्रत्यक्षमुखे अध्यस्य साक्षिण्यनुभूयत इति नानुपपत्तिरिति वाच्यम्; तथाप्यननुभूयमानान्तर्देशसंसर्गस्यारोपासंभवात् । तदन्तर्देशस्य पूर्वमप्यननुभवेन स्मर्यमाणारोपस्यापि शङ्कितुमशक्यत्वाच्चेति चेन्न; उपरिप्रदेश एव तदान्तरत्वारोपात्तदुपपत्तेः । न चान्तरत्वस्याप्यननुभवान्नारोप इति वाच्यम्; दर्पणस्य सावयवतयान्तरभागानुमानोपस्थितान्तरत्वस्य तद्देशे आरोपात् । न चानुमितस्यापरोक्ष्यानुपपत्तिः; पद्मरागादिप्रतिबिम्बे स्मर्यमाणश्यामत्वाल्पत्वादिवत्तदुपपत्तेः, अनुमितस्यापि गुरुत्वविशेषादेश्चक्षुषा परोक्षारोपदर्शनाच्च । यद्वा अनुमितान्तर्देशसंसर्ग एव मुखे आरोप्यते । एवं जलोपरिदेशेऽपीति । किं तर्हि बिम्बप्रतिबिम्बभावे विनिगमनमित्यत्राह—**मुखतदभेदेति** । **प्रत्यातपेति** । प्रचुरालोकवर्तिप्रदेशेऽपि

---

[1] छायाविलक्षणे तस्मिन् छाया—ग, छ.

बिम्बचेष्टाधीनचेष्टतया छायाशब्दो गौणः। उक्तयुक्त्यैव न मुखान्तरमपीति बिम्बमुख एव दर्पणस्थत्वं भिन्नत्वं स्वाभिमुख्यं चारोप्य दर्पणे मुखमित्याद्यनुभवति। न च प्रतीत्यनुरोधेन दर्पणे शुक्तौ रजतवन्मुखान्तरमस्त्विति वाच्यम्; प्रतीतेरन्यथाप्युपपत्तेः।

---

दीपनम्

अभेदायोगात् धर्मिकल्पनादिदोषसाम्याच्चेति, तत्राह—बिम्बेति। शुक्तौ रजत[1]प्रत्यक्षस्य क्लृप्तविषयत्वासंभवेन रजतान्तरमङ्गीकृतम्, न चैवमत्रेत्याह—अन्यथेति। ग्रीवास्थमुखविषयत्वेनेत्यर्थः। तत्तदिन्द्रियसन्निकर्ष-

---

पूरणी

प्रतिबिम्बं प्रत्यालोकमनुभूयते। प्रसिद्धच्छाया त्वालोकपराङ्मुखतय-तत्राप्यालोकसमवधाने निवर्त्यतया चानुभूयत इति तद्वैलक्षण्यमित्यर्थः। आदिपदेन पुरुषाभिमुखत्वादिसङ्ग्रहः। न च प्रतिबिम्बस्य छायाविशेषत्वान्नायं दोष इति वाच्यम्; अत्यन्तवैलक्षण्ये सति तद्विशेषत्वानुपपत्तेः। अन्यथा वायोरपि पृथिवीविशेषत्वप्रसङ्गात्। सूर्यप्रतिबिम्बादौ छायाव्यवहाराभावाच्च॥

किं च किमत्र प्रसिद्धछायासाधर्म्यं, येन तदन्तर्भावः स्यात्। न चान्यचलनानुविधायिचलनादिमत्त्वं तदिति वाच्यम्; प्रदीपरत्नप्रभादावपि प्रसङ्गात्। न चान्यत्साधर्म्यं संभवति। अतो न तदन्तर्भावो युक्तः। एतेन मुखप्रतिमुद्रैव प्रतिबिम्ब इति पक्षो निरस्तः। हस्तप्रतिमुद्रादेर्हस्तचलनाद्यनुविधानादर्शनेन तद्वदत्रापि तदभावप्रसङ्गात्। दर्पणादौ मुखसंश्लेषाभावेन तदनुपपत्तेश्च। मुद्रासंपर्कस्य

---

[1] प्रत्ययस्य—च.

**दर्पणे ग्रीवास्थमेव मुखं पश्यामि नात्र मुखमिति [1]संसर्गं प्रतिषिध्य प्रसिद्धमुखाभेदानुभवात्। अन्यथा नेदं रजतमितिवन्नेदं मुखमित्यनुभूयेत। न चैवं पार्श्वस्थमुखादिप्रतिबिम्बेऽधिष्ठानेन्द्रिय-**

---

### दीपनम्

स्यापि वक्ष्यमाणविषयोपपत्तेरिति भावः। मुखान्तरत्वे बाधकमप्याह—**दर्पण इति**। न चेयं भ्रान्तिः; प्रमात्वे बाधकाभावादित्यर्थः। **संसर्गं** संसर्गमात्रम्। ग्रीवास्थमुख एव दर्पणस्थत्वाद्यारोप इत्युक्ते बाधकमाशङ्क्याह—**न चैवमिति**। स्वमुखैकदेशनासिकाकपोलादौ चक्षुस्संयोगसंभवात्तस्य तेनानुभव संभवतीति पार्श्वस्थेत्युक्तम्। पृष्ठस्थस्य मुखस्येत्यर्थः। दर्पणं गृहीत्वा तत्प्रतिहता नायन-

---

### पूरणी

प्रतिमुद्राहेतुत्वादिति दिक्। **बाधकमिति**। संसर्गमात्रनिषेधे भेदानुभवानुपपत्तिरूपमित्यर्थः। संसर्गावच्छिन्नमुखनिषेधभ्रमं वारयति—**संसर्गमात्रमिति**। तथा च निषेध्यस्यैवारोपविषयतया मुखे दर्पणसंसर्गस्यैवायमारोप इत्यर्थः। **अन्यथेति मूलम्**। आरोप्यस्य धर्मितादात्म्याध्यासनियमादिदं रजतमितिवदिदं मुखमि[2]त्यनुभवः, तथा नेदमिति निषेधप्रमापि स्यादित्यर्थः॥

नन्वनिर्वचनीयमुखोत्पत्तावपि दर्पणे मुखमित्यनुभवस्य धर्मिभेदाध्यासादुपपत्तिः अन्तःकरणोपहितसाक्षिपक्षे स्वप्नगजादिवत्। किं च शुक्तिरजतादावपि इदंत्वसंसर्गाध्यासादेव तादात्म्यानुभवः न त्विदमंशोपहिते तदारोपात्। अन्यथा स्वप्नगजादेरप्यहं गज इति तादात्म्यानुभव

---

[1] मुखसंस—**ख**. [2] त्यननुभवात्—**ग**.

## पूरणी

प्रसङ्गात्। न च तदारोपोऽपि स्यादिति वाच्यम्; तत्र शुक्तित्वादिविशेषाग्रहेण तत्संभवेऽप्यत्र दर्पणत्वादिविशेषग्रहेण तदसंभवात्। न चैवं दर्पणोपहितचैतन्येऽपि तदारोपानुपपत्तिः, विशेषदर्शनप्रतिबन्धादिति वाच्यम्; धर्मादित्वसंसर्गावच्छिन्नाध्यास एव तद्विशेषदर्शनस्य प्रतिबन्धकत्वात्। अन्यथा तवापि दर्पणस्थत्वाध्यासानुपपत्तिः, दोषविशेषप्राबल्यस्य पक्षद्वयेऽपि तुल्यत्वात्। न च नात्र मुखमिति संसर्गमात्रनिषेधबलेन मुखे तदारोपसिद्धिरिति वाच्यम्; तत्र संसर्गावच्छिन्नमुखस्यैव निषेधप्रतीतेः, नात्र भूतले घट इतिवत्। अन्यथा मुखसंसर्गस्यैव निषेध्यत्वे मुखे दर्पणसंसर्गारोपासिद्धिप्रसङ्गात्। दर्पण एव मुखसंसर्गारोपोपपत्तेश्च। तथा च सति मुखविशिष्टसंसर्गस्यैवानिर्वचनीयस्य तत्राभ्युपगमप्रसङ्गः। नच मानाभावान्नानिर्वचनीयमुखकल्पनेति वाच्यम्; दोषघटिताधिष्ठानज्ञानादेरनिर्वचनीयसामग्रीत्वेन तस्या एव मानत्वात्॥

अत एव धर्मकल्पनागौरवमपि परास्तम्, प्रमाणवतो गौरवस्यापि न्याय्यत्वात्। अन्यथा जपाकुसुमलौहित्यादेः स्फटिकादौ प्रतिफलनादेव लोहितः स्फटिक इत्यादिप्रतीत्युपपत्तौ तत्रापि नानिर्वचनीयकल्पना स्यात्। नच मुखाभेदप्रत्ययबाधान्नैवमिति वाच्यम्; शुक्तिरजतादौ तदिदं रजतमिति गृहस्थरजताभेदप्रत्ययवत्तदुपपत्तेः। यत्त्वेवं सत्यनेकव्यवहितदेशे आरोप्यमाणस्य नक्षत्रादेरप्रत्यक्षत्वं स्यात्। तद्देशस्येन्द्रियासन्निकृष्टतया तदुपहितसाक्षिण्यध्यस्तस्य प्रत्यक्षत्वायोगादिति, तदसमञ्जसम्; जलोपरिप्रदेशे तदान्तरत्वारोपादेव तथानुभवस्योपपादनात्। तत्प्रदेशस्येन्द्रियसन्निकृष्टत्वात्। अन्यथा प्रतिफलनपक्षेऽप्युक्तदोषानिस्तारात्। तस्मान्नानिर्वचनीयमुखोत्पत्तौ किंचिद्बाधकमिति चेदत्र ब्रूमः—

## पूरणी

दर्पणे मुखमित्यारोपो न तु दर्पणं मुखवदिति । आरोप्यं च विशेषणतयैव भासते न तु विशेष्यतया । तथा च तत्रानिर्वचनीयरजतो-त्पत्त्यभ्युपगमे तस्यारोप्यतया दर्पणं मुखवदित्येव प्रातीतिः स्यात् । अतो न तत्र मुखारोपः । किं तु मुखे दर्पणस्थत्वमेवाध्यस्यते । दर्पणस्य विशेषणतया नियमेन भानात् । एवं नात्र मुखमिति निषेधानुभवोऽपि मुखे दर्पणसंसर्गाभावविषय एव, आरोपितस्यैव निषेध्यत्वात् । नात्रेति नञो दर्पणेनैवान्वयात् । एवं च दोषशक्ते-रनुभवकल्प्यत्वान्नात्रानिर्वचनीयमुखसामग्री । अत एव स्फटिकलौहित्य-प्रतिबन्दिरप्यपास्ता । तत्र लोहितः स्फटिक इति लौहित्यस्य विशेषणतया प्रतीतिनियमेन लौहित्यारोपस्यावश्यवाच्यत्वात् । अपि चानिर्वचनीयमुखान्तरोत्पत्तौ बिम्बमुखव्यापारोपलम्भस्तत्र न स्यात् । अनिर्वचनीयशुक्तिरजतादौ तदारोपहेत्वनुभवविषयरजतान्तरव्यापारानु-विधानादर्शनात् ॥

वस्तुतस्तु "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिश्रुति-रेकस्यैवादित्यस्य बिम्बप्रतिबिम्बभावेन भेदं दर्शयति । तच्चानिर्वचनीया-दित्यान्तरोत्पत्तौ न संभवति । तथा च तद्दृष्टान्तेन परमात्मनो जीवरूपेण प्रतिफलनमेव गम्यते । तदपि जीवस्यानिर्वचनी-यस्याविद्योपाधि[1]संबन्धवशेनोत्पत्त्यभ्युपगमे तस्य जडत्वप्रसङ्गान्न युक्तम् ॥

ननु प्रतिबिम्बभावपक्षेऽप्ययं दोषः, बिम्बशरीरवत्प्रातिबिम्बे स्वतन्त्रतद्व्यवहारादर्शनादिति चेन्न; जडप्रतिबिम्बस्य तथात्वेऽपि चित्प्रतिबिम्बस्य तदुपपत्तेरिति दिक् ॥

[1] संबन्धेनोत्प—ट.

## दीपनम्

रश्मयः प्रतिकूलं प्रवृत्तास्तद्बिम्बेन संयुज्यन्त इति तदनुभव उपपद्यते। तदुक्तं सुरेश्वराचार्यैः —

"दर्पणाभिहता दृष्टिः परावृत्त्य स्वमाननम्।
प्राप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्॥"

इति। किं चेदं परैरप्यवश्यमङ्गीकर्तव्यम्। तेषामपि दर्पणे अनुभूयमानमुखस्यारोपो वक्तव्यः। स्मर्यमाणस्यारोपे विनष्टव्यवहितानामपि

---

## पूरणी

**बिम्बेन संयुज्यन्त इति।** ननु तत्संयोगेऽपि कथं स्वनयनादिग्रहः, अतिसामीप्यस्य प्रतिबन्धकत्वात्। ग्रहे वा तद्रूपपरिमाणादौ संशयो न स्यात्। पार्श्वस्थमुखस्यापि पूर्वमनुभवे कस्येदं मुखमिति संशयायोगाच्च। अपि च ग्रीवास्थत्वेन मुखापरोक्षानुभवे तदज्ञानविरहात्कथं दर्पणस्थत्वारोपः। नच तदैक्याज्ञानात्तदिति वाच्यम्; तदेकत्वस्यापि तदाश्रयमुखानुभवेन विषयीकरणादिति चेन्न; परावृत्तनायनरश्मिभिः फलबलेन नयनमुखादिस्वरूपमात्रानुभवाभ्युपगमात्। अतिसामीप्यस्याप्यभिमुखेन्द्रियजनितप्रत्यक्ष एव प्रतिबन्धकतया परावृत्तनयनसंयोगेन तत्प्रत्यक्षस्य तस्मिन्सत्युपपत्तेः। अत एव पार्श्वस्थमुखस्य स्वरूपेण ग्रहेऽपि तद्वैलक्षण्यादेरग्रहात्संशयोपपत्तिः। मुखैकत्वापरोक्षानुभवेन तदज्ञानाद्भेदारोपः। न चैवमपि ग्रीवास्थत्वापरोक्षानुभवात्कथं तस्य दर्पणस्थत्वारोप इति वाच्यम्; तदनुभवस्य ग्रीवास्थत्वव्यतिरेकेणारोपप्रतिबन्धकत्वेऽपि कल्पितभेदेनोभयनिष्ठत्वाविरोधेनान्यनिष्ठत्वारोपाप्रतिबन्धकत्वात्। यद्वा मुखैकत्वमप्यपरोक्षेणानुभूतं तथापि न तत्तदज्ञाननिवर्तकम्। अतो भेदाद्यारोपोपपत्तिः। न चापरोक्षज्ञाने सति कथमज्ञानानिवृत्तिरिति वाच्यम्; अन्वयव्यतिरेकाभ्यामुपाधिसन्निधानस्यैव तत्प्रतिबन्धकत्वादिति दिक्॥

**सन्निकर्षाभावात्कथमपरोक्षभ्रम इति वाच्यम्; परावृत्तनायनरश्मिभिस्तदुपपत्तेः। दर्पणसन्निकर्षमात्रमेव कारणं, यन्निष्ठतया भ्रमः प्रतीयते तत्संसर्गस्य हेतुत्वादिति केचित्। तस्माल्लौकिकप्रतिबिम्बमिवाज्ञानेऽपि जीवप्रति[1]बिम्बं बिम्बाद्ब्रह्मणो न भिद्यत इति ॥**

---

### दीपनम्

प्रतिबिम्बप्रसङ्ग इत्यभिप्रेत्याह—**परावृत्तेति**। **तत्संसर्गस्य** तदिन्द्रियसन्निकर्षस्य। बिम्बानुभवं विना प्रतिबिम्बाननुभवात्तस्य चोक्तरीत्या विना अयोग इत्येतदसङ्गतमिति **केचिदि**त्यनेन दर्शयति।

> "नेक्षेतोद्यन्तमादित्यं नास्तंयन्तं कदाचन।
> नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" ॥

इत्यादिशास्त्रादपि बिम्बप्रतिबिम्बाभेदसिद्धिरित्यभिप्रेत्योपसंहरति—**तस्मादिति**। **अज्ञानेऽपीति**। अज्ञानस्याप्यतिस्वच्छसत्त्वगुणात्मकत्वेन तस्य प्रतिबिम्बोपाधित्वमुपपद्यत इति भावः ॥

---

### पूरणी

**प्रतिबिम्बाननुभवादिति**। प्रतिबिम्बस्यानुभवायोगादित्यर्थः। दर्पणे मुखमिति मुखे विशेष्ये दर्पणस्थत्वारोपः। तथा च विशेष्येन्द्रियसन्निकर्षमन्तरा दर्पणस्थत्वविशिष्टमुखात्मकप्रतिबिम्बस्यापरोक्षत्वं न संभवतीति भावः। **नोपरक्तमिति**। तत्र वारिस्थेऽप्यादित्यशब्दप्रयोगेणादित्यस्यैव वारिस्थत्वारोपः, जलप्रतिबिम्बादित्यस्य बिम्बादित्याच्चाभेद इति दर्शितमित्यर्थः। यद्यपि जलोपाधावाद[2]त्यद्रव्यान्तरोत्पत्तिपक्षेऽपि तस्यादित्यशब्देन निर्देश उपपद्यते, तथाप्युद्यन्तमादित्यमिति समभि-

---

[1] बिम्बमपि–छ. [2] त्यान्तरोत्प–झ.

## भावरूपाज्ञाननिरूपणम्

ननु किमिदमज्ञानं नाम, न तावज्ज्ञानाभावो भ्रान्त्यादिकं वा। तस्य प्रतिबिम्बाद्युपाधित्वायोगात् भ्रान्त्यादेरज्ञानजन्यत्वाच्च। नापि ज्ञाननिवर्त्त्यं तत्; भ्रान्तिज्ञानस्यापि तथात्वात्। न चानादित्वे सति ज्ञाननिवर्त्त्यं तत्; प्रागभावेऽपि

---

### दीपनम्

अज्ञानशब्दार्थत्वेन सम्भावितं प्रथमं दूषयति—न तावदित्यादिना। भ्रान्त्यादेरिति। तथा च तस्य न तदात्मत्वमित्यर्थः। भ्रान्तीति। एतच्च पररीत्योक्तम्। प्रागभावे विशिष्टज्ञानप्रागभावे

---

### पूरणी

व्याहारान्नभस्थादित्यस्वरूपस्यैवात्र तच्छब्देन परामर्शः। तच्च द्रव्यान्तरोत्पत्तिपक्षे न संभवति। नच तत्पक्षेऽपि तयोः काल्पनिकभेदात्कथं नभस्थादित्यपरेण तच्छब्देन परामर्श इति वाच्यम्; उभयोः स्वरूपैक्येन स्वरूपपरेण तच्छब्देन परामर्शाविरोधात्। नन्वेवं बिम्बप्रतिबिम्बयोरभेदे वारिस्थादित्यदर्शननिषेधेन नभस्स्थादित्यदर्शननिषेधः स्यादिति चेन्न; तन्निषेधस्य तदुपाध्यवच्छिन्नविषयत्वेन तदनवच्छिन्नादित्ये तदसंभवादिति दिक्॥

नन्वस्मन्मते भ्रान्तिज्ञानं न ज्ञाननिवर्त्यम्; तस्य साक्षिरूपस्यानिवर्त्यत्वादित्यात्राह—एतच्चेति ननु ज्ञानप्रागभावनिवृत्तिरूपतया ज्ञानस्य न तन्निवर्त्यत्वं प्रागभावस्येत्यत्राह—विशिष्टज्ञानेति। तत्प्रागभावस्य विशेषणज्ञाननिवर्त्त्यत्वादिति भावः। विशिष्टज्ञानं न विशेषण-

तत्सत्वात् । भावत्वेन विशेषणे चासंभवः ; अनादिभावस्यात्मवदनिवर्त्यत्वात्, अविद्यासंबन्धादावतिव्याप्तेश्च ।

नापि तत्र प्रमाणं पश्यामः । न जानामीत्यनुभवस्य मतद्वयसम्प्रतिपन्नाज्ञानविषयत्वेनोपपत्तेः भ्रमाविषयाविषयकघटादिज्ञानमज्ञाननिवर्तकम्, प्रमाणज्ञानत्वात्, भ्रमगोचरविषयज्ञानवदिति सिद्धान्ताभिमताज्ञानसिद्धिरिति चेन्न; प्रागभावनिवृत्त्या अर्थान्तरत्वात् । नच तदन्याज्ञाननिवर्तकमिति साध्यम्; दृष्टान्ते साध्याभावात् । भ्रान्तिज्ञानस्य जानामीत्यनु-

---

## दीपनम्

इच्छादिप्रागभावे वा । अविद्येति । सिद्धान्त्यभिमताविद्यासंबन्धादावित्यर्थः । आदिपदेन जीवत्वादिकं गृह्यते ॥

मतेति । मतद्वयसम्प्रतिपन्नाज्ञानं ज्ञानप्रागभाव इति तदभिमानः । भ्रमरूपाज्ञाननिवर्त्तकत्वेनार्थान्तरतापरिहारार्थं भ्रमाविषयेति । दृष्टान्त इति । प्रागभावातिरिक्ताज्ञानाभावादित्यर्थः । नच तत्र भ्रान्तिरेवाज्ञानम्, तस्य ज्ञानत्वाधिकरणत्वादित्याह—भ्रान्तीति । तत्र प्रथमं

---

## पूरणी

धीजन्यामिति मतमभिप्रेत्याह—इच्छेति । ज्ञानत्त्वेति । ज्ञनत्वानधिकरणस्यैव नञ्युक्ताज्ञानशब्दार्थत्वादिति भावः । ननु मूलाज्ञानस्य घटाद्यवच्छिन्नचैतन्यसंबन्धाभावात्कथं तदावारकत्वम्, येन तदनुभवस्त-

भवगोचरस्याज्ञानत्वायोगादिति, उच्यते, अनाद्युपादानत्वे सति ज्ञाननिवर्त्यमज्ञानम्, निखिलप्रपञ्चोपादानं ब्रह्मगोचरमेवाज्ञानमिति नाव्याप्तिः। नाप्यसंभवः; अनादित्वेप्यभाववज्ञावस्यापि [1]निवृत्तौ बाधकाभावात्। [2]न चैवमात्मनोऽपि निवृत्तिप्रसङ्गः; त्वत्पक्षेऽत्यन्ताभावस्यापि तत्प्रसङ्गात्। निवर्तकाभावादनिवृत्तिस्त्वात्मन्यपि समाना। अज्ञाने त्वन्वयव्यतिरेकसिद्धस्य श्रुति-

---

दीपनम्

विवरणस्थं लक्षणमाह—अनादीति। अनाद्युपादानमिति कर्मधारयः। अनुत्पादितभ्रमे घटाद्यज्ञाने उपादानत्वाभावादव्याप्तिमाशङ्क्याह—निखिलेति। घटं न जानामीत्यनुभूयमानमप्यज्ञानं मूलाज्ञानमेव। सदज्ञातचैतन्यस्यैव घटाद्यधिष्ठानत्वात्। अनुभवस्यैकाज्ञानविषयत्वे संभवति गौरवेणानेकाज्ञानविषयत्वकल्पनायोगात्। अज्ञानकृतावरणनिवृत्त्या च तज्ज्ञानात्तदज्ञानं निवृत्तमित्यनुभवश्चोपपद्यते। आवरणान्तरोत्पत्त्या च समयान्तरे तत्र भ्रमोऽप्युपपद्यत नाज्ञानभेद इति न काप्यव्याप्तिः। ब्रह्मणि ज्ञाननिवर्त्यत्वाभावान्नातिव्याप्तिः। शुक्तिकादावतिव्याप्तिनिवृत्तये अनादीति। अविद्यासंबन्धादिनिवृत्तये–उपादानत्व इति। श्रुतीत्युपलक्षणम् "तरति शोकमात्मवित्"—

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः"

---

पूरणी

द्विषयः स्यादित्यत्राह—सदज्ञातेति। घटाद्यवच्छिन्नचैतन्यमपि स्वरूपेण मूलाज्ञानविषय इति तत्संबन्धिनो मूलाज्ञानस्य तदवच्छिन्नावरकत्वं

---

[1] तन्निवृत्तौ–ख–ग. छ. [2] न चैवमेवात्म–ख.

सिद्धस्य च ज्ञानस्य सत्त्वात् । न चाज्ञानस्याप्यनादित्वे तव मिथ्यात्वानुपपत्तिः; मिथ्यावस्तुनो दोषजन्यत्वादिति वाच्यम्,

## दीपनम्

इत्यादिसिद्धस्येत्यर्थः । अनादिप्राक्काले कदाचित् ब्रह्मण्यावरणाभावे तदा ब्रह्मभूतजीवस्य पश्चाद्ब्रह्मानवभासतद्भेदायोगात् तदनवभासादिप्रयोजकमज्ञानमनादीति वक्तव्यम् । एवं सर्गाद्यकालीनप्रपञ्चं प्रति वक्ष्यमाणविषयोपादानस्य कार्यत्वायोगात् तम आसीदित्यादिश्रुत्या प्रलयकालेऽपि तस्य दर्शितत्वाच्चानादि[1] । तच्चोक्तविषया ज्ञाननिवर्त्यमिति नासंभव इति भावः। दोषजन्यत्वादिति । तथा च मिथ्याभूतस्यानादित्वघटितं लक्षणमसंभवीति तदभिमानः। न मिथ्यावस्तुमात्रे

## पूरणी

युक्तमिति भावः । कार्यत्वायोगादिति । यत्तु कार्यमप्यज्ञानं प्रपञ्चोपादानं भविष्यति, प्रलयप्राक्काले लीनस्य तदवस्थाज्ञानजनितेन प्रलयकालावस्थायिना अज्ञानेन तदुपपत्तेः । नच विनश्यदवस्थाज्ञानं नाज्ञानान्तरोपादानम्; अविनश्यदवस्थस्यैवोपादानत्वात्, तन्नाशे तदुपादेयाज्ञानान्तरनाशप्रसङ्गादिति वाच्यम्; तत्र केवलब्रह्मण एवोपादानत्वात् अज्ञानस्य निमित्तत्वादिति प्रवाहानाद्यज्ञानं न त्वेकानादीति, वाग्विजृम्भितमात्रम्; एवं कल्पनायां मानाभवात् । नच विनाशिभावस्य सादित्वनियमादित्थं कल्पना, विपक्षे बाधकाभावात् । दर्शनमात्रस्याप्रयोजकत्वात् । नच भावस्यानादित्वे तत्समवायिकारणादेरभावेन तन्नाशादेः क्लृप्तभावनाशहेतोरभावात्तन्नाशो न स्यादिति वाच्यम्;

[1] नादीति–च.

**कार्यमिथ्यावस्तुन एव तन्नियमात् । ज्ञानत्वेन स्वजन्यानपेक्ष-ज्ञाननिवर्त्यं वा अज्ञानम् ॥**

## दीपनम्

दोषस्य कारणतेत्यभिप्रेत्याह—**कार्येति** । एवमुपादानत्वमपि वक्ष्यमाणानुमानात्तस्य सिद्ध्यतीति नासंभवः । ज्ञानेनाज्ञानं निवृत्तमित्यनुभवस्यावरणमात्रविषयत्वकल्पनायोगादज्ञाननानात्वमिति तत्साधारण्येनाप्याह—**ज्ञानत्वेनेति** । ज्ञानत्वेन चित्त्वसामान्यरूपेण । यत्स्वजन्यं तदनपेक्षं सत्तेनैव **रूपेण** यद् ज्ञानं निवर्तयति तदज्ञानमित्यर्थः । चैतन्यस्याज्ञाननिवर्तकत्वं चानुपदमेव वक्ष्यतीति नासंभवः । आवरणनिवर्तकसाक्षात्काररूपवृत्त्यपेक्षणेनासंभवपरिहाराय ज्ञानत्वेन जनकत्वं विवक्षितम् । " तथा विद्वान्नामरूपाद्विमुक्त " इत्यादिशास्त्रात्कार्यस्यापि ज्ञाननिवर्त्यत्वसिद्धेस्तत्रातिव्याप्तिपरिहाराय **स्वजन्यानपेक्षेति** । ज्ञानं ह्यविद्या-

## पूरणी

समवायिकारणनाशादेः प्रत्येकमननुगततया अनुगतविरोधिसन्निपातस्य नाशकत्वात्तस्य चान्वयव्यतिरेकसिद्धतत्त्वसाक्षात्कारसमवधानात्मकस्य प्रकृतेऽपि संभवात् । किं च न केवलं ब्रह्माज्ञानोपादानम् ; प्रपञ्चात्मना परिणममानाविद्याधिष्ठानत्वेनैव ब्रह्मणः प्रपञ्चोपादानत्वात् । स्वतस्तस्य परिणामायोगात् । अन्यथा प्रपञ्चस्यापि केवलब्रह्मोपादानत्वप्रसङ्गात् । केवलब्रह्मोपादानकत्वेऽज्ञानस्य जडत्वाद्यनुपपत्तेश्च । निमित्तधर्माणां कार्यान्वयाभावात् । अज्ञानावच्छिन्नं ब्रह्मोपादानमिति पक्षेऽप्यज्ञानस्योपादानावच्छेदकतया तन्नाशे तदवच्छिन्नोपादाननाशेनोपादेयाज्ञाननाशप्रसङ्गात् तस्य प्रलये स्थित्यनुपपत्तेः । एवमप्यवच्छिन्नप्रवाहानादित्वस्य लक्षणत्वोपपत्तेश्च । घटादिप्रवाहानां प्रलये विच्छेदेन तत्रातिप्रसङ्गाभावादिति संक्षेपः ॥

**ज्ञानत्वेनेति** । नच निवर्त्यतावच्छेदकं विना तन्निवर्त्यत्वं दुर्ग्रहमिति वाच्यम् ; चिद्भिन्नापरतन्त्रमिथ्यात्वस्यैव साक्षात्तज्ज्ञान-

## पूरणी

निवर्त्यतावच्छेदकत्वात् । अविद्यासंबन्धादेश्चिद्भिन्नाविद्यापरतन्त्रत्वान्नातिप्रसङ्गः। चित्परतन्त्राया अविद्यायास्तद्भिन्नापरतन्त्रत्वाच्च नासंभवः। न चाज्ञानस्य ज्ञाननिवर्त्यत्वमसिद्धम्, जीवन्मुक्तिदशायामनावृतब्रह्मप्रकाशेऽपि तन्निवृत्तेरभावादिति वाच्यम्; प्रारब्धकर्मलेशस्य तदा तन्निवृत्तिप्रतिबन्धकतया तत्क्षये तन्निवृत्त्युपपत्तेः। न चाज्ञानजन्यप्रारब्धकर्मलेशस्य तन्निवृत्तिप्रतिबन्धकत्वानुपपत्तिः; [1]जलजन्यद्रवत्वस्य तन्नाशप्रतिबन्धकत्वदर्शनात्। एतच्छरीरजन्यतपोविशेषादेस्तन्नाशे प्रतिबन्धकत्वस्य स्मृत्यादौ प्रसिद्धत्वाच्च। ननु—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन"

इति ब्रह्मसाक्षात्कारस्य सर्वकर्मविनाशकत्वश्रवणात्कथं साक्षात्कारे सति प्रारब्धकर्मलेशस्थितिरिति चेन्न; तस्य सञ्चितकर्मविषयत्वेन प्रारब्धकर्मणः स्थित्युपपत्तेः। न च तत्र मानाभावः; "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इति श्रुतेः। तस्याश्चायमर्थः—तस्य तत्त्वविदः मुक्तिर्विलम्ब्यमानापि नात्यन्तं विलम्बते, किं तु प्रारब्धकर्मोपभोगेन यावद्देहः प्राणैर्न विमोक्ष्यते तावदेव विलम्बते। अथ देहप्राणवियोगे सति ब्रह्म सम्पद्यते मुच्यत इति यावत्। अतोऽनया श्रुत्या तत्त्वज्ञानानन्तरमपि देहादिस्थित्यभ्युपगमात्तद्धेतुप्रारब्धकर्मलेशस्तत्प्रतिबन्धकता च सिद्धा। यत्तु ब्रह्मसाक्षात्कारे सति सद्य एवाविद्यानिवृत्तौ तदधीनकर्ममात्रक्षये सति सद्यो मुक्तिरिति मतम्, तन्न मनोरमम्; उदाहृतश्रुतिजातविरोधात्। न चेदमप्रकृष्टज्ञानवत्पुरुषाभिप्रायमिति वाच्यम्; तस्य साक्षात्कारानुदयस्यापि विलम्बहेतोः संभवेन 'तावदेव' त्यवधारणविरोधात्,

---

[1] जड—म.

## पूरणी

प्रारब्धकर्मणां भोगादेव क्षय इति बहुवचनविरोधाच्चेति दिक्।

ननु—

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि"

इति कर्मणामुपभोगैकनाश्यत्वश्रवणात्सञ्चितकर्मणामपि न साक्षात्कारान्नाशः, 'ज्ञानाग्निः' इति वचनस्य नित्याग्निहोत्रादिकर्मविषयत्वात्। प्रारब्धकर्मणो नाशानभ्युपगमेन सङ्कोचस्यावश्यकत्वादिति चेन्न; सेतुदर्शनजगन्नाथावलोकनादेः पापनिवर्तकत्वश्रवणेन भोगैकनाश्यत्वासिद्धेः। "नाभुक्तमि" ति वचनस्य निवर्तकतासमवहितकर्मविषयत्वेन प्रकृतेऽपि निवर्तकत्वेनावगतब्रह्मसाक्षात्कारोपहितसञ्चितकर्मणां भोगं विना विनाशस्य युक्तत्वात्। किं च "तद्यथेषीकातूलमग्नौ प्रोतं प्रधूयेतैवमेवास्य सर्वे पाप्मानः प्रधूयन्ते सर्वे पाप्मानोऽतो निवर्तन्त" इति च सगुणब्रह्मोपासनयापि सकलकर्मनिवृत्तिश्रवणेन ब्रह्मज्ञानात्तन्निवृत्तेरयत्नसिद्धत्वाच्च।

ननु सञ्चितकर्मणां नाशे "एकधा भवति त्रिधा भवति" इत्यादिकायव्यूहशास्त्रप्रमाणं न स्यात्, एतद्देहावच्छिन्नोपभोगनाश्यत्वात्प्रारब्धकर्मण इति चेन्न; तच्छास्त्रस्य सगुणब्रह्मोपासन[1]विषयत्वात्। यद्वा यस्यैकं कर्म क्रमेण नानादेहार्जकमस्ति तस्य तद्देहावच्छिन्नोपभोगेन तत्कर्मनाशात् तदर्थं युगपन्नानादेहधारणमुपपद्यत इति तच्छास्त्रस्य तद्विषयत्वमपीति न विरोधः। प्रारब्धकर्मलेशश्च समानाधिकरण एव प्रतिबन्धकः, व्यधिकरणप्रतिबन्धकतायाः क्वाप्यदर्शनात्। अतो यदन्तःकरणावच्छिन्नात्मनि ब्रह्मसाक्षात्कारस्तत्कर्मोपभोगेन[2] तत्क्षये सत्यप्रतिबद्धा-

[1] परत्वात्–ब्र. [2] नाप्रतिब–ब्र.

## दीपनम्

निवृत्तिसहकृतमेव कार्यं निवर्तयति, न तु साक्षात्; तदनिवर्तकेद-मित्यादिज्ञाने सत्यपि कार्यस्यानिवृत्तेः।

नन्वविद्यानिवर्तकं युगपदेव तदुभयं ज्ञानं निवर्तयत्विति चेन्न; केवलज्ञानस्य कार्यनिवृत्त्युपस्थितिं विनानुत्पादितभ्रमाज्ञाननिवर्तकतया क्लृप्तस्यान्यत्रापि तथाविधस्य तावन्मात्रतया कार्यनिवृत्तिहेतुत्वे प्रमाणाभावाद्गौरवाच्च। कार्यनिवृत्तेरन्यथाप्युपपत्तेश्च। न चैवं कार्यनिवृत्तौ

---

## पूरणी

त्साक्षात्कारादविद्यानिवृत्तौ तत्पारतन्त्र्याणामितरान्तःकरणावच्छिन्नगतानां प्रारब्धकर्मणां निवृत्तिः। एतेन प्रारब्धकर्ममात्रप्रतिबन्धक[1]तायां तेषां बहुत्वान्न कदापि मुक्तिः स्यादिति परास्तम्। ननु साक्षात्कारानन्तरमज्ञानाद्यनिवृत्तावुत्पन्नापरोक्षवृत्तेर्विनाशात् प्रारब्धकर्मोपभोगानन्तरं पुनस्तदुत्पत्तौ मानाभावाच्चानिर्मोक्ष इति चेन्न; ब्रह्मप्रवणचित्तस्यैव तस्य कर्मोपभोगेन पुनरुत्पत्तिसंभवत्। अथ वा वृत्त्यभिव्यक्तचैतन्यप्रकाश एवाविद्यानिवर्तकः न तु वृत्तिमात्रम्। [2]अतः आवरणांशस्य तदानीमेव नष्टतया तदभिव्यक्तचैतन्यप्रकाशस्य प्रारब्धकर्मलेशप्रतिबद्धस्य तदानीमविद्यानिवर्तकत्वाभावेऽपि प्रतिबन्धककर्मक्षये सति तेनैव तन्नाशः स्यादिति न काप्यनुपपत्तिः। यद्यपि लोके आवरणांशनाशानन्तरं विक्षेपशक्तेरनुवृत्तिर्न क्वापि दृष्टा, तथापीहैव प्रमाणबलात्तत्कल्पनेति साक्षात्कारं प्रति विषयतया बिम्बेश्वरत्वेन वा ब्रह्मणो जनकत्वं न तु चित्सामान्यरूपेणेत्यर्थः। **अन्यथापीति।**

---

[1] तया. [2] अन्तःकरणांशस्य—ग्र.

## दीपनम्

ज्ञानं हेतुरेव मास्त्विति वाच्यम्; उक्तश्रुतिविरोधात् शुक्तिज्ञानाद्रजतादिभ्रमनिवृत्त्यनुभवाच्च। अज्ञानस्यापि मिथ्यात्वेनैव ज्ञाननिवर्त्यत्वात्तत्कार्यमपि मिथ्याभूतं ज्ञाननिवर्त्यमेव। तस्मादविद्यानिवृत्तिसहकृतमेव ज्ञानं तत्कार्यं निवर्तयतीति न तत्रातिव्याप्तिः। स्मृतिनिवर्त्यसंस्कारेऽतिव्याप्तिपरिहाराय ज्ञानत्वेन निवर्तकता विवक्षिता। स्वपदं तु जनकविशेषं स्पष्टयति।

---

## पूरणी

अज्ञाननिवृत्तिद्वारापीत्यर्थः। **मिथ्यात्वेनैवेति**। अयं चाभ्युच्चयः। एवं [1]सत्यत्वेनानुगतरूपेणाज्ञाननिवृत्तिवत्कार्यनिवृत्तावपि साक्षाज्ज्ञानहेतुताप्रसङ्गादिति ध्येयम्। **स्मृतिनिवर्त्येति**। विरोधिगुणत्वेन फलत्वेन वा स्मृतेः संस्कारनाशकत्वं न ज्ञानत्वेनेति भावः। ननु स्मृत्यनन्तरमपि समयान्तरे पुनः स्मृतिदर्शनान्न स्मृतिनाश्यः संस्कारः। न चानित्यसप्रकारनिश्चयत्वस्यैव लाघवेन संस्कारजनकतावच्छेदकतया स्मृतिजनित[2]संस्कारान्तरादेव पुनः स्मृतिरिति वाच्यम्; एवमपि स्मृतिधाराविरोधप्रसङ्गेन ततस्तन्नाशायोगादिति चेन्न; [3]यन्मते स्मृत्यनन्तरं व्यवहितसमय एव स्मृतिर्न तु तद्धारा, तत्र पूर्वस्मृतिजनित संस्कारादेव स्मृत्यन्तरोपपत्तौ पूर्वानुभवजनितसंस्कारस्य [4]स्मृत्यन्तरसमयसत्त्वे मानाभावेन तत्फलस्मृतिनाश्यताया वाच्यत्वात्। अथ वा अनित्यसप्रकारकानुभवत्वं तज्जनकतावच्छेदकम्। पूर्वानुभवस्यानेकसंस्कारजनकत्वकल्पनयैव स्मृतिधाराद्यापत्तिरिति मते तत्संस्कारस्य तत्तत्स्मृतिनाश्यत्वात्तदभिप्रायेणेदमुक्तम्। **स्पष्टयतीति**।

---

1 त्वननुगत–झ. 2 संकारादेव–ट. 3 यतः स्मृ–ट. 4 स्मृत्यनन्तर–झ.

न चैवं परोक्षज्ञानादप्यविद्यानिवृत्तिप्रसङ्गः; अविद्याप्रयुक्तावरणलक्षणप्रतिबन्धकस्यान्वयव्यतिरेकाभ्यामपरोक्षवृत्ति-निवर्त्यतया तदभावदशायां तदयोगात्। न चैतावता ज्ञानत्वेन तस्य निवर्तकत्वं हीयते, प्रतिबन्धकदशायां तृणाद्यदाहकस्यापि वह्नेस्तद्दाहकत्वानपायात्। न च संशयसाधारणज्ञानत्वं

## दीपनम्

एवं चैतन्यमात्रस्याविद्यानिवर्तकत्वे। नन्वपरोक्षवृत्तिरेवाविद्या-निवर्त्तिकाप्यास्त्विति चेन्न; अज्ञानं हि न जानामीत्यनुभवबलाद्वस्तुतो यज्ज्ञानं तन्निवर्त्यमिति वक्तव्यम्। ज्ञानं च स्वप्रकाशात्मकं चैतन्यमेव। वृत्तेर्ज्ञानपदवाच्यत्वेऽप्यज्ञानत्वात्तदनुपस्थिति[1]दशायामप्यज्ञाने ज्ञानविरोधित्वानुभवाच्च। न चैवमतिप्रसङ्गः; समर्थादपि प्रतिबन्धदशायां कार्यानुत्पादस्य दृष्टत्वादित्याह—**न चैतावतेति**। न चावरणस्य प्रतिबन्धकत्वे मानाभावः; न जानामीत्यनुभवेनाज्ञानस्य चैतन्यनिवर्त्यता-सिद्धावप्यपरोक्षवृत्त्यनुदयदशायां तन्निवृत्त्यदर्शनेन तस्य प्रतिबन्धकत्वा-दित्यस्ति तन्निवृत्तौ वृत्तेरूपयोगः। न च साक्षादेव सा तत्रोपयुज्यते; अप्रकाशरूपवृत्तेः प्रकाशात्मकचैतन्येन आलोकेनेव तमोनिवृत्तावनपे-क्षितत्वात्[2], वृत्त्यन्वयव्यतिरेकयोश्चैतन्याभिव्यक्तिरूपावरणनिवृत्ति-[3]विषयत्वात्, चैतन्यवृत्त्योर्निरपेक्षतया पृथक्पृथक् कारणत्वे संभवति उभयत्रोभयकारणत्वे प्रमाणाभावाच्चेति चैतन्यमेवाविद्यानिवर्तकमिति भावः। **संशयेति**। एतच्च पररीत्योक्तम्। सिद्धान्ते तु कदापि तत्र न जानामीत्यननुभवात्। संशयोऽविद्यापरिणामः ज्ञानाभास

## पूरणी

स्पष्टार्थं विशेषणं न व्यावर्तकमित्यर्थः। **तदनुपस्थितीति**। सुषुप्तावपि तथात्वानुभवादित्यर्थः। **ज्ञानाभास एवेति**। संशयो हि न लिङ्गादि-

[1] दशायां ज्ञानेऽज्ञान—च. [2] क्षत्वात्—च. [3] विषयत्वसंभवात्—छ.

पूरणी

जन्यः; लिङ्गादेरसंशायकत्वात्। स्थाणुपुरुषादिसंशयस्य लिङ्गादिप्रतिसन्धानमन्तेरणाऽपि जायमानत्वाच्च। नापीन्द्रियजयः; स्थाणुत्वादेरिन्द्रियासन्निकर्षात्। ज्ञानसंन्निकर्षस्य च निरस्तत्वात्। अतः क्लृप्तज्ञानहेत्वजन्यत्वात्संशयो ज्ञानाभास एव। अत एव कविकाव्यादिमूलाविद्यापरिणामोऽपि ज्ञानाभास इति सिद्धान्तः। स च यद्यपि नाविद्यामात्रजः, स्थाणुपुरुषसंशयादौ धर्मिज्ञानादेरन्वयाद्यनुविधानात्, तथाप्यागन्तुकेन्द्रियदोषादिजन्यः। तस्य च न ज्ञानहेतुत्वं क्वचित्क्लृप्तम्, येन तज्जन्याविद्यापरिणामोऽपि ज्ञानं भवेत्। भ्रान्तानुमित्याद्यात्मिकाविद्यापरिणामस्तज्ज्ञानपदानिर्देश्यः, वह्निमनुमिनोमीत्यनुभवात्। ज्ञानहेतुतया क्लृप्तलिङ्गपरामर्शादिजन्यत्वाच्च। नन्वेवं शुक्तिरजताद्यविद्यावृत्तेरपि ज्ञानपदेन व्यवहारो न स्यादिति चेन्न; तत्राविद्यावृत्तेरनभ्युपगमात्। अभ्युपगमे वा सापि ज्ञानाभासः। न चैवं रजतं पश्यामीति कथं ज्ञानत्वविशेषचाक्षुषत्वादिना तद्वृत्त्यनुभव इति वाच्यम्; चक्षुर्जन्यवृत्त्यभिव्यक्तचैतन्यालम्बनत्वात्तदनुभवस्येति दिक् ॥

ननु संशयस्थलेऽप्यनिर्वचनीयस्थाणुत्वादिकमुत्पद्यतां शुक्तिरजतादिवत्, किमविद्यावृत्तिकल्पनयेति चेत्, अनिर्वचनीयस्थाणुत्वादेः शुक्तिरजतादाविव निश्चयात्मकस्फुरणप्रसङ्गात्। नच विरोधिकोटिद्वयस्फुरणादेव नैकतरनिश्चय इति वाच्यम्; धर्मद्वयस्य पुरोवर्तिनिष्ठत्वे पीतः शङ्ख इतिवद्विरुद्धनिश्चयस्यैवापातात्। [1]तस्मात्तत्र परोक्षविषय इव विरुद्धाकाराविद्यापरिणाममात्रम्। स च न स्थाणुत्वादिमात्रालम्बनः, संसर्गारोपस्य निराकृतत्वात्। किं त्विदमभिन्नतया स्थाणु-

[1] तस्मादुत्प्रेक्षणविषय इव इतरविरुद्धाकारा—ग्र.

कथमविद्यानिवृत्तिप्रयोजकमिति वाच्यम्; निखिलवृत्त्याधिष्ठानतया ज्ञानात्मकचैतन्यस्यैकत्वात्। तस्य प्रतिबन्धकाभावदशायामज्ञाननिवर्तकत्वात्। भ्रमादेर्ज्ञानानिवर्त्त्यत्वाच्च न तत्रातिव्याप्तिः। उत्पन्नभ्रमादिनिवृत्तेर्ज्ञानं विनापि भावात्।

---

### दीपनम्

एव न ज्ञानमिति द्रष्टव्यम्। अनात्यन्तिकभ्रमनिवृत्तौ व्यभिचारान्न ज्ञानं कारणमित्याह—उत्पन्नेति। लोके परिशेषादनुभवस्य भावरूपा-

---

### पूरणी

पुरुषगोचर एव। वस्तुतस्तु संसर्गारोपेऽपि न दोष इत्युक्तम्। ननु तथापि संशयस्य ज्ञानानात्मकत्वे स्थाणुपुरुषादिसंशयात्पुरोवर्तिनि प्रवृत्तिर्न स्यात्, ज्ञानस्यैव स्वविषये प्रवृत्तिजनकत्वात्। भेदाग्रहप्रवर्तकतायाश्च पूर्वं निरासात्। कविकाव्यादिमूलज्ञानाभासाद्वाक्यप्रयोगो न स्यात्, वाक्यार्थज्ञानस्य तद्धेतुत्वात्। न च वृत्तिर्न व्यवहारहेतुः, किं तु चैतन्यात्मकार्थप्रकाश इति वाच्यम्; एवमपि तदाकारज्ञानवृत्त्यवच्छेदकमन्तरा चैतन्यस्य साक्षिण्यनध्यस्तपुरुषत्वाद्यर्थावच्छेदासंभवात्। नच वृत्त्यवच्छेदमात्रेणैवार्थावच्छेद इति वाच्यम्; तथा सत्युपासनेच्छादिवृत्त्यवच्छिन्नार्थस्यापि स्फुरणप्रसङ्गेन योषिदग्न्युपासनया तत्राग्न्यर्थिप्रवृत्तिः स्यादिति चेन्न; इच्छादिवृत्तिविलक्षणवृत्त्यवच्छेदेनैव स्फुरणावच्छेदोपपत्तेः। नच लाघवाज्ज्ञानत्वावच्छिन्नवृत्त्यवच्छेद एव स्फुरणावच्छेदप्रयोजक इति वाच्यम्; विजातीयाविद्यान्तःकरणवृत्तिसाधारणैकज्ञानत्वासंभवेनेच्छादिवृत्तिविलक्षणवृत्तिविशेषस्यैव तथा वाच्यत्वादित्यलमातिकथया॥

अनात्यन्तिकेति। आत्यन्तिकभ्रमनिवृत्तिश्चोपादानाज्ञाननिवृत्तिरूपैवेति भावः। ननु तथापि भासकस्य नाशकत्वायोगान्न

## पूरणी

स्वरूपं[2] तन्निवर्तकम् । नच तृणादिभासकस्याग्नेस्तद्दाहकत्ववत्तदुपपत्तिरिति वाच्यम्; तत्र भास्वररूपवत्त्वोष्णस्पर्शवत्वाद्यवच्छेदकभेदेन तदुभयाविरोधात् । अत एव चन्द्रालोकादेर्भासकत्वमेव न तु दाहकत्वम् । तप्ततैलतेजसो दाहकत्वमेव न तु भासकत्वम् । प्रकृते त्ववच्छेदकभेदविरहात्तत्र प्रमाणाभावाच्च । नच न जानामीति चिन्मात्रविरोधितयानुभव एव तत्र मानमिति वाच्यम्; अपट इत्यादिवन्न जानामीत्यस्य ज्ञानान्यत्वविषयत्वेनाप्युपपत्तेः । किं चाधर्मादिव्यवहारस्य वस्तुतो धर्मविलक्षणाखण्डस्वरूपमात्रविषयत्ववत्तद्व्यवहारस्यापि ज्ञानविलक्षणाखण्डस्वरूपमात्रगोचरत्वात्, अत एव जडो मूढ इत्यादौ नञर्थानन्तर्भावेन तद्व्यवहार इति चेन्न; प्रकृतेऽप्यावृतचित्त्वेन भासकत्वमनावृतचित्त्वेन निवर्तकत्वमित्यवच्छेदकभेदसत्त्वात् । तस्य स्वरूपत्वेऽपि गोत्वादिवदवच्छेदकत्वसंभवात् । नापि प्रमाणाभावः; न जानामीत्यनुभवस्य तत्त्वात् । तस्य ज्ञानान्यत्वविषयत्वे इच्छादावपि न जानामीत्यनुभवप्रसङ्गात् । न चात्मगुणप्रत्यक्षस्य तदसाधारणधर्ममात्रगोचरतया न ज्ञानान्यत्वरूपेण तत्प्रत्यक्षमिति वाच्यम्; अहं व्याप्रुणोमीति व्यापारत्वादिसामान्यगोचरयत्नप्रत्यक्षस्यापि तत्र दर्शनात् । अत एवाधर्मादिवन्नाखण्डरूपमज्ञानम्, तद्व्यवहारस्यापि धर्मविरुद्धार्थविषयत्वात् । इयान्भेदः—तत्र विरोधः सहानुत्पत्तिलक्षणो विजातीयक्रियाफलावच्छिन्नत्वलक्षणो वा । अत्र तु निवर्तकत्वलक्षणः । संभवत्क्लृप्तयौगिकार्थपरित्यागेन तत्कल्पनानवकाशाच्चेति संक्षेपः ॥

वस्तुतस्तु चिन्मात्रस्य तन्निवर्तकत्वे सदा तन्निवृत्तिप्रसङ्गः । न चावरणं प्रतिबन्धकम्, [1]अतोऽपरोक्षवृत्त्या तन्निवृत्तौ तन्निवृत्तिरिति

[2] निवर्तकम्—ट. [1] अतःपरोक्ष—झ.

## पूरणी

वाच्यम् ; केवलापरोक्षवृत्तेर्जडतया आवरणनिवर्तकत्वायोगात्, अत एवाज्ञाननिवृत्तौ तत्र निवर्तकान्तरकल्पनावैयर्थ्यात् । न चैवं वृत्तेरुभयनिवर्तकत्वकल्पनायां गौरवमित्युभयोरुभयनिवर्तकत्वकल्पनेति वाच्यम् ; भवत्पक्षेऽपि निवृत्तिकार्यद्वये कारणद्वयकल्पनागौरवस्य तुल्यत्वात् । प्रत्युतावरणनिवृत्तिहेतुत्वेन क्लृप्तवृत्तेरेवाविद्यानिवर्तकत्वकल्पनं युक्तम्, आवश्यकत्वादुपजीव्यत्वात्प्रथमोपस्थितत्वाच्च । भासकचैतन्यस्य कथंचिदवच्छेदकभेदेन निवर्तकत्वकल्पनमिति महद्गौरवम्, अनावृतसंवित्त्वेन हेतुत्वे आवरणनिवृत्तेरवच्छेदककोटिनिवेशेऽज्ञाननिवृत्त्यहेतुतापातात्, प्रयोजकाज्ञाने सति तत्प्रयोज्यस्यावरणस्यात्यन्तानिवृत्त्ययोगाच्च । नच न जानामीति ज्ञानसामान्यविरोधित्वानुभवमूलकतया तत्कल्पना प्रामाणिकीति वाच्यम्; न जानामीत्यनुभवस्यापि ज्ञानपदाभिधेयापरोक्षवृत्तिविरोधित्वेन तद्विषयत्वोपपत्तेः । जानामीत्यनुभवस्य वृत्तिविषयतया तत्समानाकारस्य न जानामीत्यनुभवस्य तद्विषयताया आवश्यकत्वाच्च ।

अपि च चिन्मात्रस्य निवर्तकत्वे एकघटज्ञानेन तदावरणनिवृत्तावावरणान्तरस्य च तदानुत्पादे प्रतिबन्धकाभावेन सकलघटावस्थाज्ञाननिवृत्तिप्रसङ्गः । अस्मन्मते त्वावरकाज्ञानं नश्यति, एकज्ञानेनैकाज्ञानं नश्यतीति च नियमाभ्युपगमान्नायं दोषः । नच ममापीदं तुल्यमिति वाच्यम्; आवारकत्वेन निवर्त्यत्वाभ्युपगमे आवरणस्यापि चिन्मात्रानिवर्त्यत्वप्रसङ्गात् । चैतन्यस्यै[1]कत्वेनैकाज्ञानमित्यादिनियमासंभवाच्च । न च चैतन्यमेकदा एकाज्ञानमेव निवर्तयतीति नियमः संभवति ; प्रतिपुरुषं युगपदनेकाज्ञाननिवृत्तेः । न चैवं प्रतीतिनियमः ; चरमसाक्षात्कारदशायां मूलाज्ञानतद्धर्मावस्थाज्ञानानां

[1] त्वेन नैकाज्ञानमित्यादिनियमः संभवति—ज्ञ.

## पूरणी

युगपन्नाशेन व्यभिचारादिति दिक्। तस्मादपरोक्षवृत्तिरेवावरणाज्ञानोभयनिवर्तिका। वृत्तेरपरोक्षत्वं चापरोक्षार्थविषयत्वम्। अर्थे चापरोक्षत्वमन्तःकरणोपहितयोग्य[1]स्वरूपत्वं तदवच्छेदेन साक्षिसंबद्धतत्स्वरूपं वा। अन्तःकरणोपधानं चात्मानात्मविषयसाधारणमित्युक्तम्। साक्षिसंबन्धोऽपि साक्षिनिरूपितसत्तावच्छेदकभेदशून्यत्वम्। तदप्यात्मानात्मसाधारणम्। आन्तरसाक्षिस्फुरणसंबन्धेन बाह्यपरोक्षविषयातिप्रसङ्गवारणायान्तःकरणावच्छेदविशेषणम्। तस्यान्तःकरणावच्छिन्नतया साक्षिसंबन्धाभावात्। इदं च जीवव्यवहारयोग्यापरोक्षत्वम्। अतो ब्रह्मणोऽन्तःकरणोपधानमन्तरा स्वस्वसंबन्धवस्तूनामपरोक्षत्वेऽपि न दोषः। अनावृतसंवित्तादात्म्यरूपापरोक्षत्वस्यापि जीवापेक्षानावरणघटिततया तद्व्यवहारयोग्यस्वरूपवत्त्वात् उक्तरूपापरोक्षार्थविषयवृत्तित्वेन तदज्ञाननिवर्तकत्वम्। अतोऽनावृतसंवित्तादात्म्यस्यापरोक्षवृत्त्यधीनत्वेऽपि नान्योन्याश्रयः॥

वस्तुतस्तु अनावृतसंवित्तादात्म्यमेवार्थस्यापरोक्षत्वम्। तच्च संवित्प्रातियोगिकसत्तावच्छेदकभेदशून्यत्वमात्मानात्मसाधार[2]णापरोक्षव्यवहारनिमित्तम्। तादृशार्थविषयत्वेन च वृत्तेर्न निवर्तकता, किं तु योग्यविषयदेशस्थवृत्तित्वेन। परोक्षवृत्तेरनिर्गमेन तस्या विषयदेशस्थत्वाभावात् धर्माद्यनुमितेर्विषयदेशस्थत्वेऽपि योग्यविषयावच्छेदाभावात्। योग्यतायाश्च फलबलकल्प्यत्वात्। न चैवमात्मानुमित्यादेरप्यज्ञाननिवर्तकत्वापातः, आत्मस्वरूपेऽज्ञानविरहात् परिपूर्णानन्दाकारानुमितेरसंभवेन ततस्तदज्ञाननिवृत्तेरापादनायोगात्। अत एव वेदान्तवाक्यानामात्मदेशस्थवृत्तिजनकतया अपरोक्षज्ञानकरणं सिद्धान्तेपीति सर्वं सुस्थम्॥

---

[1] स्वभावत्वं—म.  [2] ण्यादपरोक्ष—म.

## पूरणी

ननु परोक्षवृत्तेरज्ञाननिवर्तकत्वाभावे निर्णीतेऽप्यर्थे न जानामीत्यनुभवः स्यात्। न च त्वदुक्तमर्थं न जानामीति निर्णीतेऽप्यज्ञानानुभवोऽस्तीति वाच्यम्; तत्रानिर्णीतविशेषावच्छिन्नाज्ञानस्यैवानुभवात्। विशेषतो न जानामीत्येवोल्लेखात्। न च काश्यां शुभ्रं विश्वनाथलिङ्गमस्तीति शब्दादवधारितेऽपि तत्र गतवतः पुंसस्तत्र विश्वनाथलिङ्गं न जानामीति तदनुभवोऽस्त्येवेति वाच्यम्; तत्र तादृशलिङ्गान्तरसंभावनया देशविशेषवैशिष्ट्यानवधारणेन वा व्यक्तिविशेषावच्छिन्नाज्ञानानुभवात्। न ह्येकमेव तादृशलिङ्गं तच्चैतादृशदेशे [1]स्थितमिति शब्दादवधारयतस्तथानुभवोऽस्ति। किं च वह्न्याद्यनुमानानन्तरमपि वह्निं न जानामीत्यनुभवः स्यात्, त्वदुक्तरीत्या तन्निर्णयस्याप्रतिबन्धकत्वादिति चेन्न; तत्तद्विषयाकारवृत्त्यनवच्छिन्नसाक्षिण एव तदज्ञानसाधकतया तद्वृत्त्यवच्छेदे सति प्रमाणाभावेन तदज्ञानानुभवासाधकत्वात्। न चैवं केवलवृत्तेर्जडतया निवर्तकत्वानुपपत्तिः; वृत्तीद्धबोधस्य बोधेद्धवृत्तेर्वा प्रमाणज्ञानतया निवर्तकत्वात्। "तरति शोकमात्मवित्" इति श्रुतिरप्यत्रार्थे मानम्। श्रवणफलसाक्षात्कारेणाविद्यानिवृत्तेराहत्य तथा प्रतिपादनात्। न चैवं धर्माधर्मौ न जानामीत्यनुभवानुपपत्तिः, धर्माधर्मगोचरापरोक्षवृत्तेरप्रसिद्धतया तन्निवर्त्यत्वाप्रसिद्धेरिति वाच्यम्; नित्यातीन्द्रियधर्माधर्मयोग्यतयैवापरोक्षानवभासोपपत्तौ तत्राज्ञानकल्पने मानाभावेन तस्याज्ञानविषयत्वस्यैव तत्रारोपात्। न च सुषुप्तौ वृत्त्यनुपस्थित्या तद्विरुद्धतया तदनुभवासंभव इति वाच्यम्; विषयवद्वृत्तेरप्यज्ञानसाधकसाक्षिमात्रभास्यतया तद्दशायामपि तदवभासोपपत्तेः॥

---

[1] अस्तीति—ट.

## पूरणी

वस्तुतस्तु न सर्वदा विषयज्ञाननिवर्त्यत्वरूपेणैवाज्ञानानुभवः, अन्वयव्यतिरेकादिना तन्निवर्त्यत्वग्रहं विना केवलसाक्षिणा तन्निवर्त्यत्वग्रहायोगात्। किं तु वस्तुतो ज्ञानविरुद्धस्वरूपविशेषेणैव तदनुभवः। ज्ञानविरोधोपस्थितिदशायां तु तेन रूपेण। अन्यथाऽज्ञानस्य प्रातीतिकत्वानुपपत्तेः। तच्च [1]वृत्तिविरोधपक्षेऽपि सममिति स्वरूपनिवर्त्यत्वघटितं लक्षणमयुक्तम्। किं तु पूर्वोक्तमेव सम्यक्॥

वस्तुतस्त्वपरोक्षप्रमाणज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयध्वंसानपेक्षतादृशध्वंसप्रतियोगित्वं लक्षणम्। ध्वंसानपेक्षेति विशेषणान्नाविद्याध्वंसापेक्षध्वंसप्रतियोगिनि प्रपञ्चेऽतिव्याप्तिः। न चैवमप्यतिव्याप्तिः, क्रमनाशे मानाभावेनाविद्याप्रपञ्चयोर्युगपदेव नाशादिति वाच्यम्; उपादाननाशेन घटनाशस्थले उपादाननिवृत्तेरुपादेयनिवृत्तिहेतुतया क्लृप्तत्वेन युगपत्तदयोगात्। उपादाने सत्युपादेयस्यात्यन्तिकनिवृत्त्यदर्शनेन तन्निवृत्तेस्तन्निवृत्तिप्रयोजकत्वाच्च। किं चाज्ञानवत्प्रपञ्चस्यापि साक्षाज्ज्ञाननिवर्त्यत्वे तत्रापि न जानामीत्यनुभवप्रसङ्गः। तथा च न तदनुभवबलादज्ञानसिद्धिः। प्रपञ्चान्तःपातियत्किंचिद्वस्तुनस्तद्विषयत्वोपपत्तेः। ज्ञानस्य समानविषय एव साक्षान्निवर्तकतया निर्विषयप्रपञ्चानिवर्तकत्वायोगाच्च। आवरणस्य त्वज्ञानवत्समानविषयकत्वात्साक्षात्तन्निवर्तकत्वं वृत्तेरुपपद्यते॥

अत एवावरणध्वंससापेक्षध्वंसप्रतियोगितया असंभव इति प्रत्युक्तम्; अज्ञानावरणयोर्युगपदेव नाशात्। न चैवं भिन्नविषयत्वेनाज्ञाननिवृत्तिद्वाराऽपि प्रपञ्चनिवर्तकत्वं न स्यादिति वाच्यम्; भिन्नविषयज्ञानादज्ञाननिवृत्तावतिप्रसङ्गेन साक्षान्निवर्तकत्व एव समानविषय-

[1] वृत्तिरिति पक्षे—झ.

नापि तत्र प्रमाणाभावः, न जानामीत्यनुभवस्य सत्त्वात् । न तावन्मिथ्याज्ञानादिकं तस्य विषयः, तस्याज्ञानान्वयव्यतिरेकानुविधायितया ततो भेदानुभवात् यावद्विशेषज्ञानमनुभू-

---

दीपनम्

ज्ञानविषयत्वं साधयति—न तावदिति । यावद्विशेषेति । शुक्ति-

---

पूरणी

तायाः प्रयोजकत्वात् । तद्द्वारा तदुपादेयनिवृत्तावतिप्रसङ्गाभावेन तदप्रवेशात् । न चाज्ञानगतप्रतियोगितावच्छेदकापरिचये उक्तध्वंसप्रतियोगित्वमेव दुर्ग्रहमिति वाच्यम्; एकाज्ञानवादे तदवच्छेदकानपेक्षणात् । अनुगतासंभवेऽननुगतस्वरूपविशेषावच्छेदकाश्रयणस्यापि युक्तत्वात् । सामग्रीकालीनविषयस्फूर्तिप्रतिबन्धकत्वादेरनुगतस्य संभवाच्चेति संक्षेपः ॥

वस्तुतस्तु न ज्ञानं प्रपञ्चनिवृत्तौ कारणम्, अज्ञाननिवृत्तावेवान्यथासिद्धत्वात् । न च दण्डे चक्रभ्रमवदज्ञाननिवृत्तिर्द्वारम्; ज्ञानेनाज्ञानं नष्टमित्यज्ञाननिवृत्तेः स्वातन्त्र्येण साध्यत्वावगमात्, अर्थनिवृत्तेरननुभवाच्च । न च "तथा विद्वान्नामरूपाद्विमुक्त" इति श्रुत्या तज्ज्ञानस्य प्रपञ्चनिवृत्तिहेतुतासिद्धिरिति वाच्यम् ; तत्र हेतुबोधकतृतीयाविभक्त्यदर्शनात् । कर्मणा मुच्यत इत्यागमवत् प्रयोजकमात्रपरतयोपपत्तेश्च । अव्यवहितं साधनमिति मते च न व्यवहितज्ञानस्य तन्निवृत्तिहेतुताशङ्कापि । तथा चापरोक्षप्रमाणज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयध्वंसप्रतियोगित्वमेव लक्षणमिति युक्तमुत्पश्यामः ॥

**यमानस्य मिथ्याज्ञानत्वानुपपत्तेश्च। ज्ञानं विनापि तस्य नाशात् मिथ्याज्ञान[1]स्य ज्ञानत्वानधिकरणत्वाच्च न तद्गोचरत्वम्। नापि ज्ञानाभावो विषयः, तत्र न तावदत्यन्ताभावस्ताद्विषयः; परमते ज्ञानाधिकरणे तदभावात्, मन्मते चासङ्गस्यात्मनो**

---

## दीपनम्

रिति ज्ञानं यावन्न भवति ततः प्रागेव भ्रमनिवृत्तावप्यज्ञानं न निवर्तते। अन्यथा किं तदिति जिज्ञासया तज्ज्ञानायाप्रवृत्तिप्रसङ्गादिति न भ्रान्तिरज्ञानमित्यर्थः। किं चाज्ञानं ज्ञानैकनिवर्त्यतया लोकेऽनुभूयते, नियमेन तन्निवृत्तौ ज्ञानान्वेषणत्, न च [2]भ्रान्त्यादिकं तथेति तयोर्भेद इत्याह—**ज्ञानमिति**। भ्रमविषये कदापि न जानामीत्यनुभवादर्शनाज्जानामीत्यव व्यवहारदर्शनाच्च न तदज्ञानमित्यह—**मिथ्येति। ज्ञानाधिकरणे** ज्ञानसमवायिप्रदेशे। अज्ञानं विनेति च्छेदः। एतच्चोपलक्षणम् —[3]स्वप्रकाशात्मनि न जानामीत्यनुभवस्य तद्विषयत्वायोगात्। नच वृत्त्यभावस्तत्रापि संभवतीति वाच्यम्, आदित्य इव प्रदीपाभावेन स्वप्रकाशे प्रतीचि जडवृत्त्यभावेनानवभासायोगादित्यपि द्रष्टव्यम्। ध्वंसविषयत्वं

---

## पूरणी

**भ्रमनिवृत्ताविति**। शुक्तित्वावभासमन्तरापि नेदं रजतमिति रजतभेदमात्राकारवृत्त्या तद्भ्रमनिवृत्तावपि किं तद्रजतभिन्नमिति जिज्ञासादर्शनान्न तदज्ञाननिवृत्तिरित्यर्थः। **अनवभासायोगादिति**। मां न जानामीति स्वानवभासप्रतीत्ययोगादित्यर्थः। तथा च स्वरूपा-

---

[1] स्याज्ञान—**ग** [2] भ्रमादि—**ख. च.** [3] स्वयं प्रकाश आत्मनि—**च.**

ऽज्ञानं विना तत्संबन्धाभावात्। नापि ध्वंसः; अतीन्द्रिय-संस्कारातिरिक्तध्वंसाभावात् पूर्वं [1]तत्र ज्ञानाभावाच्च। नापि प्रागभावः; तस्य क्वाप्यभावात्। भविष्यतीत्यादिबुद्धेरन्यथा-

## दीपनम्

निषेधति—**अतीन्द्रियेति**। कपालविशेषप्रत्यक्षदशायामेव ध्वंस इत्यनुभवेन ध्वंसोऽतीन्द्रिय एव। एवं प्राक्सत्त्वे सत्यनुपलभ्यमानत्वा-ज्ज्ञानादिध्वंसोऽनुमीयत इति सोऽप्यतीन्द्रिय एव। स च प्रतियोगिनः सूक्ष्मरूपः संस्कार इति न तस्य न जानामीत्यनुभवविषयत्वमित्यर्थः। ननु घटो भविष्यतीत्यादिबुध्दिः प्रागभावविषयेति कथं सर्वत्र तद-भावस्तत्राह—**अन्यथेति**। अन्यथैवेत्यर्थः॥

## पूरणी

वरणेन तदनवभासप्रयोजकमज्ञानमवश्यमेषितव्यमिति भावः। **कपाल-विशेषेति**। अयमिदानीं घटध्वंसवान्, प्राक्तद्वत्त्वेनोपलभ्यमानत्वे सति सत्यामप्युपलम्भसामग्र्यामनुपलभ्यमानघटसमवायिदेशत्वादित्यनु-मानगम्यो ध्वंसः। अनुपलभ्यमानत्वं तदुत्पत्तिपूर्वकालीनकपालादौ तदत्य-न्ताभाववति च व्यभिचारीति प्राक्तद्वत्त्वेनेति विशेषणम्। भूतलादौ व्यभिचारवारणाय समवायिदेशत्वादिति। अन्धकारदेशवर्तिकपालादिव्या-वृत्त्यर्थं सत्यां सामग्र्यामिति। तस्मादतीन्द्रियो ध्वंसो न प्रत्यक्षानुभव-गोचर इति भावः। इदं चोपलक्षणम्—ध्वंसस्य प्रत्यक्षत्वेऽपि घटज्ञानानु-त्पाददशायामपि घटं न जानामीत्यनुभवान्न तद्ध्वंसगोचरोऽयमित्यपि द्रष्टव्यम्॥

[1] तज्ज्ञना—**छ.**

## दीपनम्

# प्रागभावनिराकरणम्.

तथाहि—तन्तुषु पटो भविष्यतीति बुद्धिः किं तन्तुनिष्ठप्रागभावप्रतियोगित्वमात्रं विषयीकरोति, किं वेदानीं तत्रासत्त्वे सत्युत्तरकालवैशिष्ट्यम्। नाद्यः; प्रागभावत्वं हि गन्धानाधारसमयानाधाराभावत्वम्। नच [1]तत्तया विषयीक्रियते, इदानीं सर्वमुक्तिसमयोपस्थापकप्रमाणाभावात्। श्वो भाविनि घटे अद्य भविष्यतीति धीप्रसङ्गाच्च। सामग्रीकालीनस्य प्रत्यक्षत्वात्तत्पूर्वं सामग्रीज्ञानस्यावश्यकतया व्याप्यज्ञानजन्यत्वेनानुमितिरेव न स्यात्। [2]तन्तुषु पटो भविष्यतीति शब्दप्रमाणात्तन्तूनां पटवैशिष्ट्यसंशयानिवृत्तिप्रसङ्गाच्च ततस्तदप्रतीतेः यत्रकुत्रचिद्यदाकदाचित्प्रतियोगिजनकमात्रस्वभाववत्वात् प्रागभावस्य

---

## पूरणी

ननु प्रागभावस्वरूपमेव तद्बुद्धौ प्रकारः, न तूक्तरूपमित्यनुशयादाह—**श्वो भाविनीति**। श्वो भाविन्यप्यद्यकालगतप्रागभावप्रतियोगित्वसत्त्वादित्यर्थः। नन्वद्य तत्कालसामग्रीविरहान्न तत्प्रागभावज्ञानम्, सामग्र्यैकोन्नेयत्वात्तस्येत्यत्राह—**सामग्रीकालीनस्येति**। नन्वनुमेयोऽपि प्रागभावः सिद्ध्येदित्यत्राह—**तन्तुष्विति**। ननु प्रागभावस्य कार्यजनकत्वनियमेन शाब्दप्रागभावज्ञानानन्तरं पटवैशिष्ट्यानुमानादेव तत्र तत्संशयनिवृत्तिरित्यत्राह—**यत्र कुत्रचिदिति**। अनुत्पादितपटविनष्टतन्तुगततत्प्रागभावादेराश्रयान्तरे प्रतियोगिजनकताया वाच्यत्वात्। अन्यथा प्रागभावस्य प्रतियोग्यैकनाश्यतया तस्य नाशाभावे अनादिसान्ताभावस्वरूपप्रागभावत्वव्याघातात्। तत्त्वज्ञान-

---

[1] तत्तथा. [2] एतेषु.

## दीपनम्

तदधिकरणस्य सर्वस्य प्रतियोगिजनकत्वानियमाच्च। न हि पटमनुत्पाद्य तन्तवो न नश्यन्ति। नच तेषु तत्प्रागभाव एव नास्तीति वाच्यम्; समवायिकारणतावच्छेदकस्यैव तदधिकरणताप्रयोजकत्वात्। अन्यथा [1]पटकर्तृणां पटोत्पादनाय यत्किंचित्तन्तूपादानं न स्यात्। तद्बुद्धेरसति बाधके प्रमाणत्वाच्च। न द्वितीयः; समयविशेषावच्छिन्नोपादानेन समयविशेषसंबन्धशीलात्यन्ताभावेन वा तादृशप्रतीत्युपपत्तेरिति॥

यदपि पाकजरूपरसादीनां परस्परभेदः प्रागभावभेदादेव वक्तव्यः; तदतिरिक्तकारणभेदाभावादिति, तन्न;

---

## पूरणी

वदात्मगतदुःखप्रागभावा आत्मान्तरे दुःखं जनयन्तीति कैश्चिदभ्युपगमाच्चेत्यर्थः। ननु मास्तु प्रागभावस्य तदधिकरण एव कार्यजनकत्वनियमः, तदधिकरणस्य तु तेन प्रागभावान्तरेण वा कार्यजनकत्वनियमात् तथानुमानं स्यादित्याशङ्क्यात एव न तन्नियमोऽपीत्याह—**तदधिकरणस्येति**। नन्वस्त्विदानीं तन्तुनिष्ठप्रागभावप्रतियोगित्वे सत्युत्तरकालवैशिष्ट्यं तद्विषय इति द्वितीयः कल्प इत्यत आह—**न द्वितीय इति**। **समयविशेषेति**। नन्वत्र पटो भविष्यतीति तन्तुनिष्ठतया तदभावप्रतीतेर्न तन्तुस्वरूपमात्रं तद्विषयः। अन्यथा अधिकरणातिरिक्ताभावमात्रोच्छेदप्रसङ्गात्। तथा च तदर्थमनुपलब्धिप्रमाणाभ्युपगमोऽपि न स्यादित्यनुशयदाह—**समयविशेषेति**। असत्त्वमभावप्रतियोगित्वम्। तच्च तादृशात्यन्ताभावेनापि निर्वहतीत्यर्थः। युगपदुत्पत्तावपि नानुपपत्तिः, अन्वयव्यतिरेकाभ्यां पूर्वरूपादिध्वंसस्यैव

---

[1] तत्कर्तृणां—च.

## दीपनम्

युगपदुत्पत्तौ प्रमाणाभावेन क्रमभावितेजस्संयोगात्पूर्वरूपादिध्वंसाद्वा [1] तदुपपत्तेः ॥

यदप्युत्पन्नस्य पुनरनुत्पत्त्या प्रागभावसिद्धिरिति, तदपि न; उत्पत्तिर्हि कार्ये सत्तासमयः[2] तस्य कारणे समवायो वा। तदुभयमुत्तरकालेऽप्यस्त्येव ॥

यत्त्वाद्यक्षणसंबन्ध उत्पत्तिः, क्षणस्याद्यत्वं च तत्समानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयत्वमिति, तदपि न; सामग्रीकालीनकार्यासत्त्वं हि क्षणस्य वर्णिताद्यत्वे प्रयोजकम्। [3] असत्त्वं चात्यन्ताभावेनापि निर्वहति। तथा चैवंभूताद्यक्षणाभावादेव नोत्पन्नस्य पुनरुत्पत्तिः। किं च वर्तमानक्षणे त्वन्मते कालान्तरभाविघटादिज्ञानं किमिति न जायते, तत्प्रागभावादिसामग्र्या इदानीं सत्त्वात्। क्षणविशेषोऽपि तद्धेतुः, स इदानीं नास्तीति चेत्तर्हि घटादावपि समान-

---

## पूरणी

हेतुत्वादित्याह—**पूर्वेति**। **तत्समानकालीनेति**। प्रतिक्षणं कस्यचिदुत्पत्त्या कस्यचिद्ध्वंसेन च द्वितीयादिक्षणस्य तत्पूर्वक्षणवर्तिपदार्थप्रतियोगिकध्वंसाधारत्वान्नाद्यत्वमिति सामग्रीक्षणे कार्याभावोऽवश्यं वाच्यः। अन्यथा तदुत्तरक्षणस्याद्यत्वायोगात्। अतः प्रागभावसिद्धिरित्यर्थः। **क्षणस्य** कार्योत्पत्तिक्षणस्य। ननु तदत्यन्ताभावस्योत्तरक्षणेऽपि सत्त्वात्पुनरुत्पत्तिः स्यादित्यत आह—**तथा चेति**। प्रागभावपक्षेऽपि क्षणविशेषोऽवश्यापेक्षणीय इत्याह—**किं चेति**। ननु समयानन्तरभाविज्ञानं स्यादित्यनेन किं क्रमेणोत्पन्ननानाज्ञानोत्पादो युगपदापाद्यते

---

[1] तदुत्पत्तेः—**च**. [2] समवायः—**च**. [3] तदसत्त्वं—**च**.

## दीपनम्

मिति किमित्युत्पन्नस्योत्पत्तिप्रसङ्गः। किं च तस्यैव प्रतिबन्धकत्वान्नोत्पन्नस्य पुनरुत्पत्तिः। प्रतिबन्धकस्य चात्यन्ताभावोऽपि कार्योपयोगीति न ततोऽपि तत्सिद्धिः॥

यदप्यपरम्—प्रागभावाभावे कारणत्वमेव न निर्वहति। पूर्वसमयवृत्तित्वं हि कारणत्वम्। तच्च प्रागभावघटितमिति, तदपि न; प्रागभावसमयादेरेवं सत्यकारणत्वप्रसङ्गात्। न हि प्रागभावावच्छिन्ने प्रागभावादिरस्ति। न चेदानींतनप्राक्तनव्यवहारः पराभिमतं प्रागभावं विषयीकरोति। [1] तदुपस्थि[2]त्यसंभवात्

---

## पूरणी

उतेदानींतनज्ञानव्यक्तिपरिहारेण कालान्तरज्ञानव्यक्तिर्वा। नाद्यः; आत्मान्तःकरणादिस्वभावेन युगपत्तदसंभवात्। अन्यथा त्वत्पक्षेऽपि तस्य दुर्वारत्वात्। द्वितीये च ज्ञानव्यक्तिमात्रापादनमिष्टमेव, तस्याः स्वतो विशेषाभावात्। कालान्तरविशेषस्य चेदानीमभावेन तत्संबन्धापादनस्यायोगादित्यनुशायादाह— **किं च तस्येति**। **अत्यन्ताभावोऽपीति**। न चैवं प्रतियोगिजनकाभावत्वं प्रागभावत्वमिति तस्य प्रागभावताप्रसङ्गः; अनादिविनाश्यभावस्यैव तत्प्रागभावत्वात्। प्रतिबन्धकाभावस्य हेतुत्वानभ्युपगमाच्चेति भावः। **न हि प्रागभावेति**। तथा चान्यदेव पूर्ववर्तित्वं त्वयापि निर्वाच्यमिति भावः। ननु घटादेरिदानींतनत्वं तदव्यवहितपूर्वकालवृत्तिप्रागभावप्रतियोगित्वम्, प्राक्तनत्वं च व्यवहितपूर्वकालवर्तिप्रागभावप्रतियोगित्वमिति तद्व्यवहारा[3]त्सिध्यतीत्यत्राह—**न चेदानीमिति**। **तदुपस्थितीति**। त्वया

---

[1] तदुत्पत्त्यसंभवात्-क. [2] त्यभावात्-च. [3] सिद्धिरित्य-ट.

दीपनम्

प्रतियोगि तद्ध्वंसानाधारसमयादेरेव तद्बुद्धिविषयत्वाच्चेति न किंचित्प्रागभावे प्रमाणम् ॥

अस्ति च बाधकं शास्त्रानारम्भप्रसङ्गः । दुःखप्रागभावानामपरिमेयत्वे तेषामनन्तैरपि [1]जन्माभिर्दुरुच्छेदतया स्पष्टमेव शास्त्रारम्भवैयर्थ्यम् । परिमितत्वे च सत्यपि शास्त्रजन्यज्ञाननिवर्त्ये मिथ्याज्ञाने, सत्यपि शरीरेन्द्रियादौ दुःखप्रागभावाभावे मोक्षप्रसङ्गात् । वर्ण्येते हि सामग्र्यां सत्यामपि प्रागभावविरहात्कार्यानुदयः । क्रमेण च भोगादवशिष्टद्वित्रिदुःखप्रागभावस्य[2] निवृत्तये न कथमपि शास्त्रारम्भार्थवत्ता । एवं मिथ्याज्ञानेऽपि द्रष्टव्यम् । किं चैवं चीर्णब्रह्महत्यादिप्रायश्चित्तस्य निरतिशयदुःखप्रागभावमात्मनि निश्चिन्वतो न मुमुक्षा भवेत्, मुमुक्षोर्वा मुक्त्युद्देशेन ब्रह्मवधे प्रवृत्तिः स्यात्, तया विना तत्प्रागभावनाशासंभवात्, तस्य स्वसमानाधिकरणस्वप्रतियोगिमात्रजनकत्वनियमा-

पूरणी

तस्य सामग्र्यैकोन्नेयत्वाभ्युपगमात् विद्यमानघटादौ च तद्विरहादिति भावः । **प्रतियोगीति** । तादृशाव्यवहितसमयावच्छिन्नत्वमिदानींतनत्वम्, व्यवहितसमयावच्छिन्नत्वं च प्राक्तनत्वमिति भावः । ननु कायव्यूहादिना युगपन्नानाकर्मोपभोगेन प्रागभावनाशार्थमेव शास्त्रारम्भ[3]इत्यत आह— **क्रमेणेति** । **एवं मिथ्याज्ञानेति** । मिथ्याज्ञानप्रागभावानामपि परिमितत्वापरिमितत्वाभ्यां मोक्षशास्त्रवैफल्यम्, परिमितत्वे तन्नाशानन्तरं मिथ्याज्ञानान्तरानुदयेन तन्मूलप्रवृत्त्यादिविरहे धर्माधर्मयोश्चानुत्पादे प्रारब्धकर्मणश्चैतद्देहोपभोगेन क्षये सति मुक्तिप्रसङ्गात् । अपरिमितत्वे तु तत्त्वज्ञाने सत्यपि तदसंभवादित्यर्थः । ननु तत्रापरिमितत्वभ्रमात्प्रवृत्तिरित्यनुशयादाह—**किं चेति** । नन्वधिकरणान्तरे स प्रागभावः प्रतियोगिनं जनयेदित्यत्राह—**तस्येति** ॥

[1] जन्मभिरनुच्छेदतया–च. [2] अभावाय–ख. च. [3] इत्यत्राह–ट.

## पूरणी

ननु दुःखं मे मा भूदित्यादिकामनैव तत्र मानम्। नच तस्याः सामयिकात्यन्ताभावो विषयः; तस्यासाध्यत्वात्। न च प्रागभावतदुत्तरसमयसंबन्धित्वेन साध्यता; तस्य सदातनत्वेनोत्तरसमयेऽपि स्वतस्तस्य सत्त्वात्। किं चोपादानेऽपि घटादिकार्यात्यन्ताभावाभ्युपगमे तस्य सर्वदेशीयसार्वकालिकात्यन्ताभावप्रतियोगितया असत्वापत्तिरिति चेन्न; उत्तरसमयविशेषावच्छेदेन स्वात्मसंबन्धितया दुःखात्यन्ताभावस्य काम्यत्वोपपत्तेः। दुःखसाधनपापादिना दुःखजननसमये तदत्यन्ताभावस्य स्वात्मसंबन्धायोगेन तेन रूपेण तत्साधननिवृत्तिद्वारा तस्य साध्यत्वात्। न चासत्त्वापत्तिः; सर्वकालावच्छेदेन सर्वदेशीयात्यन्ताभावप्रतियोगित्वस्य तदर्थत्वात्। प्रतियोगिसमये च तदत्यन्ताभावासत्वेनोक्तदोषाप्रसरात्॥

## प्रागभावसाधनम्.

वस्तुतस्तु प्रागभावानभ्युपगमे उपादानत्वव्यवस्था न स्यात्। नच सामयिकात्यन्ताभावमादाय तदुपपत्तिः; दण्डादेरपि तादृशात्यन्ता-[1]भावप्रतियोगितया घटोपादानत्वप्रसङ्गात्। सामयिकात्यन्ताभावेन ध्वंसापलापप्रसङ्गाच्च। किं चातिरिक्तसामयिकात्यन्ताभावे मानाभावः। नच घटवति भूतले समयभेदेन घटो नास्तीति बुद्धिस्तत्र मानम्; तस्याः प्रसिद्धात्यन्ताभावेन यावत्प्रतियोगिसंबन्धाभावोपधानदशायां तद्बुद्धिजननयोग्येनान्यथासिद्धेः। यद्वा उत्पादविनाशशीलात्यन्ताभावविषया सा तत्र प्रतीतिः। तदुत्पादविनाशौ च प्रतियोग्यपनयनागमनाभ्याम्। नच तदत्यन्ताभावनिवृत्तेर्घटात्मकत्वे तदत्यन्ताभावदशायामन्यत्र घटो न स्यात्, ध्वंसस्य प्रतियोगिसमानकालत्वविरोधात्।

[1] भाववत्तया—ट.

## पूरणी

अन्यात्मकत्वे च [1]तस्याभावान्तरतापत्तिरिति वाच्यम् ; अभावाधिकरणकाभाववदभावनिवृत्तेरपि तदधिकरणस्वरूपत्वेनोक्तदोषाभावात् । सामयिकत्वस्य दुर्निरूपत्वाच्च । न तावत्तदधिकरणप्रतियोगिसंबन्धसमयान्यसमयावच्छेदेन तदधिकरणसंबन्धित्वं तदर्थः, अभावाधिकरणसंबन्धस्याभावस्वरूपतया तस्य कादाचित्कत्वायोगात् ॥

यत्तु संबन्धान्तरमन्तरा विशिष्टधीजननयोग्यत्वं स्वरूपसंबन्धः, योग्यत्वं च समयविशेषनिबन्धनतया कादाचित्कमिति, तन्न ; योग्यताया यावद्द्रव्यभावित्वेन तदयोगात् । तस्या भावादिस्वरूपत्वाच्च । नाप्युक्तसमयविशेषसंबन्धकत्वं तदर्थः, अधिकरणाभावादेः स्वरूपातिरिक्तसंबन्धाभावात् । समयविशेषस्य तदुभयानिरूप्यतया संबन्धत्वायोगाच्च । किं च समयविशेषस्य संबन्धत्वे भूतले घटो नास्तीति प्रतीत्यनन्तरमिदानीं घटोऽस्ति न वेति संशयो न स्यात् । नास्तीति बुद्धेः समयविशेषावगाहित्वात् । इदानीं घटो नास्तीति सहप्रयोगानुपपत्तिश्चेति दिक् ॥

न चेहापि तादृशोत्पादादिशीलात्यन्ताभावमादाय सङ्गतिः ; उपादाने तदत्यन्ताभावोत्पत्तेः पूर्वं कार्योपत्त्या तदसंभवात् । तस्मादुपादानतावच्छेदकतया प्रागभावसिद्धिः । अत एव घटो भविष्यतीति बुद्धिरपि तत्र मानम् । उक्तरीत्या सामायिकात्यन्ताभावालम्बनत्वासंभवात् । अपि चोत्पन्नस्य पुनरुत्पत्त्यापत्त्या प्रागभावसिद्धिः । न चोत्पन्नप्रतिबन्धादेव न सेति वाच्यम् ; तथा सति मणिकाले दाहानुत्पादेन प्रतिबन्धकाभावस्य कार्यसद्भावेऽहेतुताया स्वोत्पत्तेरपि स्वेन प्रतिबन्धापातादिति दिक् ॥

---

[1] स्यभावान्तर—ट.

**प्युपपन्नत्वेन प्रमाणाभावात्। एतच्चान्यत्रोपपादितम्[1]। न चैतस्मादेवानुभवात्तत्कल्पनम्, लाघवेनैतस्यानुभवस्य भाव-**

---

## दीपनम्

चेत्येतत्सर्वमभिप्रेत्याह—**एतच्चेति**। **एतस्मादिति**। न जानामीत्यनु-

---

## पूरणी

नच प्रागभावाभ्युपगमे दुःखप्रागभावसत्त्वासत्त्वाभ्यां प्रायश्चित्तवैयर्थ्यम्; सत्यपि दुःखप्रागभावे तस्योत्तरसंबन्धासिद्ध्यर्थं तत्सार्थक्यात्। नापि दुःखप्रागभावपरिमितत्वापरिमितत्वाभ्यां तत्त्वज्ञानाय शास्त्रारम्भवैयर्थ्यम्; परिमितत्वेऽपि विलम्बासहिष्णुतया आत्मसाक्षात्कारानन्तरभाविकायव्यूहेन सकलदुःखोपभोगात् [2]झटिति तन्नाशार्थं प्रवृत्त्युपपत्तेः। अपरिमितत्वे च युगपदनन्तदुःखोपभोगयोग्यानन्तशरीरधारणेन तन्नाशसंभावात्प्रवृत्त्युपपत्तेः। न च कायव्यूहे मानाभावः; "एकधा भवति त्रिधा भवति" इत्यादिश्रुतेः "आत्मनो वै शरीराणि बहूनि मनुजेश्वर" इत्यादिस्मृतेश्च मानत्वात्। नच चीर्णब्रह्महत्याप्रायश्चितस्य मुमुक्षोर्ब्रह्मवधप्रवृत्तिप्रसङ्गः; तादृशस्थले फलबलेन दुःखप्रागभावविरहात्। न चैवं प्रायश्चित्तवैयर्थ्यम्; पापनिर्तनमात्रेण तत्सार्थक्यात्। सति दुःखप्रागभावे तत्परिपालनफलकत्वबोधनाच्च न तद्बोधकवेदाप्रामाण्यम्। दुःखप्रागभावसत्त्वे न दृढतरमुमुक्षा; स्वीयसकलदुःखप्रागभावविनाशककर्मसम्पत्तिमत एव तदभ्युपगमात्। तस्माद्बाधकाभावादुक्तरीत्या साधकसत्त्वाच्च सोऽभ्युपगन्तव्यः। न चैवं ज्ञानप्रागभाव एव न जानामीति बुद्धिविषयः स्यादिति वाच्यम्; सामयिकात्यन्ताभावपक्षेऽपि तदापत्तेस्तुल्यत्वात्। प्रतियोग्यनुपस्थित्या वक्ष्यमाणरीत्या तदसंभवाच्चेत्यस्मद्गुरुचरणानुमतमेव सम्यक्॥

---

[1] न्यत्र प्रतिपादितम्-**क. ग.** [2] समुदिततन्ना-**ङ.**

**विषयत्वस्योचितत्वात्। [1]यद्विषये कदापि ज्ञानं न भविष्यति [2]तत्रापि न जानामीत्यनुभवात्। तत्र च प्रागभावासंभवात्।**

## दीपनम्

भवादित्यर्थः। **प्रागभावेति**। असत्प्रतियोगिकाभावासंभवादित्यर्थः। न च सार्वज्ञ्यदशायां तद्विषयज्ञानमप्यस्तीति वाच्यम्; जीवानां तदनैयत्यात्। न हि मुक्तेः प्राक्तद्भविष्यतीत्यत्र प्रमाणमस्तीति भावः। किं च न जानामीत्यनुभवो ज्ञानविशेषाभावं विषयीकरोति उत ज्ञानसामान्याभावम्। नाद्यः; निर्णीतेऽपि यत्किंचिज्ज्ञानाभावसत्त्वेन न जानामीत्यनुभवप्रसङ्गात्। प्रतियोगितावच्छेदकविशेषानुपस्थिति-दशायां भवतोऽस्यानुभवस्य तद्विषयत्वानुपपत्तेः। न जानामीति

## पूरणी

**असत्प्रतियोगिकेति**। वनं गतस्य यत्र वृक्षविशेषादौ न कदापि ज्ञानं तत्रापि न जानामीत्यनुभवदर्शनात्तत्र तु तत्प्रागभावा-संभवादित्यर्थः। ननु कायव्यूहाद्यनुरोधेन योगिनां सर्वविषयकज्ञान-मेषितव्यमित्यत्राह—**न हि मुक्तेरिति**। स्वकर्मादिज्ञानमात्रेण तदुप-पत्तेर्न तद्बलेन सार्वज्ञसिद्धिरित्यर्थः। अभ्युपेत्याप्याह—**किं चेति**। ननु समानाधिकरणसमानविषयज्ञानासमानकालीनज्ञानाभाव एव तद्विषय इति नोक्तातिप्रसङ्ग इत्यत आह—**प्रतियोगितावच्छेदकेति**। तथापि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताज्ञानस्याभावधीहेतुतया जनिष्यमाणज्ञानमात्रवृत्तिप्रतियोगितावच्छेदकधर्मोपस्थितिमन्तरापि जाय-मानानुभवस्य तदवच्छिन्नविशेषाभावविषयत्वमसंभवमित्यर्थः। किंचि-

[1] तद्विषयं. [2] तस्यपि—क.

## दीपनम्

घटादिज्ञानसामान्याविरोधित्वेनानुभवाभावप्रसङ्गाच्च । न वा जनिष्यमाण-तत्तज्ज्ञानमात्रप्रतियोगितावच्छेदको धर्मः केनचिदनुभवितुं शक्यते । द्वितीये चात्यन्ताभाव एव वक्तव्यः; प्रागभावस्य सामान्याभावत्वा-भावात्। न वा सोऽपि; ज्ञानेन [1]तन्निवृत्त्यसंभवप्रसङ्गात्, आत्मनि

---

## पूरणी

द्विशेषाभावविषयत्वे दोषान्तरमाह—**ज्ञानसामान्येति** । विशेषाभावस्य तत्तद्विशेषविरोधितया सामान्याविरोधित्वादित्यर्थः । ननु यावद्विशेषा-भावा एव सामान्यविरोधितया अनुभूयन्तामित्यत्राह—**न वेति** । तत्तद्विशेषप्रतियोगितावच्छेदकोपस्थितिविरहात्तदवच्छिन्नतावदभावज्ञानं न संभवतीत्यर्थः । पूर्वत्र प्रतियोगितावच्छेदकानुपस्थित्या किंचिद्विशे-षाभावविषयत्वं निराकृतम् । अत्र तु यावद्विशेषाभावविषयत्वं निराकृत-मित्यपौनरुक्त्यम् । यद्यपि फलीभूताभावज्ञाने प्रतियोग्यंशे यः प्रकार-स्तत्प्रकारकत्वेन प्रतियोगिज्ञानस्याभावधीहेतुता न तु प्रतियोगिताव-च्छेदकप्रकारकत्वेन, कम्बुग्रीवो नास्तीत्यादौ व्यभिचारात्, प्रतियो-ग्यंशप्रकारश्चात्र ज्ञानत्वम्, तेनैव रूपेण विशेषाभावानुभवात्, तत्प्रकारकज्ञानं चात्र संभवत्येव, तथापि धर्मिप्रतियोगिज्ञानादौ सति तेन रूपेण विशेषाभावानुभवो न संभवतीति वक्ष्यमाण एव तात्पर्यम् । **ज्ञानेनेति** । तस्य नित्यतया न जानामीति ज्ञाननिवर्त्यत्वासंभवा-दित्यर्थः । **आत्मनीति** । प्रतियोगिसमवायिदेशे तदत्यन्ताभावासंभवा-

---

[1] तन्निवृत्त्यननुभव-ख.

**किंच न जानामीति ज्ञानसामान्यविरोध्यनुभूयते, तद्विरुद्धं च यद्यभावात्मकं किंचिद्वक्तव्यम्, तर्हि [1] तव सामान्याभाव एव वक्तव्यः। विशेषाभावानां प्रतियोगि[2] सजातिसामानाधिकरण्यात्। न चाज्ञानानुभवकाले आत्मनि ज्ञानसामान्या[3] भावानुभवोऽस्ति; धर्मिप्रतियोगिज्ञानेन तस्य ततोऽपि व्यावर्तितत्वात्। स्वप्रकाशधर्मिप्रतियोगिज्ञानानुभवविरोधेन [4] तदनुभवासंभवाच्च। अस्मन्मतसिद्धाज्ञानं च ज्ञानसामान्यविरोधीति**

---

दीपनम्

तदयोगाच्च। अङ्गीकृत्याप्याह—**किं चेत्यादिना। व्यावर्तितत्वादिति।** धर्मिप्रतियोगिज्ञानदशायां तदधिकरणे विरोधेन सामान्याभावस्यासंभवादिति भावः। प्रतियोग्यनुपलम्भासंभवेन तत्प्रतीत्यसंभवमप्याह—**स्वप्रकाशेति।** ननु सिद्धान्ते ज्ञानसामान्यं चैतन्यम्, तद्विरुद्धं चेदज्ञानमिदमेव चैतन्यं तन्निवर्तकं वक्तव्यम्, न चैवं तदा तत्सत्त्वं संभवति, संभवे वा साधकस्य[5] बाधकत्वायोगाच्चेत्यत्राह—**अस्मन्मत इति।** यथा प्रतिबन्धदशायां तृणादिप्रकाशकस्यापि

---

पूरणी

दित्यर्थः। **स्वप्रकाशेति** मूलम्। स्वप्रकाशधर्मिरूपं यत्प्रतियोगिज्ञानं तदनुभवविरोधादित्यर्थः। आत्मनोऽभावाधिकरणस्य ज्ञानरूपत्वात्स्वप्रकाशत्वाच्च तदुपलम्भे सति सामान्याभावानुभवासंभवादित्यर्थः। यद्वा स्वप्रकाशे ये धर्मिप्रतियोगिज्ञाने तदनुभवविरोधात्। अभावधर्हित्वाधिकरणप्रतियोगिज्ञानयोर्गुरुमते स्वप्रकाशतया तदुपलम्भे सति तदभावानुभवो न संभवतीत्यर्थः। **ननु सिद्धान्त इति।** तत्रापि कथं निवर्त-

---

[1] तत्र—**क. छ.** [2] जाति—**ग.** जातीय—**ख. छ.** [3] भावोऽस्ति—**ग.**
[4] तदननुभव—**ख.** [5] घातकत्वा—**च.**

## दीपनम्

वन्ह्यादेस्तन्निवृत्तौ तद्दाहकत्वमेवं चैतन्यं प्रतिबन्धदशायां तद्भासकमपि प्रतिबन्धके निवृत्ते तन्निवर्तयतीति न कोऽपि दोष इत्यर्थः । घटं न जानामीत्यनुभवेन ह्यज्ञानमात्मा विषयश्च विषयीक्रियत इति विषय-

---

## पूरणी

कचैतन्ये सति तद्विरुद्धाज्ञानानुभवः, विरोधादित्यर्थः । **प्रतिबन्धक इति ।** विरोधिनोऽपि चैतन्यस्यावरणप्रतिबन्धकदशायां तन्निवर्तनाक्षमत्वात् तद्विरुद्धतया तदनुभवो न विरुद्ध इति भावः ॥

ननु वृत्तिविरुद्धतयाज्ञानानुभवपक्षे सामान्यतो घटतद्वृत्त्यनुपस्थितौ न तद्विरुद्धतया तदनुभवः स्यात् , चैतन्यविरोधितया तदनुभवपक्षेऽपि घटादिविषयविशेषावच्छिन्नचैतन्यप्रकाशनिवर्त्यत्वानुभवोऽपि घटोपास्थितिमन्तरा न संभवति । न [1]चाज्ञानविषयस्याज्ञानवत्साक्षिमात्रभास्यत्वान्न विषयोपस्थित्यपेक्षेति वाच्यम् ; अनिरूपित[2]विषयविशेषस्य साक्षिमात्रभास्यत्वेऽपि घटत्वाद्यालिङ्गितस्य तथात्वायोगात् । सर्वदा घटादिकमजानतां तन्न जानामीति विशिष्य तदनुभवादर्शनात् । तथा च कथंचिद्धटाद्युपस्थितावपि तदपरोक्षवृत्तेरनावृततदपरोक्षप्रकाशस्य वा विरहा[3]दननुभवाच्च तद्विरु[4]द्धाज्ञानानुभव इति वाच्यम् । एवमस्मत्पक्षेऽपि घटाद्यपरोक्षज्ञानविरह एव तथानुभूयताम् , परोक्षघटाद्युपस्थितेस्तदविरोधादिति, मैवम् ; न जानामीति ज्ञानविरुद्धतया वस्त्वनुभूयते । न च ज्ञानाभावो ज्ञाननिवर्त्य इत्यतिरिक्ताज्ञानस्यैव विषयतया वाच्यत्वात् । न च न जानामीति क्रियागततयोल्लिख्यमाननञस्तद-

---

[1] च ज्ञानविषयस्य ज्ञानवत्सा—ज्ञ. [2] विषये विशेषणस्य—ज्ञ. [3] दनुभवाच्च—ज्ञ.
[4] द्धज्ञाना—ज्ञ.

पूरणी

भावार्थकत्वम्, "न कलञ्जं भक्षयेत्" इत्यादौ भक्षणप्रागभावार्थकत्वदर्शनादिति वाच्यम्; तत्रापि भक्षणादिबलवदनिष्टासाधनत्वाभावस्यैव तदर्थतया क्रियाभावार्थत्वासिद्धेः। "नेक्षेतोद्यन्त"मित्यादौ विरुद्धार्थकत्वस्यापि दर्शनाच्च। न च व्रतोपक्रमो लिङ्गं, प्रकृते तु नैवमिति वाच्यम्; अत्रापि ज्ञानेनाज्ञानं नष्टमिति ज्ञाननिवर्त्यत्वानुभवस्य अस्मिन्नर्थे मूढोऽहमिति भावशब्दाभिलापस्य च लिङ्गत्वात्। न चैवं सति धर्म्यन्तरकल्पनागौरवम्; अनुभवसिद्धेऽर्थे कल्पनानवकाशात्। अन्यथा घटो नास्तीति प्रतीतेरावश्यकसंयोगाभावविषयत्वसंम्भवे तदपलापप्रसङ्गात्॥

यत्तु मयि ज्ञानं नास्तीति प्रतीतेः स्फुटं ज्ञानाभावविषयत्वेन तद्वैलक्षण्यान्न जानामीत्यनुभवोऽपि तद्विषय एवेति, तन्न; धर्मो नास्तीति प्रतीतेस्तद्विरुद्धाधर्मविषयत्ववत्तत्प्रतीतेरपि ज्ञानविरुद्धाज्ञानविषयत्वेनाभावविषयत्वासिद्धेः। अत एव ज्ञानाभावोऽस्तीति प्रतीतिरप्युक्तरीत्या तद्विषयैव। न चैवं ज्ञानाभाववस्तूच्छेदः; तत्प्रतीतेः सर्वत्र भावरूपाज्ञनविषयत्वादिति वाच्यम्; घटादौ तत्प्रतीतेस्तदभावविषयत्वात्। आत्मन्यपि ज्ञानं भविष्यतीत्यादिबुद्धेस्तध्द्वंसप्रागभावविषयत्वादिति दिक्॥

वस्तुतस्तु ज्ञानेनाज्ञानं नष्टमित्यनुभव एव तत्र मानम्। ज्ञानात्यन्ताभावादेरनिवर्त्यत्वात्। तत्प्रागभावस्य निवर्त्यस्यापि ज्ञानात्मकध्वंसप्रतियोगितया तज्जनितध्वंसाप्रतियोगित्वादिति सर्वमवदातम्॥

नन्वेवं सुखं न जानामि तज्ज्ञानेन तदज्ञानं नष्टमित्यनुभवबलात्साक्षिमात्रवेद्यसुखादावपि तदज्ञानं सिद्ध्येत्। न चेष्टापत्तिः, अप-

तदेव न जानामीत्यनुभवविषयः। अनुमानमपि—घटध्वंसाजनकघटापरोक्षप्रमाणज्ञानं घटमहं न जानामीत्यनुभवविषयनिवर्तकम्, घटापरोक्षप्रमाणज्ञानत्वात्, घटध्वंसजनक[1]प्रतियोगिघटप्रत्यक्षवत्। अन्वयव्यतिरेकाभ्यां च प्रतियोगिप्रत्यक्षं ध्वंसे कारणमिति न साध्यवैकल्यम्। नच प्रागभावनिवर्तकतयार्थान्तरता; तस्य सत्त्वेऽपि ज्ञानस्य तन्निवृत्तिरूपतया तदनिवर्तकत्वात्। अत्र च निवर्तकत्वयोग्यता साध्येति न

---

### दीपनम्

निवर्तकतयार्थान्तरतापरिहाराय पक्षं संकोचयति—**घटध्वंसाजनकेति।** आत्मनश्चानिवर्त्यत्वात्तन्निवर्त्यं भावरूपमज्ञानं सिद्ध्यतीति भावः। पटादिप्रत्यक्षे परोक्षज्ञाने घटभ्रमे च व्यभिचारनिवृत्तये क्रमेण हेतौ विशेषणानि। **अन्वयव्यतिरेकेति।** अतीन्द्रियस्यैन्द्रियकस्याप्यज्ञानदशायां घटादेरस्मदादितो ध्वंसादर्शनात्प्रतियोगिप्रत्यक्षं ध्वंसकारणम्। अनुद्दिष्टघटादिध्वंसे चेश्वरस्य प्रतियोगिप्रत्यक्षसंभवादिति भावः। **तदनिवर्तकत्वादिति।** न चेच्छादिप्रागभावनिवर्तकत्वेनार्थान्तरता;

---

### पूरणी

सिद्धान्तादिति चेन्न; सुखादौ मूलाज्ञानविषयत्वारोपेण न जानामीत्यनुभवस्य तदारोपनिवृत्तिज्ञानेन तदज्ञानं नष्टमित्यनुभवस्य चोपपत्तेरित्यलं विस्तरेण॥

**घटध्वंसाजनकेति** मूलम्। न च मूलाज्ञानविप्रतिपत्ताववस्थाज्ञानसाधनेऽर्थान्तरतेति वाच्यम्; भावरूपाज्ञानमात्रे विवादात् घटं न जानामीत्यनुभवस्योक्तानुमानेन भावरूपाज्ञानविषयत्वसिद्धौ तदनुभव-

---

[1] प्रतियोगिप्रत्यक्ष—ग.

## पूरणी

दृष्टान्तेन मां ब्रह्म वा न जानामीत्यनुभवस्यापि तद्विषयत्वसाधनेन मूलाज्ञानसिद्धेश्च । न चैवमनुमानान्तरकल्पनागौरवम् ; पूर्वं दृष्टान्ताभावेन तदनुमानाप्रवृत्तेः । उपायान्तरस्योपायान्तरादूषकत्वाच्च । न च मूलाज्ञानस्यैतदनुभवविषयत्वपक्षे घटज्ञानस्य तदनिवर्तकतया बाध इति वाच्यम् ; प्रमातृविषयावच्छिन्नचैतन्यगतान्यवस्थाज्ञानानीति मतेनैतदुपन्यासात् । न च स्वमते चिन्मात्रस्याज्ञाननिवर्तकतया वृत्तिपक्षीकारे बाधः, चैतन्यपक्षीकारे तु दृष्टान्ते साध्यवैकल्यम् , तत्र वृत्तेरेव ध्वंसहेतुत्वादिति वाच्यम् ; सावरणाज्ञानस्यानुभूयमानत्वेनापरोक्षवृत्तेस्तन्निवर्तकतया चोक्तदोषापातात् । अज्ञानानिवर्तकपरोक्षवृत्तावंशतो बाधवारणायापरोक्षाविशेषणम् । रजताद्यविद्यावृत्तिव्यावृत्तये प्रमाणेति । न चैवमपि निर्विकल्पके अंशतो बाधः, तस्यास्मन्मतेऽसत्त्वात् सत्त्वेऽपि तस्य प्रमाप्रमाबहिर्भूततया प्रमाणपदेनैव व्यावृत्तेः । न च परोक्षवृत्तेरपि मौढ्यरूपाज्ञाननिवर्तकतया साध्यसत्त्वेन बाधाभावाद्विशेषणं व्यर्थम् , अत एव हेतावपि तद्वैयर्थ्यमिति वाच्यम् ; तादृशाज्ञानान्तरे मानाभावात् । न जानामीति प्रतीतेरेकाकारतया विषयभेदकल्पनायोगात् । नाप्यस्मिन्नर्थेऽहं मूढ इति प्रतीतिस्तत्र मानम् ; जाड्याज्ञानविषयत्वेनाप्युपपत्तेः । अपरोक्षविषयेऽपि तथानुभवाच्च । धर्मादौ च न जानामीत्यनुभवो मूलाज्ञानविषयत्वारोपनिबन्धनः । वह्न्यनुमित्या वह्न्यज्ञानं नष्टमिति प्रतीतिरपि तदारोपनिवृत्तिविषयेति न ततोऽप्यतिरिक्ताज्ञानसिद्धिः । अत एव "जाड्यं सर्वगतम् , मौढ्यं तु पुंगत"मिति संक्षेपशारीरकाचार्योक्तिरप्यज्ञानविषयत्वा[1]रोपपरा । "भ्रान्तेः पुंधर्मत्वात् परोक्षविषये सुषुप्तिव्यावृत्तिमात्रं" इति विवरणाचार्यनिगदितमपि तदा-

[1] रोपाद्याश्रया–ट.

**धारावाहिकद्वितीयादिप्रत्यक्षे बाधो व्यभिचारो वा। अथ वा स्वसामग्रीकाले स्वसमानाधिकरणज्ञानविषयाविषयत्वं पक्षस्य**

दीपनम्

तस्य न जानामीत्यनुभवाविषयत्वादिति भावः। **बाध इति**। द्वितीयादि-[1]प्रत्यक्षस्य साक्षात्कारत्वेनाविद्यानिवर्तकत्वयोग्यत्वेऽपि तत्समानविषयाज्ञानाभावादेव न तन्निवर्तकत्वमिति न बाधः। तस्य पक्षानन्तर्भावे वा न व्यभिचार इति भावः। **अथ वेति**। स्वसामग्रीकाले स्वसमानाधि-

पूरणी

रोपनिवृत्तिपरमिति न काप्यनुपपत्तिः। न चैवमप्यसंभावनाप्रतिबद्धापरोक्षज्ञानेंऽशतो बाधो व्यभिचारश्चेति वाच्यम्; प्रमाणपदस्य निवृत्तासंभावनार्थकत्वात्। न च परमते घटस्मरणादेरपि प्रतियोगितया न जानामीत्यनुभवविषयत्वेनापरोक्षज्ञानस्य विरोधिगुणत्वेन स्वपूर्वकालीनतन्निवर्तकतया अर्थान्तरतेति वाच्यम्; समानविषयस्मृत्यपूर्वकत्वेनापि विशेषणात्। शब्दादिनानुभूतस्मर्यमाणार्थेऽपि न जानामीत्यनुभवदर्शनेन स्मृतेः प्रतियोगितया तदनुभवाविषयत्वाच्च। न चैवमपि निर्विकल्पकविषयत्वेनार्थान्तरता; तस्यातीन्द्रियत्वेन प्रत्यक्षानुभवविषयत्वायोगादिति सङ्क्षेपः॥

**निवर्तकत्वयोग्यत्वेऽपीति**। योग्यतावच्छेदकं चापरोक्षप्रमाणज्ञानत्वमिति भावः। ननु योग्यत्वे साध्ये घटध्वंसाजनकापरोक्षज्ञानस्यापि घटध्वंसजननयोग्यतयार्थान्तरता, हेतावपरोक्षपदवैयर्थ्यं च। परोक्षज्ञानस्यापि घटध्वंसजननयोग्यतया साध्यसत्त्वात्। घटध्वंसेष्टसाधनतानुमितेश्चिकीर्षादिद्वारा तद्धेतुत्वादित्यस्वरसादाह—अथ वेति मूले। स्वकालीनेत्येतावति कृते द्वित्रिक्षणान्तरितधारावाहिक-

[1] प्रत्ययस्य—ख.

**जन्यसविकल्पकाजन्यत्वं च हेतोर्विशेषणम्। वस्तुतस्तु**

### दीपनम्

करणं यज्ज्ञानं तदविषयो विषयो यस्य घटध्वंसाजनकघटापरोक्षप्रमाणज्ञानस्य तत्त्वमित्यर्थः। घटादेरपि सामान्याकारेण विशेषाकारेण वा यदा कदाचिज्ज्ञा[1]नविषयत्वसंभवात्सदा ईश्वरज्ञानविषयत्वाच्च स्वसामग्रीत्यादिविशेषणद्वयम्। अत्र यद्यपि परपक्षे विशिष्टज्ञानं विशेषणज्ञानजन्यमेव तथापि [2]घटस्मरणस्य निर्विकल्पकस्य वा यावद्विशिष्टज्ञानविषयविषयत्वं नास्त्येवेति न पक्षीभूतज्ञाने तदसिद्धिरिति भावः। **जन्येति**। जन्यं यत्सविकल्पकं तदजन्यत्वमित्यर्थः। परपक्षे सर्वस्यापीश्वरज्ञानजन्यत्वेन पक्षीभूतस्य निर्विकल्पकजन्यत्वेन [3]चार्थान्तरतापरिहारार्थं जन्यस-

### पूरणी

द्वितीयबुद्धेः पक्षान्तर्भावः स्यात्, तत्काले पूर्वज्ञानाभावात्, अतः सामग्रीति विशेषणम्। **यावद्विशिष्टेति**। तदविषयवैशिष्ट्यविशेषविषयत्वं विशिष्टबुद्धावस्तीत्यर्थः॥

नन्वेवं पूर्वबुद्ध्यगोचरप्रमेयत्वादिविषयकद्वितीयबुद्धेः पक्षान्तर्भावः स्यादिति चेत्, जन्यस्वसमानविषयकसविकल्पकाजन्यत्वस्य विशेषणत्वात्। समानविषयत्वं च घटघटत्ववैशिष्ट्यांशे। अतोऽन्यतरत्र प्रमेयत्वाद्यतिरिक्तविषयताभानेऽपि न दोषः। न चास्मन्मते विशिष्टज्ञानस्य विशेषणज्ञानाजन्यतया द्वितीयादिबुद्धौ पूर्वसविकल्पकाजन्यत्वमस्तीति वाच्यम्; तादृशसविकल्पकाव्यवहितानुत्तरक्षणावर्तित्वस्य तदर्थत्वात्। अत एव भ्रान्तेः संस्कारद्वारा पूर्वानुभवजन्यत्वेऽपि तदनुभवस्य विवक्षितसमानविषयत्वाभावात्तद्व्यावर्तनाय प्रमाणपदमर्थवत्। न चैवमप्यलौकिकप्रत्यक्षेऽशतो बाधः, लौकिकत्वेनापि तद्विशेषणादिति सर्वं सुस्थम्॥

[1] ज्ञातत्वसं-च. [2] घटत्वस्मरणस्य-ख. च. [3] चासिद्धिपरि-ख. च.

**धारावाहिकबुद्धिरेव नास्ति, प्रमाणाभावात्। एकस्यापि ज्ञानस्य यावद्विनाशकसमवधानं घटादिवत्स्थित्युपपत्तेः नच द्वितीयादिज्ञानसामग्र्यां सत्यां तत्केन वारणीयमिति वाच्यम्, प्रथमज्ञानसामग्रीव्यतिरिक्तसामग्र्या अभावात्। [1]तस्याः कार्यद्वयाजनकत्वात्, प्रागभावाभावेन[2] तद्घटितसामग्रीभेदाभावात्।**

## दीपनम्

विकल्पकेति। कथं तर्हीश्वरज्ञानस्यानुभवः, तत्राह—**एकस्यापीति**। ज्ञानं हि वृत्तिरन्तःकरणस्यावस्थाविशेष इति द्रव्यमेव। अतो घटादिवद्यावद्विनाशकसमवधानं स्थितिरविरुद्धेति न तावता ज्ञानभेदः सिद्ध्यतीति भावः। **सामग्र्यां** प्रतिबद्धायामिति शेषः। तथाचानन्तरक्षण एव विनाशकसमवधानमिति भावः। किं प्रथमज्ञानसामग्रीतोऽन्यैव द्वितीयादिज्ञानसामग्री उत सैव। नोभयथापि; प्रथमज्ञानजनकमनस्संयोगाद्यतिरिक्तसंयोगे प्रमाणाभावात्, ज्ञानभेदादेव तत्कल्पनेऽन्योन्याश्रयात, एकस्माच्च संयोगात्प्रमाणान्तरं विना [3]प्रकृतेऽज्ञानकल्पनायोगादित्यभिप्रेत्याह—**प्रथमज्ञानेति**। प्रागभावभेदात्तद्घटितसामग्री भिद्यत इत्याशङ्क्य स प्राङ्निरस्त इत्याह—**प्रागभावेति**। सत्त्वेऽपि

## पूरणी

**द्रव्यमेवेति**। नच वृत्तौ गुणान्तराभावात्कथं द्रव्यत्वमिति वाच्यम्; तस्या विषयसंयोगितया संयोगादिगुणानां तत्रापि सत्त्वात्। आन्तरवृत्तावपि संख्यादिगुणसंभवात्। रूपादिवैलक्षण्यस्यैव द्रव्यत्वादिप्रयोजकत्वाच्चेति भावः। **एकैव सामग्रीति** द्वितीयं निरस्यति—**एकस्मादिति**। ननु ज्ञानव्यक्तेः स्वतो न विशेषः। तत्क्षणसंबन्धितया विशेषस्तु व्यक्त्यन्तरोत्पत्तावपि तुल्य इत्यनुशयादाह—

---

[1] तस्याश्च-ग. छ. [2] भावे-छ. [3] प्रकृतेऽनेकज्ञानकल्प-च.

**भावे वा प्रथमज्ञानसमय एव द्वितीयादेरुत्पत्तिः केन वारणीया। नच द्वितीयादिज्ञाने प्रथमादिज्ञानमपि कारणम्। [1]विशेषणविधया कारणं चेत्तदपि प्रागस्त्येवेति किं तेन। प्रथमज्ञानत्वेन कारणत्वे न किंचित्प्रमाणम्। ज्ञानक्रमासिद्धेः पूर्वं प्राथम्याद्य-**

---

## दीपनम्

प्रागभावस्य प्राथमिकविशिष्टज्ञानसामग्रीसमयेऽ[2]नन्तप्रागभावानां सत्त्वात् प्रथमज्ञानजनकविशेषणज्ञानस्यानन्तविशिष्टज्ञानजनकत्वसंभवात्[3] प्रथमज्ञानसमय एवानन्तानामुत्पत्तिःस्यात्, न त्वेकस्येत्यभिप्रेत्याह—**भावेवेति**। न च मनसो युगपदेकज्ञानजनकत्वमेव स्वभाव इति वाच्यम्; तथाप्येतस्यैवोत्पत्तौ हेत्वभावात्। आत्मन एवैवं स्वभावकल्पने तदसिद्धेरित्यप्युक्तम्। पञ्चावधाने युगपत्पञ्चज्ञानोत्पत्तेश्च। न च तत्रापि क्रम एवेति वाच्यम्; युगपत्प्रत्येमीत्यनुभवस्य बाधकाभावात्, क्षणिकेषु शब्दादिक्रियादिषु तुल्यकालोत्पत्तिकेषु ज्ञानक्रमकल्पनासंभवाच्चेति भावः। **न चेति**। तथा च कारणाभावान्न प्रथमज्ञानसमये द्वितीदिज्ञानोत्पत्तिरिति भावः। [4]किं प्रथमादिज्ञानं विशेषणज्ञानत्वेन कारणं प्रथमज्ञानत्वेन वा। नाद्य इत्याह—**विशेषणेति**। द्वितीयमनूद्य प्रत्याह—**प्रथमेति**। अन्योन्याश्रयमप्याह—**ज्ञानक्रमेति**। न च क्षणभेदात्कार्यभेदः; तत्तत्क्षणत्वेन कारणत्वे कारणविशेषादेव

---

## पूरणी

**आत्मन एवेति। पञ्चावधान इति**। तथा च मनसस्तादृशस्वभावोऽसिद्ध एवेति भावः। **ज्ञानक्रमेति**। क्रियाज्ञानानन्तरं शब्दज्ञानसमये शब्दनाशेन तत्प्रत्यक्षासंभवादित्यर्थः। **अन्योन्याश्रयमिति**।

---

[1] विशेषणज्ञानविषया—छ. [2] न्तज्ञानप्राग—ख. [3] जनकत्वप्रसङ्गात्—ख. च.
[4] किं च—क.

**सिद्धेश्च। ततश्च सामग्रीभेदाभावादेकैवेति न पक्षहेत्वोर्विशेषणम्।**
[1]**नवाप्रयोजकत्वम्; घटज्ञानेनाज्ञानं निवृत्तमित्यनुभवस्य विना**

## दीपनम्

[2]कार्यभेदः क्वापि न स्यादित्यभिप्रेत्योपसंहरति—तत इति। **एकैवेति।** धारावाहनत्वेनाभिमता बुद्धिरेकैवेत्यर्थः। **घटज्ञानेनेति।** प्रागभावस्य सतोऽपि ज्ञाननिवर्त्यत्वासंभवात् तस्योक्तविषया न जानामीत्यनुभवाविषयत्वात्तदनुभवे तु तस्यैव ज्ञाननिवर्त्यत्वविषयीकरणात् संशयादेरज्ञानत्वाभावादनादिभावरूपाज्ञानस्यैव ज्ञाननिवृत्त्यत्वमनुभवविषय इति

## पूरणी

धारावाहिकबुद्धिसिद्धौ तत्र प्रथमज्ञानत्वेन हेतुता, तद्धेतुतायां च तत्सिद्धिरित्यन्योन्याश्रय इत्यर्थः। **धारावाहनत्वेनेति**॥

इदं चापाततः—एकस्मादात्ममनस्संयोगात्क्रमेण ज्ञानेच्छादिवदनेकज्ञानोत्पत्तेरपि संभवात्। नच सामग्रीभेदाभावः; तत्तत्प्रागभावक्षणादृष्टविशेषादिघटितायास्तस्या भिन्नत्वात्। न च ज्ञानयौगपद्यम्; एकं करणमेकदा एकत्रात्मनि एकमेव ज्ञानं जनयतीति नियमात्। न चैवमात्मन एव तादृशस्वभावकल्पनया मनोऽपलापप्रसङ्गः; परमते कायव्यूहादावेकात्मनः अनेकशरीरावच्छेदेनानेकज्ञानजनकत्वाभ्युपगमेन आत्मनस्तत्स्वभावकल्पनायोगात्। अस्मन्मते त्वात्मैक्यात्सुतरां न तत्कल्पनावकाशः। नच पञ्चावधाने ज्ञानयौगपद्यदर्शनेनैतन्नियमासंभवः; परमते मनसोऽणुत्वेन युगपज्ज्ञानेन्द्रियासंबन्धेन युगपदुत्पत्तेरसिद्धेः। अस्मन्मतेऽप्येकान्तःकरणस्य युगपद्विरुद्धानेकपरिणामासंभवेन तत्क्रमस्यैव स्वीकर्तव्यत्वात्। अन्यथा स्मृत्यनुभवादिवृत्तीनामपि यौगपद्यप्रसङ्गात्। नच क्षणिकशब्दक्रियादौ ज्ञानक्रमासंभवः; अनुभूयमानशब्दक्रियादेरेक-

[1] न चाप्र–ख. ग. छ. [2] कार्यविशेषः–ख. च.

[1]**बाधमप्रामाण्यायोगात् । मूलाज्ञाने तु प्रयुज्यते । सर्गाद्य-कालीनं कार्यं जडोपादानम्, कार्यत्वात्, घटवत् । तच्च लाघवा-**

---

## दीपनम्

तदभावे तत्प्रामाण्यं न स्यात् । तच्चायुक्तं, बाधकाभावादित्यर्थः । मृदादिनांशतः सिद्धसाधनतापरिहारायाह—**सर्गाद्येति** । ब्रह्मणार्थान्तरव्यावृत्तये **जडेत्युक्तम्** । नन्वेवमपि परमाणुभिरर्थान्तरतेत्याह—**तच्चेति** । सर्गाद्यकालीनकार्योपादानत्वादनादि, लाघवादेकम्, उपादानत्वाच्च भावरूपमिति । नन्वेवमपि ज्ञाननिवर्त्यत्वासिद्धौ कथं

---

## पूरणी

क्षणोत्पत्तौ मानाभावात् । द्वित्राणां क्रमेणानुभवसंभवाच्च । किं चास्तु पूर्वोक्तरीत्या पञ्चावधाने युगपत्प्रत्येमीत्यनुभवबलान्नानेन्द्रियजन्यज्ञानानां यौगपद्यम्, तावताप्येकं करणमित्युक्तानियमस्याभङ्गेन नैकेन्द्रियजन्यधारानुपपत्तिः । अपि च धारानभ्युपगमे जाग्रत्साक्षी विलुप्येत । एतावन्तं कालं घटमहमन्वभूवमिति धारातदाश्रयप्रतिसन्धानेन हि तत्साधनम् । एकस्यैव ज्ञानस्य स्थायित्वे जन्यज्ञानान्तरेण तयोरसंभवादिति संक्षेपः । न चैवं धारावाहनबुद्धावंशतो बाधः ; पूर्वोक्तरीत्या तदसंभवादिति तत्त्वम् ॥

**तदभाव इति** । यदीदं घटापरोक्षज्ञानं न जानामीत्यनुभवविषयनिवर्तकं न स्यात् घटज्ञानेनाज्ञानं नष्टमित्यज्ञाननिवृत्तिहेतुत्वेनानुभवविषयो न स्यादिति तर्कार्थः । अतो न वैयधिकरण्यम् । अज्ञान-

---

[1] बाधकम्-ग.

**देकमित्यनाद्येकं भावरूपं जडोपादानं सिद्ध्यति। तदेवाज्ञानम्, तदन्यस्मिन्प्रमाणाभावात्। अनादिभावत्वं ज्ञाननिवर्त्यवृत्ति, जडवृत्तित्वात्, घटत्वादिवदिति वा पराभ्युपेतजडोपादाननिवृत्तिः॥**

**अध्यासानुपपत्तिरपि तत्र प्रमाणम्। तथा हि—शुक्तिकाद्यज्ञानं रजताद्युपादानम्, तस्मिन् सत्येव तद्दर्शनात्।**

## दीपनम्

तत्सिद्धिः, तत्राह—**तदेवेति**। तदन्यस्मिन् [1]जडरूपोपादान इति शेषः। सांख्याभिमतप्रकृतेरद्वैतश्रुतिविरुद्धत्वेन "भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिना ज्ञाननिवर्त्यतया, तत्रैव "मायां तु प्रकृतिं विद्यात्" इत्यादिना प्रकृतित्वेन चावगतमज्ञानमेवानुमानगोचर इति भावः। अनुमानतोऽपि प्रधानासंभवमाह—**अनादीति**॥

## पूरणी

स्योपादानत्वं श्रुतिसिद्धमपीत्याह—**मायां तु प्रकृतिमिति**। नन्वत्र मायाया उपादानत्वं श्रूयते, मायाशब्दश्च पराभिमतसत्योपादानेऽपि संभवतीत्यत आह—**भूयश्चान्त इति**। ज्ञाननिवर्त्ये पूर्वत्र मायाशब्दः प्रयुक्तः। ज्ञाननिवर्त्यं चाज्ञानमेवेति तदेवात्र मायाशब्दवाच्यमुपादानत्वेन च निर्दिश्यत इत्यर्थः। एतेन माया[2]पदमदृष्टसहकारिपरम्, प्रकृतिपदं च कारणमात्रार्थकमिति प्रत्युक्तम्। ननु कार्यत्वहेतोर्ध्वंसे व्यभिचार इति चेन्न; तस्याप्यविद्यापरिणामतया ब्रह्मविवर्ततया च तदुपादानकत्वेन साध्यसत्त्वात्। कपालादेस्तदुपादानत्वानभ्युपगमेन ध्वंसस्य सोपादानत्वे उपादाननाशात्तन्नाशे भावोन्मज्जनं स्यादिति दूषणस्य निरवकाशत्वात्। अविद्यानाशे च व्यावहारिकतन्नाशस्यापीष्टत्वात् तस्य प्रपञ्चविरोधिब्रह्मस्वरूपतया भावोन्मज्जनापादनायोगादिति दिक्। **अनादिभावत्वमिति मूलम्**। न चानादिभावत्वं न निवर्त्यवृत्ति,

[1] जडरूपाज्ञाने–ख. [2] पदं सहकारि–ट.

**न चाज्ञानमध्यास[1]प्रतिबन्धकतत्त्वज्ञानाभावतया निमित्तमन्यथा सिद्धं [2]चेति वाच्यम्; सामग्रीकालीन[3]कार्यानुत्पादप्रयोजकं हि प्रतिबन्धकम्, तादृश एव तद्व्यवहारात्। व्यवहारानुसारेण व्यवहर्तव्यलक्षणस्य वक्तव्यत्वात्। न चाध्याससामग्र्यन्तर्भूतदोषदशायां तत्त्वज्ञानं संभवति। तदन्यस्योपादान-**

दीपनम्

ततः किं तत्राह—**न चाध्यासेति**। तथा च नाज्ञानं प्रतिबन्धकाभाव इति भावः। नन्वेवमपि कथमुपादानत्वसिद्धिस्तत्राह—**तदन्यस्येति**। विमतमज्ञानोपादानकम्, तदन्यानुपादानत्वे सति सोपादानत्वात्, यदेवं तदेवम्, यथा घटादि। सद्विलक्षणस्यापि रजतस्य सोपादानत्वं वक्ष्यतीति न विशेष्यासिद्धिः। नापि विशेषणासिद्धिः; तदन्यस्याज्ञानस्य मिथ्यापरिणामायोगात्। परिणामस्य परिणामिसमानसत्ताकत्वस्य घटादौ दृष्टत्वात्। न च ब्रह्मपरिणाम-

पूरणी

अनादिभावमात्रवृत्तिधर्मत्वात्, आत्मत्ववदित्यनेन सत्प्रतिपक्षता; तस्य विपक्षे बाधकाभावेनाप्रयोजकत्वात्। अत्र तु श्रुत्यादिविप्लवस्य बाधकत्वात्। नच ज्ञाननिवर्त्यानादिप्रकृतिपुरुषसंबन्धपरत्वेनार्थान्तरता; तस्यानादित्वे अनादिभावस्य परमते निवर्त्यत्वानभ्युपगमेन तस्यापि ज्ञानान्निवृत्त्यनुपपत्तेः। अन्यथा सत्यप्रकृत्त्यादेरेव निवृत्तिप्रसङ्गात्। अनाद्युपादानत्वं वा निवर्त्यवृत्तीति साध्यमिति दिक्। ननु सत्कार्यत्वं सोपादानत्वे प्रयोजकम्, सिद्धान्ते रजतादेः सद्विलक्षणत्वात्कथं तदित्यत्राह—**सद्विलक्षणस्येति**। असद्वैलक्षण्यमेव तत्प्रयोजकमिति

[1] प्रतिबन्धकज्ञानाभावसम्पादकतया—ग. प्रतिबन्धकज्ञानाभावतया—छ. [2] वेति—छ. [3] कार्याभावप्रयोजकं—ग. छ.

त्वासंभवाच्च। न हि [1]सत्यस्य मिथ्यापरिणामः संभवति, परिणामस्य परिणामिसमानसत्ताकत्वात्। नियमेनाज्ञानदशायामेवानुभूयमानस्य [2]तदुपादानकत्वस्यैव वक्तव्यत्वाच्च।

## दीपनम्

प्रपञ्चस्यापि सिद्धान्ते मिथ्यात्वान्नायं नियम इति वाच्यम्; अज्ञानपरिणामस्य प्रपञ्चस्य ब्रह्मविवर्ततया तत्परिणामत्वाभावात्। विवर्ताधिष्ठानं तु तदत्यन्ताभाववदेवेति तयोर्विषमसत्ताकत्वमेव स्वभाव इत्यभिप्रायेणाह—न हीति। ननु दोषवशाद्रजतमपि ब्रह्मण एव विवर्तोऽस्तु किमज्ञानेनेत्यत आह—नियमेनेति। अज्ञानं हि न रजतादेरुत्पत्तिमात्रप्रयोजकम्, किं तु स्थितावपीत्युत्पत्तिस्थितिप्रयोजकमृदादिवदुपादानमेव। न चापेक्षाबुद्धिर्द्वित्वादिस्थितिप्रयोजिकापि निमित्तमेवेति वाच्यम्; द्वित्वादेरपेक्षाबुद्धिव्यङ्ग्यस्या[3]प्ययावद्द्रव्यभावित्वाद्द्रव्योत्पत्तिस्थितिप्रयोजकस्योपादानत्वनियमाच्च। न च दीपादिकमपि प्रभास्थितिनिमित्तमिति वाच्यम्; प्रभाया दीपाद्वस्त्वन्तरत्वा-

## पूरणी

भावः। अज्ञानपरिणामस्येति। न चान्यपरिणामस्य कथमन्योपादानत्वम्, एकस्योभयान्यथाभावत्वायोगादिति वाच्यम्; कार्यवैलक्षण्यापादकतन्तुमृत्पिण्डोभयान्यथाभावस्यैकत्र पटादावसंभवेऽपि ब्रह्मविवर्ततायाः सत्त्वादिजडवैलक्षण्यानापादकत्वेनाविरोधादिति भावः। ब्रह्मण एवेति। अज्ञानापरिणामोऽपि ब्रह्मविवर्तः स्यादित्यर्थः। द्रव्योत्पत्तीति। शुक्त्यज्ञानमुपादानम्, द्रव्योत्पत्तिस्थितिप्रयोजकत्वात्, मृदादिवदित्यनुमानमिति भावः। प्रभाया इति। दीपप्रभाया दीपविकासात्मिकायास्तदुपादेयतया तदनुपादेयद्रव्यान्तरत्वलक्षणवस्त्वन्तरत्वासिद्धिः। अतस्तत्र

[1] तत्त्वस्य—क. [2] तदुपादानत्वस्यैव-ग. [3] पि यावद्द्रव्य—च.

ततश्चेदमाकारवृत्त्युपहितेदमंशावच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नसाक्ष्यभेदेनाभिव्यक्तौ सत्यामधिष्ठानसामान्यज्ञानदोषसंस्कारसहितेदमंशाभिव्यक्तसाक्षिनिष्ठा [1]विशेषणांशगोचरा अविद्या तस्मिन् साक्षाद्रजताकारेण विवर्तते । तच्च रजतं जायमानदशायामपि साक्षिसंबद्धमिति स्वाकारवृत्तिं विनैव साक्षिणानुभूयत इति तत्प्रातीतिकमेव ।

---

दीपनम्

सिद्धेः । यन्मतेऽपि प्रभा द्रव्यान्तरमेव तत्रापि दीपविनाशनिमित्तप्रभावयवविभागादेव प्रभाद्रव्यविनाशो न तु दीपविनाशात् । एवमपि द्रव्योत्पत्तिस्थितिनियामकस्योत्सर्गसिद्धोपादानत्वे प्रकृते बाधकाभावाच्च । ब्रह्मणोऽज्ञानं विना [2]रजताद्युपादानत्वानुपपत्तेश्चेत्येषा दिक् । नन्वज्ञानमात्रात्कथं रजतोत्पत्तिः, क्लृप्तकारणाभावादित्याशङ्क्याविद्यादिसाधारणं कारणं सिद्धवत्कृत्य प्रातीतिकोत्पत्तौ कारणं दर्शयन् तदुत्पत्त्यनुभवप्रकारं दर्शयति—ततश्चेति । दोषदूषितनयनादिना शुक्तीदमंशादेः

---

पूरणी

साध्यस्यापि सत्त्वान्न व्यभिचार इति भावः । **द्रव्यान्तरमिति ।** दीपानुपादेयद्रव्यान्तरमित्यर्थः । **बाधकाभावादिति ।** असति बाधक इति हेतौ विशेषणम् । दीपस्य प्रभोपादानत्वे तत्रोद्भूतरूपस्पर्शादिप्रसङ्गलक्षणबाधकसत्त्वेन न व्यभिचार इति भावः । **अज्ञानं विनेति ।** अज्ञानान्यथाभावरूपस्यैव रजतादेर्ब्रह्माधिष्ठानतामात्रेण तद्विवर्तत्वमित्यज्ञानोपादानतामन्तरा ब्रह्मविवर्तता न संभवति । सूत्रद्वयवन्मायाब्रह्मणी मिळित्वोपादानमिति पक्षे तु सुतरां न केवलब्रह्मण उपादानत्वशङ्केति भावः । प्रपञ्चस्य ब्रह्ममात्रोपादानकत्वे तत्र जाड्यानुगमो न स्यात्; निमित्तधर्माणां कार्यानन्वयादित्यभिप्रेत्याह—**इत्येषा दिगिति ।**

“ अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।

---

[1] विशेषांश—ग. छ. [2] रजतान्यथाभावानुपपत्तेश्च—क.

## दीपनम्

संबन्धे सति अन्तःकरणस्य विषयदेशव्यापिनीदमाकारा वृत्तिर्जायते न तु शुक्तित्वाकारा, दोषेण प्रतिबन्धात् । ततश्चेदमंशावच्छिन्नविषयचैतन्यमन्तःकरणावच्छिन्नचैतन्येनैकोपाधिसंबन्धादभिन्नं प्रकाशते । तत्र शुक्तित्वादिविशेषावच्छिन्नचैतन्यावारकमज्ञानं तिष्ठत्येव, तन्निवृत्तिप्रतिबन्धकावरणविरोधितदाकारवृत्तेरभावात् । तच्च सादृश्यदर्शनादिसमुद्बुद्धसंस्काराधिष्ठानसामान्यज्ञानकरणदोषसहकृतमिदमंशावच्छिन्न – चैतन्यस्थं रजताद्याकारेण विवर्तते । तच्च रजतं स्वोत्पत्तिकाल एव सुखादिवत्स्वाकारवृत्तिमन्तरेणैव साक्षिसंबद्धं सत्प्रकाशत इति तत्प्रातिभासिकम्, पूर्वं तत्सत्त्वे प्रमाणाभावात् । प्रत्यक्षस्योक्तविधया तेन विनाप्युपपत्तेः । न च कस्यचित्समयान्तरे तदेवेदमिति प्रत्यभिज्ञानादज्ञातमपि तदस्त्विति वाच्यम्; तदापि दोषादिसध्रीचीनस्यैव तत्प्रत्यक्षमिति तदानीमेव तदुत्पादात् । दोषादेस्तदुत्पत्तिकारणस्य सत्त्वात् । अत एव युगपद्बहूनां भ्रमविषयोऽपि पृथक्पृथगेवेति तत्प्रातिभासिकमित्यर्थः ॥

नन्वु वृत्त्या विना कथं तत्प्रकाशः, अन्यथा घटादेरप्येवं भानं कथं न स्यादिति चेत्, न तावदत्रान्तःकरणवृत्तिः संभवति, नाप्य-

---

## पूरणी

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" ॥

इत्यादिस्मृतयोऽपि भावरूपाज्ञाने मानम् । न किंचिदवेदिषमिति सुप्तोत्थितस्य प्रतिसन्धानमपि तत्र मानम् । न चेयं ज्ञानाभावानुमितिः; लिङ्गाभावात् । बाह्येन्द्रियप्रसादस्य स्वप्नज्ञानसाधारणत्वात् । मनःप्रसादस्यापि शुभस्वप्नदशायां दर्शनात् । अर्थाविक्षेपलक्षणेन्द्रियप्रसादस्य ज्ञानाभावपर्यवसानादित्यलमनेन । ननु प्रत्यक्षस्य विषयजन्यत्वात्तद्विषयस्य पूर्वसत्त्वमित्यत्राह—**प्रत्यक्षस्येति** । तस्य साक्षिरूपस्य नित्यसिद्धतया न जन्यत्वमित्यर्थः । **न तावदत्रेति** । अन्तःकरण-

## दीपनम्

विद्यायाः ; तत्र किं साक्षिसंबन्धाय वृत्तिरपेक्ष्यते, आवरणभङ्गाय वा, व्यवहाराय वा, संस्काराय वा। नाद्यः ; साक्षिण्येवान्तःकरणोपहितेदमंशचैतन्ये अध्यस्तत्वेन विनैव वृत्तिं तत्सत्त्वात्। किं चाविद्यावृत्त्यापि कथमन्तःकरणोपहितचैतन्येन संबन्धः । न ह्युपाध्यन्तरावच्छेदेन तदधिष्ठानचैतन्यस्योपाध्यन्तरावच्छिन्नेनाभेदो भवति। न चान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्थाविद्यापरिणामतया साक्षिनिष्ठाविद्यावृत्तिरेव संबन्ध इति वाच्यम्? अपरोक्षविषये साक्षितादात्म्यस्यैव संबन्धत्वात्। नाप्यविद्यावच्छिन्नस्यैव साक्षिणस्तद्वृत्त्या रजतादिसंबन्ध इति वाच्यम् ; अन्तःकरणस्याप्यविद्याकार्यत्वेनाविद्यावृत्त्येव तेनाप्यवच्छिन्नस्य तदभेदोपपत्तेः।

---

## पूरणी

वृत्तेर्विषयेन्द्रियसन्निकर्षजन्यत्वात्प्रातीतिकरजतादेश्च पूर्वमसत्त्वेन तत्सन्निकर्षासंभवादित्यर्थः । नन्वविद्यावृत्त्या विषयाधिष्ठानप्रमातृचैतन्ययोर्नाभेदः क्रियते, किं तु साक्षाद्वृत्तिरेव साक्षिविषयसंबन्धः। विषयदेशस्थायास्तस्याः साक्षिचैतन्यस्थाविद्यापरिणामतया तत्संबन्धत्वोपपत्तेरित्याशङ्क्य निषेधति--**न चान्तःकरणेति**। नन्वविद्याप्रतिबिम्बचैतन्यं साक्षी, तस्य बिम्बचैतन्याध्यस्तस्य विषयेण साक्षात्तादात्म्यायोगात्तदाकारवृत्तिकृतस्तद्विषयसंबन्धस्तदवभासप्रयोजकः । ततश्च रजतादिसंबन्धार्थं तदाकाराविद्यावृत्तिरेषितव्येति मतमाशङ्क्याह--**नाप्यविद्येति**। **अभेदोपपत्तेरिति**। चैतन्यस्य कथं[2]चिद्विषयतादात्म्यं विना अपरोक्षेण तदवभासायोगादविद्यावृत्त्यवच्छिन्नविषयचैतन्येनाविद्यावच्छिन्नसाक्षिचैतन्यस्याविद्यापरिणामात्मकवृत्तेः परिणाम्यविद्यातोऽत्यन्तभेदविरहेणैकोपाध्यवच्छेदनिबन्धनाभेदसद्भावात्तस्य विषयतादात्म्यमिति [3] त्वदभिमतम्। तच्च वृत्तिं विनाप्यन्तःकरणस्याविद्यापरिणामतया तदुपाध्यवच्छेदादेव संभवति, किं तद्वृत्त्येत्यर्थः।

दीपनम्

अहमिदं पश्यामीत्यनुभवबलेनान्तःकरणोपहितस्यैव तद्दृष्टृत्वात्[1]। अविद्यावृत्त्यवच्छिन्नस्यैवानुभवितृत्वे यज्ञदत्तस्य रजतापरो[2]क्ष-

पूरणी

ननु न वयमविद्याप्रतिबिम्बसाक्षिणः साक्षाद्विषयेण तदात्म्यं ब्रूमः, किं तु तत्तदाकारवृत्तिघटितमनिर्वचनीयसंबन्धविशेषम्। स च रजतादौ वृत्त्या विना न संभवतीत्याशङ्क्य उक्तस्य साक्षित्वे भवेदेवम्, तदेवासिद्धमित्याह—**अहमिदमिति**। नन्वनेनान्तःकरणविशिष्टस्य चाक्षुषवृत्त्याश्रयत्वरूपं प्रमातृत्वमनुभूयते न तु तदुपहितस्य विषयप्रकाशत्वलक्षणं साक्षित्वमित्यनुशयादाह—**अविद्यावच्छिन्नस्येति**। ननु देवदत्तसाक्षिणस्तदपरोक्षतापादने इष्टापत्तिः; तस्यैकत्वात्, देवदत्तान्तःकरणादिविशिष्टस्य त्वनवभासकत्वात्तं प्रति तद्रजतस्यावृतत्वाच्च नापरोक्ष्यम्, अत एव तदन्तःकरणावच्छेदेन तत्साक्षिणस्तदपरोक्षतापादनमपि नेति चेन्न; तदन्तःकरणावच्छेदेन तदापरोक्ष्यस्यापाद्यत्वात्। तदवच्छेदेन तदावरणस्य साक्ष्यैक्येऽयोगात्। अन्यथा यज्ञदत्तान्तःकरणावच्छेदेनापि तदनुभवप्रसङ्गात्। न चावच्छेदकभेदेनैकं प्रत्यावृतत्वमनावृतत्वं च रजादेरिति वाच्यम्; एकधर्मिगतनानाधर्मयोर्विरुद्धावच्छेदकत्वायोगेन संयोगिवृक्षादाविवौपाधिकभेदस्यावश्यकत्वे तदन्तःकरणोपहितसाक्षिभेदस्यायत्नसिद्धत्वात्। नच तदन्तःकरणावच्छेदेनान्यसुखादेरिवासंबन्धादेवानवभास इति वाच्यम्; तथा सति तदन्तःकरणोपहितसंबन्धस्य विषयापरोक्ष्यप्रयोजकतया तस्यैव साक्षित्वलाभादिति दिक्। तस्मादाचार्याणां नानाप्रमातृष्वविद्याप्रतिबिम्बैकसाक्षिकथनं जीवभेदस्य दूरोत्सारितताप्रदर्शनायेति मन्तव्यम्॥

[1] स्यैतद्दृष्टृत्वात्—ख. [2] क्षतादशायां—ख.

## दीपनम्

दशायां देवदत्तस्यापि तदापरोक्ष्यप्रसङ्गः, अविद्याप्रतिबिम्बस्यैकत्वात्। अत एव तदाकारवृत्तिप्रतिफलनमेव चैतन्यमेयसंबन्ध इत्यपि न; अनावृत[1] चैतन्यस्यावृतदृश्यसंबन्धे सति तदनवभासादर्शनेन तदव-

## पूरणी

यत्त्वन्तःकरणोपहितसाक्षिपक्षेऽपि पादावच्छेदेनोत्पन्नसुखादेः शिरोऽवच्छेदनाप्रत्यक्षत्वे तदवच्छेदनासंबन्धस्य हेतुतया पादाद्युपहितस्यैव साक्षिताप्रसङ्ग इति, तदयुक्तम्; पादे सुखं शिरसि तदभावं चानुभवामीति साक्ष्यैक्यानुभवेन पृथक्साक्षिकल्पनाया बाधितत्वादिति॥

अत एवेति। उक्तविषयोक्तस्य साक्षिरूपत्वाभावादित्यर्थः। तस्य साक्षित्वेऽपि प्रातीतिकरजतादौ तत्संबन्धकल्पनं व्यर्थमित्याह—**अनावृतेति**। रजतावच्छिन्नचैतन्यस्यानावृततया तत्संबन्धादेव तदवभासोपपत्तेः किं तदाकारवृत्तिघटितसंबन्धकल्पनयेति फलितार्थः। यदि दृश्यस्यापि पृथगावरणं भवेत् सत्यप्यनावृतचैतन्यसंबन्धे न तदवभास इति तदावरणनिवृत्तये वृत्त्यपेक्षेति कथंचिदुच्येत, न ह्येवं; दृश्यस्य जडतयैवानवभासोपपत्तौ तत्रावरणाकल्पनात्। अतोऽनावृतचैतन्यप्रकाशसंबन्धादेव वृत्तिं विनापि तदवभास उपपद्यत इति केवलवृत्तिविनाकृते चैतन्यसंबन्धे सति वृत्तिघटितसंबन्धव्यतिरेकेण [2]विषयानवभासादर्शनान्न वृत्तिघटितसंबन्धस्तदवभासप्रयोजक इत्यर्थः। ननु साक्षितादात्म्यं विना न विषयापरोक्ष्यम्, अन्यथा अनावृतब्रह्मसंवित्तादात्म्येन सर्वदा जगदापरोक्ष्यापातात्। अविद्याप्रतिबिम्बसाक्षिपक्षे च तदाकारवृत्तिप्रतिफलनात्मकसंबन्ध एव विषयसंबन्धित्वैकोपा-

---

[1] चैतन्यस्यानावृत–ख.  [2] विषयावभासव्यतिरेकादर्शना–ट.

## दीपनम्

भासे केवलव्यतिरेकाभावेन तस्याप्रयोजकत्वात् । प्रतिफलनमात्रस्य परोक्षेऽपि सत्त्वात् । किं चैवं रजतादिकं प्रातिभासिकं न स्यात् । वृत्त्यधीनप्रतिफलनस्य द्वितीयक्षण एव सत्त्वात् । नापि द्वितीयः; रजतादेरनावृतसाक्षिसंबन्धेन सुखादिवदनावृतस्वभावत्वात् । अन्यथा कदाचिदुत्पन्नमपि रजतं घटादिवन्न ज्ञायेत । अत एवानावृतसाक्षि-[1]संबन्धमपि धर्मादिवत् स्वाकारवृत्त्यैव प्रकाशत इति निरस्तम्; तद्वदेव तस्यानुद्भूतत्वाभावात् । अन्यथा तद्वदेवेदमतीन्द्रियमपि स्यात् । न तृतीयः; व्यवहारमात्रेऽर्थप्रकाशस्य कारणत्वेनान्तः-करणवृत्तेरिव वृत्त्यन्तरस्यापि तत्रानुपयोगात् । अनावृतार्थप्रकाशे सति वृत्तिव्यतिरेकेण तदभावस्यादृष्टत्वात् । नापि चतुर्थः; इदमाका-रान्तःकरणवृत्तिविनाशादेव तदुपहितरजतादिसाक्षिणोऽपि [2]विनाशेन

## पूरणी

धिना विषयचैतन्याभेदप्रयोजक इति न तद्वैयर्थ्यमि[3]त्यनुशयादाह -- **प्रतिफलनेति** । एवं सति परोक्षेऽपि तत्तादात्म्यं स्यादित्यर्थः । ननु विषयदेशस्थवृत्तिप्रतिफलनस्य तादात्म्यप्रयोजकत्वाभ्युपगमात् परो-क्षस्थले च वृत्तेरुत्तम्भकत्वान्नायं दोष इत्यपरितोषादाह — **किं चेति** । **न ज्ञायेतेति** । न चेष्टापत्तिः; तथा सति घटादिवद्व्यावहारिकत्वापाता-दिति भावः । **वृत्तिव्यतिरेकेणेति** । सुखादिव्यवहारे व्यभिचारान्न व्यवहारमात्रे वृत्तिर्हेतुरिति भावः । **तदुपहितेति** । इदं च वक्तुं शक्यत्वादुक्तम् । वस्तुतस्तु तदर्थसत्तानिश्चयात्मकचैतन्यतादात्म्या-पन्नवृत्तिनाशादेव संस्कारः, अनित्यसप्रकारकज्ञानस्यैव सर्वमते च संस्कारहेतुत्वात् । अत उपाधिनाशान्नोपहितनाशः; वृत्त्युपहितं ब्रह्म

[1] संबद्धमपि—ख. [2] विनाशे त—ख. [3] त्यस्वरसा—अ.

दीपनम्

तदानींतनाहंकारादेरिव रजतादेरपि विनैव स्वाकारवृत्तिं संस्कारोपपत्तेः। यद्वृत्त्यवच्छिन्नं चैतन्यं यावतां सत्तानिश्चयो भवति [1] तत्तावद्गोचरसंस्कार इति नियमः, न तु तदाकारवृत्त्यैवेति संशयरूपवृत्त्यापि स्मृतिप्रसङ्गात्। निश्चयत्वं च वृत्त्यादिसाक्षिण इव रजतादिसाक्षिणोऽप्यर्थसंबद्धानावृतप्रकाशतया विनैव वृत्तिमुपपद्यते। नच वृत्त्यादावपि वृत्त्यन्तरमेषितव्यम्;

---

पूरणी

तद्वृत्तिविषय इति पक्षे तद्वृत्तिनाशेन तदुपहितब्रह्मणोऽपि नाशापातात्। न चेष्टापत्तिः; वृत्त्यभिव्यक्तचैतन्यप्रकाशनाशेऽनिर्मोक्षप्रसङ्गादिति दोषशङ्काया अनवकाश इति मन्तव्यम्। **तदानींतनेति**। अन्यथा तदाकारवृत्तेस्तदा विरहेण समयान्तरे अहं रजतमन्वभूवमित्यहंकारादेः प्रतिसन्धानं न स्यादित्यर्थः। नन्वन्याकारवृत्त्युपहितसाक्षिणोऽन्यसंस्कारोत्पत्तावतिप्रसङ्ग इत्यत आह—**यद्वृत्त्यवच्छिन्नमिति**। तथा चेदमाकारवृत्त्यवच्छिन्नस्येदमंशे [2] तदाकारवृत्तावध्यस्तरजतादौ तदा तदहंकारादौ च निश्चयात्मकत्वात्ततस्तावद्गोचरसंस्कार इति भावः। **स्मृतिप्रसङ्गादिति**। सा च नेष्टेति भावः। ननु साक्षिणो बाह्यविषयनिश्चयत्वं तदाकारवृत्तिं विना न संभवतीत्यत आह—**निश्चयत्वमिति**। अप्रयोजकत्वान्नायं नियम इति भावः। अस्मदुक्तनियमानभ्युपगमे अहंकारादौ कथंचित्तदाकाराविद्यावृत्तिसंभवेऽपि वृत्तौ वृत्यन्तरासंभवात् वृत्त्युपहितसाक्ष्यनुभवाद्वृत्तिगोचरसंस्कारानुभवप्रसङ्गः। न चान्तःकरणवृत्तिगोचराविद्यावृत्त्यन्तरं संभवतीति वाच्यम्; तत्रापि वृत्यन्तरानुसरणेऽनवस्थापातादित्यभिप्रेत्याह—**न च वृत्त्यादाविति**। ननु वृत्तिं विनापि बाह्यरजतादिविषयानुभवाभ्युपगमे घटा-

---

[1] ततस्ताव—ख. [2] तत्तदाकार—ख.

**एतच्चान्यत्रोपपादितम् ॥**

---

दीपनम्

अनुव्यवसायोक्तदोषप्रसङ्गात्। घटादिस्त्वन्तःकरणोपहितसाक्षिसंबन्धाभावादावृतत्वाच्च तदाकारान्तःकरणवृत्त्या विना न प्रकाशते। अत एवेदमाकारवृत्त्यभिव्यक्तसाक्षिण एव तद्भाने तद्गतरसादिकमपि प्रकाशेतेति निरस्तम्। रसावच्छिन्नचैतन्यस्यावृतत्वेन तदाकारवृत्त्या विना [1]तद्भानायोगादित्येतत्सर्वमभिप्रेत्याह—**एतच्चेति** ॥

तत्त्वदीपनकारास्तु यद्भाव्यं प्रकाशते तत्तदाकारवृत्त्यैवेति नियमात् कथं वृत्त्या विनापि [2]रजतप्रकाश इत्याशङ्क्य तुष्यतु दुर्जन इति न्यायनान्तःकरणवृत्त्यसंभवेऽप्यविद्यावृत्तिसंभवान्नाध्यासानुपपत्ति-

पूरणी

दावपि तद्वैफल्यमित्यत आह—**घटादिस्त्विति। अत एवेदमिति।** तथा च तत्तदाकारवृत्त्युपहिततयैव साक्षिणा तत्तद्विषयानुभवो वाच्य इति भावः। अविद्यावृत्तिनिराकरणं चापरोक्षरजतादिविषये न सर्वत्र, लिङ्गभ्रमादिना वह्न्याद्यविद्यावृत्तेरपरोक्षविषयेऽभ्युपगमात्। न च तत्रेवात्रापि वह्न्याद्यवच्छिन्नार्थप्रकाशादेव तद्व्यवहारोऽस्तु, किं वृत्त्येति वाच्यम्; तत्रानिर्वचनीयवह्न्याद्युत्पत्तेर्निरस्तत्वात्। तदुत्पत्तावपि परोक्षवह्न्यादेरन्तःकरणोपहितसाक्षिण्यनध्यस्ततया तदवच्छिन्नार्थप्रकाशविरहेण तदयोगात्। न च वृत्त्यापि कथं तद्व्यवहारः, अर्थप्रकाशस्यैव त्वया हेतुत्वाभ्युपगमादिति वाच्यम्; तदाकाराविद्यावृत्त्यवच्छिन्नान्तरचैतन्यस्यैव तदर्थप्रकाशत्वेन परोक्षप्रमाविषयवत्तद्व्यवहारहेतुत्वादिति दिक्। अतोऽविद्यावृत्तेः सार्वत्रिकत्वनिराकरणप्रतिसन्धाननिमित्तकं दूषणमलग्नं वेदितव्यम् ॥

---

[1] तज्ज्ञाना—च. [2] रजतादि प्रकाशत इत्या—च.

**केचित्तु तत्राप्यविद्यावृत्तिमिच्छन्ति । एवमहंकाराध्यासानुपपत्त्यापि मूलाज्ञानसिद्धिः ।**

**चैतन्यस्याज्ञानाश्रयत्वनिरूपणम्.**

**तच्चाज्ञानं चैतन्यमात्राश्रयविषयम् । दृश्यस्य सर्वस्य तत्कार्यतया तदाश्रयत्वायोगात् । स्वतो जडतया आवृत-**

**दीपनम्**

रिति स्वीचक्रुः, तदप्यनुमोदते—**केचित्त्विति । मूलेति ।** [1]ब्रह्मगोचरं वियदादिमूलं यदज्ञानं तदेवाहंकारस्यापि मूलम्, ब्रह्मगोचरावस्थाज्ञाने प्रमाणाभावात् । अहंकारस्य ब्रह्मगोचराज्ञान[2]कार्यत्वादित्यर्थः ॥

नन्वज्ञानस्याध्यस्तस्य स्वातन्त्र्यायोगात् किमात्माऽऽश्रयो विषयश्च तदन्यो वा । नाद्यः; स्वप्रकाशे सवितरीवाप्रकाशायोगात् । न द्वितीयः; जडस्याहंकारादेस्तत्कार्यस्य तदयोगादिति, तत्राह—**तच्चेति ।** तत् मूलाज्ञानम् । मात्रचाहंकाराद्यवच्छिन्नाश्रयविषयत्वं व्यवच्छिनत्ति । **तदाश्रयत्वायोगादिति** विषयताया अप्युपलक्षणम् ।

**पूरणी**

अत्रेयं व्यवस्था—अविद्याप्रतिबिम्बसाक्षिपक्षेऽनिर्वचनीयरजतादेस्तत्संबन्धायापरोक्षविषयेऽपि वृत्तिरेषितव्या । अन्तःकरणोपहितसाक्षिपक्षे तु तत्रैव रजतादेरध्यस्ततया वृत्तिं विनापि संबन्धसिद्धेर्नेति मन्तव्या ॥

**तदपीति ।** तुष्यतु दुर्जन इति न्यायेन तथा कथनमित्यर्थः । **अहंकाराध्यास इति मूलम् ।** अहंकारोऽज्ञानोपादानकः, कल्पितत्वात्, शुक्तिरजतादिवदित्यनुमानम् । कल्पितत्वं च तस्य प्राक्साधितमिति नासिद्धिरिति भावः ॥

[1] आत्मगोचरं—ख. [2] कार्यत्वादिति भावः—ख.

**स्वरूपस्याज्ञानप्रयुक्तावरणे प्रमाणप्रयोजनयोरभावात् । घटं न जानामीत्यनुभवस्य तदवच्छिन्नचैतन्यावरणविषयतयान्यथासिद्धत्वात् । एवमहंकारस्याहमज्ञ इति प्रतीयमानाज्ञानाश्रयत्व-**

---

## दीपनम्

जडस्य तद्विषयत्वेऽनुभवं प्रमाणमाशंक्य तस्यान्यथासिद्धिमाह— **घटमिति** । येन घटं न जानामीत्यनुभवबलाद्घटादेरज्ञानविषयत्वमुच्यते तेनापि तदवच्छिन्नचैतन्यस्य तद्विषयत्वं वक्तव्यम् । अन्यथा स्वभावतो जडस्य घटस्य प्रमाणद्वारा चैतन्यसंबन्धे भानवदविद्यावृतस्यापीदमाकार[1]वृत्तिद्वारा साक्षिसंबन्धे सति [2]विषयतोऽपि विशेषभानप्रसङ्गः, तदवभासकचैतन्यस्यानावृतत्त्वात् । आवृतानावृतघटस्वरूपे विशेषाभावात् । स्वरूपस्य जडत्वात् । अतश्चैतन्यस्यैवावरणमनेनानुभवेन विषयीक्रियत इत्यन्यथासिद्धानुभवान्न जडस्य तत्सिद्धिः । न वा तस्य तत्सत्त्वे किंचित्प्रयोजनमस्ति । तच्चैतन्यावरणादेव तदनवभासोपपत्तेरिति भावः । तस्य जडाश्रयत्वानुभवस्याप्यन्यथासिद्धिमाह—**एवमहमिति** ।

---

## पूरणी

विनिमकाभावमाशङ्क्याह—**येन घटमिति** । ननु विशेषांशस्यावृतत्वान्न भानमित्याशङ्क्याह—**आवृतेति** । विषयावरणानावरणकृतविशेषाभावादित्यर्थः । विशेषाभावं दर्शयति—**स्वरूपस्येति** । आवरणेऽनावरणे च विषयस्य स्वतोऽनवभासात् चैतन्यसंबन्धस्य तत्प्रयोजकत्वे चावृतविशेषांशस्यापि भानं स्यात् । स्वयमनावृतप्रकाशमानचैतन्यस्य

---

[1] वृत्तिसंबन्धद्वारा—ख.　　[2] विशेषतोऽपि—च.

मप्यज्ञानाश्रयस्य तेनाप्यवच्छिन्नत्वादन्यथासिद्धम्। चैतन्यस्य स्वप्रकाशस्य कथमज्ञानाश्रयत्वमिति [1]चेन्न; किं स्वप्रकाशस्याज्ञानाश्रयत्वमेव विरुद्धम्, किं वा स्वविषयाप्रकाशाश्रयत्वम्। नाद्यः; घटादिज्ञानस्यान्याज्ञानसामानाधिकरण्यवत् ज्ञानात्मवादेऽन्याज्ञानाश्रयत्वाविरोधात्। द्वितीये च विषयत्वमेव

---

## दीपनम्

अज्ञानाश्रयस्य तदाश्रयचैतन्यस्य। अज्ञानाश्रयत्वमेव। अन्यगोचराज्ञानाश्रयत्वमपि। यथा हि परमते घटज्ञानस्य पटाज्ञानसमानाधिकरणत्वमविरुद्धमेवं ज्ञानात्मवादे आत्मनस्तदाश्रयत्वमविरुद्धमेवेत्याह—घटादीति। विषयत्वमेवेति। अज्ञानाश्रयत्वमात्मनः सर्ववादिसम्प्रतिपन्नमनुभवसिद्धं चेति तस्य स्वतःप्रकाशमानस्याप्रकाश-

---

## पूरणी

तदावरणविरोधित्वादिति भावः। अज्ञानाश्रयस्येति मूलम्। परमते सामान्यादौ सत्ताप्रतीतिवदन्तःकारणाज्ञानसामानाधिकरण्यविषयिणीयं प्रतीतिरित्यर्थः। नन्वहंकारातिरिक्तात्मन्यन्यगोचरावस्थाज्ञानं कथं स्यात, तस्य प्रमातृनिष्ठत्वादित्यत आह—अज्ञानाश्रयत्वमिति। वृत्तिरूपज्ञानाश्रयत्वलक्षणं प्रमातृत्वमहंकारावच्छेदेन तदात्मनोऽप्यस्तीति तस्य तदज्ञानाश्रयत्वावि[2]रोध इत्यर्थः। सर्ववादीति। देहादिव्यतिरिक्तात्माज्ञानस्य भावरूपस्याभावरूपस्य वा तत्त्वसाक्षात्कारपर्यन्तं सर्वैरभ्युपगमादित्यर्थः। ननु तत्प्रकाशस्य कथं तत्सत्तानवधारणस्वमित्याशङ्क्य परपक्षे प्रमेयत्वसा[3]मान्याकारादिज्ञानवदुपपद्यत इत्याह--

---

[1] चेत्किं-छ. [2] रोधादित्यर्थः-ट. [3] न्याकारज्ञानादिवत्-झ.

विरुद्धमिति वक्तव्यं [1]नाश्रयत्वम् । न वा तदपि;—स्वप्रकाशचैतन्यस्यानाद्यनभिव्यक्तिलक्षणाविद्याप्रयुक्तावरण[2]प्रतिबन्धस्य स्वसत्तानिश्चयत्वाभावेनाविद्याऽविरोधितया तद्विषयत्वो-

## दीपनम्

विषयत्वमेव विरुद्धमित्यर्थः । यथा परपक्षे प्रमेयमिति ज्ञायमाने घटत्वादिवैशिष्ट्येऽज्ञानम्, यथा वा समानप्रकारकसंशयविषयेऽपि द्वितीयः संशयः, यथा वा समानप्रकारकपरोक्षनिश्चयविषयेऽप्यात्मन्यपरोक्षेऽज्ञानमिति समानप्रकारकसमानविषयस्य मिथ्याज्ञानाविरोधित्वं कल्प्यम्, एवं स्वयं प्रकाशमपि चैतन्यमनाद्यविद्यावरणदोषदशायां स्वस्मिन् स्वसत्तानवधारणमिति न तस्याविद्याविषयत्वं विरुद्ध्यत इत्याह —स्वप्रकाशेति । अविरोधितयेति पदम् । नन्वेवमज्ञातघटपटव-

## पूरणी

यथा परपक्ष इति । मिथ्याज्ञानेति । उक्तनिश्चयस्यैव मिथ्याज्ञानादिनिवृत्त्यनुकूलसत्तावधारणात्मकत्वं न तु पूर्वोक्तज्ञानप्रत्ययस्येत्यर्थः ॥

ननूदाहृतस्थले घटादिविशेषाप्रकारकत्वात्क्वचिच्च संशयरूपत्वात्परोक्षत्वाच्च मा भूत्सत्तावधाराणत्मकता; चैतन्यप्रकाशस्य तु भासमानस्वरूपतिरिक्तविशेषप्रकाशस्य चरमसाक्षात्कारदशायामप्यभावेन स्वरूपविशेषालम्बनत्वेनैव मिथ्याज्ञानविरोधितया वाच्यत्वात् स्वतोऽपरोक्षत्वात्संशयानात्मकत्वाच्च कथं तद्विरुद्धाज्ञानं भवेदिति चेन्न; इदानीं तत्प्रकाशस्याखण्डानन्दादिस्वरूपानालम्बनत्वेन तद्रूपावारकाज्ञानाविरोधात् । यद्यपि तदपि तत्स्वरूपं तथापि घटाभावो न घट इति घटाभावस्वरूपात्मकभेदस्यापि प्रतीतेः पूर्वं केवलघटाभावप्रतीतेः घटभिन्नस्वरूपसत्तानिश्चयानात्मकत्ववत्स्वरूपाखण्डाद्यनालम्बनेन तत्प्र-

[1] नत्वाश्रयत्वम्—ख.   [2] प्रतिबद्ध—छ.

पपत्तेः । न चैवं ब्रह्मप्रकाशस्याभावप्रसङ्गः; स्वरूपस्य तद्-योगात् । किं तर्ह्यज्ञानकृत्यम्, अनभिव्यक्तिः । सा च

---

दीपनम्

दज्ञाते चिद्रूपे ब्रह्मण्यपि तत्साधकप्रकाशाभावप्रसङ्ग इत्याशङ्कयाह—न चैवमिति । ब्रह्मस्वरूपातिरिक्तस्य तत्साधकप्रकाशस्याभावात्तस्य चाभावायोगादित्याह—स्वरूपस्येति । नन्वेवं किमात्मनोऽज्ञान-विषयत्वम्, तज्जनितातिशयाश्रयत्वमिति चेत्, अतिशय एव निरूप्य-ताम् । न जानामीति व्यवहारविषयत्वमिति चेत्, सुषुप्तिप्रलयादाव-विषयत्वप्रसङ्गः । तद्योग्यत्वमिति चेत्, स्वप्रकाशतया स्वविषय-संशयादिविरुद्धप्रकाश आत्मनि तदसंभवादित्याह पूर्ववादी—किं तर्हीति । तादृशचैतन्यानभिव्यक्तिरेवाविद्याकृतो विशेष इति सिद्धा-न्त्याह—अनभिव्यक्तिरिति । ननु न तावदागन्तुकज्ञानाभावोऽ

---

पूरणी

काशस्यापि तत्सत्तावधारणत्वात् । चरमसाक्षात्कारेण तदावरणनिवृत्तौ तत्सत्तावधारणात्मकतामापद्यत इति तेन तदज्ञाननिवृत्तिः । न चैवम-खण्डानन्दादिप्रकाशस्य कादाचित्कतया जन्यत्वं स्यात्. तथा च प्रकाशात्मनोरभेदोच्छेदः, नित्यानित्ययोस्तदसंभवादिति वाच्यम्, स्फुरणैक्यं हि साधितम्, तस्य चाखण्डानन्दाद्यालम्बनत्वं कादाचित्कम् । तच्च तत्स्वरूपमेव, तेन रूपेण वृत्त्यादिसाध्यस्यापि प्रकाशस्य परमते प्रायश्चित्तसाध्यदुःखप्रागभाववदस्मन्मते अविद्यानिवृत्तित्वेन साध्यब्रह्म-स्वरूपवत् गुरुमते ज्ञानध्वंसत्वेन साध्यात्मस्वरूपवच्चानादित्वादेर-विरोधात् । एवं घटादिस्फुरणेऽपीति, तस्य कादाचित्कत्वेऽपि स्फुरणात्मनोर्न भेदानुपपत्तिरिति दिक् ॥

ब्रह्मस्वरूपेति । तदतिरिक्तस्यान्यस्य तद्धर्मस्य वा आगन्तुक-प्रकाशसाधारणत्वात् तस्य च स्वरूपप्रकाशस्य यद्यागन्तुकधर्मः प्रकाशः

स्वप्रकाशप्रत्यग्रूपतया अस्ति प्रकाशत इति व्यवहारयोग्येऽपि नास्ति न प्रकाशत इति ब्रह्मणि व्यवहारदर्शनोन्मेया। तद्योग्यता अस्तीति व्यवहारयोग्यता [1]वा तदन्यस्य नित्यप्रकाशे

दीपनम्

नभिव्यक्तिः, स्वतः सिद्धप्रचुरप्रकाशस्य तस्य जडवृत्त्यभावेनानवभासायोगात्। न हि खद्योतविरहेण सविता न प्रकाशते। अतः स्वरूपचैतन्यस्य विरहोऽनभिव्यक्तिरिति वक्तव्यम्। स च न संभवतीति कृत्याभावान्नात्माज्ञानविषय इत्याशंक्य आत्मा हि स्वयंप्रकाशोऽशनायादिरहित इति प्राङ्निरूपितम्[2]। स च नित्यमुक्तब्रह्मैवेति सकलश्रुतीतिहासपुराणतात्पर्यसिद्धम्। वक्ष्यति च स्वयमात्मनो ब्रह्मभावम्। तथापि न केनापि तदनुभूयते। न च देहाद्यभिमानादिविक्षेपादेव तस्याननुभव इति वाच्यम्; सुषुप्तौ तदभावेऽपि तदननुभवस्य सर्वसंमतत्वात्। [3]ततो नूनमविद्याप्रतिबन्धादेव [4]न तथानुभव इत्यावरण-

पूरणी

स्यात्तदा घटादिधर्म्यावरणे तद्धर्मावरणवत् ब्रह्मावरणे प्रकाशधर्मस्याप्यावृतत्वात् ब्रह्मस्वरूपाप्रकाशो जगदान्ध्यं चापद्येत। न ह्येवं, किं तु नित्यसिद्धतत्स्वरूपमेव तत्प्रकाशः। तस्य च वक्ष्यमाणरीत्यानावृतत्वान्नायं दोष इति भावः। **स च न संभवतीति**। नित्यचैतन्यस्य नाशायोगादिति भावः। **तदन्यस्येति** मूलम्। आगन्तुकज्ञानाभावरूपानभिव्यक्तेरित्यर्थः। ननु ब्रह्मण्यपरोक्षव्यवहारयोग्यतापि कल्पितैव; सत्ययोग्यताया अद्वितीयब्रह्मण्यसंभवात्, तथा च समानसत्ताकयोर्विरुद्धयोग्यतयोः कथमेकत्र संभव इति चेन्न; ब्रह्मणि तद्योग्यतायाः सत्यब्रह्मस्वरूपत्वात्। [5]श्रुत्यादेर्भ्रमप्रमाविषयत्वदर्शनेन तदुभयविरुद्ध-

[1] च तद—क. [2] निरूपितः—ख. [3] अतो—ख, च. [4] तथाननुभाव—च.
[5] श्रुत्यादे—ट.

**ब्रह्मण्यसंभवात् । सा चानादिसिद्धापि कल्पितेति न वास्तव स्वरूपयोग्यताविरोधः ।**

**नन्वेवं कल्पितयोग्यतया पूर्णानन्दब्रह्मप्रकाशाभिभव इव**

---

**दीपनम्**

मवश्यं कल्प्यमिति सप्रमाणं तत्स्वरूपमाह—**सा चेति** । ननु योग्यताप्यविद्याकृता तदावरणजन्यैव वक्तव्या । अधिष्ठानावरणं विनाऽऽरोपायोगादिति ततोऽन्यदावरणं वक्तव्यमित्यनवस्थेति, तत्राह—**अनादीति** । नन्वात्मा स्वप्रकाशश्चे[1]त्सर्वदास्तीत्यपरोक्षव्यवहारयोग्यो वक्तव्यः, तत्कथं तस्य विपरीतव्यवहारयोग्यता तदयोग्यता वा, विरोधात् । न च कल्पिता सेति वाच्यम्; अनादित्वे तदनुपपत्तेः; [2]अविद्याधीनस्थितिकत्वानुपपत्तेश्चेति, तत्राह—**कल्पितेति** । अविद्यादिवदनादित्वं [3]तत्संबन्धवच्च तदधीनस्थितितया तत्प्रयुक्तत्वं च तस्या विरुद्धमित्यर्थः । अतः सर्वदा प्रकाशमानमपि ब्रह्मस्वरूपं न प्रकाशत इति [4]भ्रमकल्पितयोग्यतारूपावरणप्रतिबन्धाद्विद्यमानोऽपि ब्रह्मप्रकाशो नाविद्यादिकं निवर्तयतीति भावः ॥

ननु यदि ब्रह्मस्वरूपमावृतं तर्हि साक्ष्यप्यविद्यया आव्रियेतेत्यायातमान्ध्यमशेषस्य जगतः, तद्रूपप्रकाशत्वाज्जगतः, न चेद्ब्रह्मणोऽप्यावरणं न स्यात; अनावृताभिन्नत्वादिति शङ्कते—**नन्विति** । यद्यपि चैतन्यमात्रमेव सत्यज्ञानादिलक्षणं शास्त्रप्रतिपाद्यं ब्रह्म, तथापि सत्यज्ञानादिपदानां वक्ष्यमाणविधया वाच्यभेदादपर्यायत्वमस्तीति ब्रह्मादिव्यवहारः सत्यादिव्यवहारश्च परस्परं भिद्यते । व्यवहारभेदे

---

**पूरणी**

तद्योग्यतयोरपि तत्रैकत्रानुभवसिद्धत्वाच्चेति भावः । **तद्रूपेति** । प्रकाशमान[5]साक्ष्यवच्छेदकतया जगत्प्रकाशादित्यर्थः । **ब्रह्मादीत्यादि-**

---

[1] सदा-क. [2] अविद्याधीनत्वानुप-च. [3] तत्संबन्धाच्च-ख. [4] भ्रमः, कल्पित-च. [5] साक्ष्यभेदक-ग.

चैतन्यप्रकाशोऽप्यभिभूयेतेति चेन्न; चैतन्ये नास्तीति व्यव-

दीपनम्

च तन्निरूपितयोग्यतापि भिन्नेवेत्येकस्यां सत्यामप्यपरस्याभावो न विरुद्ध्यते । ततश्च चैतन्यस्यात्माभेदे विपर्ययादिसत्त्वेऽपि तत्स्वरूपमात्रे न कस्यापि नास्ति न प्रकाशत इति विपरीतव्यवहार इति तद्योग्यताभावाच्चैतन्यात्मा साक्ष्यनावृतः । तस्यैव ब्रह्मस्वरूपे विपरीतव्यवहारो दृश्यत इत्यतोऽस्त्येव तद्योग्यतारूपं तदावरणमित्येकमेव निरंशं वस्त्वावृतमनावृतं चेत्यभिप्रेत्याह–चैतन्य इति ।

पूरणी

पदेनात्माहमादिव्यवहारसङ्ग्रहः । तत्स्वरूपमात्र इति । नाहं ब्रह्मेत्यादिविपर्यया[1]दिदर्शनेन तद्व्यवहारयोग्यतालक्षणावरणसत्त्वेऽपि नाहमस्मि नाहं प्रकाश इति वा स्वरूपगोचरविपरीतव्यवहाराभावान्न तद्योग्यतारूपमावरणं साक्षिस्वरूपस्येत्यर्थः । यद्यपि सर्वात्मतायोग्यताविशिष्टानन्दवृत्त्यवच्छिन्नत्वादिविशिष्टगोचरब्रह्मानन्दादिविपरीतव्यवहारयोग्यतारूपावरणं न परिपूर्णाखण्डानन्दादिस्वरूपावभासप्रतिबन्धकम्, सर्वज्ञत्वादिविशिष्टस्य सर्वदापरोक्षत्वेन नित्यतया तत्प्रतिबन्धेनाखण्डचैतन्यस्य चरमवृत्तिकालेऽप्यनवभासप्रसङ्गात्, अखण्डानन्दस्वरूपगोचरस्तु विपरीतव्यवहारोऽसिद्धः; स्वरूपस्यानन्दादिपदावाच्यत्वात् तस्य तत्पदलक्ष्यत्वाभ्युपगमात्, नच लक्षणयैव स्वरूपगोचरो विपरीतव्यवहारोऽस्त्विति वाच्यम्; सर्वेषां वेदान्तानामखण्डे ब्रह्मणि तात्पर्यावधारणं विना तल्लक्षणानवतारात्, तन्निर्णये च तद्विपरीतव्यवहारानुपपत्तेः; तथापि नाहमानन्दो नाहं ब्रह्मेत्यादिस्वरूपगोचरविपर्ययानुभवादिलक्षणविपरीतव्यवहारदर्शनेन स्वरूपगोचरशब्दाभिलापात्मकव्यवहाराभावेऽपि ज्ञानात्मकव्यवहारयोग्यतालक्षणावरणस्य तत्रापि

[1] देर्दर्श–म.

हारादर्शनेन तद्योग्यतालक्षणावरणाभावात् । तस्माद्ब्रह्मविषय-मेवाज्ञानम् । तदावारकत्वादेव तदाश्रयं तमोवत् ।

दीपनम्

नन्वस्तु स्वप्रकाशमपि चैतन्यमात्रमज्ञानविषयः । आश्रयस्तु जीव एव स्यात्, अहं ब्रह्म न जानामीत्यनुभवात् । तत्र यद्यहंकारतदवच्छिन्नयोस्तदाश्रयत्वमनुपपन्नम्, अस्तु तत्तथा । अविद्याप्रतिबिम्बे तु नानुपपन्नम् । न चान्योन्याश्रयः; बिम्बप्रतिबिम्बविभागस्य तत्राविद्यासंबन्धस्य [1]चानादित्वात् तस्य [2]स्वप्रकाशचैतन्यमात्रस्वभावत्वाच्चेति, तत्राह—तदिति । तदज्ञानं स्वाच्छाद्याश्रयं, आच्छादकत्वात्,

पूरणी

संभवात् । न चैकत्रावच्छेदकभेदमन्तरा कथमावृतत्वमनावृतत्वं चेति वाच्यम्; व्यवहारप्रतियोगिभेदेन तद्योग्यतातद्विरहरूपावरणानवरणयोर्गोत्वादौ जातितद्विपरीतव्यवहारयोग्यताद्वयवदेकत्राविरोधात् ।

वस्तुतस्तु पूर्णानन्दत्वाद्यवच्छेदेन तत्तद्विपरीतव्यवहारयोग्यतास्वरूपस्याप्यानन्दत्वादेर्गोत्वादिवदवच्छेदकत्वोपपत्तेः । यद्वा विशिष्टगोचरब्रह्मादिविपरीतव्यवहारयोग्यतैवावरणम् । नच तया स्वरूपानवभासानुपपत्तिः; विशिष्टानवभासवत्तद्वाच्यकोटिनिविष्टानन्दाद्यात्मकत्वानवभासेऽपि तद्योग्यतायाः प्रयोजकत्वात् । अहंविशिष्टगोचरविपरीत व्यवहाराभावान्नाहंपदवाच्यान्तर्भूतसाक्षिस्वरूपानवभासप्रयोजिका योग्यतेति सर्वं सुस्थम् ॥

ब्रह्मविषयमिति मूलम् । ब्रह्मस्वरूपावभासप्रतिबन्धकावरणरूपातिशयप्रयोजकमित्यर्थः । किमुत्पत्तौ ज्ञप्तौ वान्योन्याश्रयः । नाद्य इत्याह— बिम्बप्रतिबिम्बेति । द्वितीयं निरस्यति—तस्येति ।

[1] वानादि—ख.  [2] आत्मप्रकाश—ख. ग.

दीपनम्

तमोवत्। आच्छादकत्वं चास्ति प्रकाशत इति व्यवहारसामग्र्यां सत्यां तद्विपरीतव्यवहारयोग्यताप्रयोजकत्वमित्युक्तमिति नार्थेन्द्रियसन्निकर्षविघटककुड्यादौ व्यभिचारः। [1]तमश्च स्वाश्रयावारकप्रदेशमेवाच्छादयतीति न साध्यवैकल्यम्। न वा साधनवैकल्यम्; अन्धकारेऽप्यर्थेन्द्रियसन्निकर्षानपायात्। अन्यथा तद्देशव्यवहितालोकदेशस्थितपदार्थाननुभवप्रसङ्गात्। आलोकश्च न रूपादिज्ञाने कारणमित्युक्तम्। अन्तर्बहिःकरणानाश्रितत्वं च हेतुविशेषणमिति न काचादौ व्यभिचारः। अज्ञानं चैतन्यमात्राश्रयम्, तदन्यानाश्रितत्वे सत्याश्रितत्वात्, यदेवं तदेवं यथा सम्प्रतिपन्नम्। न च विशेषणासिद्धिः; जीवाश्रयत्वे स्थितावन्योन्याश्रयात् गौरवेणाश्रयविषयभेदकल्पनायोगा-

पूरणी

नन्वर्थप्रकाशसामग्रीकालीनविपरीतव्यवहारयोग्यताप्रयोजकत्वमन्धकारेऽसिद्धम्, तत्काले इन्द्रियार्थसन्निकर्षालोकात्मकतत्सामग्रीविरहादित्याशङ्क्याह—न वा साधनेति। अन्तर्बाहिरीति। अन्तःकरणाश्रितो दोषो रागौत्कट्यादिः। तस्याप्यभीष्टविषये भ्रमजनकत्वादिति भावः। हेत्वन्तरेणापि तत्साधयति—अज्ञानमिति। स्थिताविति। अविद्याप्रतिबिम्बत्वमविद्यास्थितिप्रयोजकं अविद्या च तत्प्रतिबिम्बत्वस्थितिप्रयोजिकेत्यन्योन्याश्रय इत्यर्थः। नन्वनादिस्थितौ नान्योन्याश्रयो दोषाय। अन्यथा त्वत्पक्षेऽप्यज्ञानस्थितावावरणस्थितिः तत्स्थितौ चाज्ञानस्थितिरित्यन्योन्याश्रयापातात्। प्रतिबन्धकावरणाभावे विरोधिचैतन्येन तदैवाज्ञाननाशापत्त्या तत्स्थित्ययोगादित्यनुशयादाह—गौरवेणेति। नन्वेवं घटाद्यवस्थाज्ञानादौ प्रमातृचैतन्यगतत्वं न

[1] ततश्च—ख. [2] तालोकवत्पदार्थाः—ख.

न चैवं ब्रह्मणोऽप्यज्ञत्वापत्तिः, अनादिज्ञाननिवर्त्याज्ञानाश्रय-

दीपनम्

त्प्रमाणाभावाच्च। उक्ताज्ञानानुभवस्य चैतन्यमात्राश्रयत्वेऽप्युपपत्तेरिति भावः। अज्ञत्वेति। तथात्वे च तस्य सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोध इति भावः। अनादीति। यथा वियदादिहेयप्रपञ्चाश्रयत्वेऽपि न ब्रह्मणो निरवद्यत्वभङ्ग, [1]आविद्यकस्य कल्पितत्वेनाधिष्ठानासंस्पर्शात् ब्रह्मणस्तथाविधज्ञानसत्त्वाच्च, एवं जीवसमवेतज्ञाननिवर्त्यमपि किंचित्तत्रास्तु। [2]नन्वेवं जीववदेवाज्ञत्वप्रसङ्गः; तस्य ह्यज्ञत्वं नामाज्ञानावृतस्वरूपत्वम्, न चैतद्ब्रह्मणोऽस्ति; तत्र प्रमाणाभावात्।

पूरणी

स्यादित्याशङ्कयाह—प्रमाणेति। घटं न जानामीति तत्र भिन्नविषयाश्रयानुभवबलात्तथा, प्रकृते तु नैवमित्यर्थः। नन्वत्राप्यहं न जानामीत्यनुभवस्तुल्य इत्यत्राह—उक्तानुभवस्येति। वस्तुतस्त्ववस्थाज्ञानेऽपि विषयाश्रयैक्यं वक्ष्यत इति भावः। न चैवं ब्रह्मण इति मूलम्। परिपूर्णानन्दस्वरूपस्याज्ञानावृतत्वे बिम्बब्रह्मणोऽपि स्वरूपं तेनावृतं स्यात्, स्वरूपस्यैकत्वादिति जीववत्सोऽप्यज्ञः स्यादित्यर्थः। अनादीति मूलम्। अज्ञानाश्रयस्वरूपैक्येऽपीत्यर्थः। तस्येत्यनन्तरं मूले ब्रह्म प्रतीति शेषः। चिन्मात्राश्रयमप्यज्ञानं जीवस्याखण्डानन्दस्वरूपप्रतियोगिकावरणस्यैव सम्पादकं न तु ब्रह्मणः; उपाधेः प्रतिबिम्बपक्षपातित्वादिति फलितार्थः। ननु जीवस्यापि कर्तृत्वादिप्रपञ्चः कल्पित इत्यत्राह – ब्रह्मण इति। ब्रह्मणः प्रपञ्चकल्पितत्वापरोक्षावभासोऽस्ति जीवस्य तु नैवमित्यर्थः। तत्रेति। ब्रह्मणः स्वस्वरूपावभासप्रतिबन्धहेत्वावरणे मानाभावादित्यर्थः। ननु ब्रह्म स्वरूपावभास-

[1] अवद्यस्य-ख. [2] न चैवं-ख.

## दीपनम्

तस्य नित्यसर्वज्ञतया [1]श्रुतिसिद्धत्वाच्च जीववदज्ञानाश्रयोऽपि ब्रह्म नाज्ञानीत्यर्थः । ननूक्तहेतोर्घटाज्ञाने व्यभिचारः ; अहमिदं न जानामीत्याश्रय-

## पूरणी

प्रतिबन्धकावरणवत् , अज्ञानाश्रयचैतन्याभिन्नत्वात् , जीववदित्यनुमानं प्रमाणमित्याशङ्क्याह—**तस्येति** । "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिबलान्नैवमिति भावः । **नाज्ञानीति** । नाज्ञानप्रयुक्तावरणनिरूपकमित्यर्थः ।

नन्विदमयुक्तम् ; जीवब्रह्मातिरिक्तस्वरूपचैतन्याभावेनाज्ञानस्य तन्मात्राश्रयत्वासंभवात् । न च मुखस्वरूपमात्रस्य दर्पणाद्युपाधिसंबन्धे सति मुखविभागवत् तन्मात्रस्याज्ञानसंबन्धे सत्यनन्तरं तद्विभाग इति तदर्थ इति वाच्यम् ; अज्ञानवज्जीवब्रह्मविभागस्याप्यनादित्वेन तदयोगादिति चेन्न ; भिन्नस्यापि चैतन्यस्योभयानुगतस्वरूपेणैवाज्ञानाश्रयत्वं न तु मिश्रमतवज्जीवत्वावच्छेदेनेति विवक्षितत्वात् । ननु तदज्ञानमुभयानुगतस्वरूपव्याप्यवृत्तीति चेत् , ब्रह्मणोऽप्यहमज्ञ इत्यनुभवापातः । न चाज्ञानस्य व्याप्यवृत्तित्वेऽपि तदावरणस्याव्याप्यवृत्तित्वेन ब्रह्मणि तदभावान्न तस्य तथानुभवः, [2]आवारकाज्ञानस्यैव तथानुभवविषयत्वादिति वाच्यम् ; प्रयोजकस्य व्याप्यवृत्तित्वे तत्प्रयोज्यस्याव्याप्यवृत्तित्वानुपपत्तेः । न चाज्ञानमप्यव्याप्यवृत्तीति वाच्यम् ; तथासत्यविद्यावच्छिन्नजीववादाविशेषप्रसङ्गात् ।

यत्तु चैतन्यमज्ञानाश्रयः, आनन्दस्तद्विषयः, उभयोश्चाविद्यको भेदः । नच मामहं न जानामीत्येकाश्रयत्वविषयत्वानुभवविरोधः ; वास्तवैक्येनापि तदुपपत्त्या कल्पितभेदे बाधकाभावात् । तत्राज्ञानाश्रयचैतन्यं

[1] श्रुतिविरुद्धत्वादिति जीववदेव नाज्ञानीत्यर्थः—च.  [2]सावरणा—ट.

## पूरणी

जीवरूपापन्नं तद्विषयानन्दश्च ब्रह्मस्वरूपावच्छिन्न इति ब्रह्मण्यज्ञानाभावान्न तस्याहमज्ञ इत्यनुभव इति वर्णितं, तच्चिन्त्यम्; एवं सति केवलानन्दात्मकब्रह्मणश्चैतन्यभेदे तस्य सार्वज्ञाद्यनुपपत्त्या तच्छ्रुतिविरोधात्। जीवस्य सुषुप्तौ भेदकाविद्योपाधिसत्त्वेनानन्दस्वरूपावभासानुपपत्तेश्च। एतेन न जीवब्रह्मणोः काल्पनिको भेदः, किं तु यथा व्याधवर्धितो राजपुत्रो व्याधभावनया संसरति एवं ब्रह्मैव स्वाविद्यया संसरति, तत्त्वमस्यादि वाक्यजनितसाक्षात्कारेण राजत्वेन बोधितः कुमारो व्याधभावादिव संसारान्मुच्यत इति प्रत्युक्तम्। जीवातिरिक्तब्रह्मानभ्युपगमे तस्य सार्वज्ञादिश्रुतिविरोधात्। किं चाज्ञानस्य चिन्मात्राश्रयत्वे तस्य स्वकार्येण सामानाधिकरण्यानियमात् शुद्धचैतन्य एव संसारः स्यात्। [1]जीववद्ब्रह्मणो जगदुपादानत्वानुपपत्तिश्च, परिणममाणाविद्याधिष्ठानस्यैव तदर्थत्वादिति चेन्न;

जीवब्रह्मोभयानुगतचैतन्यस्वरूपव्याप्येवाज्ञानं तदावरणं च। नच ब्रह्मणोऽप्यज्ञानानुभवापातः; तदावरणस्य स्वनिरूपितत्वाभावेन तदसंभवात्। यथा परमते द्वित्वादेरपेक्षाबुद्धिजन्यत्वेन तत्तत्पुरुषनिरूपितद्वित्वं तेनैवानुभूयते नान्येन, एवमत्राप्युपपत्तेः। न चैवं ब्रह्मणः सार्वज्ञहानिः; जीवस्य स्वरूपावरकं तज्ज्ञाननिवर्त्यं किंचिन्मय्यस्तीत्येवंरूपेण तदनुभवात्। नापि शुद्धचिति संसारप्रसङ्गः; अज्ञानोपाधिदशायां जीवब्रह्मातिरिक्तशुद्धचिन्नास्तीत्युक्तत्वात्। जीवरूपेण भिन्नचैतन्यस्यैव स्वरूपेणाज्ञानाश्रयतया तद्गतसंसारस्य तत्सामानाधिकरण्योपपत्तेः। प्रतिबिम्बधर्माणामुपाधिसामानाधिकरण्यानियमादर्शनाच्च। अत एव ब्रह्मणोऽपि स्वरूपेणाज्ञानाश्रयत्वाज्जगदुपादानत्वम्। वस्तुतस्तु

[1] बिम्बब्रह्मणो–ट.

**त्वेऽपि तस्यावृतस्वरूपत्वाभावेनाज्ञत्वाभावात् । घटं न जानामी-त्यनुभूयमानमप्यज्ञानं तदेव नान्यत् । योग्यतालक्षणमावरणं चाज्ञानकार्यं घटाद्यवच्छिन्नचैतन्यनिष्ठमिति तन्निवृत्तिर्घटादि-ज्ञानेनानुभूयत इति नानुभवविरोधो न वा [1]वृत्तिवैफल्यम् । नापि घटाज्ञानं निवृत्तमिति व्यवहारानुपपत्तिः ॥**

## दीपनम्

भेदानुभवादित्यत आह—**घटमिति** । तदेव मूलाज्ञानमेव । ननु शुद्धचैतन्यविषयाज्ञानस्य कथं घटविषयत्वमिति चेन्न; तस्यैवाज्ञानस्य घटपटाद्यवच्छिन्नचैतन्ये आवरणान्तराभ्युपगमात् । शुद्धस्य चाज्ञाना-श्रयचैतन्यस्य तद्विवर्तावच्छिन्नतया अज्ञानस्यापि तत्संबन्धात् । तथा च घटादिज्ञानेन तत्तदावरणमात्रं निवर्तते, न त्वज्ञानमपीति नानुभव-विरोध इत्याह —**योग्यतेति** । घटादिज्ञानेन तन्निवृत्तिरिति संबन्धः । **अनुभूयत इति** । घटादिज्ञानेन [2]तदज्ञाननिवृत्तिरिति शेषः ॥

## पूरणी

परिणममानाविद्याधिष्ठानतया नोपादानत्वम्, जीवस्यापि स्वरूपेण तदधिष्ठानतया जगदुपादानत्वप्रसङ्गात् । मिश्रमते ब्रह्मणोऽनधिष्ठान-तयाऽनुपादानत्वप्रसङ्गाच्च । किं त्वविद्याकृतवियदादिपरिणामाश्रयत्वम् । तच्चाविद्यानधिष्ठानत्वेऽप्यस्ति, विषयतयाज्ञानसंबन्धमात्रेणैव तदुपपत्तेरिति सर्वं सुस्थम् ॥

शुद्धचैतन्यविषयाज्ञानस्य घटावच्छिन्नचैतन्यविषयत्वं न संभव-तीति घटविषयत्वं न संभवतीति वा नाद्य इत्याह—**तस्यैवेति** । न द्वितीय इत्याह—**शुद्धस्येति** । यथा परमते घटत्वस्य स्वसत्तायाश्च घटरूपैकाधिकरणनिष्ठतया घटत्वे सदिति प्रत्ययः एवमज्ञानस्य घटस्य चैकचैतन्यनिष्ठतया घटस्याज्ञानविषयत्वमिति भावः । घटादिज्ञानस्य तन्निवृत्त्यगोचरतया अनुभूयत इति क्रियानन्वयमाशङ्क्याह–**घटादीति**॥

[1] प्रवृत्ति–**ग.** [2] तदज्ञानं निवृत्तमिति–**ख.**

**अथ वा मूलाज्ञानस्यैव धर्मरूपाणि घटाद्यवच्छिन्न-चैतन्यगोचराण्यवस्थाशब्दवाच्यान्यन्यान्येव तदज्ञानानि, ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात् । तानि चाज्ञानानि रजताद्युपादानानि शुक्त्यादिज्ञानैः सह कार्येण निवर्तन्ते शुक्त्याद्यवच्छिन्न-चैतन्यनिष्ठानि च, अविद्यायाः स्वविषयाश्रयत्वनियमात् ।**

---

## दीपनम्

यदि घटाद्यज्ञानं निवृत्तमित्यनुभवस्य तदावरणनिवृत्तिविषयत्वं न साधु मन्यसे, तर्ह्यस्तु तथेत्याह—**अथ वेति । शुक्तीति ।** तत्तत्समयभाविशुक्त्याकारज्ञानैर्हेतुभिः स्वस्वकार्यैः सह तत्तत्समयभावीन्यज्ञानानि निवर्तन्त इत्यर्थः । नन्वेवमावारकत्वहेतोस्तत्र व्यभिचार इत्यत आह—**शुक्त्याद्यवच्छिन्नेति ।** नन्वेवं कथमहमिमं न जाना-

---

## पूरणी

एकसाक्षिसाक्षात्कारेणानेकाज्ञाननिवृत्तौ कालान्तरीयभ्रमानुपपत्तिमाशङ्क्याह—**तत्तत्समयेति ।** नन्ववस्थाज्ञानं न कल्पनीयं; मानाभावात्, शुक्तिज्ञानेन शुक्त्यज्ञानं निवृत्तमित्याद्यनुभवस्य मूलाज्ञानकृतावरणनिवृत्तिविषयत्वेनाप्युपपत्तेः । किं च न तावदनेकजीववादेऽवस्थाज्ञानकल्पनम्; तन्मते शरीरादन्यत्र जीवसद्भावे प्रमाणाभावेनावृतब्रह्मचैतन्याध्यस्तघटादेरन्धकारस्थघटवत्प्रकाशप्रसक्तेरभावेन प्रमाणवैकल्यादेव सम्प्रत्यज्ञात इति व्यवहारोपपत्तेः । एकजीववादेऽपि सर्वज्ञबिम्बचैतन्यमेव जगदुपादानं, तत्संसृष्टं जगदिति पक्षे प्रपञ्चस्याविद्यावृतब्रह्माश्रयतया प्रकाशप्रसक्तिविरहेण तत्प्रतिबन्धकाज्ञानकल्पनायोगात् । न चाभिन्नचैतन्यं जगदुपादानमिति पक्षे स्वरूपैक्येन तदवभासप्रसक्तावज्ञानकल्पनार्थवतीति वाच्यम्; उपाधिदशायां तदसंभवस्योक्तत्वात्, "न तस्य कार्यं करणं च विद्यत" इत्यादिशुद्धब्रह्मण

## पूरणी

औदासीन्यश्रुतिविरोधाच्च । जीवानुगतचैतन्यस्य प्रपञ्चोपादानत्वे जीवस्यापि वियदादिप्रपञ्चाधारतयोपलम्भापातात् । अन्यथा कर्तृत्वादिप्रपञ्चस्यापि तद्गतत्वेनानुपलम्भापातादिति चेन्न; सर्वमतेऽप्यज्ञानान्तरस्य वाच्यत्वात् । तथा हि—अनेकजीववादे न जीवानां शरीरमात्रदेशता, तथा सति तन्निष्ठाविद्याया अपि तन्मात्रदेशतया वियदादिनिखिलप्रपञ्चपरिणामानुपपत्तेः । किं तु व्यापिन एव जीवाः । तेषां च घटादिसंबन्धे सति तदवभासप्रसङ्गात् प्रतिबन्धकाज्ञानमास्थेयम् । एवमेकजीवपक्षेऽपि । न चान्तःकरणोपहितसाक्षितादात्म्याभावादेव तदनवभासोपपत्तिरिति वाच्यम्; एवमपि शुक्तीदमाकारवृत्तिदशायां शुक्तित्वादेरप्यवभासप्रसङ्गात् । नच दोषप्रतिबन्धान्नैवमिति वाच्यम्; दोषस्य तदाकारवृत्तिप्रतिबन्धकत्वेऽपि नित्यप्रकाशाप्रतिबन्धकत्वात् । किं च तत्र रजतादिविक्षेपार्थमप्यज्ञानान्तरमास्थेयम् । नच मूलाज्ञानात्तदुपपत्तिः; तस्य वियदादिसाधारणकार्यजनकत्वेनासाधारणकार्यजननशक्तिविरहात् । शुक्तिज्ञानेन शुक्त्यज्ञानं नष्टमित्यज्ञानस्यापि स्पष्टं निवृत्त्यनुभवाच्चेत्यलमतिकथया ॥

ननु तथापि किं तदज्ञानं चैतन्यमात्रविषयं शुक्त्याद्यवच्छिन्नचैतन्यविषयं वा । नाद्यः; मूलाज्ञानाविशेषप्रसङ्गात् । न द्वितीयः; शुक्त्यादेरनित्यत्वेन तदवच्छिन्नाश्रयत्वस्य तद्विषयत्वस्य वा अनाद्यज्ञानेऽसंभवात् । नच सत्कार्यवादाश्रयणेन शुक्त्यादेः सूक्ष्मरूपेण पूर्वमपि सत्त्वान्न दोष इति वाच्यम्; एतच्छुक्तिपरिमाणविशेषाद्यवच्छिन्नावारकतयानुभूयमानाज्ञानस्य सूक्ष्मरूपतदवच्छिन्नाश्रयत्वादेरयोगात् कारणस्वरूपातिरिक्तसूक्ष्मरूपताया निर्वक्तुमशक्यत्वाच्चेति चेन्न; मूलाज्ञानधर्मा एतान्यवस्थाज्ञानानि तदाश्रितानि तत्परतन्त्राणि तदधिष्ठान-

दीपनम्

मीत्यनुभवः[1], तस्यान्तःकरणावच्छिन्नचैतन्यसंबन्धाभावात्, नन्वज्ञानं [2]साक्षिमात्रभास्यं, स चाविद्याप्रतिबिम्बितचैतन्यमिति विषयाज्ञानमपि तेन संबद्धम्। अन्तःकरणावच्छिन्नं तु प्रमात्रेव न तु साक्षी। न चैवमतिप्रसङ्गः; सर्वत्राज्ञानादिभासकसाक्षिण [3]एकत्वेऽपि तदनुभवितुः प्रमातुर्भिन्नत्वादिति [4]चेदेवमपि विषयाज्ञानस्य साक्ष्यसंबन्ध एव। न हि विषयस्य जीवसाक्ष्यध्यासः, येन तदवच्छिन्नचैतन्यस्थाज्ञानं साक्षिनिष्ठं स्यात्। अपि च नाविद्यावच्छिन्नचैतन्यमात्रं साक्षी, तथा सति यज्ञदत्ताज्ञानादावपि [5]देवदत्ताज्ञानादाविव संशयादि न स्यात्। साक्षिणो नास्तीति चेन्न; अन्तःकरणोपहितस्यापि साक्षिबलात्स्वाज्ञाना-

पूरणी

चैतन्याश्रितानि वा तत्तत्समये शुक्त्याद्यवच्छिन्नावरणकार्यं कुर्वन्तीत्यभ्युपगमात्। न चावरणस्याप्यनादित्वनियमः; मूलाज्ञानावरण एव तथा नियमात्। अन्यथा इदानीमेकशुक्त्यज्ञाननिवृत्तौ कालान्तरे पुनरावरणान्तरोत्पत्त्या रजतादिभ्रमो न स्यादिति न काप्यनुपपत्तिः॥

अन्यसाक्षिणान्याज्ञानाद्यनुभव आपाद्यते अन्यान्तःकरणावच्छिन्नेनान्यतदवच्छिन्नाज्ञानाद्यनुभवो वा, नाद्य इत्याह—**सर्वत्रेति**। तथा च देवदत्तसाक्षिणो यज्ञदत्ताज्ञानाद्यनुभावोऽस्त्येवेत्यर्थः। द्वितीयं निरस्यति—**तदनुभवितुरिति**। तथा च प्रमात्रन्तरं प्रत्यन्यप्रमातृप्रमेयस्यावृतत्वान्नातिप्रसङ्ग इत्यर्थः। ननु जीवसाक्षिणोऽज्ञानाद्याकाराविद्यावृत्तिप्रतिफलनमेव तत्संबन्धः स्यादित्यनुशयादाह—**अपि चेति**। **साक्षिण इति**। किं तु प्रमातुरिति शेषः। ननु

[1] अहमिदं न जानामीत्यपरोक्षानुभवः—**ख**. [2] चैतन्यमात्र—**क**. [3] एकत्वात्तदनु—**ख**. [4] चेन्न, एवमपि—**च**. [5] देवदत्तस्थाज्ञान—**ख**.

## दीपनम्

दाविवान्यत्रापि तद्योगात् । न ह्यन्तःकरणोपहितस्य प्रमाणबलात्स्वाज्ञानादौ संशयादिनिवृत्तिः । एवं देवदत्तस्यापरोक्षो घटो विना प्रमाणमन्यस्यापरोक्षः स्यात्, साक्षिसंबन्धस्य वृत्तित्वात्[1] ॥

ननु स घटस्तं प्रत्यावृत इति चेत्, साक्ष्यभेदे तदनुपपत्तेः । स चान्तःकरणोपहितं प्रत्यावृत इति चेत्, तर्हि साक्ष्यपि स एव वाच्यः । येनेदं न जानामीत्यज्ञानमनुभूयते तं प्रत्येव विषयस्यावृत्तत्वानुभवात् अज्ञानानुभवितुरेव साक्षित्वात् । [2]तस्मादन्तःकरणोपहितं प्रत्येवाज्ञानं विषयमावृणोतीति तेनैवानुभूयत इति स एव जीवस्याविद्यादिसाक्षी । प्रमाता त्वन्तःकरणविशिष्टः । तद्व्यापाररूपप्रमायां तस्याप्यन्वयात् कार्यान्वयिनश्च विशेषणत्वात् । साक्षिणस्तु नान्तःकरणव्यापारापेक्षेति तदा तटस्थमेव तदित्युपाधिरेव । सुषुप्त्यादावपि संस्काररूपान्तःकरणं तिष्ठत्येवेत्युक्तम् । अतोन्तःकरणोपहितसाक्षिणा

---

## पूरणी

स्वाज्ञानादौ [3]तदाकारान्तःकरणवृत्त्युपधानात्तन्निवृत्तिः, न साक्षिस्वरूपमात्रसंबन्धादित्यत आह—**न हीति**। तथा सति प्रातीतिकत्वव्याकोपप्रसङ्गादिति भावः ।

ननु तदन्तःकरणावच्छेदेन [4]तदनुपहितमावृतमस्तु । न चैकं प्रत्यावृतत्वानावृतत्वयोर्विरोधः ; अवच्छेदकभेदेनाविरोधादिति चेन्न ; अन्तःकरणोपधानं विना विषयावभासव्यतिरेकासिद्धौ आवश्यकत्वाल्लाघवाच्च तदुपहितस्यैव जीवव्यवहारसाक्षित्वादिति भावः । अत्रार्थेऽनुभवमपि प्रमाणयति—**येनेदमिति** । ननु मूलाज्ञानधर्मस्यावस्थाज्ञानस्य

---

[1] वृत्तत्वात्-च. [2] तस्यान्तःकरण-ख. [3] अविद्याकार-झ. [4] तदुप-झ.

न चैवं तस्य साक्षिसंबन्धाभावादहमिदं न जानामीत्यपरोक्षत्वानुपपत्तिः; तस्य कार्यैककल्प्यत्वादनुभवस्य च मूलाज्ञानगोचरत्वात् ॥

अथ वा मूलाज्ञानस्याश्रयविषयभेदाननुभवात्तदसंभवाच्च भवतु चिन्मात्रं विषय एवाश्रयः, [1]अन्यत्राहमिदं न जानामीति भेदानुभवात्त[2]त्संबन्धाभावाच्च अहंकारावच्छिन्नचैतन्याश्र[3]यमज्ञानं बाह्यचैतन्यविषयम् । प्रतीयमानभेदस्य बाधकाभावात् ।

दीपनम्

विषयचैतन्यस्थाज्ञानस्यासंबन्धात् कथमपरोक्षत्वमित्याशङ्क्याह —**न चैवमिति**। कार्यं रजताध्यासः ज्ञानेनाज्ञानं निवृत्तमित्यनुभवो वा । तथा च केवलानुपपत्त्यादिगम्यं तन्नाध्यक्षगोचर इति भावः । किं तर्ह्यज्ञानानुभव[4]विषयः, मूलाज्ञानमित्याह— **अनुभवस्येति**।

ननु न जानामीति यदनुभूतं तस्यैव ज्ञानान्निवृत्तिरनुभूयत इति कथं तद्विधिप्रतिषेधानुभवयोर्भिन्नविषयत्वमित्यरुचेराह—**अथ वेति**। **अहंकारावच्छिन्नेति** । अहंकारावच्छिन्नचैतन्येऽपि वर्तते न तु तावन्मात्राश्रयम्। घटाद्यज्ञानं हि मूलाज्ञानधर्मोऽपि तत्कार्यवत्तदाश्रयाहंकारावच्छिन्नचैतन्यानिष्ठ[5]मपि तस्यैवाश्रयाविषययोर्भेदः, तस्याहंकारा-

पूरणी

कथं चैतन्यनिष्ठत्वमित्यत्राह—**तत्कार्यवदिति**। शुक्त्यादेर्मूलाज्ञानकार्यत्वेऽपि प्रमाणसिद्धतादात्म्यसंबन्ध[6]विशेषाच्चैतन्यगतत्ववदत्राप्यनुभवादिप्रमाणबलान्मूलाज्ञानधर्मस्यापि तस्य तद्गतत्वोपपत्तिरिति भावः । **तदाश्रयेत्य**धिष्ठानाज्ञानद्वारा संबन्धप्रदर्शनाय । अहङ्कारावच्छिन्नस्य च स्वरूपेण मूलाज्ञानविषयत्वमुक्तम् । वस्तुतस्त्ववस्थाज्ञानं तत्परतन्त्रं न तु तद्धर्म इति तत्त्वम् ।

[1] अन्यत्र त्विदं रजतं न जानामि—**क**. [2]तत्संभवाच्च—**क**. [3] याज्ञानं—**ग**.
[4] भवगोचरः—**च**. [5] मपीत्यस्यैव—**ख**. मपीत्यस्त्येव—**च**. [6] विशेषण चैत—**ट**.

**एवं च सति तस्यापरोक्ष्यमप्युपपद्यते। तच्चानादि, अज्ञानत्वात्, कार्यस्य च रजतादिवदज्ञानत्वायोगात्। अनादित्वे बाधकाभावाच्च। न चैकघटज्ञानान्निखिलाज्ञाननिवृत्तिप्रसङ्गः;**

---

दीपनम्

वच्छिन्नचैतन्येऽपि सत्त्वादनुभवश्चोपपद्यते। अहंकारावच्छिन्नचैतन्यमात्रनिष्ठत्वे तु तस्य बाह्यचैतन्यसंबन्धाभावेन तत्राध्यासासंभवादित्येवमयं ग्रन्थो योज्यः। **तस्य** अवस्थाज्ञानस्य। **अज्ञानत्वादिति**। ज्ञानत्वेन स्वजन्यानपेक्षज्ञाननिवर्त्यत्वादित्यर्थः। मूलाज्ञानमत्र दृष्टान्तः। अप्रयोजकतां निरस्यति—**कार्यस्येति**। अनादित्वघटित[1]त्वाल्लक्षणस्येति भावः। **बाधकाभावच्चेति** चकारो विपक्षे उत्पत्त्यादिकल्पनागौरवं दर्शयति।

ननु घटादिविषयमज्ञानमेकमनेकं वा। आद्ये सकृदुत्पन्नज्ञानादज्ञानं निवृत्तमिति समयान्तरे तत्राज्ञानानुभवो विपर्ययश्च न स्यात्। [2]द्वितीये च सर्वमपि घटमावृणोतीति चेत्, एकज्ञानादेकमिवान्यदपि निवर्तेतेति पूर्वोक्तदोषः; न चैकमेव निवर्तेत इति वाच्यम्; ज्ञानसमानविषयत्वस्य निवृत्तिप्रयोजकस्य तौल्ये एकस्यैव निवृत्त्ययोगात्, अज्ञानान्तरं नावृणोतीति चेत्तर्हि समयान्तरे न जानामीति तदनुभवो न स्यात्, निर्विषयाज्ञानस्यानुभवायोगादिति तत्कार्यमेव तद्वाच्यमित्यत आह—**न चैकेति**। अज्ञानं हि विषयमावृण्वज्ज्ञानसमानविषयतया

---

पूरणी

अनाद्युपादानत्वघटिताज्ञानत्वस्य हेतुत्वे तदसिद्धिमाशङ्क्याह—**ज्ञानत्वेनेति**। अग्रिमभ्रमानुपपत्तिरपि युगपदनेकावरणाभावे मान-

---

[1] त्वात्तल्लक्षणस्येत्यर्थः–च.　　[2] द्वितीयेऽपि–क.

**आवारकस्यैव ज्ञानान्निवृत्तेः । आवरकं[1] त्वेकमेव, स्वभावात् । नच**

---

## दीपनम्

तेन निवर्त्यत इति नातिप्रसङ्ग इत्याह—**आवारकस्येति** । ननु युगपदनेकाज्ञानसत्त्वे एकमिवान्यदप्यावारकमेवेति चेन्न; विषयाज्ञानान्यनादीन्यपि युगपन्न विषयमाच्छादयन्ति, तत्र प्रमाणाभावात् योग्यतारूपावरणस्यैकाज्ञानादप्युपपत्तेः । नच युगपद्योग्यतारूपानन्तावरणसद्भावे प्रमाणमस्ति । न जानामीत्यनुभवस्यैकावरणविषयत्वेऽप्युपपत्तेः । अन्यथा पूर्वोक्तदोषानपायात् । एवं च यदावृणोति तज्ज्ञानान्निवर्तते, तत्समानविषयत्वात् । अन्यत्तु तदभावान्न विवर्तते । तदप्यग्रे यदा स्वविरोधिज्ञानविरहदशायामावरिष्यति तदा तज्ज्ञानान्निवर्तिष्यत इत्याह—**आवरकं त्विति** । न चैवमावरणे विनिगमनाभावः; यदावृणोति तन्निवर्त्यत इत्यभ्युपगमे बाधकाभावे किं विनिगमनाविरहेण । यथा परमते प्रतियोगिजनकः प्रागभावो निवर्त्यते नेतरः । नच प्रतियोगिजनने तेषां किंचिद्व्यवस्थापकमस्तीत्यभिप्रेत्याह—**नचेति** ।

---

## पूरणी

मित्याह—**अन्यथेति** । **तदप्यग्र इति** । ततश्च तत्कालीनावरणमादाय सविषयकाज्ञानानुभवोऽप्युपपद्यत इति भावः । **प्रतियोगिजनक इति** । एकात्मन्यनेकज्ञानादिप्रागभावादिसत्त्वेऽपि यदा यः प्रतियोगिजनकः स निवर्तत इति नियमवत् विशेषव्यवस्थाविरहेऽपि न बाधकमित्यर्थः ।

---

[1] चैक-ग.

**विनिगमकाभावः ; तदभावेऽपि पराभिमतविशेषादर्शनवदावारकं निवर्तेत इत्यभ्युपगमे बाधकाभावात् ॥**

## मिश्रमतम्.

**अन्ये तु मूलाज्ञानमपि जीवनिष्ठम्, अज्ञानत्वात्, शुक्त्यज्ञानवत्। न चैवमन्योन्याश्रयः; जीवत्वादिविभागस्यानादित्वात्। न चाश्रयविषययोरभेदे संभवति भेदो गौरवान्न कल्पनीय इति वाच्यम्; अन्यत्र तद्भेदस्य दृष्टत्वादित्याहुः।**

---

### दीपनम्

किं च तदुत्पत्त्यभ्युपगमे मूलाज्ञानमात्रात्तदुत्पत्तौ सामग्र्याः सदातनत्वात् तत्कादाचित्कत्वं न स्यात्। न चाज्ञानादन्यदज्ञानकारणं संभवति, रूपादिवद्घटादिजन्यस्याज्ञानत्वायोगादित्यभिप्रायः ॥

मिश्रमतमाह—**अन्ये त्विति।** अपिरवधारणे। जीवनिष्ठमेवेति संबन्धः। **अन्यत्रेति।** यद्यप्यविद्याया आधाराधेयभावप्रयोजकसंबन्धो[1] जीवनिष्ठ एव, तथापि विषयतासंबन्धेन ब्रह्मणि सा वर्तेत इति न तस्य तद्विवर्ताश्रयत्वानुपपत्तिः। नापि "मायिनं तु महेश्वरं"

---

### पूरणी

एवं च **विशेषादर्शनवदिति** मूले एकवृत्त्यनेकज्ञानादिप्रागभावोपलक्षणमिति भावः।

**मायिनमिति।** तस्या मायाविषयत्वार्थकत्वादिति भावः। नन्वज्ञानस्य जीवगतत्वे "तदैक्षत" "सोऽकामयत" इत्यादिना श्रूयमाणमविद्यावृत्त्यात्मकेक्षणादिमत्त्वरूपं कर्तृत्वं ब्रह्मणो न स्यात्। किं च जीवगताज्ञानोपादानकप्रपञ्चस्य शुक्तिरजतादिवत्प्रतिपुरुषमसा-

---

[1] कः संबन्धो—**च**.

**सर्वथाप्युपपन्नमेवात्माश्रयमात्मविषयमज्ञानमिति सिद्धमज्ञानम्,**

---

**दीपनम्**

इति श्रुतिविरोधोऽपीति भावः। **सर्वथेति**। चिन्मात्राश्रयविषयत्वे जीवाश्रयत्वे चैतन्यविषयत्वे वेत्यर्थः। मतान्तरे जीवत्वस्या[1]श्रयव्यावर्त-

---

**पूरणी**

धारण्येन साधारणप्रत्ययानुपपत्तिरिति चेन्न; ईक्षणं स्वरूपज्ञानमेवेति वक्ष्यमाणत्वात्। वृत्त्यात्मकत्वेऽपि विषयतासंबन्धेन तत्राज्ञानवृत्त्या तदुपपत्तेः। प्रपञ्चस्तु प्रतिजीवमसाधारण एव। साधारणप्रत्ययस्तूपाध्यायमुखोद्गतवर्णस्वरादिषु नानाध्येतॄणां साधारणप्रत्ययवभ्द्रम इत्याहुः॥

वस्तुतस्तु नानापुरुषानुभूयमानघटादेर्भेदे प्रतिपुरुषं साधारणतया अनुभूयमानैकघटेन पाकाद्यर्थक्रियाभेदप्रसङ्गः। एकत्वभ्रमविषयघटादिना भिन्नार्थक्रियादर्शनात। पाकाद्यर्थक्रियाकर्तृभिन्नपुरुषानुभूयमानघटादेः प्रातीतिकत्वप्रसङ्गश्चेति नायं प्रकारः साधुः। किं तु प्रपञ्चो द्विविधः। साधारणोऽसाधारणश्च। तत्रासाधारणे प्रत्येकाज्ञानानामुपादानत्वम्। साधारणे तु मिलितानाम्। न च तत्र मानाभावः; साधारणानुभवादेरेव मानत्वात्। बाधकं विना तभ्द्रमत्वकल्पनाया अयोगात्। न चैवमेकमुक्तौ सर्वमुक्तिप्रसङ्गः, तदज्ञाननाशेन तदुपादेयकृत्स्नप्रपञ्चनाशादिति वाच्यम्; यत्किंचित्तन्तुनाशे पटनाशाननुभवेन यावदुपादाननाशस्य तन्नाशप्रयोजकत्वात्। नच काशीमरणादिना इदानीं केषांचिन्मुक्तौ यत्किंचित्तन्तुनाशे पटविच्छेदप्रतीतिवत्प्रपञ्चस्य विच्छेदप्रतीतिः स्यादिति वाच्यम्; तन्तूनां परिच्छिन्नतया कार्यमहत्त्वप्रयोजकसंख्यादिमत्तया च यत्किंचित्तन्तुनाशे तदुपादेयपटविच्छेदप्रतीतावपि प्रपञ्चोपादानाज्ञानानामपरिच्छिन्नतया तादृशाज्ञानोपा-

[1] श्रयान्तरव्या-ज.

### दीपनम्

कत्वेऽपि नाश्रयान्तर्भाव इति नात्माश्रय इत्युक्तम् । एवमभेदवाक्यार्थ-धीबाधपरिहाराय भेद[1]ज्ञानस्याप्यौपाधिकभेदविषयत्वेन प्रामाण्यं निर-

### पूरणी

देयत्वेऽपि प्रपञ्चमहत्त्वोपपत्त्या तेषां तत्प्रयोजकसंख्यादिमत्त्वाभावेन च यत्किंचिदज्ञाननाशेऽप्यविच्छेदप्रतिभासोपपत्तेः । नच प्रत्येकं कार्य-जननसमर्थानां प्रपञ्चजनने सापेक्षत्वासंभवः; दण्डादीनामपि प्रत्येकं यत्किंचित्कार्यजनकानामेव घटादिकार्ये समाहारदर्शनात् । साधारण-प्रपञ्चजननसामर्थ्यस्य प्रत्येकमसिद्धेश्च । प्रत्येकमुक्तिस्तु तत्तदसाधारण-कर्तृत्वादिप्रपञ्चनाशादिति सर्वं सुस्थम् । केचित्तु यत्किंचिदज्ञाननाशे खण्डप्रपञ्चान्तरमुत्पद्यते खण्डपटवदित्याहुः, तच्चिन्त्यम् प्रतिकल्प-मनेकजीवानां मुक्तिसंभवेन खण्डपरिमाणतारतम्यापत्तेः । न चेष्टापत्तिः; तुल्यवदेव भूपञ्चाशत्कोटिविस्तारादेः स्मरणात् । "धाता यथापूर्व-मकल्पयत्" इति श्रुतिविरोधात् । किं बहुना, इदानीं काश्यां मुमुक्ष्व-नुभूतघटादेस्तन्मरणानन्तरमणुत्वानुभवप्रसङ्गः । तथा च काशीविश्व-नाथलिङ्गमप्यणुत्वमापद्येत । अपि चावयवनाशेन खण्डद्रव्यान्तरोत्प-त्तिरसिद्धा; पटत्वाद्यवच्छेदेन क्लृप्ततुर्यादिहेतुं विना तदनुपपत्तेः । नच महाघटत्वावच्छेदेनैव तद्धेतुता, महापटोत्पत्तेः पूर्वं तत्प्रागभावेन द्वितन्तुकाखण्डपटस्वीकारेण तत्रापि तदहेतुत्वप्रसङ्गात् । नच पटध्वंसा-जन्यपटत्वमवच्छेदकम्; गौरवात्, अन्योन्याश्रयाच्च । सिद्धे खण्ड-द्रव्ये तदितरविशेषावच्छेदेन तद्धेतुता, तदितरविशेषावच्छेदेन तद्धे-तुत्वे च तादृशद्रव्यान्तरसिद्धिरिति संक्षेपः ॥

**नाश्रयेति** । जीवत्वस्य तदाश्रयतावच्छेदकत्वेऽपि वस्तुतस्तदु-पहितस्वरूपस्यैव तदाश्रयत्वादित्यर्थः । **प्रामाण्यमिति** । स्फटिकलौ-

[1] ज्ञानस्याविद्योपाधिक-च

तत्प्रयुक्तो जीवपरविभागश्च। एवं दृग्रूप आत्मनि कर्तृत्वाद्यध्यासोऽप्यन्तःकरणोपाधिकः, अहं [1]करोमीत्यनुभवात्। "स धीः स्वप्नो भूत्वेमं लोकमनुसंचरति" इति श्रुतेश्च। तस्मान्निरस्तसमस्तकर्तृत्वाद्यनर्थं निरतिशयानन्दात्मकचैतन्यं त्वंपदलक्ष्यजीवस्वरूपमविद्यया भिन्नमिव [2]कर्तृत्वादियुक्तमिव [3]च प्रतीयत इति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीनृसिंहाश्रमविरचिते तत्त्वविवेके प्रथमः परिच्छेदः॥

---

## दीपनम्

स्तम्। इदानीं जीवस्य नित्यमुक्ततावाक्यार्थधीबाधपरिहाराय प्राग्मिथ्यात्वेन निरूपितमपि कर्तृत्वादिभेदवदन्तःकरणोपाधिकमेवेत्याह—**एवमिति**। **सधीः** सान्तःकरणः। अन्तःकरणतादात्म्यापन्न इति यावत्। परिच्छेदार्थमुपसंहरति **तस्मादिति**॥

इति श्रीमत्परमहंसपरिव्राजकार्य श्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीनृसिंहाश्रमविरचिते अद्वैतरत्नकोशाख्ये तत्त्वविवेकदीपने प्रथमः परिच्छेदः॥

---

## पूरणी

हित्यादिप्रत्ययवत्तज्ज्ञानस्याप्रमात्वादित्यर्थः। **भेदवदिति**। आत्मभिन्नतया निरूपितज्ञानाश्रयान्तःकरणोपाधिकेत्यर्थः॥

इति श्रीज्ञानेन्द्रसरस्वतीश्रीचरणारविन्दनिरन्तरनिषेवकनिषेविणा श्रीरामान्वयप्रसूत द्वादशाहेज्वसूनुना अग्निहोत्रमनीषिणा विरचितायां तत्त्वविवेकटिप्पण्यामद्वैतरत्नकोशपूरण्यामाद्यः परिच्छेदः॥

---

[1] करोमीत्यध्यासा—क. छ. [2] कर्तृत्वादिगतिहेतुत्वाद्युक्तमिव—क. [3] तत्प्रतीयत—छ.

श्रीः

## द्वितीयः परिच्छेदः ॥

**अथ तत्पदार्थो ब्रह्म निरूप्यते । पदार्थावगमस्य**

---

## द्वितीयः परिच्छेदः ॥

### दीपनम्

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥

एवं "तत्त्वमसि" इति महावाक्यस्थत्वंपदार्थोऽधिकारी स्वरूपतया प्रथमं जिज्ञासितो निरूपितः । इदानीं तत्पदार्थनिरूपणाय परिच्छेदान्तरमारभ्यत इत्याह—**अथेति** । अथ वा यदि जिज्ञासासूत्रस्थाथातःशब्दाभ्यामधिकारिनिरूपणव्याजेन तस्याशनायादिरहितचैतन्यमात्रस्वरूपे तात्पर्यं निरूपितम्, तर्हि किमपरमवशिष्टं यदर्थं द्वितीयादिसूत्रमारभ्येतेत्याशङ्क्य, तस्याद्वितीय[1]ब्रह्मतत्त्वनिरूपणायेत्याह-**अथेति** । ननु वाक्यार्थ एव परमपुरुषार्थसाधनज्ञानविषयतया अज्ञाततया च निरूप्यताम्, किं पदार्थ[2]निरूपणेनेति, तत्राह— **पदार्थेति** ।

---

## द्वितीयः परिच्छेदः ॥

### पूरणी

पूर्वोत्तरग्रन्थयोः क्रमहेतुं दर्शयति—**एवं तत्त्वमसीति** । **जिज्ञासितः** व्युत्पाद्यः । जिज्ञासा चाधिकारिणः प्रथममिति तन्निरूपणानन्तरं प्रतिबन्धकजिज्ञासापगमलक्षणावसरसङ्गत्या महावाक्यार्थो निरूप्यत इत्यर्थः । नन्वाद्यपरिच्छेदस्याधिकारिस्वरूपनिरूपणपरत्वे तस्याशनाद्यतीतानन्दात्मकत्वादिप्रतिपादनवैफल्यम्, अनुपयोगादित्यनुशयादाह— **अथवेति** । तथा चाद्यद्वितीयादिसूत्रार्थतात्पर्यनिर्णयपरयोस्त-

---

[1] ब्रह्मत्वनिरू–घ. [2] वर्णनेनेति–ख.

**वाक्यार्थावगतिहेतुत्वात्। तच्चालौकिकमिति लक्षणप्रमाणाभ्यां निरूप्यते। तल्लक्षणं च भगवान् सूत्रकार आह "जन्माद्यस्य**

## दीपनम्

तद्धेतुतया पदार्थोऽपि निरूपणीय इति भावः। ननु पदं सर्वत्रानुवादकमेवेति प्रसिद्धार्थमेव, सत्यमन्यत्र, अत्र तु नैवमित्याह—**तच्चेति।** **अलौकिकं** प्रत्यक्षाद्यगोचरम्। तत्र—

"संभावितः प्रतिज्ञायां [1]पक्षः साध्येत हेतुना"

इति न्यायेन तटस्थलक्षणेन संभावितेऽर्थे प्रमाणं वक्तुं, ([2]सूत्रे लक्षणमाह), स्वरूपेण सकलप्रमाणागोचरस्य बुद्धिस्थत्वासंभवेन जगत्कारणतया हृदि कृत्वा तत्स्वरूपं प्रतिपादयितुं वा सूत्रे तटस्थलक्षणमाह—**तल्लक्षणं चेति।** नन्विदंशब्दस्य सन्निहितमात्रगोचरत्वात्कथं तन्मात्रकारणत्वं ब्रह्मलक्षणं स्यादिति शङ्कामाद्यस्येति पदविभागशङ्कां वा निराकर्तुं भाष्योक्त

## पूरणी

त्सूत्रक्रमादेव क्रम इति भावः। **ननु पदमिति।** ततश्च तदर्थप्रतिपादनवैफल्यमिति भावः। यूपाहवनीयादिपदवदलौकिकसंस्कारविशिष्टार्थत्वभ्रमं वारयति—**प्रत्यक्षादीति। संभावित इति।** वह्न्यादिसाध्यवत्तया पर्वतादौ धर्मिणि निर्दिष्टे सति तत्र हेत्वाकाङ्क्षायां तन्निर्देशः। अन्यथा प्रथमं तदुपन्यासस्यानाकाङ्क्षिताभिधानत्वेनाप्राप्तकालत्वादिति तदर्थः, एवमत्रापि ब्रह्मणि विवक्षितरूपेण निर्दिष्टे सति तत्र प्रमाणाकाङ्क्षायां तदुपन्यास इति प्रथमं लक्षणोपन्यास इत्यर्थः। ननु ब्रह्मणि वेदान्तवाक्यं प्रमाणम्। तच्च ज्ञानानन्दादिस्वरूपगोचरमिति स्वरूपलक्षणमेवादौ वक्तव्यं स्यात्, न तु तटस्थलक्षणम्; श्रुतेर्जगत्कारणत्वांशेऽनुवादकतया तद्रूपविशिष्टब्रह्मण्यप्रमाणत्वादित्याशङ्क्यादौ तदुपन्यासहेतुमाह—**स्वरूपेणेति।**

[1] पक्षे-ख. [2] सूत्रेण-घ.

यत" इति । अस्य प्रत्यक्षानु[1]मानाभ्यामुपस्थितस्य जगतो जन्मस्थितिभङ्गं यतो भवति तद्ब्रह्मेति ॥

## दीपनम्

सूत्रार्थमाह—**अस्येति** । इदंशब्दो हि प्रमाणमात्रसन्निधापितमर्थं परामृशति, न तु प्रत्यक्षेणैवेति प्रत्यक्षानुमानाद्युपस्थापितस्य वियदादेर्यज्जन्मादिकारणं तद्ब्रह्मेति सूत्रार्थः । आद्यस्येत्यत्र किमाद्यो हिरण्यगर्भो विवक्षितः, उताकाशः । नाद्यः ; हिरण्यगर्भस्य चेतनस्य स्वरूपेणोत्पत्त्यसंभवात्तदुपाधेश्च भौतिकस्याद्यत्वायोगात् । न द्वितीयः ; पवनादिपरिसंख्यायां ब्रह्मणस्तत्कारणत्वासिद्धेः श्रुतिविरोधाच्च । तत्सङ्ग्रहे वा भगवत्पादीय एव पदविभागो न्याय्य इति भावः ॥

ननु सूत्रे ब्रह्मशब्दाभावात्कथमिदं ब्रह्मलक्षणमित्याशङ्क्यानेन सूत्रेण [2]यस्य वाक्यस्यार्थो निरूप्यते तदेतस्य विषयो मूलभूतं वाक्यम् । तेन च ब्रह्मण एवोक्तलक्षणाभिधानात्तन्मूलभूतसूत्रस्यापि तदेवार्थं

## पूरणी

**न तु प्रत्यक्षेणैवेति** । सर्वनाम्नां लाघवेन बुद्धिस्थमात्रवाचकत्वादित्यर्थः । किमाकाशस्यैवेत्यवधारणमाकाशपदं [3]पवनादेरप्युपलक्षणं वा । नाद्य इत्याह—**पवनादीति** । **श्रुतीति** । "यतो वा इमानि" इति कृत्स्नभूतसृष्टिश्रुतेः "आकाशाद्वायुः" इत्यादिश्रुतेश्च बाधप्रसङ्गात् । द्वितीयाकाशादिशब्दानां तत्र तदवच्छिन्नब्रह्मपरतया ततो वाय्वादिसृष्टेः स्फुटं प्रतिपादनादित्यर्थः । द्वितीयं निरस्यति—**तत्सङ्ग्रह इति** । तथा सति लक्षणादोषप्रसङ्गादिति भावः ॥

[1] मानाद्युपस्थितस्य—छ. [2] यः स्ववाक्यस्य—क. [3] कालादे—झ.

"यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्ये

---

## दीपनम्

इत्याह—**यतो वेति**। "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति" इति वाक्य इत्यर्थः। ननु जन्मस्थितिलयानामेकैकनिरूपितं कारणत्वं लक्षणम्, उत समुदितनिरूपितं कारणत्वं वा। अन्त्ये व्यर्थविशेषणत्वम्। न हि वियदादिकारणत्वं ब्रह्मणोऽन्यत्र संभवति। आद्ये चादिपदं व्यर्थम्। न च जन्मादीनां [1] नानाकारणत्वे कारणं परिच्छिन्नतया ब्रह्म न स्यादिति त्रितयकारणत्व[2]मेव तल्लक्षणमिति वाच्यम्; तस्यैव जन्मादित्रितय[3]कारणत्वेऽपि तावन्मात्रस्यैव लक्षणत्वोपपत्तेः। न चोपादानकारणतासिद्ध्यर्थं ब्रह्मणो लयाधारता वक्तव्या, लोके उपादान एव कार्यस्य लयदर्शनादिति वाच्यम्; कालेऽपि तद्दर्शनात् सामान्यकारणत्वस्यैव तल्लक्षणत्वसंभवाच्च। किं चैवं

---

## पूरणी

ननु लक्ष्यभूताद्वितीयब्रह्मोपस्थित्यर्थं त्रितयकारणत्वं लक्षणमस्त्वित्याशङ्क्य निषेधति—**न च जन्मादीनामिति**। एवमपि व्यर्थविशेषणता दुर्वारेत्याह—**जन्मादीति**। ननु कालस्याप्यविद्यावच्छिन्नब्रह्मस्वरूपतयास्त्येवोपादानत्वमित्यनुशयादाह—**सामान्येति**। नन्वद्वितीयत्वलाभाय तदुपादानत्वमेव लक्षणं वाच्यमित्याशङ्क्याह—**किं चैवमिति**। ननु जन्मादिपदस्य जन्म आदिर्यस्येति तद्गुणसंविज्ञानबहुव्रीहितया द्वन्द्वादिवत्समाहारार्थत्वाभावात्कथमत्र तल्लाभ इत्य-

---

[1] कारणत्वे--**ख**. [2] मेव लक्षण—**ख**. [3] कारणतया—**घ**.

**जगत्कारणे ब्रह्मशब्दप्रयोगादिदं ब्रह्मलक्षणम् । तच्च ब्रह्माद्वितीयमिति ।[1] जन्मादिकारणत्वं प्रत्येकलक्षणमपि स्थित्यादिकारणत्वसमानाधिकरणमेव तदिति । सूत्रे जन्मादीति समाहारः । अन्यथा**

---

## दीपनम्

तद्वाचकमेव पदमस्तु, किं जन्मादिपदेन । अथ लक्षणत्रितयाभिप्रायेण त्रितयकारणत्वं विवक्षितमिति चेत्, एवं सति तेषां परस्परमेलनानपेक्षतया समाहारद्योतकनपुंसकैकवचने न स्यातामित्यत्राह––**तच्चेति** । **समाहारः** द्योतित इति शेषः । प्रत्येकमतिव्याप्त्यादि[2]दोषशून्यतया [3]कारणमात्रं लक्ष्यमुपस्थापयितुं शक्तमपि मिलितमेव विधेयब्रह्मतान्वययोग्याद्वैतकारणोपस्थापनसमर्थमिति त्रितयकारणत्वमेव लक्षणमित्यर्थः । **अन्यथेति** ॥

---

## पूरणी

त्राह––**द्योतित इति** । यद्यप्युक्तबहुव्रीहिणा जन्मादित्रितयमेव लभ्यते, तथापि तेषां बहुत्वेन जन्मादय इति पुंलिङ्गबहुवचननिर्देशे कार्ये नपुंसकैकवचननिर्देशस्तस्य समाहारनियतत्वात्तद्द्योतनाय । न चैकवचनस्यैकत्वार्थकत्वाद्बहूनां च स्वत एकत्वासंभवेन समाहृतरूपेणैव तदेकत्वमेकवचनं मुख्यवृत्त्या प्रतिपादयतीति कथं द्योतनोक्तिरिति वाच्यम्; एकवचनस्यैकत्वमात्रशक्ततया समाहारांशस्य प्रकृते तदाक्षेपलभ्यत्वेन द्योतनोक्तेः । समाहारश्च समासप्रतिपाद्यानां जन्मादीनां त्रयाणामप्यन्यपदार्थत्वादिति द्रष्टव्यम् । **विधेयेति** । जगत्कारणानुवादेन

---

[1] जगज्जन्मादिकारणत्वं–**ख**. [2] दूषणरहिततया–**घ** [3] कारणतामात्रं–**ख**.

## दीपनम्

[1]एवमिहाभिसंहितम्—यतो वेत्यादिवाक्येन हि वियदादिकारणानुवादेनानवगतवचनार्थैकत्वप्रतिपादनपूर्वकं तस्य "तद्ब्रह्म" इति ब्रह्मत्वं [2]सर्वात्मतायोग्यत्वं प्रतिपाद्यते । ब्रह्मपदाभिधेयं च [3]ब्रह्मत्वं [4]सर्वात्मतायोग्यत्वमित्यनन्तरमेव वक्ष्यति । तत्र यद्येकैककारणत्वमात्रं

---

## पूरणी

विधेयं यद्ब्रह्मत्वं तदन्वययोग्यं यत्तस्याद्वैतमद्वितीयत्वं तदेव तदन्वये कारणं प्रयोजकं तदुपस्थापनसामर्थ्यं वक्ष्यमाणरीत्या त्रितयकारणत्वस्यैवेत्यर्थः । नन्वत्र कथमद्वितीयब्रह्मण एव लक्ष्यत्वमित्यत्राह— **एतदिहेति । अनवगतेति ।** क्षित्यादिकं सकारणकं, कार्यत्वादित्यनुमानसिद्धजगत्कारणानुवादेन जगदुत्पत्त्यादिकारणानां लोके एकत्वानवगमेन तदेकत्वप्रतिपादनपूर्वकं ब्रह्मत्वं विधीयते । नन्वेवं तदेकत्वं विधेयं ब्रह्मत्वमपीति विधेयभेदाद्वाक्यभेदः, किं च येनेत्येकवचनेनैकत्वार्थावगमेऽपि यत इत्यस्य द्विबहुत्वसाधारणतया कथमेकत्वावगम इति चेन्न; येनेति स्फुटतरैकवचनान्तसमभिव्याहारेण ततोऽपि तदर्थस्यैव लाभात् । समासतद्धितादिवृत्तावेकत्वार्थावगमस्यैव स्वारसिकत्वेन भाष्यकारादिभिरुपपादनाच्च । नापि विधेयभेदेन वाक्यभेदः; तद्गततयैकत्वब्रह्मत्वयोर्विशिष्टरूपेण विधेयत्वात् । यद्वा "तद्विजिज्ञासस्व" इति तत्पदान्तेन पूर्वपदजातेन जगत्कारणानुवादेन तदित्येकवचननिर्दिष्टैकत्वं विधीयते पश्चाद्वाक्यैकवाक्यतया तदेकत्रितयकारणोद्देशेन ब्रह्मत्वाविधिरिति न काप्यनुपपत्तिः । तदेतदाह **एकत्वप्रति-**

---

[1] एतदिह—**घ.** [2] सर्वाधारतायोग्य-**घ.** [3] बृहत्वं. [4] सर्वात्मतया योग्य—**क.**

## दीपनम्

लक्षणं स्यात्तर्हि तदनुवादेन न [1]ब्रह्मत्वं प्रतिपादयितुं [2]शक्यते। स्थितिकारणस्य जन्मकारणाभेदपरिज्ञानं विना तस्य सर्वात्मतायोग्यताज्ञानासंभवात्। तथा च यद्ब्रह्मप्रतिपत्तावुपयुक्तं कारणत्वं तदेव [3]ज्ञापकतया तल्लक्षणम्। एकैकनिरूपितकारणतायाश्च त्रितयनिरूपितकारणता भिन्नेति न व्यर्थविशेषणत्वम्। अथ वा त्रीण्येवेमानि लक्षणानि। एवमपि न समाहारद्योतकलिङ्गवचनानुपपत्तिः। स्थित्यादिकारणताद्वयसमानाधिकृतस्यैव जन्मादिकारणत्वस्याद्वैतब्रह्मोपस्थापकत्वसंभव इति परस्परसमाहारापेक्षणादिति ॥

नन्विदं लक्षणवाक्यं न जगत्कारणस्वरूपपरम्; तस्यानुमानादेव सिद्धेः, किं तु तस्मिन् ब्रह्मसंज्ञाविधिपरम्। संज्ञाविधेश्च तच्छब्देन ब्रह्मानूद्योपासनाविधिः प्रयोजनमिति, न; अनुमानाद्ब्रह्मस्वरूपानिर्णयस्य वक्ष्य-

---

## पूरणी

पादनपूर्वकमिति। ननु नात्र कारणताभेदः; कार्यप्रतियोगिकभेदाभावात्। न च त्रित्वैकत्वरूपकार्यात्मकप्रतियोगितावच्छेदकभेदात्तदवच्छिन्नकारणताभेदः यो वह्निव्याप्यवान् स वह्निमानिति सामान्यव्याप्तिवदिति वाच्यम्; त्रितयनिरूपितकारणतायाः पृथग्युगपद्ग्रहेण तदवच्छिन्नकारणतान्तरे मानाभावत्। प्रत्येककारणतात्रयेण तथा प्रतीत्युपपत्तेश्चेत्यनुशयादाह—**अथ** **वेति**। इतरव्यावृत्त्यादिलक्षणकार्यकरत्वं प्रत्येकमेव। अद्वितीयब्रह्मोपस्थापनांशे तु सापेक्षत्वमिति भावः। **तच्छब्देन** ब्रह्मशब्देन। [4]ब्रह्मैवाद्वितीयमित्यादिविधिरित्यर्थः। नन्वनुमानेन ज्ञानानन्दादिस्वरूपनिर्णयाभावेऽपि जगत्कारणत्वावच्छिन्न-

---

[1] बृंहत्वं—क. [2] शक्यं तत्स्थिति—च. [3] तज्ज्ञापक—च. [4] ब्रह्मोपासीतेत्यादि—झ.

## दीपनम्

माणत्वात संज्ञाविधेः प्रयोजनाभावाच्च । उपासनायाः सूत्रकारेणैव समन्वयसूत्रे निरस्तत्वात् । ब्रह्मशब्दस्य स्वार्थपरत्वे संभवति संज्ञालक्षणाया अन्याय्यत्वात् किं च संज्ञापि देवदत्तादिपदवदर्थनिरपेक्षा न सांकेतिकी; अपौरुषेयवेदे सङ्केतयितुरभावात् । नापि गवादिशब्दवदौत्पत्तिकी ; तदभिधेयस्य सर्वात्मतायोग्यत्वाभावे जगत्कारणे ब्रह्मशब्दासंभवात् ॥

ननु जगत्कारणे रूढोऽयं शब्दः, अलौकिकस्यापि यूपादिशब्दवद्वेद एव शक्तिग्रहोपपत्तेरिति चेत् , तत्र न तावज्जगत्कारणत्वं प्रवृत्तिनिमित्तम् ; केवलब्रह्मपदात्तदप्रतीतेः प्रलयादौ तदभावाच्च । नच तद्योग्यता तदाप्यस्तीति वाच्यम् ; तर्हि [1]तन्निरूपकस्वरूपस्यैव तत्प्रवृत्तिनिमित्तत्वे संभवति कारणत्वस्यातदर्थत्वात् । न वा

---

## पूरणी

निर्णयोऽस्त्येव, अन्यथा तदनुवादायोगादित्यनुशयादाह— **संज्ञाविधेरिति** । नन्वयमस्मत्कुलनिबन्धनः सङ्केत इत्याशङ्क्याह— **ब्रह्मशब्दस्येति** । संज्ञाविधिपरत्वे तच्छब्दः संज्ञात्वेन [2]विधीयत इति शब्द एव लक्षणया शब्दपरो वाच्यः । तच्च गत्यन्तरे सति न युक्तमित्यर्थः । **तदभिधेयस्येति** । ब्रह्मशब्दाभिधेयमन्तरा तत्र तत्संज्ञायास्तदर्थाविनाभावलक्षणौत्पत्तिकत्वायोगादित्यर्थः । **तन्निरूपकेति** । योग्यतावच्छेदकस्वरूपस्येत्यर्थः । ननु किमिति स्वरूपमेव तदवच्छेदकं, धर्मान्तरमेव तथास्त्वित्यत्राह—**न चेति** । तस्य

---

[1] तन्निरूपित—च.  [2] विधेय—ङ.

**अद्वयब्रह्मधर्मत्वासंभवात् । लक्ष्यस्य चाद्वयत्वं ब्रह्मशब्दादवगम्यते, तत्रैव ब्रह्मशब्दाभिधेयवृद्धिरूप[1]बृहत्त्वस्य पर्यवसानात् । न च नदीपूरस्येव वृद्धिरवयवोपचयः, आकाशस्येव [2]बृहत्त्वं परिमाणविशेषो वास्त्विति वाच्यम् ; "निष्कलम्" "अस्थूलं" इत्यादिश्रुतिभिर्ब्रह्मणि तदभावस्य सिद्धत्वात् ।**

## दीपनम्

सर्वात्मतायोग्यस्वरूपव्यतिरेकेण कारणत्वनिरूपकं स्वरूपमस्ति । एतेन लक्षणस्य तत्तदसाधारणपदैर्लक्ष्यव्यवहारः प्रयोजनमिति ब्रह्मलक्षणवाक्यस्याप्यस्य ब्रह्मशब्देन व्यवहारसिद्धिः प्रयोजनमिति निरस्तम् ; लक्षणवाक्यस्य लक्ष्यस्वरूपप्रतिपादकतया तत्परत्वे संभवति व्यवहारपरत्वकल्प[3]नायोगाच्च । तच्च लक्ष्यस्वरूपं ब्रह्मशब्दसामर्थ्यादद्विती[4]यमेवेत्यभिप्रेत्याह—**लक्ष्यस्य चेति** । बृहिधातुर्हि वृद्धिमभिधत्ते, वृद्धिश्चात्र स्वरूपोपचयः, स च सर्वात्मतायोग्यतैवेति त्रिविधपरिच्छेदशून्यं ब्रह्मशब्दाभिधेयं लक्ष्यमित्याह—**तत्रैवेति** । निर्गताः कला अवयवा यस्मात्तदनंशं

## पूरणी

निर्धर्मकत्वादिति भावः **एतेनेति** । व्यवहारनिमित्तमन्तरा ब्रह्मशब्दस्य व्यवहारासंभवेनेत्यर्थः । **लक्षणस्येति** । गन्धवती पृथिवीत्यादिवाक्यस्य गन्धवद्वस्तु पृथिवीशब्देन व्यवहर्तव्यमिति प्रतिपादनद्वारा लक्षणरूपावच्छिन्नवस्तुनि लक्ष्यशब्देन व्यवहारसिद्धिः प्रयोजनमित्यर्थः । लक्षणादोषादपि लक्षणवाक्यस्य नायमर्थ इत्याह— **लक्षणेति । त्रिविधेति** । देशतः कालतो वस्तुतश्चेत्येवं परिच्छेदत्रितयशून्यमित्यर्थः । **कला अवयवा इति** । यद्यपि "इमाः षोडश

[1] बृंहत्वस्य—**ग. च.** [2] बृंहत्वं—**क. छ.** [3] नासंभवाच्च—**घ.** [4] यवदेवे—**च.**

**आकाशादौ परिमाणविशेषाश्रयत्व[1]योग्यतालक्षणघटपर्वतादिव्यावृत्तस्वरूपोपचयाभावे तस्यासंभवेन स्वरूपोपचयस्यैव तदर्थत्वात् । नन्वेवमप्याकाशविलक्षणस्वरूपोपचयस्य निर्वक्तुमशक्यतया आकाशसदृशमेव ब्रह्मेति चेन्न; स्वरूपोपचयो हि**

---

## दीपनम्

निष्कलश्रुत्यर्थः । नन्वेवमाकाशादौ परिमाणविशेषवाचिबृहच्छ[2]ब्दो जगत्कारणे लाक्षणिकः स्यादित्याशङ्क्य आकाशादावपि स्वरूपोपचय एव बृहच्छब्दार्थो न परिमाणविशेष इत्याह—**आकाशादाविति । तस्य** परिमाणविशेषस्य **असंभवेन** हेतुना । तथा च स्वरूपोपचयो वक्तव्य इति भावः । फलितमाह—**स्वरूपेति । आकाशसदृशमिति ।** तथा च ब्रह्मशब्दाभिधेयमद्वितीयं न स्यादित्यर्थः । किमाकाशविलक्षणस्वरूपोपचयो निर्वक्तुमशक्य इति ब्रह्मशब्दाभिधेयमाकाशसदृशमित्युच्यते, उत स बाधित इति, नाद्य इत्याह—**स्वरूपेति ।** पटस्य हि स्वावयवापेक्षया विलक्षणः स्वरूपो-

---

## पूरणी

कलाः पुरुषायणा" इत्यादौ कलाशब्दः प्राणाद्यर्थको दृष्ट इति तदसंबन्धित्वमेव ब्रह्मणो लभ्यते न तु निरवयवत्वम्, तथापि कलाशब्दस्य मुख्यवृत्त्यैकदेशवाचित्वात्तत्रापि प्राणादिषु कथंचिल्लक्षणया प्रयोगान्मुख्यावयवशून्यत्वमेव तदर्थ इति भावः। वस्तुतस्तु कौटस्थ्यध्रुवत्वादिश्रुतिविरोधः; सावयवस्य तदसंभवादिति द्रष्टव्यम् । परिमाणविशेषासंभवस्य स्वरूपोपचयबृहच्छब्दार्थे हेतुत्वेनान्वयाद्भेदेन योजयति— **असंभवेन हेतुनेति** ॥

---

[1] योग्यता घटपर्वतादि–**छ**, योग्यघटपर्वतादि–**ग**. [2] ब्दो लाक्षणिक–**घ.**

[1]युगपदनेकानिरूपितसंबन्धा[2]श्रयत्वयोग्यत्वम्। इदं चाकाशादाव-नेकदेशनिरूपितयत्किंचित्संबन्धाश्रयत्वेन; न तु यावत्संबन्धा-श्रयत्वेन; तद्देशीयघटादिवृत्तिसंबन्धस्याकाशेऽभावात्। सर्वात्मके तु सोऽप्यस्त्येवेति भवतु सर्वात्मकं वस्त्वाकाशव्यावृत्तोपचितस्व-

## दीपनम्

पचयः प्रतीयते। स च तस्य तन्त्वधिकरणीभूतभूतलावयवाधिकतदवयव-निरूपितसंयोगाश्रयत्वयोग्यत्वम्। एवं पटापेक्षया कुड्यादेरप्यधिक-देशनिरूपितसंयोगाश्रयत्वयोग्यतैव स्वरूपोपचय इत्यर्थः। ततः किं तत्राह—इदं चेति। आकाशादिर्हि भूतलादियावत्तदवयवनिरूपित-संयोगाश्रयोऽपि न तेषां परस्परनिरूपितसंयोगाश्रयः; तस्य ततो भेदात्। सर्वात्मकं तु वस्तु तस्याप्याश्रय इति भवति तन्निरवधिकोपचितस्वरूप-मिति नाकाशाविलक्षणस्वरूपोपचयानिर्वचनम्। यद्यपि कालः सर्वाधारः सर्वसंयोगाश्रयस्तथापि तस्य निरूपकतया तदाश्रयत्वं नेति भवति सर्वात्मकं वस्तु ततो विलक्षणमिति भावः। फलितमाह—

## पूरणी

**निरूपकतया** भासकतया। सत्तानिरूपकतयेत्यर्थः। सन् घटः स्फुरतीत्यादौ चैतन्यस्य प्रपञ्चसत्तानिरूपकत्वमधिष्ठानसत्ताव्यति-रेकेण कार्यसत्ताविरहात्। कालस्य तु नैवं तत्सत्तानिरूप-कत्वम्; कालसत्ताया अपि तेनैव निरूपणात्। तथा च तत्सत्तानिरूपकत्वे सति यावत्तत्संबन्धाश्रयत्वं निरवधिकस्वरूपोपचय इत्यर्थः। न चैवं तत्सत्तानिरूपकत्वमात्रमेव स्वरूपोपचयोऽस्तु, अधिकं व्यर्थमिति वाच्यम्; तत्सत्तानिरूपकत्वं हि तत्सत्तात्मकत्वम्।

[1] युगपदनेकदेशनिरू—ख. छ. [2] श्रययोग्य—ग.

रूपम्। ततः सर्वात्मकं वस्तु निरवधिकमहत्। आकाशादिकं तु सावधिकम्। शब्दश्चोपपदादिबाधकाभावे निरपेक्षमेवार्थं प्रतिपादयति न सापेक्षमिति ब्रह्मशब्दात् त्रिविधपरिच्छेदशून्यवस्तु-

---

## दीपनम्

—तत इति। ततोऽपि किं तत्राह—शब्दश्चेति। सापक्षबृहत्त्वं[1] हि अपेक्षणीयोपस्थितिमपेक्ष्यैव शब्दो बोधयतीति शब्दात्तदुपस्थितिर्विलम्बिता[2], निरवधिकमहत्त्वं त्वपेक्षणीयाभावाच्छब्दात् झटित्येवावगम्यत इति तदेवोत्सर्गतः शब्दार्थः। बृहन् कुम्भः पर्वत इत्यादौ तु परिच्छिन्नार्थवाचककुम्भाद्युपपदाद्यनुरोधेन तदपोद्यते। न चात्र सङ्कोचकं किञ्चिदुपपदादिकमस्तीति निरपेक्षोपस्थितिकं सर्वात्मत्वयोग्यतारूपं निरवधिकमहत्त्वमेव ब्रह्मशब्दार्थ इत्यर्थः।

---

## पूरणी

तच्च परमतसिद्धसत्ताजातावप्यस्तीत्यग्रिमविशेषणसार्थक्यादिति भावः। बृहन् कुम्भ इति। तथा च बृहच्छब्दः सर्वत्रापि मुख्य एव, स्वरूपोपचयमात्रस्य तदर्थत्वात्। नच स्वरूपोपचयत्वं नाम नानुगतं सामान्यं, किं तु तत्तद्व्यक्तिस्वरूपम्, तथा चाननुगतनानाव्यक्तिषु शक्तिग्रहासंभव इति वाच्यम्; अधिकसंबन्धाश्रयत्वयोग्यताया एव प्रवृत्तिनिमित्तत्वात्। सर्वत्र बृहच्छब्दविषये यत्किंचिदवधिकाधिकसंबन्धघटितायास्तस्याः संभवात्। यद्यपि योग्यतापि स्वरूपमेव तथापि तेन रूपेण प्रतियोग्यभावशब्दादौ प्रतियोगित्वादिवत्तन्निमित्तत्वाविरोधादिति

---

[1] बृहत्वं–घ. [2] विलम्बते–च.

**सिद्धिः। ननु भेदग्राहिप्रत्यक्षविरोधात्सङ्कोच एव न्याय्य इति चेन्न;** [1] **रजतादेरिव प्रत्यक्षादिदृष्टस्यापि प्रपञ्चस्य स्वाधिष्ठानापरिच्छेदकत्वात् ॥**

**किं च "अथातो ब्रह्मजिज्ञासा" इति सूत्रे यस्य ब्रह्मणो जिज्ञासा [2] प्रतिपादिता तस्यैवेदं लक्षणम्, विचार्यत्वेनाप्रतिज्ञातस्य लक्षणायोगात्। प्रतिज्ञा चाद्वयस्यैव। अनात्म-**

## दीपनम्

द्वितीयं शङ्कते—**नन्विति**। प्रत्यक्षेत्युपलक्षणं, यत इत्यादिवाक्यस्थभूताद्युपपदसमभिव्याहारादपीत्यर्थः। **रजतादेरिति**। प्रपञ्चस्य रजतादिसाम्यं च वक्ष्यत इत्यभिप्रायः। एवं चाध्यस्तस्याधिष्ठानात्तत्त्वतो भेदाभावान्न तेन ब्रह्म परिच्छिन्नमित्यर्थः ॥

एवमुक्तविधया तर्किते गृहीतसङ्गतिकलक्ष्यब्रह्मपदसामर्थ्याल्लक्ष्यमद्वितीयमित्युक्तम्। सम्प्रति जिज्ञासासूत्रसामर्थ्यादपि तदाह—**किं चेति**। ननु जीवभिन्नेश्वरस्यैव प्रतिज्ञास्तु, तत्राह—**अनात्मेति**। जीवस्वरूपातिरिक्तब्रह्मणोऽनात्मत्वमेव, अहमनुभवे प्रकाशमानचैतन्यस्यैवात्मत्वात्। न चात्मत्वं जातिः, सा च जीवस्वरूपातिरिक्तेऽप्य-

## पूरणी

भावः। **ननु भेदग्राहीति** मूलम्। घटपटादीनां विलक्षणार्थक्रियाकारितया भेदेन प्रत्यक्षसिद्धत्वात् वस्तुपरिच्छेदराहित्यमसंभवीत्यर्थः। **भूताद्युपपदेति**। सर्वथा अभेदे कार्यकारणभावासंभवादित्यर्थः। **एवं चेति**। स्वसमानसत्ताकवस्त्वन्तरवत्त्वं वस्तुपरिच्छेदः, स च ब्रह्मणि नास्त्येव; प्रपञ्चस्य कल्पितत्वात्। अत एव कल्पित[3]भिन्नप्रपञ्चसत्त्वान्न कार्यकारणभावानुपपत्तिरपीति भावः। **तर्कित इति**।

[1] रजतादेर्दृष्टप्रपञ्चस्यापि सर्वश्रेष्ठात्मापरिच्छेदकत्वात्.—क. [2] प्रतिज्ञाता—ग. छ. [3] भेद-

विचारेणाधिकारिणः प्रयोजनाभावेन तत्प्रतिज्ञायोगात् ।

---

## दीपनम्

विरुद्धेति वाच्यम्; एकात्मव्यक्त्यैव निखिलव्यवहारोपपत्तौ तज्जातौ प्रमाणाभावात् । किं च जातिरपि दुःखादिव्यङ्ग्या कथं तच्छून्ये स्यात् । आत्मत्वस्यैव दुःखसमवायिकारणतावच्छेदकत्वात् । नच जीवत्वमेव तत्कारणतावच्छेदकमिति वाच्यम्; लाघवाज्जातेरेव तथात्वात् विनिगमकाभावाच्च । न चैवमीश्वरस्य नित्यमुक्तताप्रतिपादकशास्त्रविरोधः, तस्यान्यथाप्युपपत्तेरिति भावः । अथ वा अनात्मनः स्वस्मादन्यस्येत्यर्थः । **प्रयोजनेति** । ततो मोक्षस्यासंभवादित्यर्थः ।

---

## पूरणी

उक्तरीत्या संभावितसर्वात्मतायोग्यवस्तुनि गृहीतसङ्गतिकं यल्लक्ष्यपरं ब्रह्मपदं तत्सामर्थ्यादित्यर्थः । ननु जीवत्वमप्यात्मत्वावान्तरजातिरेवेत्यत आह—**विनिगमकेति** । एवमपि जीवत्वस्यैव तत्समवायिकारणतावच्छेदकत्वे न किञ्चिद्विनिगमकम्; उभयोरपि जातिरूपतया लाघवसाम्यात्, प्रत्युतात्मत्वस्य सामान्यरूपतया तत्रैव प्रमाणप्रवृत्तेर्न्याय्यत्वाच्चेत्यर्थः । **तस्यान्यथेति** । चिरमुक्तजीवपरत्वेनापीत्यर्थः । अथ वा अस्मदभिमतरीत्यापीत्यर्थः । तच्छास्त्रबलेनास्मदभिमतमेवाभ्युपगन्तुं युक्तमिति भावः । ननु नाहमनुभवे प्रकाशमानत्वमात्मत्वप्रयोजकम्; देहाहङ्कारादेरपि तथात्वापातात्, किं त्वात्मशब्दो जीवे रूढोऽभ्युपगन्तव्यः। सा च परमात्मन्यपि "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इत्यादौ तच्छब्दप्रयोगात्तुल्या । यदि चात्मशब्दस्य योगादेव सर्वव्यापित्वविशिष्टवस्तुनि वृत्तिः सापि परमात्मनि समानेत्यनुशयादाह—**अथवेति** । **मोक्षस्येति** । स्वभ्रममूलानर्थस्य परसाक्षात्कारान्निवृत्तेरसंभवादित्यर्थः ॥

**नचोपासनासिद्ध्यर्थं तद्विचार इति वाच्यम्; ब्रह्मण उपासनाशेषत्वे प्रमाणाभावेन स्वरूपासिद्धेः। वेदान्तानां विधिपरत्वात्। न चान्यद्ब्रह्मणि प्रमाणमस्तीति वक्ष्यते। नच भिन्नस्य ब्रह्मणो मानान्तराविरोधाद्देवताविग्रहवत्तत्सिद्धिरिति वाच्यम्; जीवाति-**

---

## दीपनम्

उपासनयैव मोक्ष इति मतमाशङ्क्याह—**न चेति**। अस्मिन्पक्षे ब्रह्मणि प्रमाणाभावेन जिज्ञासैव न स्यादित्याह—**ब्रह्मण इति**। किमुपासनावादिनो ब्रह्मणि वेदान्ताः प्रमाणम्, किं वान्यत्। नाद्यः; विधिपरात्त[1]दन्यसिद्ध्यसंभवात्। नच वेदान्तानां तत्रापि तात्पर्यम्; वाक्यभेदप्रसङ्गादित्याद्यं दूषयित्वा द्वितीयं दूषयति—**न चान्यदिति**। नन्वन्यपराच्छब्दादद्वैतं ब्रह्म परं न सिद्ध्यति, मानान्तरविरोधात्, तटस्थं तु ब्रह्म किमिति न सिद्ध्यतीत्याशङ्क्याह—**न चेति**। भिन्नस्यापीश्वरस्य सार्वज्ञ्यं वक्तव्यम्, अन्यथा [2]तस्येश्वरत्वायोगात्; तच्च नानुमानादिति वक्ष्यति। नाप्यन्यपरश्रुत्या; मानान्तरविरोधादित्यभिप्रेत्याह—**जीवेति**। वैयर्थ्यादपि नोपासनापरत्वं शास्त्रस्य; स्वर्गादेर्विरक्तस्यैव [3]ब्रह्मणि जिज्ञासाधिकारेण तस्य स्वर्गादिफलकत्वायोगात्, नापि मोक्षस्तत्फलम्; [4]उपासनायां सर्वेषां पुरुषाणामेकरूपत्वासंभवात्,

---

## पूरणी

**वाक्यभेदेति**। ननूपासनाविध्याक्षेपादेव तद्रूपब्रह्मसिद्धिरस्त्विति चेन्न; अन्नं ब्रह्मेत्युपासीतेत्यादावन्नस्य ब्रह्मभावमन्तरापि तदुपासनादर्शनेनोपासनाया अर्थव्यभिचारितया तद्विषयार्थाकल्पकत्वा-

---

[1] दन्यविध्य—घ. [2] तदीश्वरत्वा—घ. [3] ब्रह्मजिज्ञासा—घ. छ. [4] उपासनायाः—घ. छ.

रिक्तस्य ज्ञानानधि[1]करणत्वव्याप्त्यनुगृहीतया "नान्तःप्रज्ञं न बहिःप्रज्ञम्" "केवलो निर्गुण" इत्यादिश्रुत्या विरोधेन सार्वज्ञासिद्धेः। मोक्षस्योपासनासाध्यत्वे स्वर्गादिवत्साति-शयत्वाद्यापत्तेर्निरतिशयपुरुषार्थकामनागोचरो न स्यात्।

## दीपनम्

कश्चिद्धि मासमात्रमुपासनां कुर्वन् संस्थितो भवति, अपरस्तु संवत्सरम्, एवमन्योऽप्यधिकं कालम्, एवं विषयतोऽप्युपचयः, नच साधनोपचयापचययोः फलमेकरूपं संभवतीत्याह—**मोक्षस्येति**। अनित्यत्वमादिशब्दार्थः। ततः किं तत्राह—**निरतिशयेति। गोचरः**

## पूरणी

दिति भावः। **नान्तः प्रज्ञमिति** मूलम्। अन्तर्बहिर्गोचरज्ञानशून्य-तायास्तच्छ्रुतेरवगमादित्यर्थः। सिद्धान्ते तु चिद्रूपजीवाभिन्नतया ब्रह्मणश्चिद्रूपत्वसिद्धेः "नान्तःप्रज्ञं"इत्यादिश्रुतिर्ब्रह्मणः सर्वात्मक-तया तदान्तरबाह्यवस्तुभेदाभावात्तद्गोचरज्ञाननिवृत्तिपरा अन्तर्बहि-रिन्द्रियजन्यज्ञानशून्यतापरा वेति न विरोध इति भावः। **एवं विषयत इति**। कश्चिदन्नादिकं ब्रह्मतयोपास्ते कश्चिच्चात्मानमिति उपासना-विषयवैलक्षण्यादपि तद्वैलक्षण्यमित्यर्थः। अथ वा विषयो देशः। नदीतीराद्युपासनादेशवैलक्षण्यादपि तद्वैरूप्यमित्यर्थः। मोक्षस्तादृश-कामनाविषयो न स्यादित्यापादने निरतिशयपुरुषार्थशब्दस्य मोक्षार्थतया स तत्कामनाविषयो न स्यादित्यर्थेऽनन्वयः तदनित्यत्वापत्तेर्हेतुत्वा-लाभश्च। अनित्यस्वर्गादिरपि कामनाविषयो न स्यादित्यशङ्क्यान्यथा व्याचष्टे—**गोचरः साध्य इति**। मोक्षकामिनः उपासनायां प्रवृत्तिर्न

[1] करणत्वात् व्याप्त्य–ख.

अक्षय्यफलचातुर्मास्यान्मुमुक्षोरवैराग्यप्रसङ्गाच्च। नच जीवगतकर्तृत्वादिभ्रमनिवृत्त्यर्थं तटस्थब्रह्मजिज्ञासेति वाच्यम्; अन्यविषयज्ञानादन्यविषयभ्रमानिवृत्तेः; परोक्षज्ञानादपरोक्षभ्रमानिवृत्तेश्च। न चान्यात्मनि प्रत्यक्षं सम्भवति। नच जीवस्यैव जिज्ञासा; तत्र ब्रह्मशब्दविरोधात् जीवस्य प्रत्यक्षादिना निर्णयात् तत्र लक्षणसूत्रायोगाच्च। तस्माज्जीवगतानर्थभ्रमनिवृत्त्यर्थं तदभिन्नमज्ञातं ब्रह्म जिज्ञास्यमिति तस्यैवेदं लक्षणम्॥

## दीपनम्

साध्यः। उपासनारूपो धात्वर्थ इति शेषः। सातिशयत्वे दूषणान्तरमाह—**अक्षय्येति**। तटस्थं भिन्नम्। अभ्युपेत्याप्याह—**परोक्षेति**। **प्रत्यक्षं** अन्यस्येति शेषः। **जीवस्येति** कर्मणि षष्ठी। **तत्र** जिज्ञासासूत्रे। द्वितीयसूत्रमपि [1]तस्मिन्नानुगुणमित्याह—**तत्र लक्षणेति**। तस्य ब्रह्मव्यावृत्तरूपेण जगत्कारणत्वानुपपत्तेरित्यर्थः॥

## पूरणी

स्यात्, तस्या निरतिशयपुरुषार्थमुक्तिसाधनत्वायोगादिति तदर्थ इति भावः। **सातिशयत्व इति**। मोक्षस्य सातिशयत्वे अक्षय्यचातुर्मास्यसुकृतसाध्यस्वर्गान्मुमुक्षोर्विरक्तिर्न स्यादिति भावः। ननु परमात्मापि परस्य प्रत्यक्ष एवेत्याशङ्क्याह—**अन्यस्येति**। वस्तुतस्तु जीवब्रह्मभेदस्य पूर्वं निराकृतत्वान्न द्वितीयब्रह्मलक्षणशङ्कापीति [2]स्मर्तव्यम्। ननु ब्रह्मशब्दस्योपचितस्वरूपवाचकत्वाज्जीवस्यापि व्यापित्वात्तत्रापि तच्छब्दप्रवृत्त्युपपत्तिरित्यनुशयादाह—**जीवस्येति** मूले। निर्णीतार्थे च जिज्ञासानुपपन्नेति भावः। ननु जीवस्यापि ब्रह्माभिन्नतया जगदुपादानत्वं संभवतीत्यत्राह—**तस्य ब्रह्मेति**। ननु त्वत्पक्षेऽपि द्वितीयादि-

[1] अस्मिन्ननुगुण–घ. छ. [2] तत्त्वम्–झ.

## जगत्कारणत्वाक्षेपः

**ननु किमिदं जगत्कारणत्वम्, न तावत्तत्कर्तृत्वम्; मिथ्यावस्तुनो भावविलक्षणस्य ध्वंसवत्सकर्तृकत्वायोगात्। कर्तृत्वमपि न तावदुपादानापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्; पूर्णानन्दे ब्रह्मणि स्वेष्टसाधनताज्ञानाभावेन चिकीर्षाप्रयत्नयोर-**

### दीपनम्

एवं [1]लक्षणसूत्रपर्यालोचनया अद्वितीयस्यैव ब्रह्मण इदं लक्षणमित्युपपादितम्। इदानीं तत्परिशुद्ध्यर्थमाक्षिपति—**नन्विति**। किं ब्रह्मणो जगतः कर्तृत्वं लक्षणमुतोपादानत्वमुभयं वेति किंशब्दार्थः। **भावेति** सिद्धान्तरीत्योक्तम्। नच भावविलक्षणस्याप्यभाववैलक्षण्यात्सकर्तृकत्वमिति वाच्यम्; लाघवेन भाव[2]कार्यस्यैव तत्प्रयोजकत्वादिति भावः। **स्वेति**। स्वस्य यदिष्टं तत्साधनत्वज्ञानाभावेनेत्यर्थः। ननु परमकृपालोः स्वेष्टसाधनत्वज्ञानाभावेऽपि परदुःखनिवृत्त्युपायचिकीर्षादि दृष्टमिति चेन्न; परदुःख दृष्ट्वा यो दुःखीभवति [3]स एव हि कृपालुः स्वदुःखनिवृत्तये

### पूरणी

सूत्रमननुगुणमेव, अद्वितीयब्रह्मणो जिज्ञास्यत्वात् बिम्बत्वोपहितद्वितीयब्रह्मणश्च जगदुपादानतया लक्ष्यत्वादिति चेन्न; वस्तुतोऽद्वितीयचैतन्यस्वरूपस्यैव बिम्बत्वोपहितरूपेण तदुपादानतया लक्ष्यत्वात्। तल्लक्षणस्याद्वितीयब्रह्मोपस्थितिपर्यवसानाच्चेति भावः। **स एव हि कृपालु-**

[1] लक्षणादिसूत्र—**ख. ग. च.** [2] कार्यत्वस्यैव—**घ.** [3] स कृपालुः—**च,** स्वसुखपरदुःख—**ख.**

संभवात् सर्गाद्यचिकीर्षादिकं प्रति कर्तृत्वाद्यसंभवाच्च । नच तयोरनादित्वम्; चिकीर्षामात्रे स्वेष्टसाधनताज्ञानस्य कृतिमात्रे

## दीपनम्

प्रयतत इति न व्यभिचार इति भावः । किं च किं चिकीर्षादिकमपि कार्यमुत न । आद्य आह—**सर्गाद्येति** । सर्गात्पूर्वं चिकीर्षाद्यसंभवेनेश्वरस्य तन्निरूपितकर्तृत्वं न स्यादित्यर्थः । न द्वितीयः; लाघवेन चिकीर्षात्वावच्छेदेनेष्टसाधनत्वज्ञानस्य कृतित्वावच्छेदेन चिकीर्षायाश्च कारणत्वेन तयोरनादित्वायोगात् । अन्यथैवं तत्र दुःखादिकमप्यनादि सिद्ध्येदित्याह—**न चेति** । किं च यदि चिकीर्षाप्रयत्नावप्यनादी स्यातां तर्हि तद्गोचरेदानीन्तनाङ्कुरादिकमप्यतीतकल्पे किमिति नासीत् । नच तदा सामग्रीविरह इति वाच्यम्; न [1]तावददृष्टविरहः, अतीतकल्पाङ्कुरादिजनकादृष्टस्यापि तत्समानरूपकार्ये-तदङ्कुरादावपि स्वरूपयोग्यत्वात् अवयवसंयोगादेरपि समत्वात् । नच कालभेद एव कारणमिति वाच्यम्; तस्याप्यखण्डतया सर्वसाधारणत्वात् । यदि क्षणविशेषमपि कारणं [2]ब्रूयात्तदा किमीश्वरादिना, कुलालादेरपि

## पूरणी

रिति । न चैवमीश्वरस्य पुराणादिसिद्धकृपालुत्वव्याकोपः तस्य, प्राणिविषये वैषम्यराहित्याभिप्रायत्वात्, परदुःखप्रहाणानुकूलज्ञानवत्त्वाभिप्रायत्वाद्वा तत्कीर्तनस्येति भावः । **सर्गात्पूर्वमिति** । अन्यथा चिकीर्षाद्यनवस्थापातादिति भावः । **अवयवसंयोगादेरिति** । अङ्कुरोपादानादेरप्यङ्कुरत्वावच्छेदेनैव हेतुत्वादित्यर्थः । **कुलालादेरिति** । क्षणविशेषराहित्यादेव कुलालव्या-

[1] तावत् दृष्ट-**च**. [2] ब्रूयास्तदा–**च**.

**चिकीर्षायाश्च कारणत्वेन तदयोगात् कार्य[1]सातत्यप्रसङ्गाच्च,**

---

### दीपनम्

कारणत्वे प्रमाणाभावात् । एवमुत्पन्नविनष्टयोरपि सततोत्पत्तिप्रसङ्गः, तयोरपि चिकीर्षाकृतिगोचरत्वादित्याह—**कार्यसातत्येति** । ननूत्पन्नविनष्टयोः कथमुत्पत्तिः, प्रागभावरूपसहकार्यभावादिति चेत्तर्हि नूनमानुमानिकक्षितिकर्गमूढ एव, यतोऽयोग्यमपि चिकीर्षति करोति च । अनीश्वरो वा, यतस्तादिच्छाप्रयत्नावपि [2]विहन्येते । ननु तयोश्चिकीर्षादिगोचरत्वमेव नेति चेत् किं प्राक्तद्गोचरचिकीर्षादिस्तदानीं नष्ट एव । नच तत्सामग्र्युपहितैवेच्छा चिकीर्षा, सा च नष्टैवेति वाच्यम् ; कुलालादौ

---

### पूरणी

पारात्पूर्वं घटानुत्पत्तिरिति वक्तुं शक्यत्वादित्यर्थः । नन्वेतत्कल्पाङ्कुरादीनां पूर्वकल्पे उत्पत्तिः स्यादिति कोऽर्थः ? किं नानाकल्पकार्याणामेककल्प एवोत्पत्त्या झटिति सर्वमुक्तिः स्यादित्यापाद्यते, उतैतत्कल्पाङ्कुरादीनां पूर्वकल्पे तत्कल्पान्तरीयाणां चैतत्कल्पे वा । नाद्यः ; एकदा नानाकल्पकार्यजनकनानाप्राण्यदृष्टसमाहारविरहात् । न द्वितीयः ; अङ्कुरादीनां स्वतो विशेषविरहात् एतत्कल्पसंबन्धस्याप्येतत्कल्पविरहादेवासंभवात् एतत्कल्पोपपादकप्राण्यदृष्टविशेषासमवधानाच्चेत्यस्वरसादाह--**एवमुत्पन्नेति** । **अयोग्यमपीति** । कृत्यसाध्यसुधामरीचिमण्डलादिचिकीर्षादिमद्बालवदीश्वरोऽपि मूढः स्यादिति भावः । **यतस्तादिच्छेति** । सत्यामपि भगवच्चिकीर्षायां कार्यविरहे जीवतुल्यता स्यादिति भावः । कुलालादिदृष्टान्तेन [3]तवेश्वरे चिकीर्षादिकल्पना, तत्र च चक्रभ्रम्यादि-

---

[1] साधैक्य–**ग**, सान्तत्य–**छ**. [2] प्रतिहन्येते–**ख. ग**, व्याहन्येते–**च**. [3] दीश्वरे–**झ**.

**ईश्वरचिकीर्षाया अप्रतिघातात् । नापि [1]ज्ञानवत्त्वमात्रं तत्; उदासीनानामपि कर्तृत्वप्रसङ्गात् । नच [2]स्वतन्त्रः कर्तेति वाच्यम्; ईशपरतन्त्राणां जीवानां तदभावापातात् । नच**

---

## दीपनम्

चिकीर्षानन्तरभावित्वात्सामग्र्याः । न चेदं कर्तुमिच्छामीत्यनुभवस्य सामग्रीविषयत्वं संभवति, एवमपि तद्गोचरप्रयत्नानपायात् । नच समयविशेषावच्छिन्न एव चिकीर्षादिविषय इति नोत्पन्नस्तद्विषय इति वाच्यम्; समयविशेषस्य समयविशेषान्तराभावेन [3]स्वयमेव [4]तद्विषयतयोक्तातिप्रसङ्गात् । प्रागभावकाले प्रतियोगिस्वरूपतद्धर्मासत्त्वेन प्रागभावप्रतियोग्येव चिकीर्षाविषय इति वक्तुमशक्यत्वाच्चेत्याह—**ईश्वरेति** । तत्कर्तृत्वं स्वातन्त्र्यं किमन्याप्रयुक्तत्वं स्वेतरकारकप्रयोक्तृत्वं वा । नाद्य इत्याह--**ईशेति** । द्वितीयमाशङ्क्याह--**न चेति** । ननु

---

## पूरणी

सामग्र्यास्तदनन्तरभावित्वेन [5]सामग्र्युपधानस्य चिकीर्षात्वादर्शनान्नेश्वरेऽपि तथा कल्पनं युक्तमित्यर्थः । ननु कुलालचिकीर्षायामपि यत्किंचित्सामग्र्युपधानं संभवति, अन्ततो घटहेत्विष्टसाधनताज्ञान-पूर्वकत्वाच्चिकीर्षाया इत्याशङ्क्याह—**न चेदमिति** । प्रत्यक्षानुभवस्यातीन्द्रियघटितसामग्र्युपधानाविषयत्वान्न चिकीर्षात्वमित्यर्थः । ननु नेदमनुभवगोचराचिकीर्षात्वम्, किं तु कार्यप्रयोजकं रूपमित्यपरितोषादाह—**एवमपीति** । चिकीर्षात्वस्योक्तरूपत्वेऽपि प्रयत्नत्वस्योक्तरूपत्वाभावात् । अन्यथा तयोरेककारणतापत्तेरिति भावः । **नोत्पन्न इति** । तदा तत्समय-

---

[1] तज्ज्ञानवत्त्वमात्रं—**ख**. [2] स्वतन्त्रकर्तेति—**ग**. [3] स्वत एव—**ख. ग**.
[4] तद्विशेषतया—**च**. [5] सामग्र्युपाहितायाः—**झ**.

कारकान्तरप्रयोक्तृत्वमेव स्वातन्त्र्यम्; चिकीर्षाप्रयत्नरूपप्रयोगस्य ब्रह्मण्यसंभवात्, अन्यादृशस्य जीवेऽप्यनिरूपणात्। नापि तत्र प्रमाणम्; प्रत्यक्षसिद्धघटादिकर्तृत्वस्याब्रह्मलक्षणत्वात्। नच भूतकर्तरि किंचित्प्रमाणमस्ति। नच सर्गाद्यकालीनं कार्यं, उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यम्, कार्यत्वात्, घटवदिति तत्सिद्धिरिति वाच्यम्; चिकीर्षादिबाधस्य भूतकर्तर्युक्तत्वात्, घटादेश्चिकीर्षाद्यजन्यत्वाच्च। न चान्वयव्यतिरेकाभ्यां तत्सिद्धिः; चेष्टादौ सति चिकीर्षाव्यतिरेकेण घटव्यतिरेकादर्शनात्। नच चेष्टादिकं व्यापार इति वाच्यम्?

---

## दीपनम्

चेष्टैव प्रयोग इत्याशङ्क्य चेष्टाकर्तृत्वस्य शरीरिण्यपि जीवे अभावप्रसङ्गः, किमुताशरीरे [1]ब्रह्मणीत्याह---**अन्यादृशस्येति**। तत्र कर्तृत्वे। किं घटादिकर्तृत्वं ब्रह्मणो लक्षणं, उत भूतकर्तृत्वम्, नाद्य इत्याह--**प्रत्यक्षेति**। द्वितीये [2]चैतस्य तन्निष्ठतया ज्ञानं वक्तव्यम्; लक्षणस्य लक्ष्यवृत्तितया ज्ञाननियमात्, तच्चात्र न संभवतीत्याह---**नचेति**। व्याप्त्यसंप्रतिपत्तिमप्याह---**घटादेरिति**। व्यापारः चिकीर्षादेरिति

---

## पूरणी

विशेषस्य नाशादित्यर्थः। वस्तुतस्तु चिकीर्षाप्रयत्नाभ्यां विनापीश्वरस्य कर्तृत्वोपपत्तेर्न तत्र मानमिति मन्तव्यम्। **चेष्टाकर्तृत्वस्येति**। चेष्टानुकूलचेष्टान्तराभावादित्यर्थः। ननु तत्कर्तरि प्रमाणनिषेधमात्रेण कथं भूतकर्तृत्वस्य लक्षणत्वासिद्धिरित्यत्राह---**एतस्य तन्निष्ठतयेति**।

---

[1] ब्रह्मणीत्याशङ्क्याह--**च.** [2] च तस्य--**ख. घ.**, च तस्यैव--**च.**

**तत्कारणत्वोपस्थितिं विनैव कारणतया कारणकारणतया वा गृहीतस्य व्यापारत्वायोगात्। अन्यथा घटे मनस्संयोगस्य कपालावयवादेरपि कारणत्वं किं न स्यात्। न चैवं दण्डादेरपि कारण-**

---

## दीपनम्

शेषः। यद्धि यस्य [1]प्रमितकारणत्वोपपादकतया कल्प्यते तत्तस्य व्यापारः, यथा यागस्यापूर्वम्। न चात्र हस्तादिव्यापारः प्रयत्नस्य घटादिकारणत्वोपपादकतया कल्प्यते, प्रयत्नकारणत्वोपस्थितिमन्तरेणैव कारणतया कारणकारणतया वा क्लृप्तत्वादिति न चेष्टाप्रयत्नव्यापार इत्याह—**तत्कारणत्वेति**। ननु यद्धि यज्जनयित्वैव यज्जनयति तत्तस्य व्यापारः, प्रयत्नश्च चेष्टादिकं जनयित्वैव घटादिकं जनयतीति तल्लक्षणयोगाच्चेष्टापि व्यापार इति चेन्न; तन्त्वादिरूपस्याप्येवं व्यापारत्वप्रसङ्गात्। न च व्यापारत्वेनाभिमतस्य जनकत्वमपि वक्तव्यमिति वाच्यम्; तर्हि तत्पूर्वं तस्य जनकत्वं ज्ञातव्यमिति तज्जनकत्वमिदमन्यथासिद्धमिति प्रागुक्तमेव व्यापारलक्षणम्। अतिप्रसङ्गमप्याह—**अन्यथेति**। नच मनस्संयोगस्य घटकारणत्वे प्रमाणं नेति वाच्यम्;

---

## पूरणी

हस्तादिव्यापारस्यापि चक्रभ्रम्यादिना व्यवहितत्वान्न कारणतेत्याह—**कारणकारणतयेति**। **तत्पूर्वमिति**। व्यापारत्वेनाभिमतस्य पूर्वं कार्यजनकत्वमगृहीत्वा तद्द्वारा कारणत्वग्रहासंभवात्पूर्वं तद्ग्रहावश्यकत्वे जन्यस्य पूर्ववर्तित्वे गृहीते जनकस्य पूर्ववर्तिताग्रह इति कुलालादिपितृवद्व्यापारिणोऽन्यथासिद्धिः स्यादित्यर्थः। इदं चाव्यवहितमेव कारणमिति

---

[1] प्रमितिकारण—**च**.

**कारणतैव स्यादिति वाच्यम्; कारणकारणेऽपि प्रवृत्तिसंभवेन तदविरोधात्। तन्त्वादिसंयोगवत्तन्त्वादिरपि कारणमिति नैककारणतापत्तिः। दण्डादौ कारणत्वप्रसिद्धिस्त्वन्यथाप्युपपद्यते॥**

**नच श्रुतिरेव जगत्कर्तरि प्रमाणम्; तस्या मिथ्यारूपकर्तृत्वाद्यंशेऽप्रमाणत्वात्। नाप्युपादानत्वं लक्षणम्; भावविलक्षणप्रपञ्चस्य ध्वंसवदुपादानाजन्यत्वात्। उपादानत्वमपि न कार्यसमवायित्वम्; कालादावतिव्याप्तेः। सिद्धान्ते**

## दीपनम्

प्रयत्नस्येव तस्यापि कार्यपरम्परया घटादिहेतुत्वात्। तदन्यप्रमाणस्य प्रयत्नेऽप्यभावात्। नच प्रथमं कारणतयावगतोऽपि मनस्संयोगः क्षितिकर्तरि बाधात्त्यज्यत इति वाच्यम्; प्रयत्नेऽपि तत्तौल्यादिति भावः। **अन्यथापि।** कारणकारणतयापि। लोकप्रसिद्धेर्देहा[1]त्मप्रसिद्धिवन्न्यायविरुद्धार्थासाधकत्वा[2]दित्यर्थः। तथा च नानुमानाज्जगत्कर्तृत्वसिद्धिरित्यर्थः॥

**श्रुतिः** "इदं सर्वमसृजत" इत्याद्या। **कालादाविति।** कपालादौ वर्तमानं घटसमवायित्वं कालादाव[3]प्यस्तीति यदि कार्यसमवायित्वे तद्व्यावृत्तये विशेषणान्तरं दीयते तदपि सर्वाधारकालादावस्त्येवेति भावः। **सिद्धान्त इति।** परमतेऽपि समवायासंभवः

## पूरणी

मतमभिप्रेत्योक्तमिति मन्तव्यम्। **विशेषणान्तरमिति।** समवाये कार्यनिरूपितत्वादिविशेषणेऽपि [4]तादृक्समवायस्यापि तत्र सत्त्वादित्यर्थः।

[1] त्मबुद्धिव—ख. [2] दिति भावः—ग. [3] प्यस्ति यदि—ख. घ. [4] तावत्सम—ङ.

**समवायाभावाच्च। नापि कार्यतादात्म्यवत्कारणमुपादानम्; अभेदे कार्यकारणताऽयोगात्, भेदे च तादात्म्यासंभवात्, समानसत्ताकभेदाभेदस्य चासंभवात्, चैतन्य[1]स्य द्रव्योपादानत्वे प्रमाणाभावाच्च। उभयसंमतदृष्टान्ता[2]भावान्नानुमानादपि तत्सिद्धिः॥**

**किं चोपादानत्वमात्रं लक्षणं चेन्मायादावतिव्याप्तिः। कर्तृत्वमात्रं लक्षणं चेद्ब्रह्मोपादानस्य प्रपञ्चस्य ब्रह्मव्यतिरेक-**

दीपनम्

प्रागुक्त इति भावः। रूपतादात्म्यवति घटादौ तत्समानकालीनेऽतिव्याप्तिवारणायोपादानलक्षणे कारणमित्युक्तम्। तादात्म्यमभेद इति [3]मत्या दूषयति। **अभेद इति**। कार्यकारणतासिद्धये भेदाभ्युपगमे च तादाम्यमेव न सिद्ध्यतीत्याह—भेद इति। **असंभवात्** विरोधेनासंभवादित्यर्थः। **प्रमाणाभावात्** प्रत्यक्षेण तथाननुभवादित्यर्थः॥

एवं कर्तृत्वाद्येकैकस्य लक्षणत्वेऽसंभवमुक्त्वा इदानीमतिव्याप्त्यादिदोषमाह—**किं चेति**। साङ्ख्याभिमता प्रकृतिः परमाणवो वा मायादावित्यादिशब्दार्थः। **व्यतिरेकेति**। पृथक्सत्त्वप्रसङ्गादित्यर्थः।

पूरणी

**घटादाविति**। सिद्धान्ते कपालादेरेव घटरूपाद्युपादानत्वात्। नच कार्यस्योपादानवृत्तित्वनियमाद्घटरूपादिकमपि कपालादावेव स्यादिति वाच्यम्; तत्तादात्म्यापन्नघटादावपि तद्वृत्तेः प्रमाणबलेनाभ्युपगमात्। अन्यथा परपक्षे कार्यसमानाधिकरणस्यैवासमवायिकारणत्वेन तन्तुरूपादेरसमवायिकारणत्वाभावप्रसङ्गात्। तन्नियमाप्रयोजकत्वस्य पक्षद्वयेऽपि तुल्यत्वादिति दिक्। **पृथक्सत्त्वेति**। सत्तावच्छेदकभेदः स्या-

[1] स्याद्द्रव्य—**ख**. [2] अभावेनानुमानादपि तदसिद्धेः **च. छ.** [3] मत्वा—**च**.

**प्रसङ्गात् । ब्रह्मणि निषेधेऽपि तस्यान्यत्र [1]स्थित्युपपत्तेः । नाप्युभयकारणत्वं लक्षणम्; तस्य लोकतोऽप्रसिद्धत्वेन तदनुवादेन ब्रह्मप्रतिपाद[2]नासंभवादिति, मैवम्; उभयकारणत्वस्यैव [3]लक्षणत्वात् । न तावत्कर्तृत्वानिर्वचनम्; अदृष्टाद्वारककार्यानुकूलज्ञानवत्त्वं कर्तृत्वम् । कुलालादेरपि तादृशमेव कर्तृत्वम् ।**

---

## दीपनम्

तथा च तल्लक्षणकं ब्रह्म न स्यादिति भावः । ननु ब्रह्मातिरिक्तोपादानत्वेऽपि प्रपञ्चस्य न सत्यत्वम्, येन तदद्वितीयत्वं न स्यात्; श्रुत्या प्रपञ्चस्य बहुशः प्रतिषिद्धत्वात्, तत्राह—**ब्रह्मणीति** । स्वोपादाने तस्य निषेधे ह्यन्यत्रासतस्तत्राप्यभावेन मिथ्यात्वं स्यात्, न चायमन्यत्र निषिद्ध्यते; किं तु ब्रह्मण्येवेति न तस्य मिथ्यात्वसिद्धिरित्यर्थः । **लोकत इति** । लोके हि घटाद्युपादानकर्त्रोर्नियमेन भेददर्शनेन प्रत्यक्षेण व्याप्त्यग्रहादनुमानादपि न जगदुपादानकर्त्रभेदसिद्धिरित्यर्थः । **अदृष्टेति** । अदृष्टद्वारा कार्याजनकं यत्कार्यानुकूलं ज्ञानं तद्वत्त्वमित्यर्थः । अनुकूलत्वं च कारणतत्कारणान्यतरत्वमिति न लौकिककर्तर्यव्याप्तिरित्यनुपदमेव वक्ष्यति । तज्ज्ञानस्यापि परम्परया

---

## पूरणी

दित्यर्थः । **तल्लक्षणकमिति** । उक्ताद्वितीयरूपमित्यर्थः । **लोके हीति** । न चोर्णनाभेस्तन्तूपादानत्वं कर्तृत्वं च दृष्टमिति वाच्यम्; जन्तुभक्षणजनिततल्लालायास्तदधीनधातुविशेषस्य वा तन्तूपादानत्वेन तच्चेतनस्य तदुपादानत्वाभावादिति भावः । ब्रह्मणः कार्यानुकूलज्ञानवत्त्वे प्रमाण-

---

[1] स्थित्यनुपपत्तेः—क. [2] नायोगादिति चेत्—ग. [3] तल्लक्षणत्वात्—ग.

## दीपनम्

जनकत्वात् ब्रह्मणस्तु तत्पारम्पर्ये प्रमाणाभावात् "तदैक्षत, बहु स्यां" इति श्रुत्येक्षणपूर्वकमेव स्रष्टृत्वश्रवणाच्च तज्ज्ञानं साक्षादेव [1]कारणं न तु चिकीर्षादिद्वारा । नच 'अकामयत, अकुरुत' इति श्रुत्या तत्कारणत्वमपि शङ्क्यम् ; अनन्तःकरणे तस्मिन् चिकीर्षादेरसंभवात् । तच्छ्रुतेश्च भाष्यकारेणेक्षणपरतया तत्र तत्र व्याख्यातत्वाच्च । तच्च तस्य तत्तदव्याकृततामापन्नविषयोपाहितचैतन्यमिति नेक्षणमालाप्रसङ्गो न वा ब्रह्मण[2]स्तदकर्तृत्वम् । घटादिजनकादृष्ट[3]कर्तर्युदासीने चातिव्याप्तिवारणाय विशेषणद्वयमिति भावः । [4]अत्र च कार्यानुकूलज्ञानाप्रयोजकत्वं ज्ञानविशेषणम्, तेन कुलालादिजनक-

---

## पूरणी

माह—तदैक्षतेति । ननु किं तज्ज्ञानं सकर्तृकमकर्तृकं वा? आद्ये तत्तदीक्षणानुकूलेक्षणान्तरस्य वाच्यतया तदनवस्था, द्वितीये च तदीक्षणं प्रति ब्रह्मणः कर्तृत्वाभावे जगत्कर्तृत्वभङ्ग इत्यत आह—तच्चेति । **अव्याकृततां** अनभिव्यक्ततामापन्ना विषया भूतभौतिकानि तदुपहितं तद्गोचरं चैतन्यम् । कारणात्मना विद्यमानप्रपञ्चस्यैवोत्पत्त्या तदुपादानाज्ञानस्यैवाव्या[5]कृततापन्नभूताद्यात्मकत्वात्तद्गोचरस्वरूपज्ञानमेव भूतादिकार्यानुकूलं तच्च नित्यमिति नोक्तदोषः । प्राणिकर्मसहायस्यापेक्षितत्वात्प्रलयादावेवंविधेक्षणसत्त्वेऽपि न तस्य सृष्टिप्रसङ्गः । नच कर्मसापेक्षत्वे ईश्वरस्य स्वातन्त्र्यभङ्गः ; असङ्कीर्णतया कर्मशक्त्यादिव्यवस्थापकत्वेन तदुपपत्तेरिति भावः । **घटादिजनकेति** । घटादिजनकादृष्टहेतुकर्मोपादानगोचरज्ञानस्यादृष्टद्वारा घटादिकार्यानुकूलतया तज्ज्ञानवत्यतिप्रसङ्ग-

---

[1] कारणमिह तु—ख. [2] स्तत्कर्तृत्वम्—च. [3] कर्तर्यप्युदा—घ. [4] तत्र हि—क.
[5] कृतताद्यात्म—झ.

## पूरणी

वारणाय तद्विशेषणमित्यर्थः। ननु कुलालोत्पत्त्यनुकूलकुलालपितृज्ञानस्य कुलालद्वारा तत्कार्यघटानुकूलत्वेन तत्रातिव्याप्तिरित्यत्राह—**कार्यानुकूलेति**। कार्यानुकूलज्ञानान्तराप्रयोजकं यत्कार्यानुकूलज्ञानं तद्वत्त्वं विवक्षितम्। कुलालपितृज्ञानस्य कुलालद्वारा तदीयकार्यानुकूलज्ञानप्रयोजकत्वान्नातिव्याप्तिरित्यर्थः।

नन्वेवं ब्रह्मणो घटादिकर्तृत्वं न स्यात्; कार्यानुकूलकुलालज्ञानप्रयोजकत्वात्तज्ज्ञानस्येति चेन्न; कार्यानुकूलज्ञानाद्वारकत्वस्य विवक्षितत्वात्। ब्रह्मणो घटादिकार्येऽपि साक्षात्स्रष्टृत्वमिति तज्ज्ञानस्यकुलालज्ञानाद्वारकत्वात्। कुलालपितुस्तु कुलालद्वारा घटादिकर्तृत्वमिति तज्ज्ञानस्य तज्ज्ञानद्वारकत्वादिति भावः। वस्तुतस्तु कार्यानुकूलज्ञानेच्छाकृतिमत्त्वं कर्तृत्वम्। तादृश्येव लोके कर्तृत्वव्यवहारात्। ज्ञानेच्छाकृतयश्च स्रष्टव्यभूताद्यवच्छिन्नाकाराविद्यावृत्तिविशेषाः प्राणिकर्मसहायजनिताः ईश्वरेऽपि संभवन्तीति लोकसिद्धमेव तस्यापि कर्तृत्वम्। अदृष्टाद्वारकत्वमत्रापि विशेषणं पूर्ववत्। तत्तत्कार्योपादानगोचरज्ञानादिमत्त्वं वा, घटादिजनकादृष्टवति घटाद्युपादानगोचरज्ञानविरहेणानतिप्रसङ्गात्। नच ब्रह्मविषयिणी अनवच्छिन्नमायाविषयिणी वा कृतिर्न संभवतीति वाच्यम्; अस्मदादीनां सुषुप्तावनवच्छिन्नाकाराविद्यावृत्तिविशेषवत् ब्रह्मणोऽपि तद्गोचरकृतिरूपाविद्यावृत्तिविशेषे बाधकाभावात्। अनवच्छिन्नब्रह्माकारान्तःकरणवृत्तेरस्मदादीनामभ्युपगमाच्च। भगवत्कृतेरवच्छिन्नविषयत्वोपपत्तेश्च। न चैवं जीवात्मगुणानां सुखादीनां जीवकृतत्वानापत्त्या तद्दृष्टान्तेन ब्रह्मणोऽभिन्ननिमित्तोपादानत्वानुमानं न स्यादिति वाच्यत्; परमतसिद्धेश्वरघटसंयोगदृष्टान्तेन तत्संभवात्। अस्मन्मते च "तदात्मानं स्वयमकुरुत" इत्यादिश्रुतेरेव मानत्वात्।

## पूरणी

नच ज्ञानाद्यविद्यावृत्तिविशेषाणां कार्यतया तत्कर्तृत्वनिर्वाहाय तद्गोचरवृत्त्यन्तरापेक्षायामनवस्थापात इति वाच्यम्; प्रमाणबलेन तद्व्यतिरिक्तकार्यस्यैव सकर्तृकत्वाभ्युपगमात्। अन्यथा हिरण्यगर्भादिकर्तृककार्यं [1]चिकीर्षादिजन्यमिति पक्षे जीवकर्तृकतया भवदभिमतहिरण्यगर्भज्ञानेच्छादौ तच्चिकीर्षादिजन्यत्वासंभवेन तद्व्यतिरिक्तहिरण्यगर्भकर्तृककार्ये एव चिकीर्षादिकं जनकमिति त्वयाभ्युपगन्तव्यत्वात्। न चेश्वरे चिकीर्षादौ मानाभावः; "सोऽकामयत, बहु स्यां प्रजायेयेति" इति श्रुतेश्चिकीर्षायां, "तदात्मानं स्वयमकुरुत", "नामरूपे व्याकरवाणि" इति च श्रुतेस्तत्कृतौ मानत्वात्। नच "तदात्मानं स्वयमकुरुत" इत्यात्मानं प्रपञ्चरूपेण जनयामासेति तदर्थ इति वाच्यम्; लक्षणादोषप्रसङ्गात्। उक्तरीत्या मुख्यार्थसंभवात्। एतेनान्तःकरणसंबन्धाभावान्नेश्वरे चिकीर्षादिकमिति निरस्तम्। तथाप्यविद्यावृत्तिविशेषसंभवात्। किं चेक्षणं स्वरूपज्ञानमिति पक्षे किं तदज्ञानमात्रगोचरं वा स्रष्टव्यभूतादिगोचरं वा नाद्यः; स्रष्टव्योपस्थितिं विना सृष्टेरसंभवात्। "तदैक्षत बहु स्यां" इत्युत्पाद्यगोचरेक्षणस्य श्रूयमाणत्वाच्च। न द्वितीयः; नित्यज्ञानस्य वर्तमानमात्रगो[2]चरतया स्रष्टव्यविषयत्वासंभवात्। अनागतत्वादेर्भवद्भिरसत्त्वाभ्युपगमेन तेन रूपेण तदालम्बनत्वासंभवाच्च। नच भूतादेः कारणात्मना पूर्वमपि सत्त्वात्तदालम्बनं तज्ज्ञानमिति वाच्यम्; कारणस्वरूपातिरिक्तकार्यस्थितेर्दुर्निरूपत्वात्। नच सत्कार्यवादाश्रयणात्कथंचित्सूक्ष्मादिरूपेण कार्यं प्रागप्यस्तीति वाच्यम्; सत्कार्यवादोक्तेः कारणमेव कार्यस्य स्वरूपं न तु तदतिरिक्तम्, मृदादिस्वरूपातिरेकेण घटस्वरूपस्य पृथगनुपलम्भात् वाचारम्भणादिवाक्ये निषेधाच्चेत्येवं

[1] चिकीर्षाजन्य—म. [2] चरत्वेन—ट.

चिकीर्षादिकं तु शरीरमिव कार्यविशेषे कारणम्, न तु कर्तृत्वप्रयोजकम्। तस्य[1]च मृदादिज्ञानं परम्पराकारणतया कार्यानुकूलम्। [2]अनुकूलत्वं च कारणतत्कारणसाधारणमिति कुलालादौ ब्रह्मणि चैकमेव कर्तृत्वम्। उदासीनं ज्ञानं च नैवम्। न च तत्र प्रमाणाभावः; कार्यलिङ्गेनैव तत्सिद्धेः। उपादानत्वमपि न दुर्निरूपम्, कार्यतादात्म्यवत्कारणत्वस्य तत्त्वात्। तादात्म्यं च सत्तानवच्छेदकभेदवत्त्वमिति [3]न दोषः। नच तत्र प्रमाणाभावः; मृद्धट इति सामानाधिकरण्येन तत्सिद्धेः। सन् घट इति सामानाधिकरण्या[4]त्सदप्युपादानम्। सच्च ब्रह्म ॥

## दीपनम्

ज्ञानवति नातिव्याप्तः। **कार्यविशेषे** शरीरजन्ये बाह्यकार्ये। एवं च हिरण्यगर्भादि[5]शरीरिकर्तृकमेव चिकीर्षादिजन्यं नाद्यकार्यमिति भावः। **तस्य** कुलालादेः। **तत्र** ईश्वरस्यैवंभूतकर्तृत्वे। **तत्र** उक्तरूपतादात्म्ये। **सामानाधिकरण्येन** सामानाधिकरण्यानुभवेन। अत्यन्तभेदेऽभेदे च तददर्शनात् भेदाभेदयोश्च समानसत्ताकयोर्विरोधादिदमेव तादात्म्यं

## पूरणी

परत्वात्। अन्यथा सूक्ष्मरूपस्य पूर्वं सत्त्वेऽपि स्थूलरूपस्यासत्त्वेन सत्कार्यत्वासंभवात्। तस्मात्स्वरूपज्ञानस्य कर्तृत्वानिरूपकत्वादविद्यावृत्तिविशेष एवेक्षणादि। नच चिकीर्षादेरिष्टसाधनताज्ञानजन्यत्वात्तेन विना तदनुपपत्तिः; अन्वयव्यतिरेकाभ्यामन्तःकरणधर्मचिकीर्षायामेव तद्धेतुत्वादित्यस्मत्परमगुरुचरणोक्तमेव रमणीयम् ॥

[1] तु—छ. [2] कार्यानुकूलत्वं—ख. [3] नोक्तदोषः—ग. छ. [4] दसदप्यु—छ.
[5] शरीर—घ.

**अनुमानमपि—घटातिरिक्तं कार्यं, स्वोपादानजडातिरिक्तोपादानकम्, कार्यत्वात्, घटवदिति [1]मृज्जन्यत्वे बाधाच्चेतनोपादानकत्वसिद्धिः। अन्यथा सन् घटः स्फुरतीत्यनुभवायोगात् उपादानातिरिक्तसत्स्फुरणयो[2]रयोगात्। अत एव न तस्याभाससमत्वम्। "तदैक्षत, बहु स्यां प्रजायेयेति" इति श्रुति-**

## दीपनम्

सामानाधिकरण्यानुभवविषय इत्यर्थः। **स्वोपादानेति** स्वशब्दः[3] पक्षमात्रवचनः। दृष्टान्ते तु पटाद्युपादानतन्त्वाद्यतिरिक्तमृदुपादानकत्वेन साध्यप्रसिद्धिः। पक्षे तद्बाधाच्चेतनोपादानक[4]त्वमेव सिद्ध्यतीति भावः। **अतएवेति**। घटातिरिक्तं कार्यं स्वोपादानजडाजडातिरिक्तोपादानकं तत एव तद्वदित्याभासेन हेतुना [5]सममनुमानमित्यत एव निरस्तम्, ब्रह्मोपादानत्वाभावे घटस्य सत्तास्फुरणसंबन्धानु[6]पपत्तिवत् विपक्षे बाधकाभावात्। अजडब्रह्मोपादानत्वाभावे श्रुतिबाधः [7]एवं जडाजडातिरिक्तासंभवश्चेति भावः। **तदैक्षतेति**। अत्र हि कारणस्येक्षणश्रवणात् कार्यानुकूलज्ञानवत्त्वलक्षणं कर्तृत्वम्, "बहु स्यां प्रजायेयेति" इति मृद इव घटशरावाद्यात्मना ब्रह्मण एव विविधप्रपञ्चात्मना बहुभवनस्य जन्मनश्च श्रवणादुपादानत्वम्। न हि निमित्तकारणस्य

## पूरणी

**अन्यथा सन्निति** मूलम्। यदि सच्चैतन्यं घटोपादानं न स्यात् घटतादात्म्येनानुभवविषयो न स्यादिति तर्कार्थः। **अजडब्रह्मेति**। "बहु स्यां प्रजायेय" इति तदुपादानताश्रुतिविरोधादित्यर्थः। **बहुभवनस्येति**। भवनं स्थितिः। जन्मोत्पत्तिः। न चेयं श्रुतिः

[1] मृज्जन्यत्वबाधा—**ग.** [2] रसंभवात्—**छ.** [3] पक्षमात्रपरः—**घ.** [4] त्वसिद्धिरिति भावः—**च.** [5] सममिदमनु—**घ. च.** [6] पपत्तिरिव—**घ.** [7] एवं जडव्यतिरिक्ता—**ख. घ.**

**रपि जगदुपादानकर्त्रात्मकं ब्रह्म दर्शयतीति नासंभवः। न चोपादानस्य स्पर्शवत्त्वनियमान्न ब्रह्मोपादानम्, अन्यथा कार्ये स्पर्शवत्त्वानियमो न स्यादिति वाच्यम्; कारणेऽविद्यमानस्याप्य-ग्नि[1]संयोगादेरिवादृष्टविशेषा[2]त्कार्ये तस्योत्पत्तेरप्रयोजकत्वात्।**

---

## दीपनम्

कुलालादेर्बहुभवनं जन्म वा तदानीमस्ति। एवं "तदात्मानं स्वय-मकुरुत" इति ब्रह्मण एव स्वकर्तृकसृष्टिव्यापारगोचरत्वश्रवणादपि तस्योपादानत्वं निमित्तत्वं चेत्यर्थः। **उपादानस्य** द्रव्योपादानस्य। **कार्ये** कार्यद्रव्ये। यथा घटादावग्निसंयोगात्कारणेऽपि लौहित्यं जायते, यथा वानुद्भूतरूपस्पर्शादपि त्र्यणुके उद्भूतरूपस्पर्शोऽदृष्टविशेषाज्जायते, एवमिहापीत्याह—**कारण इति। अप्रयोजकत्वादिति**। स्पर्शवत्त्व-

---

## पूरणी

"यदेकमव्यक्तमनन्तरूपं" इत्यादिश्रुतिसिद्धानन्तनियन्तृरूपेण भवन-सङ्कल्पमाहेति वाच्यम्; एवं सत्यप्रविष्टस्यापि नियन्तृत्वोपपत्त्या "इदं सर्वमसृजत, तत्सृष्ट्वा, तदेवानुप्राविशत्" इति प्रवेशोक्त्यनुपपत्तिः, सर्वगतस्य ब्रह्मण एकरूपेणैव कृत्स्ननियन्तृत्वे संभवति अनन्तरूपवैय-र्थ्यात्, 'यदेकमव्यक्तं' इत्यादिश्रुतेरपि विविधप्रपञ्चरूपतार्थत्वात्, एकस्य युगपद्वास्तवानन्तरूपासंभवाच्चेति दिक्। शब्दाद्युपादानाकाशा-दिकं व्यावर्तयति—**द्रव्योपादानस्येति। अनुद्भूतरूपेति**। यद्यपि द्व्यणुकस्पर्शादिरप्युद्भूत एव महत्त्वासामानाधिकरण्याच्चाप्रत्यक्ष इति परैरभ्युपेयते, तथापि तप्ततैलस्थतेजसोऽनुद्भूतरूपादुद्भूतरूपवत्तेजो-ऽन्तरवत् द्व्यणुकरूपस्पर्शादेरनुद्भूतत्वेऽपि त्र्यणुकरूपस्पर्शादेरदृष्टविशेषा-

---

[1] संयोगादिवा—क. ग. छ. [2] कार्यविशेषोत्पत्ते—क. ग. छ.

आकाशादौ मनसि च कार्ये तदभावाच्च। आकाशादिकं च कार्यं, द्रव्यत्वाद्विभक्तत्वाच्च, घटवदित्यनुमानानुगृहीतश्रुत्या-

दीपनम्

स्येति शेषः। पूर्वं कार्यद्रव्ये स्पर्शवत्त्वनियममभ्युपेत्योक्तम्। [1]वस्तुतः स एव नेत्याह—**आकाशादाविति। द्रव्यत्वादिति।** न चात्मनि व्यभिचारः; तस्य पराभ्युपेतद्रव्यविलक्षणत्वात्। परसंमतात्मनश्च पक्षसमत्वात्। विभक्तत्वं च धर्मिसमानसत्ताकविभागाश्रयत्वम्। आत्मनि च विभागस्य कल्पितत्वात्। न चाविद्यादौ व्यभिचारः; पराधीनसत्ताकतालक्षण[2]कार्यत्वसाध्यस्याध्यस्तेऽविद्यादौ सत्त्वात्। न चैवमाकाशादे[3]रप्यनध्यस्तत्वेनार्थान्तरता; [4]तस्य श्रुतिस्मृतिबाधितत्वात्। एवं "आत्मन आकाशः संभूत" [5]इत्यादिश्रुत्यापि तत्सिद्ध्यति। न चाकाशस्य प्रागभावासंभवा[6]दुत्पत्तिर्बाधिता, यस्य ह्युत्पत्तेः प्रागननुभवोऽर्थक्रियाभावश्च तदूर्ध्वमनुभवोऽर्थक्रिया चेत्यनुभवाननुभवकार्याकार्यरूपो विशेषस्तस्य प्रागभावः कल्पयितुं शक्यते। न चाकाशादावयं विशेषोऽस्ति, प्राक्तनैरप्येवमेवाकाशा-

पूरणी

दुद्भूतत्वसंभवात्तत्र स्पर्शादेरपि नोद्भूतत्वं कल्पनीयमितीममर्थं सिद्धवत्कृत्येत्थमुदाहृतम्। **विभागाश्रयत्वमिति।** विभागश्चानिर्वचनीयो भेदविशेषः परमतसिद्धगुणो वा। **एवमात्मन इति।** न च संभूत इत्यस्य ज्ञानार्थत्वं वक्तुं युक्तम्; मुख्ये बाधकाभावात्। वाय्वादौ मुख्यार्थान्वयाच्चेति भावः। प्रागभावासंभवमेव दर्शयति—**यस्य हीति।** ननु कारणनिषेधे अविद्याया अपि निषेधः स्यादित्याशङ्क्य

[1] वस्तुतस्तु—च. [2] कार्यत्वस्याध्यस्ते- च. [3] रप्यनाध्यस्त—च., रध्यस्त—क. घ. [4] तस्याः—क. घ. [5] इति श्रुत्यादिनापि—ख. घ. [6] दनुत्प—घ. च.

**दिना कार्यमिति निश्चितम् । न च निरवयवस्य तस्य कार्यत्वानुपपत्तिः, घटादिवत्तदुपपत्तेः । घटादेरपि कारणातिरिक्तावयवाभावात् । कारणस्य [1]चाकाशादेरपि सत्त्वात् । न च तन्न्यूनपरिमाणवानेव तदवयव इति न ब्रह्मावयव इति वाच्यम्; दीर्घतन्त्वारब्धत्रितन्तुकपटादेरनवयवत्वापत्तेः । न च चेतनोपादानत्वे द्रव्यस्य चेतनत्वनियमः, कारणगुणानां**

---

दीपनम्

नुभवात् शब्दादेः सदा सत्त्वाच्चेति वाच्यम्; पृथिव्यादिविलक्षणतयेदानीमनुभूयमानाकाशस्वरूपस्य सृष्टेः प्राक्सत्त्वे प्रमाणाभावात् । न हि तदा कश्चिदाकाशमनुभवति न वा तत्कार्यम्, "नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योम" इति कार्यकारणप्रपञ्चमात्रासत्त्वस्य श्रुतिसिद्धत्वात् । न चैवमविद्यायाः प्रतिषेधप्रसङ्गः; "तम आसीत्" इति श्रुत्यैव तस्याः परिशेषितत्वात् । इदानीमनुभूयमानाकाशस्वरूपस्य प्रलयेऽ[2]भावासंभवेन श्रुत्यनुमानयोर्बाधायोगाच्चेति भावः । ननु घटादेर्निरवयवत्वमसिद्धमिति चेन्न; कपालातिरिक्तस्य घटस्य ततो जायमानस्याखण्डस्वभावतया आकाशादविशेषादित्याह—**घटादेरिति** । ननु माभूत्कारणातिरिक्तो घटावयवः, कारणमेव तदवयवमिति चेत्तर्हि कारणमवयव इति पर्यायः, कारणं चाकाशेऽप्यस्तीति तदपि सावयवमित्याह—**कारणस्य चेति** । विस्तीर्णदीर्घदुकूलादेरपि स्वन्यूनपरिमाणरज्ज्वारम्भकत्वात् । दीर्घतन्त्वित्युपलक्षणम् । न तावदयं

---

पूरणी

निषेधति—**न चेति । अखण्डस्वभावतयेति** । कपालव्यतिरिक्तांशशून्यतयेत्यर्थः । **त्रितन्तुकेति** मूलम् । परावर्त्यसंवलितैस्त्रिभिस्तन्तुभि-

---

[1] चाकाशादावपि—**ख. छ.** [2] भावसं—**ख.**

**कार्ये [1]स्वसमानजातीयगुणारम्भनियमादिति वाच्यम्; [2]वैशेषिकाणां चित्रपटावयवेषु परिणामवादिनां चाम्लद्रव्यारम्भकक्षीरे तदभावात्। सच्चैतन्यानुगमस्य प्रपञ्चे सत्त्वाच्च। चेतनाचेतनविभागस्त्वहङ्कारतदभावप्रयुक्तः।**

---

## दीपनम्

सजातीयारम्भनियमो गुणमात्रे; परमाणुपरिमाणस्य द्व्यणुके तत्परिमाणस्य च त्र्यणुकेऽनारम्भकत्वात्। विशेषगुणेष्वयं नियम इति चेत्तत्राह——**वैशेषिकाणामिति**। **चित्रपटावयवेषु** तद्रूपेषु। **क्षीरे** क्षीररसे। वतुतस्तु चैतन्यमात्मनो न गुणः, किं तु कारणस्वरूपमेव। न च तत्स्वरूपं कार्यधर्मः; [3]तन्त्वादेरपि पटादिधर्मत्वप्रसङ्गात्। कार्ये कारणस्वरूपानुगमस्तु प्रकृतेऽ[4]प्यक्षत इत्याह——**सच्चैतन्येति**। सच्चैतन्ययोरनुगमस्य घटः सन् पटः स्फुरतीत्यनुभवादित्यर्थः। अहमर्थस्य घटादेश्च चेतनाचेतनविभागस्तर्हि किं निबन्धन इत्यत्राह——**चेतनेति**। अहंकारस्य स्वतश्चैतन्यव्यञ्जकस्वभावत्वेन तस्मिंश्चिद्व्यक्तिः स्वाभाविकीति सचेतन इत्युच्यते। घटादौ त्वहंकारसम्बन्धदशायामेव चैतन्याभिव्यक्तिरिति सा तत्रागन्तुकी। अतो घटादिरचेतनः अहमनुभवगोचरश्चेतन इति विभाग इति भावः। तदभावस्तद्भेदः

---

## पूरणी

रारब्धपटस्य ततोऽपि न्यूनपरिमाणवत्त्वादित्यर्थः। सतो यच्चैतन्यं तदनुगमस्येति भ्रमं वारयति——**सच्चैतन्ययोरिति**। **अहमर्थस्येति**। चेतनतादात्म्यस्योभयत्राविशिष्टत्वादित्यर्थः। **स्वाभाविकीति**। वृत्त्य-

---

[1] स्वसजा—**क**. [2] वैशेषिकाणामपि—**छ**. [3] तन्तुत्वादे—**ख**. [4] प्रकृतेऽपीत्याह—**घ**.

**किं च विवर्तवादे न कोऽपि नियमः । न चैवं भावविलक्षणस्य सकर्तृकत्वाद्यनुपपत्तिः, सद्रूपभावविल[1]क्षणस्य नञर्थानुल्लिखितधीयोग्यतारूपभावत्वस्य सत्त्वात् । तस्यैव [2]सोपादानताप्रयोजकत्वात् सत्त्वरूपभावत्वस्य ध्वंसेऽपि सत्त्वात् सत्ताजातेः सत्त्वे च तस्यानिर्वचनीयप्रपञ्चेऽप्यविरोधात् ॥**

## दीपनम्

[3]अहंकारतदन्यत्वप्रयुक्तः । स्वाभाविकचैतन्याभिव्यक्तितदभावप्रयुक्त इत्यर्थः । अथवा अहंकारोऽहमिति वृत्तिः, तद्गोचरस्तदभावप्रयुक्तश्चेतनाचेतनाविभाग इत्यर्थः । **किं चेति ।** चेतनेऽप्यचेतनारोपस्याचेतनेऽपि चेतनारोपस्य दृष्टत्वात् यथाप्रतीति सिद्धान्ते सर्वमुपपद्यत इत्यर्थः । **एवं** एवमपि । किं भावपदेन सत्त्वं विवक्षितमुतान्यत् । आद्ये प्रपञ्चे तदन्यत्वमङ्गीकृत्य द्वितीये तदसिद्ध्या दूषयति—**सद्रूपेति ।** न च विनिगमकाभावः, किं सत्त्वं बाधायोग्यत्वमुत जातिः । आद्ये न तत्प्रयोजकः, परमते ध्वंसेऽपि तत्सत्त्वादि[4]त्युक्तत्वात । द्वितीयमभ्युपेत्याह—**सत्ताजातेरिति ॥**

---

## पूरणी

द्वारिकेत्यर्थः । ननु वस्तुस्वरूपभेदमात्रेण चेतनादिव्यवहारभेदोऽनुपपन्न इत्याशङ्क्याह—**स्वाभाविकेति ।** वृत्त्यद्वारकस्फुरणभागित्वाभागित्वाभ्यां विभाग इत्यर्थः । नन्वेवं शुक्तिरजतादावपि चैतन्यव्यवहारः स्यादित्यनुशयादाह—**अथ वेति । चेतनेऽपीति ।** अचेतनाहंकारादेरात्मनि अचेतनाहंकारादावात्मनश्च परस्पराध्यासादित्यर्थः । अन्यथा

---

[1] क्षणस्यापि-**ग.** [2] स्वोपादान—**क. छ.** [3] अहङ्कारादन्यत्वप्रयुक्तः-**च.**
[4] त्युक्त्वा-**क.**

## परमाणूपादानत्वभङ्गः.

प्रपञ्चस्योपादानान्तरा[1]भावादपि ब्रह्मैवोपादानम् । न तावत्परमाणव उपादानम्; असंयुक्तानां तेषामहेतुत्वात् । निरवयव एकस्मिन्नसङ्कीर्णावच्छेदकद्वयरहिते अव्याप्यवृत्तिसंयोगाभावात् । संयोगश्च न व्याप्य वर्तते, तथाननुभवात् । गगने कर्णशष्कुलीसंयोगस्य व्याप्यवृत्तावतिप्रसङ्गात् ।

---

### दीपनम्

आरम्भवादे ह्यवयवसंयोगोऽसमवायिकारणम्, नच परमाण्वोः संयोगः संभवतीत्याह—**असंयुक्तानामिति** । कुतस्तदसंभव इति चेत्किं संयोगस्तत्र व्याप्य वर्तते उताव्याप्य । नान्त्य इत्याह—**निरवयव इति** । यत्तु परमाणावपि नानादि[2]गवच्छेदकसत्त्वादवच्छेदकभेदेन संयोगादिरिति, तत्राह—**असङ्कीर्णेति** । नानाप्रदेशमन्तरेण तत्तत्प्रदेशमात्रवृत्ति[3]तत्तद्दिक्संबन्धस्यावच्छेदकस्यासंभवेन परमाणोरप्यनेकावयवत्वप्रसङ्गादिति न परमाणुवृत्त्यव्याप्यवृत्तिसंयोगसंभव इति भावः । आद्य आह—**संयोगश्चेति** । **अननुभवादिति** । घटादिसंयोगस्येति शेषः । **अतिप्रसङ्गात्** । सर्वत्र [4]शब्दोपलम्भप्रसङ्गादित्यर्थः । एवं च

---

### पूरणी

अहमुपलभ इति चैतन्यानुभवस्य विशिष्टाहमर्थसंबन्धानुपपत्तेरिति भावः । **नानाप्रदेशेति** । ननु दिगुपाध्यवच्छेदेऽपि नावच्छेदकान्तरापेक्षा । अन्यथा आकाशवृत्तिकर्णसंयोगादावपि दिगुपाध्यादेरेवावच्छेदकतया तत्रापि तदनुसरणापत्तेः । अतो दिगुपाध्यादेरन्य-

---

[1] रासंभवादपि—छ. [2] अवच्छेदकभेदेन सं—क. [3] तत्तत्संबन्धस्य—च.
[4] शब्दोपलब्धि—च.

**परमाणुसंयोगस्य व्याप्य वृत्तौ तत्कार्ये तदधिकपरिमाणाभाव-प्रसङ्गः। एकस्यापरेण बाह्याभ्यन्तरेण व्याप्तौ तावन्मात्रत्व-प्रसङ्गात्। एवं त्र्यणुकत्रयमप्येकपरमाणुमात्रपरिमाणमिति सर्वमदृश्यं स्यात्॥**

## दीपनम्

परमाण्वादिसंयोगोऽपि न व्याप्यवृत्तिरिति भावः। दूषणान्तरमप्याह— **परमाण्विति**। तत्र हेतुः—**एकस्येति**। अन्वयव्यतिरेकाभ्यामनेक-तन्त्वारब्धपटादौ संयोगजन्यत्वं न कार्यमात्रे; रूपादौ तदभावात्। न वा कार्यद्रव्यमात्रे; उक्तविधया परमाणुसंयोगस्य बाधितत्वेन [1]द्वाभ्यामिव निमित्तसमवधानदशायामेकस्मादप्यसतः [2]कार्यस्योत्पत्ति-संभवेन च [3]कार्यद्रव्यमात्रे [4]तदसंभवात्॥

## पूरणी

नैरपेक्ष्यात्परमाणुसंयोगस्याव्याप्यवृत्तित्वेपि न दोष इति चेन्न; एवमपि ब्रह्मणो मायावलम्बनेन झडिति नानाभूतभौतिकसृष्टिसंभवे द्व्यणुकादि-प्रक्रमेण महाभूतसृष्टिकल्पनायां गौरवात् परमाणुसद्भावे मानाभावाच्च। उक्तरीत्या कार्यद्रव्याणां स्वन्यूनपरिमाणवदारभ्यत्वानियमेन त्रसरेणु-पक्षीकारेण तथानुमानविरहात्। तत्सावयवत्वानुमानस्य च माया-सूक्ष्मभूतादिभिरेव सिद्धसाधनत्वात्। तस्मात्तेषामेवामानकत्वान्नास्ति तैर्जगदारम्भशङ्केति भावः। ननु तथाप्यवयवसंयोगस्य कार्यहेतुत्वेन क्लृप्तत्वात्तेन विना कथं तदुत्पत्तिरित्यत्राह—**अन्वयव्यतिरेकाभ्या-मिति**। अनेकावयवारब्धकार्यद्रव्यत्वावच्छेदेनैव तद्धेतुत्वेनैकाविद्य-

---

[1] द्वाभ्यामेव—**क**. [2] कार्यद्रव्यस्य—**घ. च.** [3] कार्यमात्रे—**घ.** [4] तद-भावात्—**ख. ग. च.**

**नापि परमाणुसद्भावे प्रमाणमस्ति; सर्गाद्यकालीनजडोपादानानुमानस्य लाघवेनैकविषयतयास्मदभिमताज्ञानविषयत्वात्। नच कार्याणामवयवसंयोगारब्धत्वानियमान्नैकस्मादुत्पत्तिरिति नित्यानेकावयवसिद्धिरिति वाच्यम्; अनेकावयवारभ्यस्यावयवसंयोगारब्धत्वेऽपि रूपादिवदेकारभ्यस्या[1]न्यथासिद्धिसंभवेन कारणबहुत्वमहत्त्ववत्कार्यमात्रेऽप्रयोजकत्वात्।**

## दीपनम्

किं चात्र न संयोगत्वेन कार्यमात्रहेतुता; अतिप्रसङ्गात्। नापि स्वोपादानसंयोगत्वेन, तन्त्वादेः संयोगवृत्तिपटकारणतावच्छेदकतया तदकारणत्वप्रसङ्गात्। अतः [2]संयोगविशेष एवान्वयव्यतिरेकाभ्यां क्वचित्कारणमिति पटादावेव संयोगः कारणम्, न त्वतीन्द्रियसंयोगः; प्रमाणाभावात्। अतः कारणमहत्त्वादिवत्कार्यमात्रे संयोगोऽप्रयोजक इत्यभिप्रेत्याह—**अनेकेति**। अपिशब्देन तत्राप्यभावं दर्शयति। संयोगपटयोः समान[3]सामग्रीकत्वसंभवेन सव्येतरविषाणवत् समकालतया हेतुहेतुमद्भावानुपपत्तेः। न हि पटो नियमेन संयोगानन्तरमेव भवतीत्यत्र किंचित्प्रमाणमस्ति, अनुभवस्य युगपदुभयगोचर-

## पूरणी

याऽऽद्यभूतसृष्टौ न किंचिद्बाधकमिति भावः। ननु लाघवात्कार्यद्रव्यत्वावच्छेदेनैव तद्धेतुत्वमस्त्वित्याशङ्क्यानुगतकारणतावच्छेदकाभावान्नैवमित्याह—**किं चात्रेति**। **तत्राप्यभावमिति**। तत्राप्यवयवसंयोगाजन्यत्वमित्यर्थः। तदेव दर्शयति—**संयोगपटयोरिति**।

[1] अन्यथापि संभ–ख. ग. च. [2] तत्संयोग–च., तत्तत्संयोग–ख. घ.
[3] सामग्रीवत्व-ख., सामग्रीत्व–घ.

**न च सदा कार्यप्रसङ्गः, अदृष्टादिनिमित्तानुरोधेन कदा[1]चित्तदुपपत्तेः। नित्याणुवादेऽपि तथैव वक्तव्यत्वात्। नाशोऽप्यदृष्टनाशादाद्यकार्यस्योपपद्यते। अन्यथातीन्द्रियाद्यकार्यं न सिद्ध्येत्,**

---

## दीपनम्

त्वात्। नच तन्तुसंयोगनाशस्य पटनाशकारणतया तयोः कार्यकारणभावो वक्तव्य इति वाच्यम्; नाशयोरपि पूर्वापरीभावे प्रमाणाभावात्, अभिघातादिभिरेव पटनाशोपपत्तेः। न चान्यत्संयोगस्य कारणत्वे प्रमाणमिति भावः। आद्यकार्यस्यैकमात्रनित्यजन्यत्वे कथं नाशः स्यादित्येतदत एव नाशङ्कनीयमित्याह—**नाशोऽपीति**। ननु कार्यस्य स्वन्यूनपरि[2]माणवद्द्रव्यारब्धत्वनियमेन [3]द्व्यणुकन्यूनपरिमाणं सिद्ध्यदनवस्थापरिहाराय नित्यं निरवयवं सिद्ध्यतीति चेन्न; महत्त्ववन्न्यूनपरिमाणस्याप्यप्रयोजकत्वात्। **अन्यथा** यद्युक्तनियमात्परमाणवः स्युः ते च संयोगसचिवा आरम्भकास्तर्हि तेषामेव श्रुतिसिद्धाद्यकार्यत्वोपपत्तौ तेभ्य एव त्र्यणुकोपपत्तौ च किमन्तरा द्व्यणुकेनेत्याह—**अन्यथेति**। यत्तु परिमाणारम्भकसंख्यापकर्षो द्वित्वे विश्राम्यति न तु त्रित्वे; ततोऽप्य[4]पकृष्टसंख्यासत्त्वात्, नाप्येकत्वे; एकस्यानारम्भकत्वादिति

---

## पूरणी

**महत्त्ववदिति**। यथा कारणमहत्त्वं कार्यमहत्त्वे न प्रयोजकं तथा कारणन्यूनपरिमाणमपि न कार्यारम्भ इत्यर्थः। **श्रुतिसिद्धेति**। श्रुतिसिद्धाद्यकार्यस्थानीयत्वोपपत्तेरित्यर्थः। यथा श्रुतिसिद्धास्मदभिमताद्यसूक्ष्मभूतकार्यं **अन्तरा** द्व्यणुकारम्भमन्तरेण भौतिकत्रसरेण्वादिकमारभते

---

[1] तदनुत्पत्त्युपपत्तेः—**ख**. [2] माणद्रव्या—**च**. [3] तद्व्यणुक—**क**. [4] अपकृष्टासत्त्वात्—**घ**.

**परमाणुभिरेव स्थूलोत्पत्तिसंभवात्। नच महत्कार्यं कार्यद्रव्यारभ्यमिति नियमात्तत्सिद्धिः; कार्यमात्र इव तत्राप्यनियमेनैतस्य [1]परिभाषामात्रत्वात्। तच्चातीन्द्रियं पृथिव्यादिसूक्ष्मभूत[2]मेकमनेकं वास्तु। एकस्यापि घटस्य मध्ये पाटनेन विभागवत् भूतस्यापि**

## दीपनम्

परमाणु[3]द्वयात् द्व्यणुकसिद्धिरिति, तन्न; संख्याया महत्परिमाणारम्भक[4]त्वनियमेन एकत्वस्येव द्वित्वस्याप्ययोग्यतया त्रित्वस्यैव संख्यापकर्षादिविश्रान्तिभूमित्वात् एकस्याप्युक्तविषया आरम्भकत्वोपपत्तेश्चेति भावः। **कार्यमात्र इति**। परपक्षे द्व्यणुकादौ व्यभिचारादित्यर्थः। स्वपक्षे तु श्रुतिवशादपञ्चीकृतभूतरूपमतीन्द्रियं कार्यं सिद्ध्यतीत्यभिप्रेत्य तदनेकत्वं निराकर्तुमाह—**तच्चेति**। **सूक्ष्मभूतमिति**। अपञ्चीकृतमिन्द्रियायोग्यत्वादनण्वपि सूक्ष्ममित्यर्थः। **अनेकं वे**त्यनास्थया।

नन्वेवं पञ्चस्वपि भूतेषु पञ्चानां भूतमात्राणां योजनात्मकं सिद्धान्त्यभिमतपञ्चीकरणं कथं स्यादिति, तदाह—**एकस्यापीति**।

## पूरणी

तद्वद्द्व्यवदभिमतपरमाणुभिरपि साक्षात्त्रसरेण्वारम्भोपपत्तेः किमन्तरा द्व्यणुककल्पनयेति फलितार्थः। यथाश्रुते अस्मदाद्यभिमताद्यकार्यस्य ग्रहणायोग्यत्वेऽपि महत्तया परमाणुरूपत्वासंभवात्तदेकत्वस्य च वक्ष्यमाणत्वेनासङ्गतेरिति ध्येयम्। स्वमतानुरोधेनाह—**एकस्यापीति मूलम्**। न चैकस्य मध्ये विभागानुपपत्तिः; एकस्यापि पटस्य

[1] प्रक्रियामात्रत्वात्—ख. ग. छ. [2] मेकैकम-क. [3]द्वयारभ्यद्व्यणुक—ख. घ. ज.
[4] त्वानि—च.

## दीपनम्

एषात्र पञ्चीकरणप्रक्रिया—एकैकशः पञ्च भूतानि प्रथममुत्पद्यन्ते। तेषां चातीन्द्रियतया जीवव्यवहाराक्षमत्वाद्व्यवहारसिद्ध्यर्थमीश्वरः प्रत्येकं भूतानि द्विधा विभज्य [1]तत्रैकैकं चतुर्धा विभजते। तांश्च भागान् स्वस्वभागातिरिक्तेषु चतुर्ष्वपि [2]भूतभागेषु योजयतीति सर्वेषां भूतानां पञ्चात्मकता। स्वस्वभागाधिक्याच्चाकाशाद्यसाधारणव्यपदेशोऽपीति। अत्र च प्रमाणम्—"सेयं देवतेमास्तिस्रो देवता

---

## पूरणी

छेदादिना विभागदर्शनात्। नच निरवयवत्वात्कथं विभाग इति वाच्यम्; अविद्याद्यवयवस्य भूतेष्वपि सत्त्वादिति दिक्। **पञ्चात्मकतेति**। पञ्चीकृतनानाभूतसमाहार एव जगदित्यर्थः। वस्तुतस्तु समाहृतपञ्चभूतारब्धत्वमेव स्थूलपृथिव्यादिकम्, एका पृथिवीत्येकत्वाद्यनुभवादिति मन्तव्यम्। **स्वस्वभागेति**। अत एव वाय्वाकाशयो रूपवत्पृथिव्यादिभागारब्धत्वेऽपि नीरूपस्वभागाधिक्यान्न प्रत्यक्षत्वमिति भावः। वस्तुतस्त्वाद्यभूतगतरूपादिकमनुद्भूतमेव। अदृष्टविशेषाच्च तप्ततैलस्थतेजःपरिणामतेजोऽन्तरवत् स्थूलपृथिव्यादावुद्भूतरूपादिकं जायते। अदृष्टविशेषश्च फलबलकल्प्य इति वाय्वाकाशयोस्तदभावान्नोद्भूतरूपोत्पत्तिरिति न काप्यनुपपत्तिः। **सेयं देवतेति**। इमास्तिस्रः सूक्ष्मपृथिव्यप्तेजआत्मिकाः जीवेनानुप्रविश्य जीवाभिन्न एव स्वयं तत्तादात्म्यापन्नः सन् व्यवहारयोग्यनामतद्वाच्यस्थूलपृथिव्याद्यात्मना ता व्यक्तीकृतवान्, तासां तद्रूपपरिणाममकरोदिति यावत्। नन्वेकसूक्ष्मरूपाणां [3]दृश्यात्मना कथं परिणाम इत्यत्राह—

---

[1] तत्रैकं-ख. ग. [2] भूतेषु-क. ख. ग. [3] दृश्यपृथिव्यात्मना-ङ.

**तत्संभवेन पञ्चीकरणाद्युपपत्तेः । भूतेषु "आत्मन आकाशः संभूत" इत्येकत्वनिर्देशाल्लाघवादेकमेव न्याय्यम् ॥**

---

## दीपनम्

अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्, तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति श्रुतिः । इयं च पञ्चीकरणोपलक्षणार्थेति केचित् । अन्ये तु मुख्यार्थमेवादाय त्रिवृत्करणमाहुः । तदप्यादिपदेन सूचयति । ननु वियदादिभूतानां प्रत्येकमनेकात्मकत्वेन मध्ये छिन्नपटवद्विभजनक्लेश इति तदनेकमेव किं न स्यादित्यत आह—**भूतेष्विति** ॥

---

## पूरणी

**तासामिति** । एकैकं भूतं द्वेधा विभज्य द्वितीयभागमपि पुनर्द्वेधा विभज्य स्वस्वेतरभूतयोस्तद्भागयोजनया तिसृणामपि त्रिवृत्त्वमकरोदित्यर्थः । नन्वनया त्रिवृत्करणं प्रतीयते न तु पञ्चीकरणमित्यत्राह—**इयं चेति** । अन्यथा स्थूलयोरेव वाय्वाकाशयोः पूर्वमुत्पत्त्यसंभवात्, अपञ्चीकृतयोश्च सूक्ष्मयोर्व्यवहारायोग्यत्वात्, अन्यथा स्थूलपृथिव्यादेरेव मायापरिणामत्वसंभवेन तत्रापि तत्कल्पनावैयर्थ्यात्,

> "पञ्चीकृतानि भूतानि ब्रह्मणा मुनयः पुरा ।
> सर्वेषां कारणत्वेन प्रोक्तानि ब्रह्मवादिभिः ॥"

इत्यादिबहुपुराणवचनसम्प्रतिपत्तेश्च । नच "त्रिवृतं त्रिवृतं" इति श्रुतिविरोधात्पञ्चीकरणस्मृतेर्हानमिति वाच्यम्; तच्छ्रुतेरवधारणपरत्वाभावेनाविरोधादिति भावः । **आत्मन आकाश इति मूलम्** । उत्पाद्यगततया तदेकत्वस्य विवक्षितत्वादिति भावः । इयं हि श्रुतिः

## प्रकृत्युपादानत्वभङ्गः.

नापि प्रकृतिरुपादानम्; स्वतन्त्रजडप्रकृतौ प्रमाणाभावात् जडकार्यस्य श्रुत्यन्तगतमाययाप्युपपत्तेः। चेतनोपादानत्व-

---

### दीपनम्

**प्रकृतिः** साङ्ख्याभिमतं प्रधानम्। **स्वतन्त्रेति**। चेतनानधिष्ठिता चेतनानध्यस्ता या जडा प्रकृतिस्तस्यामित्यर्थः। न च जडकार्यानुपपत्त्या तत्सिद्धिरित्याह—**जडेति**॥

---

### पूरणी

"अद्भ्यः पृथिवी" इत्येतदन्तसूक्ष्मभूतसृष्टिपरा। द्वितीयाकाशादिशब्दैस्तत्तदवच्छिन्नब्रह्मोपस्थापनेन पूर्वपूर्वावच्छिन्नात्ततो वाय्वादिसृष्टिप्रतिपत्त्या तत्क्रमलाभात्। स्थूलभूतानां च युगपत्सर्वेषां पञ्चीकरणमन्तरा तत्सृष्ट्यसंभवात्। अतः सूक्ष्मभूतार्थाकाकाशादिशब्देष्वेकवचननिर्देशात्तदेकत्वसिद्धिः। नच "अग्नेराप" इति बहुवचननिर्देशात्तद्बहुत्वम्, अनेकैकवचनश्रुतिविरोधेन तस्याविवक्षितार्थत्वात्। अप्छब्दगतबहुवचनस्य दारादिशब्दवत्प्रयोगसाधुतामात्रत्वाच्चेति भावः।

ननु तैरपि चेतनपुरुषाधिष्ठितत्वमभ्युपगतमित्यत्राह—**चेतनानध्यस्तेति**। **चेतनोपादानेति** मूलम्। "बहु स्यां प्रजायेयेति" इत्याद्युदाहृतोपादानत्वश्रुतिविरोधेन प्रधानमात्रोपादानत्वबोधकसाङ्ख्यस्मृतेर्हेयत्वात् श्रुतिस्मृतिविरोधे श्रुतेः प्रबलत्वात्। नच साङ्ख्याभिमतप्रधानस्यापि

"महतः परमव्यक्तमव्यक्तात्पुरुषः परः"

इति श्रुतिसिद्धतया न तद्बाध इति वाच्यम्; तत्राप्यव्यक्तशब्दस्य "आत्मानं रथिनं विद्धि" इत्यादिपूर्ववाक्यनिर्दिष्टशरीरपरत्वात्।

**श्रुतिविरोधेन साङ्ख्यावगममात्रात्तदसिद्धेः। अत एवास्मदभिमताज्ञानविलक्षणमायोपादानमिति निरस्तम्, मायाशब्दस्य**

## दीपनम्

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"

इत्यादि श्रुत्यवगतेत्यर्थः। केचित्तु "देवात्मशक्तिं स्वगुणैर्निगूढां" इत्युपक्रान्तेश्वरशक्तेरेव मायाशब्देन परामर्शादीश्वरशक्तिरेव माया प्रकृतिः, न त्वज्ञानम्; तस्येश्वरेऽयोगादित्याहुः, तन्मतं [1]प्रत्याह— **अत एवेति**। किं शक्तिरूपा माया अनिर्वचनीया सत्या वा। आद्ये अज्ञानमेव सेत्याह—**मायाशब्दस्येति**। [2]अज्ञानस्याच्छादनशक्तिर्विक्षेपशक्तिश्चेति शक्तिद्वयमपि कार्यबलात्सिद्धम्। तत्राच्छादनशक्तिमत्त्वेन ज्ञाननिवर्त्यत्वप्रयोजकरूपेणाज्ञानपदस्य प्रवृत्तिः। विक्षेपशक्तिमत्त्वेन च [3]मायाशब्दस्य। अथ वा ऐन्द्रजालिकनिर्मितगजादेर्बहुदृश्यत्वेनास्ति तत्र साधारणभ्रमानुकूला शक्तिः, मायाविना एकस्यैव स्रष्टत्वा-

## पूरणी

तस्यापि सूक्ष्मरूपापन्नस्यास्पष्टतयाऽव्यक्तशब्दवाच्यत्वात्। अन्यथा अद्वैतब्रह्मपरवेदान्तेषु सत्यप्रधानप्रतिपादनायोगादिति भावः। **ईश्वरशक्तिरिति**। ईश्वरगतशक्तिरूपैव माया जगदुपादानमित्यर्थः। ननु विक्षेपशक्तिमत्त्वस्य मायापदप्रवृत्तिनिमित्तत्वे शुक्तिरजतादावपि लौकिकानां मायाव्यवहारः स्यादित्यनुशयादाह—**अथ वेति**। नन्वत्र प्रतिपुरुषमनुभूयमानगजादेर्भेद एवेत्यत्राह— **मायाविनेति**। प्रतिपुरुषं व्याघ्रादिभेदस्य तेनासिसृक्षितत्वात्तदिच्छानुसारित्वाच्च तन्मात्रादि-

[1] दूषयति-ख. [2] अज्ञानस्य ह्याच्छादन-ख. अज्ञाने ह्याच्छादन-घ. [3] मायापदस्य-ख. ग.

विक्षेपशक्तिमतः साधारणभ्रमानुकूलशक्तिमतो वाज्ञानस्य वाचकत्वात्। उपादानब्रह्मपरवेदान्तेषु "मायां तु प्रकृतिं" इति

---

## दीपनम्

दनुभूयमानत्वाच्च। अस्ति च प्रतिपुरुषं नियतभ्रमानुकूला शक्तिः, शुक्तिरजतादिभ्रमस्य तथाविधस्य दर्शनात्। मायाशब्दश्च वृद्धव्यवहारानुसारेण साधारणशक्तिमादाय प्रवर्तते। अत एव वियदादिकं मायिकमिति व्यवहारः। अज्ञानपदं चेतरामादायेत्येकमेवानिर्वचनीयमज्ञानं मायापदवाच्यमित्यर्थः। द्वितीयं प्रत्याह—**उपादानेति**। सर्वास्वप्युपनिषत्सु ब्रह्मैकमेवोपादानं प्रतिपिपादयिषितमिति तदनुकूलैव जडप्रकृतिर्मायापदादभ्युपेया। सत्यत्वे च मायायास्तन्न सिध्यति। निरवयवज्ञानात्मनो ब्रह्मणस्तात्त्विकमायाकार्यजडप्रपञ्चात्मकत्वानुपपत्तेः। अनिर्वचनीया तु माया प्रकृतिर्ब्रह्मकारणत्वोपपादिकैव, रज्ज्वाः सर्पात्म-

---

## पूरणी

सहकृतमायापरिणामस्य न तद्भेद इत्यर्थः। ऐक्यानुभवादपि न तद्भेद इत्याह—**अनुभूयमानेति**। **साधारणेति**। साधारणभ्रमानुकूलशक्तिमत्त्वं मायाव्यवहारनिमित्तमित्यर्थः। **अत एवेति**। एतेन वियदादिकं मायाकार्यं शुक्तिरजतादिकं चाज्ञानकार्यमिति निरस्तम्। **निरवयवेति**। नन्वज्ञानस्यापि निरवयवत्वात्कथं प्रपञ्चात्मना परिणाम इति चेन्न; तस्या अनिर्वचनीयशक्तिमत्त्वात्तदुपपत्तेरिति भावः। ननु मायोपादानत्वेऽप्यद्वैतक्षतिरित्यत्राह—**अनिर्वचनीयेति**। अन्यथा केवलब्रह्मणः परिणामायोगेन तदुपादानत्वासंभवादिति भावः। ननु कथं तर्हि शक्तिपदप्रयोगः, तस्या यावद्द्रव्यभावित्वात्, अयावद्द्रव्यभाविनोऽज्ञानस्य

**जडप्रकृतौ श्रूयमाणमायाशब्दस्यार्था[1]न्तरत्वासंभवात् "भूयश्चान्ते विश्वमायानिवृत्तिः" इति तस्य ज्ञाननिवर्त्यत्वश्रवणाच्च। न ह्यज्ञानान्यस्य तत्संभवति, ऐन्द्रजालिकनिर्मितमिथ्यावस्तुगोचरमायाशब्दस्य तदन्यस्मिन्नसंभवात्। गजादीनां व्यावृत्त-**

## दीपनम्

तावच्छुद्धस्यापि ब्रह्मणो मिथ्याप्रपञ्च[2]तादात्म्योपपत्तेरिति न सत्यं वस्तु मायापदवाच्यम्। किं तु ब्रह्मण्यध्यस्ततया[3]ऽज्ञानमेवैतत्परतन्त्रतया शक्तिवच्छक्तिः। माया चासत्त्वमरजस्कमतमस्कम्। मायामित्यादिना गुणात्मकमायानिषेधाच्च न सत्येति न तात्त्विकमायावद्ब्रह्मेत्यर्थः। किं च मायाशब्दो यूपादिशब्दवन्नालौकिकः; येन वैदिकव्यवहारात्सत्य एव तदर्थः कल्प्येत। किं तु लौकिक एव लोके च मिथ्यावस्तुन्येव तत्प्रयोग इत्यज्ञानमेव वेदेऽपि तदर्थ इत्याह— **ऐन्द्रजालिकेति**। नन्वेवं गजादिकमेव तदर्थोऽस्त्वित्याह[4]— **गजादीनामिति**। गजादौ तादात्म्येनानुगतस्य सर्वमिथ्यावस्त्वनुस्यू-

## पूरणी

तत्वायोगादित्यत्राह—**किं तु ब्रह्मणीति**। अध्यस्ततयेत्यनेन ईश्वरे अज्ञानविरहात् "देवात्मशक्तिं" इति तत्संबन्धितया निर्देशानुपपत्तिः परिहृता। वस्तुतोऽज्ञानसंबन्धविरहस्याप्याध्यासिकसंबन्धसत्त्वात्, **शक्तिवदिति** शक्तिपदं गौणमिति भावः। किं च—

"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका"

इत्यादिना तस्यानिर्वचनीयत्वप्रतिपादनादिति न सत्यत्वमिति ध्येयम्।

---

[1] न्तरासं–ख. [2] तादात्म्येनोप–ख. [3] अज्ञानमेव तत्प–ख. घ. [4] अस्त्वित्यत आह–च.

त्वेनैकमायाशब्दवाच्यत्वायोगेन तदनुगतानुस्यूतस्यैव मायाशब्दार्थत्वात्। अन्यत्रापि क्वचित्प्रयोगोऽस्ति चेद्गौण एव। सर्वस्मिन्नेतस्मिन्पक्षे [1]घटादौ स्फुरति सन्निति प्रतीत्यनुपपत्तिः[2]; चैतन्यातिरिक्तसत्स्फुरणशब्दार्थाभावात्। तस्य चानुपादानत्वे घटादितादात्म्यायोगात्। अत एव सिद्धान्त्यभिमताज्ञानमेवोपादानमस्तु न चैतन्यमिति निरस्तम्; श्रुतिविरोधादनुभवविरोधाच्च। तस्मात्सिद्धं ब्रह्मण उभयविधं कारणत्वमिति।

---

## दीपनम्

तस्य चेत्यर्थः। अन्यथा अनेकशक्तिकल्पना[3]गौरवप्रसङ्गादिति भावः। ननु लोके सत्यमन्त्रादावपि मायाशब्दप्रयोगो दृश्यते, तद्विशिष्टे मायाविशब्दप्रयोगदर्शनादिति चेन्न; मिथ्यागजादि[4]स्रष्टृत्वाज्ञानदशायां पुरुषे स्वरूपेण मन्त्रौषधापरिज्ञानेऽपि तच्छब्दाप्रयोगात् तज्ज्ञानदशायां च तत्प्रयोगान्मिथ्यावस्तुकारणक्षोभकतया अज्ञानरूपमायासंबन्धाभिप्रायेणैव तस्मिंस्तच्छब्दप्रयोगः। यदि मन्त्राद्यभिप्रायेणापि क्वचित्प्रयोगोऽस्तीत्युच्येत तर्हि तस्यापि प्रसिद्धमायासहकारितया अघटितघटनाहेतुतया गौणः स इत्याह—**अन्यत्रेति**।

---

## पूरणी

**मिथ्यावस्त्विति**। अज्ञानक्षोभकत्वरूपेण तत्संबन्धादित्यर्थः।

---

[1] घटादि—**क.** [2] त्तेः—**छ.** [3] गौरवं स्यादिति—**ख. घ. च.** [4] सृष्टित्वा—**ख.**

तथा च भूतोपादानत्वे सति कर्तृत्वं ब्रह्मलक्षणम्। कुलालादावतिव्याप्तिपरिहाराय भूतेति। [1]कर्तृत्वमात्रं च [2]लक्षणे विवक्षितमिति भवति तेन विनातिव्याप्तिः। मायायामतिव्याप्ति निवृत्तये कर्तृत्वेति। न च माया कारणमेव न भवतीति वाच्यम्; अन्वयव्यतिरेकाभ्यां लोके अज्ञानस्योपादानत्वेन प्रपञ्चेऽपि तथात्वात्। न च लोकेऽप्यज्ञानं निमित्तमिति वाच्यम्; रजताद्युत्पत्तिस्थितिप्रयोजकस्योपादानत्वात्। कार्यानुगतजाड्यस्याज्ञानान्यस्याभावेन कार्यानुगतकारणत्वलक्षणोपादानत्वस्य तस्मिन्सत्त्वात्, अज्ञानस्योपादानत्वे बाधकाभावात्।

---

## दीपनम्

ब्रह्मण उभयकारणतासमर्थनफलमाह—**तथा चेति**। **कुलालादाविति**। तत्र कर्तृत्वस्येच्छाद्युपादानत्वस्य च सत्त्वेनेत्यर्थः। ननु कर्तृत्वं कुलालादौ नास्त्येवेत्यत आह—**कर्तृत्वेति**। **तथात्वादिति**। प्रपञ्चः अज्ञानोपादानकः, कार्यत्वाच्छुक्तिरजतवदित्यनुमानात्तत्रापि [3]तत्सिद्धिरिति भावः। **रजतादीति**। इदं च मूलाज्ञानेऽपि समानम्। किं च कार्यानुगतकारणत्वमुपादानत्वमिति तल्लक्षणम्, तच्च सद्रूपस्य ब्रह्मण इव अज्ञानस्यापि जडस्यास्तीत्याह—**कार्येति**। **बाधकेति**। सविलासाज्ञानस्य ब्रह्मण्यध्यस्तत्वेन तदभेदाच्छ्रुत्यभिप्रेतत-दद्वितीयत्वस्यैवमप्यक्षतेः। प्रत्युतानुकूलमेव; निरवयवस्य शुद्धस्य ब्रह्मणस्तेन विना प्रपञ्चात्मकत्वायोगात्। किं च "मायां तु प्रकृतिं विद्यात्" इति श्रुतिसिद्धत्वादपि तदुपादानम्, न चैवं "इन्द्रो मायाभिः पुरुरूप ईयत" इति कथं तस्याः [4]कारणत्वमिति वाच्यम्;

---

[1] कर्तृत्वमात्रमेव—क. [2] लक्षणं—क. छ. [3] तत्सिद्धेरिति—घ. [4] करण—घ.

"मायां तु प्रकृतिं विद्यात्" इति श्रुतिसिद्धं मायोपादानत्व-मित्येकं मतम् ॥

अपरं तु ब्रह्मैवाद्वितीयमुपादानम्, अज्ञानं तु तच्छक्तितया तत्कारणतानिर्वाहकम्, "देवात्मशक्तिं" इत्यज्ञाने शक्तिशब्दप्रयोगाच्छक्तेश्चाकारणत्वादिति । अस्मिन्मते तूपादानत्वमेव लक्षणम् । न च लोके कर्त्रुपादानयो[1]र्भेदनियमा-

## दीपनम्

निखिलजडप्रकृतेरपि तस्याः ब्रह्मणः पुरुरूपतापत्तौ निमित्तत्वेन वृत्त्याद्युपादानस्यापि मनसः आत्मनि तदारोपनिमित्ततया "मनसा ह्येव पश्यति" इति श्रुतिसिद्ध[2]कारणत्ववत्तदुपपत्तेः । एतत्कार्याभेदेन हि ब्रह्म पुरुरूपं भवतीत्यभिप्रेत्याह—**मायां त्विति** ॥

शक्तिशब्दस्य मुख्यार्थतां मन्वानानां मतमाह—**अपरं त्विति । शक्तीति ।** न चास्मिन्मते "मायां तु प्रकृति"मिति श्रुत्या विरोधः ; निर्वाहकतामात्राभिप्रायतया तस्या गौणत्वादिति भावः । [3]प्रथमपक्षे असम्भवमाशङ्क्य भेदासिद्ध्या दूषयति—**न चेति ।** वियदादिकमभिन्न-कर्त्रुपादानकं, कार्यत्वात्, इच्छावत्, परमते ईश्वरघटसंयोगवत् । न च घटादौ व्यभिचारो बाधो वा ; तत्रापि तयोरैक्यादिति भावः ॥

## पूरणी

तन्निमित्ततां दर्शयति—**एतत्कार्येति ।** मायाकार्याधिष्ठानत्वेनेत्यर्थः । **इच्छावदिति ।** जीवेच्छादेस्तदनुकूलज्ञानवज्जीवकल्पकत्वात्तदुपादान-कत्वाच्चेत्यर्थः । ननु परमते जीवेच्छादेर्न तत्कर्तृत्वम्; तस्य तदुपादानचिकीर्षादिविरहात्, तद्घटितत्वात्कर्तृत्वस्येत्यनुशयादाह—**परमत इति ।** तस्येश्वरकर्तृकत्वात्तदुपादानकत्वाच्चेत्यर्थः । निर्विकारत्व-

[1] भेदाभैकस्य—ख. ग. छ. [2] करण—घ. [3] प्रथमलक्षणे—ख. घ. च.

नैकस्य तत्संभव इति वाच्यम्; लोकेऽपि शरीरावच्छिन्नस्य कर्तृत्वं मृदवच्छिन्नस्य तदुपादानत्वमिति तदभेदात्। न चैवमन्यथासिद्धत्वान्मृदादेरनुपादानत्वप्रसङ्गः; इष्टापत्तेरिति केचित्। अपरे तु तदपि कार्यानुगमादन्वयव्यतिरेकाभ्यामुपादानमित्याहुः॥

नन्वेवं ब्रह्मणः सविकारत्वापत्तिरिति [1]चेन्न; कल्पितविकाराश्रयत्वस्येष्टत्वात्। न चैवं ब्रह्मणो निर्विकारत्वश्रुतिविरोधः; वास्तवविकाराभावपरं तदिति चेत्, सिद्धान्ते

दीपनम्

**एवं** उपादानतावच्छेदकत्वे। किमेतावता ब्रह्मणः स्वाभाविकी शुद्धिर्निषिध्यते, किं वा निर्विकारश्रुतिविरोधः। नाद्यः; सर्पभ्रमदशायामपि रज्ज्वा [2]असर्पात्मत्ववत् प्रपञ्चविवर्तदशायामपि ब्रह्मणस्तदनपायेनोपादानत्वस्यानिष्टत्वाभावात् वस्तुतोऽभेदोपपादकतया इष्टत्वाच्चेत्यभिप्रेत्याह—**कल्पितेति**। द्वितीयं निराकरोति—**न चेति**। न चेत्यस्य वास्तवत्वधर्मस्यात्यन्तासत्त्वादिति वाच्यमित्यग्रिमेण सबन्धः। **एवं** एवमपि।

"निष्कलं निष्क्रियं शान्तं, कूटस्थमचलं ध्रुवम्"

इत्यादिशास्त्रविरोधः। स एव सिद्धान्तमाशङ्क्य निराकरोति—**वास्तवेति**। ननु सृष्टिश्रुतिप्रमितस्य प्रपञ्चस्य कथं शुक्तिरजतवत्कल्पितत्वमिति चेन्न; श्रुतेरनुमानसिद्धजगत्कारणानुवादेन तदभेदमात्रपरत्वात्। अन्यथा तत्रैव तन्निषेध[3]श्रुतिः प्रमा न स्यात्। नच सृष्टिश्रुतिविरोधात्तदिष्टमेवेति वाच्यम्; निषेधश्रुतीनामन्यतोऽनधिगत-

पूरणी

श्रुतिं दर्शयति—**निष्कलमित्यादि**। **अन्यतोऽधिगतेति**। प्रपञ्चाभावस्य मानान्तराज्ञातत्वात्तस्याद्वैतानन्दपर्यवसायितया पुरुषार्थत्वाच्च

[1] चेत्कल्पित—**क. ग.** [2] असर्पत्ववत्—**च.** [3] श्रुतिप्रामण्यं न—**ख. ग. च.**

वास्तवाविकारस्याभावेन तन्निषेधस्यानुपपत्तेः, न च प्रपञ्चे वास्तवत्वनिषेध इति वाच्यम्, अस्थूलादिवाक्ये स्थूलादिप्रपञ्चस्यैव निषेधश्रवणात्, निर्धर्मकब्रह्मवादे वास्तवत्वधर्मस्यात्यन्तासत्त्वादिति वाच्यम्; निषेधवाक्यं ब्रह्मणि प्रपञ्चात्यन्ताभावं कालत्रयेऽपि प्रमापयति, तच्च कल्पितप्रपञ्चस्योपपन्नमेव। तस्य शुक्तिरजतादेरिव स्वात्यन्ताभावे तद्वति [1]वाऽविरोधात्। प्रपञ्चस्य कल्पितत्वं च सृष्टितन्निषेधश्रुतिसामर्थ्यात्सिद्धम्॥

## मिथ्यात्वानुमानम्.

अनुमानमपि—अविद्यातिरिक्तदोषाजन्यं जडं, मिथ्या, दृश्यत्वात्, शुक्तिरजतवत्। दृष्टान्तस्तु साधित एव। दृश्यत्वं

---

### दीपनम्

पुरुषार्थप्रमेयतया स्वार्थपराणां निष्प्रयोजनानु[2]वादात्तत्परश्रुतिभिर्बाधायोगात्। अतः सृष्टितन्निषेधवाक्यद्वयसामर्थ्याच्छुक्तिरजतादिवन्मिथ्यात्वमेव प्रपञ्चस्य सिद्ध्यतीत्याह—**प्रपञ्चस्येति**।

अविद्यातिरिक्तेति। शुक्तिरजतब्रह्मव्यावृत्त्यर्थं दोषाजन्येत्यादि। वियदादाव[3]संभवनिराकरणाय अविद्यातिरिक्तेति। प्रपञ्चेऽविद्याया

---

### पूरणी

निषेधश्रुतयस्तत्पराः। प्रपञ्चस्य मानान्तरावगतत्वात्तदवगमाधीनप्रयोजनस्य मानान्तरादेव सिद्धतया तत्प्रतिपादने प्रयोजनाभावाच्च न तत्र सृष्टिश्रुतीनां तात्पर्यमिति तत्परश्रुतीनां बाधोऽयुक्त इत्यर्थः। ननु गन्धर्वनगरादौ दोषत्वेन क्लृप्तादृष्टविशेषस्यापि प्रपञ्चे दोषत्वसंभवात्तदतिरिक्तदोषाजन्यत्वमसंभवीत्यत आह—**अविद्याया एवेति**।

---

[1] वा वृत्त्यविरोधात्—**ग. छ.** [2] वादात्पर—**घ.** [3] असंभववारणाय—**घ. च.**

**च चैतन्यविषयत्वमिति न ब्रह्मणि व्यभिचारः। साध्यमपि प्रागेव दर्शितम्। नच बाध्यत्वमुपाधिः; तद्यदि स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं [1]तदेव साध्यमिति [2]क्व तस्य साध्यव्यापकता। लाघवतर्केण दृश्यमात्रे तन्निर्णयात् साधनव्यापकश्च। परस्यैतादृशाप्रसिद्धेश्च। नापि स्वविशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वम्; परपक्षे सत्यस्यापि संभवेन तस्य**

दीपनम्

एव दोषत्वेनापि कारणत्वान्नासंभवः। स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं संयोगादिसाधारणम्। तथा च न समव्याप्तिरिति मिथ्यात्व[3]लक्षणे विशेषणान्तरमत्र वक्तव्यमिति तदेव तदिति न [4]साध्यव्यापकता, व्याप्यभिन्नस्यैव व्यापकत्वादित्यभिप्रेत्याह—**तदेवेति**। ननु तद्वन्निष्ठात्यन्ता[5]भावाप्रतियोगित्वं व्यापकत्वम्, तच्चाभेदेऽपीत्याशङ्क्य विषमव्याप्तिसाधारणं दूषणमाह—**लाघवेति**। व्याप्तिहेतुमति पक्षेऽपि तत्सत्त्वात्साधनव्यापकत्वमित्यर्थः। **परस्येति**। [6]शुक्तिरजतेऽप्येवंभूतात्यन्ताभावप्रतियोगित्वस्य तेनानभ्युपगमादित्यर्थः। **स्वविशेष्येति**।

**पूरणी**

अनुगतैकदोषे संभवति दोषान्तरकल्पनाया अयुक्तत्वाद्गन्धर्वनगरादौ तस्य कादाचित्कत्वात् यत्किंचित्पुरुषं प्रत्येवासाधारणत्वाच्च तत्कल्पनेति भावः। ननु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं न साध्यम्; संयोगादावंशतः सिद्धसाधनत्वापत्त्या सत्यत्वाविरोधितया च पूर्वलक्षितस्यैव साध्यत्वात्, तथा च कथमेतदेव साध्यमिति निर्देश इत्यत्राह—**स्वसमानाधिकरणेति**। **शुक्तिरजतेऽपीति**। देशान्तर-

[1] तर्ह्येतदेव—**ख.** [2] तत्कृतमस्य साध्य—**क. ग.** [3] लक्षणविशेषणात्तदप्यत्र—**क.**
[4] साध्यव्यापकताप्यभिन्नस्यैव—**क.** [5] भावप्रति—**क.** [6] शुक्तिरजतस्याऽप्येवं—**क. ग.**

मिथ्यात्वाप्रयोजकत्वात् । अत्यन्ताभावप्रतियोगित्व[1]मात्रस्यैव तत्प्रयोजकत्वे संभवति [2]गौरवेणातत्प्रयोजकत्वाच्च । नापि ज्ञाननिवर्त्यत्वं बाध्यत्वम्; प्रपञ्चेऽपि तत्सत्त्वात्। अत एव न दोषजन्यत्वादिकमुपाधिः। दोषजन्यज्ञानविषयत्वमुभयत्रास्ति, न चोभयत्रेति सोपाधिः। नाप्यप्रयोजको हेतुः; लाघवेन

## दीपनम्

परमतेऽपि भ्रमविषयी[3]भूतरजतस्य स्वविशेष्येदमंशनिष्ठात्यन्ताभावप्रतियोगित्वमस्तीति [4]नाप्रसिद्धिरित्यर्थः। **अप्रयोजकत्वात्** समव्याप्त्यभावादित्यर्थः। विषमव्याप्ति[5]पक्षेऽसाधारणं दूषणमाह—**अत्यन्ताभावेति**। अत्र प्रयोजकत्वं व्यापकत्वम् । न चैवं साधनाव्यापकता; पक्षीभूतघटादेरपि कदाचिद्विशेष्यभूतरूपादिनिष्ठात्यन्ताभावप्रतियोगित्वेन विशिष्टोपाधेरपि साधनव्यापकत्वा[6]दिति भावः । **प्रपञ्चेऽपीति**। तथा च साधनव्यापकतेति भावः। **अत एव** साधनव्यापकत्वादेव । आदि[7]पदेन प्रमाणाविषयत्वं संगृह्यते । किमत्र प्रमाणविषयत्वम्, यदभाव उपाधिः। यदि विद्यमानार्थज्ञानविषयत्वं तर्हि शुक्तिरूप्यस्यापि तत्सत्त्वेन तद्विरहाभावान्न साध्यव्यापकता । यद्यबाधितार्थज्ञानविषयता[8], तर्ह्युपक्रमाद्यवधृततात्पर्यकश्रुतिबाधिततया [9]प्रपञ्चस्य प्रमाणाविषयत्वात्साधनव्यापकतेति भावः। **उभयत्र** पक्षदृष्टान्तयोः । **न चोभयत्रे**त्यत्रोभय-

## पूरणी

स्थरजतस्यैव तेन प्रतीत्यभ्युपगमादित्यर्थः । **समव्याप्तीति**। तादृशशुक्तिरजतादौ परैर्मिथ्यात्वानभ्युपगमादिति भावः । ननूपाधेः साधनव्यापकतापरिहाराय तद्विशेषणमस्त्वित्याशङ्क्य निषेधति —**न चैवमिति**।

[1] मात्रस्य—क. ग. [2] तस्य गौरवेण—ख. ग. [3] भूतस्य रजत—ख. [4] नासिद्धि—क. [5] क्षे साधा—ख. घ. [6] दित्यर्थः—क. [7] पदेनाप्रमाणविषयत्वं—ख. ग. ज. [8] त्वं—ख. घ. [9] प्रपञ्चस्याप्रमाणविषय—घ.

**दृश्यत्वमात्रे तद्व्याप्तिग्रहात् । अन्यथा दृश्यत्वानुपपत्तेः । न हि [1]ज्ञानेन ज्ञेयस्य संबन्धं विना तद्विषयत्वं संभवति ।**

---

## दीपनम्

पदमविवक्षितम्, शुक्तिरजते केवलसाक्षिभास्यतया दोषजन्यज्ञानाभावेऽपि घटादिज्ञानस्याविद्यादोषजन्यत्वादिति । विपक्षे हेतूच्छित्तिमपि [2]बाधकमाह—**अन्यथेति** । ज्ञेयस्य चैतन्येन साक्षिणा आध्यासिक एव संबन्धो वक्तव्यः, संयोगस्य वास्तवभेदाभेदरूपतादात्म्यस्य चासंभवादित्यर्थः । नच संबन्धेन विना दृक्संबन्धितारूपं दृश्यत्वमुपपद्यत इत्याह—**न हीति** ।

ननु तयोः स्वरूपसंबन्धोऽस्त्विति चेत्, स्वरूपमात्रं संबन्धश्चेत्सकलव्यवहारसाधारणकारणात् घटाद्यसाधारणव्यवहारो न संभवती[3]त्युक्तम् । अतिरिक्तोऽपि सकलज्ञानसाधारणधर्मश्चेत् घटज्ञानात्पटादावपि व्यवहारप्रसङ्ग [4]इत्युक्तम् । यदि प्रतिज्ञानमसाधारणो धर्मः स न तर्हि कादाचित्कः, ज्ञाने जन्य[5]धर्मसंभवात् । अनाद्यनन्तश्चेत्सोऽपि न तावदभावरूपः; प्रतियोग्यनिरूपणात् । नापि भावः, कॢप्तपदार्थानन्तर्भावात् । न ह्येकमात्रवृत्ति सामान्यं संभवति ।

---

## पूरणी

**संयोगस्येति** । द्रव्ययोरेव संयोगः । चैतन्यस्य परमतसिद्धद्रव्यविलक्षणत्वाज्ज्ञेयरूपादिना तदसंभवाच्चेत्यर्थः । नन्वस्तु सामान्येऽन्तर्भाव इत्यत्राह—**न ह्येकेति** । तादृशनित्यसामान्यं न संभवीत्यर्थः । अत एव तद्घटत्वादिरुपाधिसामान्यस्यैकमात्रवृत्तित्वेऽपि न दोषः ।

---

[1] ज्ञानस्य ज्ञेयसंबन्धं-**क**. [2] बाधिका-**ख**. [3] ति वाच्यम्-**ख**. [4] इत्यप्युक्तम्-**च**. [5] धर्मासं-**च**.

## दीपनम्

अन्यथा जातेरप्येकमात्रवृत्तिता किं न स्यात् । एकमात्रसमवेततया रूपादिवदसामा[1]न्यात्मता वा किं न स्यात् । नच तस्य समवेतत्वं नेति वाच्यम्; असति बाधकेऽपि तत्परित्यागे रूपादावपि [2]स न सिद्ध्येत् । अखण्डश्चोपाधिर्न संभवतीत्युक्तम् । किं च योग्यतापि ज्ञानेनासंबद्धा तत्संबन्धो न स्यात्, संबद्धा चेत् तस्या अपि योग्यतान्तरं प्रागभ्युपेयम् । एवं तस्यास्तस्या अपीत्यनन्ताप्रामाणिकयोग्यताप्रसङ्गः । इदानीमुत्पन्नज्ञानेन तासां पूर्वापरीभावेन [3]संबन्धानुपपत्त्या

---

## पूरणी

**अन्यथेति** । तथा चाकाशत्वमपि जातिः स्यादिति भावः । ननु जातिरूपसामान्यस्यानेकवृत्तित्वनियमेऽपि नोपाधिरूपसामान्ये तथा नियमः, एतदात्मत्वादिनित्योपाधिसामान्यस्यैकमात्रवृत्तित्वदर्शनादित्यत्राह—**एकमात्रेति** । तस्य सामान्यत्व एव न किंचिन्मानमित्यर्थः । किं च तस्योपाधित्वे स किमखण्डः उत सखण्डविशिष्टधीयोग्यतारूपो वा । नाद्य इत्याह—**अखण्डश्चेति** । द्वितीयं निरस्यति—**किं चेति** । **तत्संबन्ध इति** । घटादिसंबन्धस्यैव संयोगस्य तत्संबन्धत्वादित्यर्थः । ननूक्तरीत्या संबन्धान्तराभावेन तत्तद्योग्यताकल्पना प्रामाणिक्येवेत्यत्राह—**इदानीमुत्पन्नेति** । संबन्धो हि संबन्धिपरतन्त्रः । युगपत्संबन्धे चान्यतरस्य पारतन्त्र्यायोगादियं योग्यता संबन्धिनी इयं योग्यता संबन्ध इति व्यवस्था न स्यादित्यर्थः । ननु पारतन्त्र्यं स्वभावाधीनं न तु क्रमोत्पत्त्यधीनम्; क्रमोत्पन्नयोरपि घटपटयोस्तददर्शनात्, अन्यथा भवन्मते तादात्म्यसंबन्धतत्संबन्धि-

---

[1] न्यता वा—**क.** [2] तन्न—**च.** [3] संबन्धत्वानु—**क. ग.**

## दीपनम्

युगपदेव संबन्धो वक्तव्यः, तत्र च न [1]संबन्धसंबन्धिव्यवस्था। अपि [2]चैकज्ञाननिष्ठानन्तयोग्यताया [3]विशिष्टज्ञानाभावे सोऽसिद्ध एव स्यात्। न हि सामान्यज्ञानादेव वस्तु सिद्ध्यति। किं च यदि संवित्तादात्म्याद्घटादेर्नापरोक्षत्वम्, किंतु स्वरूपसंबन्धादेव, तर्हि किंचिद्भागावच्छिन्नदण्डादिप्रत्यक्षस्यापि यावद्दण्डस्वरूपतत्परिमाणविषयत्वेन तेषु संशयो न स्यात्, निश्चिते

---

## पूरणी

प्रपञ्चयोर्युगपदुत्पत्त्या तत्संबन्धस्य च प्रपञ्चपारतन्त्र्यानापत्तेः। न हि पूर्वं प्रपञ्चोऽब्रह्मसंबद्ध एवोत्पद्यते पश्चात्संबद्ध इति संभवति। अतो युगपदुत्पन्नयोग्यतानामपि तद्व्यवस्थोपपत्तिरित्यत्राह—**एकैकज्ञानेति**। तथापि रूपी घट इत्याद्यनुभवबलेन तादात्म्यं संबन्धः रूपादिकं संबन्धीति व्यवस्थापनम्। न ह्यत्र तत्तद्योग्यतानां तत्तत्संबन्धतयाऽनुभवोऽस्ति, येन तथा स्यादित्यर्थः। ननु योग्यतासंबन्धोऽपि [4]तत्तत्संबन्धि [5]संबद्ध एव, अयं संबन्ध इत्येवमाकारज्ञानादेव [6]तत्तत्संबन्धसिद्धिरित्यत्राह—**न हीति**। विशेषानुभवस्यैव वस्तुविशेषसाधकत्वादिति भावः। ननूक्तसामान्यानुभवोऽपि सामान्यरूपेण तत्तद्विशेषगोचर एवेति तेन रूपेणापि तत्तद्विशेषाः सिद्ध्येयुरित्यनुशयादाह—**किं च यदीति**। यद्वा ननु योग्यतायां योग्यतान्तरं नावश्यकम्, संबन्धस्य स्वभावादेव संबन्धत्वोपपत्तेः, अन्यथा भवन्मतेऽपि तादात्म्यसंबन्धस्य संबन्धान्तराभ्युपगमेऽनवस्थापातादित्यरुचेराह— **किं च**

---

[1]सम्बन्धासंबन्धव्य–**ख**. [2]चैकैकज्ञान–**च**. [3]विशिष्य ज्ञानाभावेनासिद्ध–**क, ग, च**. [4]तत्संब–**ट**. [5]संबन्ध–**झ**. [6]तत्संब–**ट**.

**स्वरूपसंबन्धश्चान्यत्र विस्तरेण निरस्तः। नापि धर्मिग्राहकप्रमाण-बाधः; प्रत्यक्षादिसिद्धस्य प्रपञ्चेऽर्थक्रियायोग्यत्वस्वरूपस्यानु-**

## दीपनम्

संशयायोगात्। परभागावच्छिन्नस्यापि [1]तव मते [2]तद्दण्डादि-स्वरूपत्वेन निश्चितत्वात्तदत्यन्तमयुक्तमेवेदं मतमित्यभिप्रेत्याह— **स्वरूपसंबन्धश्चेति**। ननु दृश्यत्वानुपपत्तिरपि बाधितमर्थं कथं गमये-दित्यत आह— **नापीति**। किं प्रत्यक्षादिप्रमाणेन प्रपञ्चस्यार्थक्रिया-योग्यतारूपं सत्त्वं विषयीक्रियते उत त्रैकालिकबाधायोग्यत्वम्। आद्ये न तस्य मिथ्यात्वानुमानेन विरोधः, भिन्नविषयत्वादनुमानविषयमिथ्या-त्वस्य तदभावादन्यत्वादित्यभिप्रेत्याह— **प्रत्यक्षादीति**। नच मिथ्यात्वे अर्थक्रिया[3]कारित्वं शुक्तिरजतवन्न स्यादिति वाच्यम्; शुक्तिरजतादावपि सुखदुःखाद्यर्थक्रियादर्शनात्। तद्विशेष[4]स्त्वागन्तुक-दोषाजन्यस्वरूपा[5]देवेति प्रपञ्चस्य कल्पितत्वेऽ[6]पि तदुपपत्तेरिति भावः।

## पूरणी

**यदीति। परभागेति।** अस्मन्मते तु तद्भागावच्छिन्ने तद्भागाव-च्छिन्नयोरौपाधिकभेदेन तदवच्छिन्नस्य चानावृतसंवित्तादात्म्याभावादेव नापरोक्षत्वमिति भावः। वस्तुतस्त्वनावृतसंवित्स्वरूपसंबन्धस्यैवापरोक्ष-ताप्रयोजकत्वे परोक्षविषयेऽपि वह्निः स्फुरतीत्यनुभवानुसारेण वह्न्यादे-रनावृतान्तरसंवित्स्वरूपसंबन्धसंभवात्तदापरोक्ष्यं स्यादिति मन्तव्यम्। ननु बाधविरहस्य प्रत्यक्षागम्यत्वेऽपि तत्प्रयोजकमिथ्यात्वाभावस्य

[1] परमते—घ. [2] तद्दण्डत्वेन—क. [3] योग्यत्वं—ख. ग. [4] स्यागन्तुक—ख. [5] देव—ख. घ. [6] प्युपपत्तेः—घ. तदुपपत्तिरिति—ख. घ.

**मानेना[1]निवारणात्। अनुमानगोचरमिथ्यात्वाभावस्य प्रत्यक्षाद्यविषयत्वात्। तस्मादधिष्ठानचैतन्येनान्तःकरणतद्वृत्त्युपहित-चैतन्याभेददशाया[2]मेवाविद्यकतादात्म्येना[3]परोक्षविषयो भव-**

---

## दीपनम्

द्वितीयं प्रत्याह—**अनुमानेति**। अनुमानगोचरो यन्मिथ्यात्वं तदेव त्रैकालिकबाधयोग्यत्वं तदभावस्येत्यर्थः। न तावत्प्रत्यक्षस्यैवंभूतमिथ्यात्वाभावो विषयः; बाधयोग्यताविरहरूपबाधायोग्यत्वस्य तदयोग्यत्वात्। न हि पुरुषान्तरीयसमयान्तरीयबाधविरहश्चक्षुरादिनानुभवितुं [4]शक्यम्, न वा योग्यानुपलम्भोऽस्ति। यद्यपि घटः स्वसमानाधिकरणस्वसमानकालीनात्यन्ताभावप्रतियोगी न भवतीत्यनुभूयते तथापि न मिथ्यात्वाभावस्तद्विषयः; मिथ्यात्वस्य प्रतियोगिसमानाधिकरणसमानकालीनात्यन्ताभावप्रतियोगितारूपत्वात्। उक्तानुभवविषयाभावश्च प्रतियोगिव्यधिकरणाभावप्रतियोगित्वस्यैवेति न श्रुत्यादिप्रमेयोक्तयोग्यतारूप-

---

## पूरणी

तद्गम्यत्वमस्त्विति शङ्कते—**यद्यपीति**। **प्रतियोगिसमानाधिकरणेति**। स्वसत्तानिरूपकस्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्युक्तम्। अयं चानुभवः अन्यत्र निर्घटभूतलादौ प्रतियोगिव्यधिकरणतयानुभूतो योऽत्यन्ताभावस्तत्प्रतियोगित्वाभावमात्रमवगाहते; तस्यैव घटाधिकरणे घटव्यवहारादिप्रयोजकत्वात्। न तु स्वसत्ताप्रयोजकाधिकरणनिष्ठतत्प्रतियोगित्वाभावम्; तदत्यन्ताभाववत्यपि व्यावहारिकस्ववृत्तिसंभवेन तस्य तद्व्यवहाराप्रयोजकत्वादित्यर्थः। घटादि-

---

[1] अनिरूपणात्–**क. म.** अनिराकरणात्–**छ.** [2] मथ्याविद्यक–**क** [3] अपरक्षो विषयो–**ख. ग.** [4] शक्यते–**ख. घ. च.**

## पूरणी

प्रतियोगिकात्यन्ताभावो द्विविधः । व्यावहारिकः पारमार्थिकश्च । तत्र व्यावहारिक एव सर्वानुभवगोचरो न तु पारमार्थिकः । अन्यथा प्रपञ्चमिथ्यात्वे विवादानुपपत्तेः । निष्प्रपञ्चब्रह्मसाक्षात्कारस्य वेदान्तवाक्याधीनत्वाच्च । तथा चोक्तानुभवेनानुभूयमानव्यावहारिकात्यन्ताभावप्रतियोगित्वाभाव एवानुभूयते न तु पारमार्थिकतत्प्रतियोगित्वाभावः ; तस्यानुपस्थितेरिति फलितार्थः ॥

नन्वत्यन्ताभावत्वेन रूपेण तत्प्रतियोगित्वाभावमात्रमवगाहताम् । प्रतियोगितावच्छेदकावच्छिन्नयत्किंचित्प्रतियोगिज्ञानस्याभावधीहेतुतया यत्किंचिदत्यन्ताभावज्ञानेऽपि तत्प्रतियोगित्वमात्रनिषेधोपपत्तेः । किं चोक्तानुमानेन मिथ्यात्वसिद्धावुक्ताभावभेदः, तत्सिद्धेः पूर्वमत्यन्ताभावत्वरूपेण तत्प्रतियोगित्वाभावप्रतीतौ कथं तेन रूपेण तत्प्रतियोगित्वसिद्धिः, बाधादिति चेन्न ; प्रपञ्चात्यन्ताभावस्य ब्रह्मस्वरूपत्वे तदतिरिक्तत्वे च व्यावहारिकतदत्यन्ताभावसाधारणस्यानुगतधर्मस्यैकस्याभावेन तदवच्छिन्नप्रतियोगित्वनिषेधानुपपत्तेः । शुक्तिरजतादेर्मिथ्यात्वसिद्ध्यनन्तरमेव तद्दृष्टान्तेनैतदनुमानप्रवृत्तिरिति तदत्यन्ताभावभेदस्यापि प्रसिद्धतया पारमार्थिकाभावघटितसाध्यानुमितावत्यन्ताभावत्वरूपेण व्यावहारिकतत्प्रतियोगित्वाभावानुभवस्य भिन्नविषयकतया अप्रतिबन्धकत्वाच्चेति दिक् ॥

ननु मिथ्यात्वं मिथ्या न वा । आद्ये प्रपञ्चस्य सत्यत्वप्रसङ्गः । तत्सत्यत्वविरोधिधर्मस्य मिथ्यात्वात् । द्वितीये च तस्य सत्यत्वेनाद्वैतक्षतिरिति चेन्न ; मिथ्यात्वानुमानस्य स्वसत्तानिरूपकस्वाधिकरणे पारमार्थिकस्वात्यन्ताभावपर्यवसानेनोक्तविकल्पानवकाशात् । तत्प्रतियोगिप्रपञ्चस्य सत्यत्वानापाताच्च । न च मिथ्यात्वानुमितेर्मिथ्यात्वं

**तीति भवति दृश्यत्वं तत्र प्रयोजकम्। परोक्षं तु [1]फलव्याप्यत्वाभावान्न ज्ञानज्ञेययोस्तादात्म्य[2]मध्यस्तत्वमपेक्षते। किं त्वविद्या संबन्धं विनैवातीतादेरिव तत्र व्यवहारं जनयति, अचिन्त्यशक्तित्वात्तस्याः। परपक्षेऽपि [3]तत्र संबन्धासंभवात्।**

---

## दीपनम्

मिथ्यात्वाभावः प्रत्यक्षादिविषय इति भावः। नन्वविद्यापि कथं संबन्धं विनापि विशिष्टव्यवहारं जनयेदित्याशङ्क्य स्वप्नरथादिवद्घटयतीत्याह—**अचिन्त्येति**। वस्तुतस्तु परोक्षे दृश्यस्य चैतन्यमात्रेण संबन्धो [4]वक्तव्यः। अनावृतसाक्षिसंबन्धस्यापरोक्षविषय एवापेक्षितत्वात्, परोक्षव्यवहारे [5]तदाकारवृत्तेरेव तद्विषयचैतन्यावच्छेदकतया

---

## पूरणी

स्वेन विषयीक्रियते अनुमित्यन्तरेण वा, नाद्यः; अभेदे विषयत्वासंभवात्, न द्वितीयः; अनुमित्यन्तरानवस्थापातादिति वाच्यम्; [6]प्रपञ्चत्वसामान्यावच्छिन्नानुमितित्वविशेषावच्छिन्नरूपेण च घटस्य स्वरूपमित्यत्रैवौपाधिकभेदेन स्वेनैव स्वमिथ्यात्वविषयीकरणोपपत्तेरिति संक्षेपः॥

**चैतन्यमात्रेणेति**। आन्तरविषयावच्छिन्नचैतन्ययोर्वास्तवाभेदेन तत्संबन्धमात्रमस्तीत्यर्थः। ननु वास्तवाभेदेन संबन्धेऽतिप्रसङ्ग इत्यत्राह—**परोक्षेति**। वृत्त्यवच्छिन्नचैतन्यस्यैव तादृक्संबन्धाभ्युपगमान्नायं दोषः। ननु वृत्तेरपि कथं तत्संबन्ध इत्यत्राह—

---

[1] फलव्याप्यत्वाभावान्न - **ख. ग. छ.** [2] मध्यस्तमपेक्षते-**ग.** [3] तत्संबन्धस्याभावात्-**क.** तत्संबन्धाभावात्. [4] वाच्यः-**ख.** [5] सहकारिवृत्तेरेव-**ख. घ.**
[6] प्रप-ञ्चसा-**झ.**

न हि विनष्टघटादीनां ध्वंसेन ज्ञानेन वा कश्चित्संबन्धोऽस्ति। एवं मिथ्यात्वं विना कार्यत्वानुपपत्तिः। न हि प्रागसत उत्पत्तिः संभवति ; शशशृङ्गादे[1]रपि तत्प्रसङ्गात् । उत्पत्तेः प्राक्परपक्षे

## दीपनम्

परम्परासंबन्धेन सविषयतोपपत्तेः[2]। अत एव नातिप्रसङ्गोऽपीति प्रागुक्तं न विस्मर्तव्यम्। ननु सत एव [3]कार्यत्वमस्त्विति चेत, किमुत्पत्तेः प्रागपि सतः कार्यत्वमसतो वा। नान्त्य इत्याह — न हीति। ननु शशशृङ्गादौ प्रागभावाभावान्नोत्पत्तिः, घटादेश्च तत्सत्त्वादुत्पत्तिरविरुद्धेत्याशङ्क्याह—उत्पत्तेरिति। यद्यनुत्पन्नघटस्य प्रागभावादिना कश्चित्संबन्धः स्यात् तर्हि भवेन्नरशृङ्गाद्वैलक्षण्यम्। नच तत्संभवति ; तदानीं स्वरूपस्य तस्याभावेन स्वरूपसंबन्धस्याप्य[4]योग्यत्वात्। न चाभावस्वरूपमेव तेन संबन्ध इति वाच्यम् ; तस्य प्रागभावान्तरात्स्वतो विशेषाभावेनान्येनापि संबन्धप्रसङ्गात्। न हि घटीयत्वं तस्मिन्नभावे तदा संभवति। [5]तथापि घटे विशेषाभावात्। न ह्यन्यस्य सत्त्वमन्यस्यासतो व्यावर्तकं भवति। तस्माद्घटस्य प्रागभावप्रतियोगि-

## पूरणी

परम्परेति। एवं सत्यन्योन्याश्रयप्रसङ्गात् वृत्तेः स्वभावादेव विषयसंबन्धः। चैतन्यस्य तु तदवच्छिन्नतया। वास्तवाभेदतादात्म्यं स्वरूपसंबन्धनिरूपणं च चैतन्यविषयाभिप्रायेणेति तत्रास्मदुक्तं न विस्मर्तव्यम्। ननु घटीयत्वमपि प्रागभावस्वभावविशेषः, स च तदाप्यस्तीत्यत्राह—तथापीति। विशेषाभावं दर्शयति— न हीति।

[1] रप्युत्पत्तिप्रस-ख. घ. [2] पपत्तिः-ख. घ. [3] उत्पत्तिरस्त्विति-ख. घ.
[4] अयोगात्-ख. घ. [5] तदापि-ख. ग.

**घटादिव्यवहारस्य शशशृङ्गादिव्यवहारा[1]दविशेषात् । नापि सत उत्पत्तिः ; विरोधात्, प्रागुपलम्भप्रसङ्गाच्च ॥**

**ननु सूक्ष्मरूपेणास्तीति चेन्न ; तत्परि[2]माणतायास्तदाश्रयद्रव्यस्य पूर्वस्मादपकर्षं विना अयोगात्, अस्ति स्वरूपादपकर्षोऽपीति चेत्तर्हि द्रव्यान्तरमेव जायत इति स्थूलमसदेवेति किं सूक्ष्मरूपपरिकल्पनया । न चैकस्यैवावस्थाभेदमात्रं न धर्म्यन्तरमिति वाच्यम् ; स्थूलावस्थायाः प्रागसत्त्वेनासत्येव जायत**

---

### दीपनम्

त्वाभावादेवं कारणसंबन्धाभावाच्च नरशृङ्गान्न कोऽपि विशेष इति नासत उत्पत्तिरित्यर्थः । **विरोधादिति** । कार्यत्वस्य [3]प्रागभावसत्त्वघटितत्वेन सत्त्वासत्त्वयोर्विरोधादित्यर्थः ॥

**पूर्वस्मात्** स्थितिकालीनात् । **द्रव्यान्तरमिति** । [4]अन्यपरिमाणाद्घटात जायमानः स्थूलो घटः परि·ाणभेदाद्द्रव्यान्तरमित्यर्थः । **असत्येवेति** ।

---

### पूरणी

विद्यमानधर्मस्यैव विद्यमानधर्मीतरव्यावर्तकत्वादिति भावः । **एवं कारणेति** । अनुत्पन्नस्य तत्संबन्धायोगात् उत्पत्त्यनन्तरं च तत्संबन्धवैयर्थ्यादित्यर्थः । **स्थितिकालीनादिति** । स्थूलपरिमाणविशिष्टतया विद्यमानादित्यर्थः । नन्विदमनिर्वचनीयपक्षेऽपि तुल्यम । अनिर्वचनीयघटादेरपि प्राक्सत्त्वेऽनुपलम्भविरोधात्कारकव्यापारवैयर्थ्याच्च । तत्सूक्ष्मरूपावस्थानस्यापि भवद्भिरेव निराकृतत्वात् । अविद्यमानस्य चोत्पत्त्यभ्युपगमे शशशृङ्गादिसामान्यतुल्यत्वात् कारणसंबन्धानुप·

---

[1] दविशेषप्रसङ्गात्—ग. [2] माणसूक्ष्मताया·—ग. [3] प्राक्सत्वघटित—ख

[4] अल्पपरि—च.

**इति किं [1]धर्मिस्थितिकल्पनया। असत्या अवस्थाया उत्पत्त्यनुपपत्तेश्च। सत्त्वे च तस्याः स्थित्यवस्थातो न विशेषः। तदुभयदोषपरिहारायोभयविल[2]क्षणमेव प्राक्कार्यमिति कार्यत्वानुपपत्तिरपि मिथ्यात्वे प्रमाणम्। तस्मात्स्वाविद्यया ब्रह्म नामरूपप्रपञ्चाकारेण विवर्तत इति॥**

---

## दीपनम्

च्छेदः। **कार्यत्वानुपपत्तिरपी**त्यपिशब्दान्नाशानुपपत्तिमपि समुच्चिनोति। सतो नाशानुपपत्तेः नाशानन्तरं सतः प्रतियोगिनोऽसत्त्वानुपपत्तेः असतश्च नाशादिना संबन्धा[3]संभवादिति। अतः सत्यज्ञानानन्तानन्दैकरसब्रह्मणः स्वरूपादप्रच्युतस्यैवाविद्यया विविधप्रपञ्चो विवर्तत इति तत्सदा निर्विशेषमेवेति न तस्य निर्विकारत्वक्षतिर्न वा तच्छ्रुतेरप्रामाण्यमित्युपसंहरति—**तस्मादिति**॥

---

## पूरणी

पत्तेश्च। तस्मात्कथंचित्फलबलकल्प्यसंबन्धविशेषाद्याश्रयणेन सामयिकात्यन्ताभावप्रतियोगिनः प्रागभावप्रतियोगिनो वा अनिर्वचनीयस्योत्पत्तिरभ्युपगन्तव्या, सा चास्मत्पक्षेऽपि तुल्येति चेन्न; सत्त्वमसत्त्वं चेति वस्तुनः प्रकारद्वयम्। तत्र सत्त्वं कालत्रयाबाध्यत्वम्, अतिरिक्तसत्ताजातौ मानाभावात्। असत्त्वं च शशशृङ्गादिवत्तुच्छत्वम्। तत्र प्रपञ्चस्य सत्त्वाभ्युपगमे सर्वकालाबाध्यतया उत्पत्तेः पूर्वमप्युपलम्भः कारकव्यापारवैयर्थ्यं च स्यात्। नाशानुपपत्तिश्च; तादृशात्मनो नाशादर्शनात्। तुच्छत्वे च शशशृङ्गादिवन्नोत्पत्तिशङ्कापीति तदुभयवैलक्षण्यस्यावश्यकत्वादिति भावः॥

---

[1] धर्मिकल्पनया—**ख.** [2] क्षणमिति कार्यं—**ख.** [3] भवात्—**क.**

**केचित्तु ब्रह्म परिणमते न विवर्तत इत्याहुः। [1]तैरिदं वक्तव्यम्—[2]अजडस्य ब्रह्मणो जडप्रपञ्चतादात्म्यं स्वसमानसत्ताकं**

### दीपनम्

स्वयूथ्यमतं निराकर्तुमनुवदति—**केचित्त्विति** । तात्त्विकः पूर्वरूपपरि[3]त्यागेनान्यथाभावः परिणामः । मृदादिर्हि पिण्डादिपूर्वविकारं विहायाबाधितघटाद्यात्मत्वं प्राप्नोतीति भवति परिणाम उक्तलक्षणः । पूर्वरूपापरित्यागेनातात्त्वि[4]कोऽन्यथाभावो विवर्तः । यथा अज्ञातरज्ज्वादेः सर्पादिभाव इति तयोर्भेदः । परिणामवादिना हि सृष्टिपूर्वकाले यद्रूपापन्नं ब्रह्म तस्य विनाशो वक्तव्यः मृद इव पिण्डा[5]वस्थायाम् । न हि पिण्डावास्थायां सत्यां मृदो घटावस्था भवति । अन्यथा निरवयवस्वप्रकाशब्रह्मणः सावयवजडप्रपञ्चाभेदायोगाच्च । तथा

### पूरणी

ननु कार्यस्य स्वोत्पत्तेः पूर्वं सूक्ष्मतावस्थाविशेषानभ्युपगमे सत्कार्यवादभङ्ग इति चेन्न ; कारणमेव कार्यस्य स्वरूपं न त्वतिरिक्तम्, मृदादिव्यतिरेकेण घटस्वरूपानुपलम्भादित्यभिप्रायत्वात्सत्कार्यतोक्तेः । ब्रह्मातिरिक्तप्रपञ्चस्वरूपनिषेधे तावन्मात्रस्यैवोपयोगादिति सर्वं रमणीयम् ॥

**तात्त्विक इति** । धर्मिसमानसत्ताक इत्यर्थः । **अबाधितेति** । स्वसमानसत्ताकेत्यर्थः । **रज्ज्वादेरिति** । रज्ज्वाद्यवच्छिन्नचैतन्यस्येत्यर्थः । **अन्यथा निरवयवेति** । ननु निरवयवाविद्याया अपि प्रपञ्चात्मना परिणामे पूर्वजाड्याद्यवस्थानाशः स्यात्, यदि च पिण्डा-

---

[1] तैरित्थं—**छ.** [2] अभेदस्य ब्रह्मणो भेदप्र—**क.** [3] त्यागेन वान्यथा—**क. घ.** [4] को वान्यथा—**घ.** [5] अवस्थायाः—**घ.**

**न वेति। आद्ये प्रपञ्चकाले ब्रह्माजडं न स्यात्, न हि ब्रह्म स्वसमानसत्ताकजडाभेदे सति तदभाववद्भवति। समानसत्ताकभावाभावयोरेकदैकत्रासंभवात्। ननु कार्यकारणभावनिर्वाहार्थं तयोस्तादात्म्यं स्वीकर्तव्यम्, तच्च भेदाभेदात्मकमिति अन्यत्र**

## दीपनम्

च ब्रह्मणो ज्ञानादिस्वभावविनाशेऽनित्यत्वाद्यापत्तिरिति ब्रह्मणः कौटस्थ्य[1]भङ्गः श्रुतिविरोधश्चेत्याभिप्रेत्याह — **प्रपञ्चकाल इति**। अजडस्यापि जडाभेदः प्रमाणसिद्धत्वात्प्रकृतेऽङ्गीकर्तव्यः, नच पिण्डस्य घटाभेदे किंचित्प्रमाणमस्तीत्याशङ्कते—**नन्विति**। समानसत्ताकयोर्हि भावाभाव-

## पूरणी

वस्थाया अवयवसंयोगविशेषत्वान्नाशोऽपि न जाड्यादिस्वरूपधर्मनाशः, मृत्परिणामेऽपि मृत्त्वतद्रूपादेरनाशादित्यभिमतम्, तदा ब्रह्मपक्षेऽपि तुल्यमिति चेत, अनिर्वचनीयसत्त्वादिगुणविशिष्टाविद्याया विविधप्रपञ्चात्मना परिणामेऽपि निर्गुणतद्रूपब्रह्मणस्तदसंभवात्। ब्रह्मपरिणामत्वे प्रपञ्चस्य सत्यत्वापातात्। तत्सत्यतायाश्च श्रुत्यादिभिरुक्तरीत्या निरासात्। आवश्यकाविद्ययैव तदुपपत्तौ ब्रह्मणस्तथा परिणामकल्पनायां मानाभावाच्च। अत एव रज्जौ सूत्रद्वयवन्मायाब्रह्मणी मिलित्वा उपादानमित्यपि पक्षो निरस्तः। शुक्लाशुक्लतन्तूपादानकपटादेः शुक्लाशुक्लत्ववज्जडाजडपरिणामप्रपञ्चस्य जडाजडात्मतापाताच्चेति दिक्। ननु जडप्रपञ्चपरिणामिनोऽपि ब्रह्मणस्तद्भेदाभेदलक्षणतादात्म्यवत्त्वादजडत्वमप्युपपद्यत इति भेदाभेदवादिमतमाशङ्क्याह—**न हि ब्रह्मेति मूलम्**। **जडाभेदः** जडात्यन्ताभेदः। **प्रमाणेति**। अन्यत्र

[1] भङ्गप्रसङ्गः - च.

**विरोधेऽपि नात्र विरोध इति चेन्न ; घटतदभावयोर्दृष्टस्वभावानुरोधेन कार्यकारणभावोपपत्तौ दृष्टविपरीतस्वभावस्यानङ्गी[1]कारात्**

## दीपनम्

योर्नियमेन विरोधो दृष्टः। यथा घटतदभावयोः। अन्यथा विरोधवार्ता क्वापि न स्यात्। भेदाभेदयोरपि सत्यत्वे सामानाधिकरण्यं न स्यात्। अतः कल्पितभेदघटितमेव तादात्म्यमिति [2]ब्रह्मणो विकारसंबन्धो मृषैवेति न परिणामि ब्रह्मेत्यभिप्रेत्याह—**घटेति**। कार्यकारणसंबन्धोपपत्तावित्यर्थः। यत्त्वभेदतदभावयोर्न विरोधग्राहकं प्रमाणमिति तन्न; भूतले घटाभेदाभावस्या[3]भेदेन घटे घटाभेदस्य तदभावेन सह विरोधानुभवात्। नच मृदि वर्तमानघटभेदाभेदाभ्यां तावन्याववेति वाच्यम्; तत्र प्रमाणाभावात्। नच मृद्धट इत्यनुभव एव प्रमाणम्; [4]प्रमीयमाणमृदभेदस्य तेन [5]तदभावाविषयीकरणात्। न हि घटे [4]प्रमीयमाणमृदभेदो नास्तीति कश्चिदनुभवति। अतः समानाधिकरणप्रतीतिबलादपि न तयोरविरोधकल्पना। यद्येवमपि कार्यकारणसंबन्धिभूतभेदतदभावावन्यौ, तौ च न विरुद्धौ, अन्यत्रैव तयोर्विरोध इति

## पूरणी

प्रमाणसिद्धश्चेद्धटाभेदे घटभेदविरहे कार्यकारणविषये सर्वत्र भेदाभेदसत्त्वाद्ब्रह्मणो जडप्रपञ्चेनापि भेदाभेदौ स्यातामिति स एवाशङ्कत इत्यर्थः। ननु कथं तर्हि कार्यकारणयोस्तादात्म्यमित्यत्राह—**कल्पितभेदेति**। तादृशतादात्म्याभ्युपगमे च न परिणामसिद्धिः, ब्रह्मभिन्नसत्ताकत्वात्संबन्धिप्रपञ्चस्येत्याह—**इति ब्रह्मण इति**।

[1] कार्यत्वात्–**छ.** [2] ब्रह्मणोऽवि कारणसं **ख.** [3] स्यान्नेदादेव न घटे घटाभावस्य तदभावेन–**च.** [4] प्रतीयमान-**ख. घ.** [5] तत्राभावा–**घ.**

**पक्षादन्यत्रैवायं नियम इति सर्वत्र वक्तुं शक्यतया अतिप्रसङ्गाच्च। न च सृष्टिश्रुति[1]प्रामाण्याय तत्र तथात्वं स्वीक्रियत इति वाच्यम्; तस्याः प्रमाणान्तरदृष्टसृष्ट्य[2]नुवादेनाद्वैत-**

---

## दीपनम्

ब्रूयाः, तर्हि न कोऽपि तव पक्षे नियमः सिद्ध्येदित्याह—**पक्षादिति।** **प्रमाणान्तरं** अनुमानम्। ननु सृष्ट्यभावे कर्तृकर्मफलानां प्रमातृप्रमाणप्रमेयानामपि भेदो न स्यादिति साऽर्थवतीति चेन्न; "न कदाचिदनीदृशं जगत्" इत्यभ्युपगमेऽपि तत्प्रामाण्यसंभवेन तदर्थं ब्रह्मणः सृष्टिप्रतिपादनायोगात्। किमर्थं [3]तर्ह्यनुवादरूपा ब्रह्मणः सृष्टिश्रुतिः,

---

## पूरणी

**न च सृष्टिश्रुतीति** मूलम्। ब्रह्मणि प्रपञ्चस्य मिथ्यातादात्म्याभ्युपगमे मिथ्यात्वापत्त्या तत्प्रतिपादकश्रुतीनामप्रामाण्यं स्यादित्यर्थः। ननु सूक्ष्मभूतादिसृष्टौ न प्रत्यक्षं संभवतीत्यत्राह—**अनुमानमिति।** **सृष्ट्यभाव इति।** [4]सृष्टशरीराहङ्कारेन्द्रियादीनां पृथक्प्रतिपादनाभावे कर्तृकर्मादिभेदप्रत्ययस्यैकस्मिंश्चन्द्रादौ तद्भेदप्रत्ययवदप्रामाण्यशङ्काकलङ्किततया तत्फलकादिव्यापारेषु निष्कलं प्रवृत्तिर्न स्यादिति तदर्थं तत्प्रतिपादनमर्थवदित्यर्थः। **तत्प्रामाण्येति।** भेदप्रत्ययप्रामाण्यावधारणसंभवेनेत्यर्थः। **ब्रह्मण इति।** एवमपि पृथक् शरीराहङ्कारादिस्वरूपमात्रप्रतिपादनेनैव तदवधारणोपपत्तेर्ब्रह्मकर्तृकसृष्टिप्रतिपादनं विफ-

---

[1] प्रामाण्यमादाय तथा—**ग.** [2] नुरोधेन—**क.** [3] तर्ह्यर्थवादः—**ख.**
[4] सृष्टतया—**ट.**

**ब्रह्ममात्रपरत्वात् । निष्प्रयोजनत्वाच्च [1]सृष्टिश्रुतेस्तत्र न तात्पर्यम् । अन्यार्थसृष्ट्यापि कर्मकाण्डादिप्रामाण्यसंभवात् । द्वितीये च नाममात्रे विवादः, कल्पितेनापि दोषविशेषाजन्यतया स्वरूपविशेषाच्चार्थक्रियोपपत्तेः । नच पूर्वक्षणे सत्त्वाभावे कारणमेव न [2]भवेदिति वाच्यम् ; तदा विद्यमानत्वमात्रेण स्वरूपविशेषादेव हेतुत्वोपपत्तेः । तस्माद्ब्रह्मविषमसत्ताकत्वात्प्रपञ्चो [3]विवर्त एव ॥**

---

## दीपनम्

विकारमिथ्यात्वप्रतिपादनेनाद्वितीयब्रह्मपरा, तादृश्यापि सृष्ट्या [4]कर्मकाण्डादिप्रामाण्यमविरुद्धमित्याह — **अन्यार्थेति । नाममात्र इति ।** प्रपञ्चतत्संबन्धयोर्ब्रह्मवदबाध्यत्वाभावेन शुक्तिरजतवन्मिथ्यात्वमेव सिद्ध्येत् । कल्पितस्यापि कादाचित्क[5]दोषाजन्यतया देहात्मसंबन्धवदर्थक्रियायोग्यत्वं च न विरुद्धमिति भावः । अतो निर्विशेषस्यापि ब्रह्मणो जगत्कारणत्वं लक्षणं सुस्थमित्याह — **तस्मादिति ॥**

---

## पूरणी

लमेवत्यर्थः । **तादृश्यापीति ।** अनूदितया मिथ्याभूतयेति यावत् । मूले अन्यार्थशब्दोऽप्येवमर्थक इति भावः ॥

---

[1] सृष्टिस्तत्र श्रुतेन तात्पर्यम्—**ख. ग. छ.** [2] भवतीति—**क. ग.** [3] विवर्तत—**छ.**
[4] कर्मकाण्डादौ—**घ**, कर्मकाण्डभा—**ख.** [5] दोषजन्य-**च.**

कारणत्वं च ब्रह्मण उपलक्षणं काक इव गृहस्य । मिथ्याभूतमप्युपलक्षणं संबन्धाद्भवति । स्वरूपलक्षणं तु यत इति

---

### दीपनम्

नन्विदं ब्रह्मणो न स्वरूपलक्षणम्; मुक्तिदशायां तदभावात्, नाप्युपलक्षणम्, अनेनोपलक्ष्यब्रह्मस्वरूपान्तरानु[1]पलम्भात्, तस्मान्मुक्तिकालेऽपि [2]सप्रपञ्चत्वमेव ब्रह्मण इति चेत्, तर्ह्युपास्यन्तां गुरव इत्यभिप्रेत्याह— **कारणत्वं चेति । स्वरूपेति ।** ब्रह्मस्वरूपमेव सन् सत्यज्ञानानन्दः स्वात्मानमितरस्माद्व्यावर्तयतीति स स्वरूपलक्षणम् । न चासाधारणधर्मस्यैव लक्षणत्वा[3]त्कथं स स्वरूपलक्षणमिति वाच्यम्; पराभिमतविशेषादेस्तदतिरिक्तासाधारणधर्माभावात् । एवं घटत्वादेरपि नासाधा[4]रणो धर्मोऽस्ति । तस्माद्यद्विषयं सत् ज्ञानं यस्य तदितरभेदसंशयादि निवर्तयति तत्तस्य लक्षणमित्यानन्दो ब्रह्मैव ब्रह्मलक्षणम् । यत्त्वानन्दादीनां ब्रह्मलक्षणत्वाय तद्गुणत्व[5]मङ्गीकरणीयमिति, तन्न; "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इति ततः प्रपञ्चोत्पत्तिश्रुतिविरोधात् । प्रागुक्तरीत्या [6]संबन्धाभावादपि न गुणगुणिभावः । यत्तु तदभिन्नमपि तद्गुण

---

### पूर्णी

**तस्मान्मुक्तीति ।** अन्यथा सूत्रितैतल्लक्षणानुपपत्तेरिति भावः । **यद्विषयमिति ।** इतरभेदसंशयादिव्यावर्तकज्ञानविषयत्वं लक्षणस्वरूपम् । तच्चासाधारणधर्मधर्मिसाधारणम्, समानविषयत्वेनैव

---

[1] पलम्भ इति—च. [2] सप्रपञ्चमेव चेत्—क, सप्रपञ्चमेव ब्रह्मेति चेत्—च. [3] कथं स्वरूपलक्षण च. [4] रणधर्मो—क. ख. ग. [5] मङ्गीकर्तव्य—घ. च. [6] श्रुतिसंब—क.

## दीपनम्

इति तदतितुच्छम्; स्ववृत्तित्वानुपपत्तेरिति भावः। ननु कथमुक्तलक्षणं ब्रह्म[1] सिद्ध्यति, कार्यलिङ्गादिना जगत्कारणत्वादिविशिष्टतयैव तत्सिद्धेः। न च श्रुत्या तत्सिद्धिरिति वाच्यम्; प्रबलानुमानविरोधेन आदित्यवर्ण-श्रुतेरिव तस्यान्यार्थत्वादित्याशङ्क्य "नावेदविन्मनुते तं बृहन्तम्," "तं त्वौपनिषदं" इति च श्रुतिद्वयसिद्धमर्थमभिप्रेत्य शास्त्र-

## पूरणी

निश्चयस्य संशयनिवर्तकत्वोक्तेरिति भावः। **स्ववृत्तित्वेति**। अन्यथा स्वरूपस्यैव गुणत्वे पारिभाषिकमात्रतापातादिति भावः। वस्तुतस्तु "केवलो निर्गुण" इत्यादिश्रुतिविरोधान्नानन्दादिगुणकत्वम्। न च सत्त्वादिगुणराहित्यपरैवेयं श्रुतिरिति वाच्यम्; सङ्कोचे हेत्वभावात्। गुणशब्दस्य सर्वनामवद्बुद्धिस्थमात्रवाचकत्वेन कृत्स्नगुणानां तेन परामर्शसंभवात् आनन्दस्य गुणत्वे मानाभावात जीवानन्दे तदात्मा-भेदसाधनेन तत्रापि तद्गुणत्वासिद्धेश्चेति दिक्। **आदित्यवर्णेति**। "अशब्दमस्पर्शं" इति श्रुत्यादिविरोधेन "आदित्यवर्णं तमसः परस्तात्" इति ब्रह्मगोचरश्रुतेरादित्यतुल्यरूपवत्त्वलक्षणमुख्यार्था-संभवेन तद्वद्भासकत्वलक्षणगौणार्थवदुक्तानुमानविरोधेनाद्वितीयादिश्रुते-रर्थान्तरं वाच्यमित्यर्थः। **श्रुतिद्वयसिद्धमिति**। एतच्छ्रुतिद्वयेन श्रुत्येक-समधिगम्यं न तु मानान्तरगम्यमिति प्रतिपादनात्। मानान्तरागम्य

[1] भवति—घ.

**सूक्ष्मप्रकृत्यंशसूचितः श्रुतिसिद्धः सत्यज्ञानानन्दः। तथा हि शास्त्रयोनित्वाधिकरणन्यायेन शास्त्रैकसमधिगम्यं तावद्ब्रह्म**

---

## दीपनम्

मेव तत्प्रमाणमित्याह—**तथा हीत्यादिना**। अनुमानविधया शास्त्रमपि ब्रह्मप्रमाणमित्युक्तं स्यादित्याशङ्क्योक्तम्—**एकेति**।

---

## पूरणी

च तद्विरोधानवतारादिति भावः। **शास्त्रयोनित्वेति** मूलम्। "शास्त्रयोनित्वात्" इत्यत्र वर्णकद्वयम्। तत्र प्रथमवर्णके "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद" इति वाक्यं विषयः। यदृग्वेदादिकमस्ति तदेतदस्य सर्वगतस्य नित्यसिद्धस्य ब्रह्मणो निश्वास इवाप्रयत्नेन नित्यमिति तदर्थः। तत्र ब्रह्म वेदकर्तृ न वेति संशये, वेदस्य नित्यत्वात्, नित्यता च प्रतिकल्पं वर्णक्रमाद्यन्यथाभावविरहात्, "वाचा विरूप नित्यया" इत्यस्मिन्मन्त्रे विरूपेति देवतां सम्बोध्य नित्यया वाचा स्तुतिं प्रेरयेत्येवमर्थके नित्यत्वोक्तेः वेदस्यैव नित्यवाग्रूपत्वात्—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा"

इति स्मृतेश्च, न तत्कर्तृ ब्रह्मेति प्राप्ते—विषयवाक्येन निश्वासन्यायेनाप्रयत्नोत्पत्त्यभ्युपगमात् श्रुत्यादिप्रमाणबलेन सर्गप्रलययोरभ्युपगमात् प्रलये शब्दात्मकवेदस्योच्चारयितुरभावेन तत्स्थितौ प्रमाणाभावात्। शब्दाश्रयव्योम्नोऽपि "नासीद्रजो नो व्योम" इति श्रुत्या निवृत्तिप्रतिपादनेन तदाश्रितवेदानां तदा स्थित्यनुपपत्तेः। "न वेदा" इत्यादिवाक्येन तेषामपि निवृत्तिप्रतिपादनाच्च। सृष्टिसमये

**सिद्धम्। शास्त्रं च जगत्कारणब्रह्मानुवादेन "सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इत्यादि सच्चिदानन्दाद्वयं ब्रह्म प्रतिपादयतीति भवति तत्स्वरूपं ब्रह्म ॥**

---

## दीपनम्

वक्ष्यमाणविधया च [1] समन्वयाध्यायसिद्धमर्थमभिप्रेत्याह—**शास्त्रं चेति ॥**

---

## पूरणी

वेदानां पुनरुत्पत्तेरवश्याभ्युपगन्तव्यत्वात् "ऋचः सामानि जज्ञिरे" इति तदुत्पत्त्यवगमाच्च। मन्त्रादौ च नित्यपदस्यापौरुषेयार्थकत्वात्। प्रतिसर्गं पूर्वसाम्येनोत्पत्तेः सजातीयप्रवाहरूपनित्यार्थत्वाद्वा। स्मृतावनादिनिधनेति च स्वयम्भुपदाभिधेयचतुर्मुखब्रह्माधीनोत्पत्त्यादिनिषेधार्थत्वात् वेदकर्तृ ब्रह्म। तत्कर्तृत्वाच्च सर्वज्ञमिति सिद्धान्तितम्। अत्र शास्त्रस्य वेदस्य योनिः कारणं तत्त्वादिति सूत्रार्थः। इमं चार्थमग्रे व्यक्तीकरिष्यति ॥

द्वितीयवर्णके "नावेदविन्मनुते तं बृहन्तम्", "तं त्वौपनिषदं पुरुषं पृच्छामि" इति वाक्यद्वयं विषयः। ब्रह्म शास्त्रैकगम्यं न वेति संशये तत्सिद्धान्तितं तत्प्रकारमाह मूले—**शास्त्रयोनित्वाधिकरणेत्यादिना**। अत्र च शास्त्रं योनिः ज्ञप्तिकारणं प्रमाणं यस्य तत्त्वात् शास्त्रप्रमाणकत्वादिति सूत्रार्थः। ननु सिद्धाद्वितीयब्रह्मस्वरूपे कथं वेदान्तानां पर्यवसानमित्यत्राह—**वक्ष्यमाणेति ॥**

---

[1] समन्वयन्याय-**च**.

## शास्त्रयोनित्वाधिकरणविचारः

**ननु कथं ब्रह्मणः शास्त्रयोनित्वम्, चैतन्यस्याहमनुभवे प्रकाशमानत्वात्। न च ब्रह्मस्वरूपं न प्रकाशत इति वाच्यम्; चैतन्यातिरिक्तब्रह्मस्वरूपाभावात्। ननु सर्वज्ञत्वादिविशिष्टं ब्रह्म तद्विषय इति चेन्न; श्रुते[1]स्तत्रातात्पर्यात् तस्य कार्यत्वादिना सिद्धत्वाच्चेति, उच्यते — यद्यप्यन्तःकरणसाक्ष्यद्वैतं ब्रह्माहमित्यनुभवे प्रकाशते, तथापि [2]यथावत्स्वरूपावगमे तस्य**

### दीपनम्

शास्त्रयोनित्वन्यायमाक्षिपति—**नन्विति।** **शास्त्रयोनित्वं** शास्त्रैकयोनित्वम्। किं निर्विशेषं ब्रह्म तथा उत सगुणम्। नाद्य इत्याह—**चैतन्यस्येति।** द्वितीयं शङ्कते—**नन्विति।** तत्त्वावेदकशास्त्रस्यापि न तद्विषयः; कल्पितत्वादित्यभिप्रेत्याह—**न श्रुतेरिति।** तत्र शुद्धस्य तावदौपनिषदत्वं साधयति—**उच्यत इति। तथापि** न सा तत्प्रमेति शेषः। अज्ञातार्थत्वाभावात् प्रमाणजन्यत्वाभावाच्च। यद्यबाधि[3]तार्थत्वमात्राभिप्रायेण प्रमेत्युच्यते तथापि तस्य ब्रह्मणो यादृशं प्रमाणसिद्धस्वरूपं न तस्य स [4]नियत इति तदर्थं प्रमाणान्तरमेषितव्यमित्याह—**यथावदिति। स्वरूपावगमे** स्वरूपनिश्चये।

### पूरणी

**अज्ञातार्थेति।** अज्ञातार्थग्राहित्वं प्रमाणजन्यज्ञानत्वं वा तदुभयमपि नाहमनुभवेऽस्ति, स्वप्रकाशचैतन्ये स्वरूपावारकाज्ञानविरहस्य प्रतिपादितत्वात् तज्ज्ञानस्य नित्यत्वेन प्रमाणाजन्यत्वाच्चेत्यर्थः। **तस्येति।** विद्यमानोऽपि स्वरूपप्रकाशः अज्ञानावरणप्रतिबन्धान्ना-

[1] तत्र तात्पर्याभावात्—क. ग. [2] यावत्स्वरूप—क. ग. [3] तार्थत्वाभिप्रायेण—क. [4] निश्चय—क. घ.

**शास्त्रं प्रमाणम् । न हि शास्त्रादृते तस्य [1]सच्चिदानन्दाद्वितीयस्य ब्रह्मणः सत्तानिश्चयरूपं ज्ञानं भवति । मानाभावप्रयुक्तासत्त्व-**

---

### दीपनम्

**शास्त्रं प्रमाणं** साधनमित्यर्थः । नन्वहमनुभवस्यापि [2]निश्चयत्वादबाधितत्वाच्च किं शास्त्रेणेत्याशङ्क्य यद्यपि चैतन्यांशमात्रे स निश्चयस्तथापि विशेषांशे न निश्चयः; तदंशे संशयाद्यविरोधित्वादित्याह—**नहीति** । ननु ब्रह्मण्यंशाभावात्कथं तस्य तदंशेऽनिश्चयत्वमिति चेत्सत्यं नास्त्येवांशभेदः, तथाप्यहमिति प्रकाशमाने चैतन्ये ब्रह्माहमस्मि न वेति संशयः सर्वानुभवसिद्धः । स च ब्रह्म [3]नास्मीत्यादिव्यवहारयोग्यतालक्षणावरणप्रतिबन्धादुपपन्न इत्युक्तम् । एवं च यत्प्रमाणं यस्मिन्नर्थे मानाभावप्रयुक्तं यदाकारमसत्त्वसंशयं निवर्तयति तत्तस्मिन्नर्थे मानम् । न तु तद्गोचरतामात्रेण, अज्ञाततया [4]प्रत्यक्षगोचराप्रत्यक्षप्रपञ्चस्यापि प्रत्यक्षमेयत्वप्रसङ्गात् । परपक्षे चक्षुरादिजन्य[5]प्रमेयाकारज्ञानविषयधर्माधर्मादीनामपि चक्षुरादिप्रमेयत्वप्रसङ्गात् । न चाहमनुभवेनाद्वितीयब्रह्मगोचरसंशयो निवर्तत इति न तत्र प्रमाणम् । अत एवानुमानादिकमपि [6]न तन्मानमिति [7]वेदैकवेद्यमेव तदित्यभिप्रेत्याह—**मानाभावेति** ।

---

### पूर्णी

खण्डानन्दाद्यालम्बन इत्यर्थः । **अज्ञाततयेति** । घटं न जानामि धर्मं न जानामीत्यज्ञानावच्छेदकतया घटधर्मादेः साक्षिप्रत्यक्षवेद्यत्वादित्यर्थः । **अत एवेति** । अद्वितीयब्रह्मणि कथञ्चिदनुमानाद्यवतारेऽपि तज्जन्यानु-

---

[1] सत्यज्ञानानन्दा -छ. [2] निश्चितत्वा—क. [3] नास्तीत्या च. [4] प्रत्यक्षागोचर—क. [5] प्रमेयत्वप्रकारकज्ञानेन धर्मा—घ. [6] न तन्मानमपि तु वेदैक—ख. [7] श्रुत्येक—च.

शङ्का यस्य येन मानेन व्यावर्त्यते तदेव हि तन्मानम्। सर्वज्ञत्वादिविशिष्टब्रह्मसिद्धिरपि शास्त्रादेव न कार्यलिङ्गात्। तथा हि—न तावदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं कार्यमिति प्रतिज्ञया तत्सिद्ध्यति; अनित्यज्ञानादीनां सर्गाद्यकाले बाधितत्वात्। नित्यत्वे च नित्यकृत्यैवोपपत्तेर[1]प्रयोजकतया न ज्ञानादिसिद्धिः। न च युगपत्तेषां सिद्धेर्न नित्यकृत्या [2]ज्ञानाद्यपह्नव इति वाच्यम्; कृतिमात्रस्याप्यनुमातुं शक्य-

---

## दीपनम्

इदानीं सगुणब्रह्मणोऽपि शास्त्रैकमेयत्वं साधयति—**सर्वज्ञत्वादीति**। **तावदिति** वक्ष्यमाणवाक्य[3]लिङ्गापेक्षया। **अनित्येति**। सर्गाद्यकाले शरीराद्यभावेन तेषां बाधितत्वादित्यर्थः। नन्वत एव पक्षधर्मताबलान्नित्यज्ञानसिद्धिरित्यत आह—**नित्यत्वे चेति**। ज्ञाननित्यत्ववत् कृतिनित्यताया अपि ततः सिद्धेर्नित्यकृत्यैव [4]कार्योत्पत्तौ ज्ञानादेरुपयोगाभावान्न कार्यबलात्तत्सिद्धिरिति भावः। नच नित्यकृतिसाधकप्रमाणेन ज्ञानस्यापि सिद्धत्वान्न तदपलाप इति वाच्यमित्याह—**न चेति**। **कृतिमात्रस्येति**। यस्य कस्यचित्प्रथममेव विमतमुपादानगोचर[5]कृतिजन्यं, तत एव, तद्वदिति नित्यकृतिमात्रस्याप्यनुमितिसंभवात्तस्यानुपयोगेन न नित्यज्ञानादिसिद्धिरिति भावः। यस्य पुनस्त्रितयगोचरानु-

---

## पूरणी

मित्यादेरावरणप्रतिबन्धानिवर्तकतया तदधीनतदसत्तासंशयाद्यनिवर्तकत्वादित्यर्थः। **वाक्यलिङ्गेति**। वेदवाक्यपक्षकवाक्यलिङ्गापेक्षेत्यर्थः।

[1] प्रयोजनतया—छ. [2] ज्ञानापह्नव—क. [3] वाक्यलिङ्गज्ञानापे—क. ख. ग.
[4] कार्योपपत्तौ—क [5] कृतिमज्जन्यं—ख. घ. च.

**त्वात् । युगपदुपस्थितावपि तर्काभावे न वस्तुनिर्णयः । अन्यथा व्यभिचारिलिङ्गादुपस्थितस्याप्यपरित्यागप्रसङ्गः । न च लाघवतर्केण कार्यस्य [1]ज्ञानजन्यत्वं निश्चितमिति वाच्यम्; ज्ञानादीनां साक्षात्कारणत्वस्य प्राङ्निरस्तत्वात् । अनुकूलत्वमपि**

दीपनम्

मितिरेव प्रथमं जायते तत्राह—**युगपदिति** । अनुकूलतर्काभावे अप्रयोजकलिङ्गेन वस्तुनि ज्ञातेऽपि न [2] तत्त्वसिद्धिरित्यर्थः । अनुमित्युत्पत्तिमात्रेणानुमेयाभ्युपगमे बाधकमाह—**अन्यथेति** । व्यभिचाराज्ञानसमय इत्यर्थः । नन्वबाधितानुमितिः स्वप्रमेयं साधयति, व्यभिचारिलिङ्गजन्या तु सा बाधान्न प्रमाणम्, न चात्र तर्काभावादनुमितिरेव नोदेतीति वाच्यम्; व्याप्तिपक्षधर्मताज्ञानदशायामनुमितौ विलम्बाभावात् । न च तर्काभावे व्याप्तिरेव न [3] सिद्ध्यतीति वाच्यम्; तस्यैवासिद्धेरित्याशङ्क्याह—**न चेति** । यत्कार्यं तज्ज्ञानादिजन्यमिति निश्चितमित्यर्थः । संभवद्विषये हि लाघवस्यावतारः, न चात्र तद्विषयसंभव इत्याह—**ज्ञानादीनामिति** । परम्पराकारणं चाकारणमेव । तथा च व्याप्त्यसिद्धिरिति भावः । ननु मा भूत्परम्परा[4]कारणम्, अनुकूलं तु भवत्येव, तथा च यत्कार्यं तत्तदुपादानगोचरज्ञानादिप्रयोज्यमिति व्याप्तिरस्तीत्याशङ्क्याह—**अनुकूलत्वमिति** । कृतिनित्यत्वं च कुलालादिज्ञानवत् कारणत्वसंभवात्

पूरणी

**तस्यैव** व्याप्तिग्राहकतर्काभावस्य । लाघवाख्यतर्कसत्त्वादित्यर्थः । नन्वस्त्वयःपिण्डादौ धूमव्यतिरेकानिश्चयदशायां वह्नौ व्याप्तिनिश्चये

[1] ज्ञानादिजन्य–ग. [2] तत्सिद्धिः–ख, वस्तुसिद्धिः–घ. [3] सिद्ध्येदिति–ख. घ. [4] कारणं कारणम्–ख. ग. च.

**कृतिनित्यत्वे नास्त्येव । न च दृष्टान्ते परम्परयाऽनुकूलत्वमत्र [1]तु तद्बाधात्कारणत्वेनैव तदिति वाच्यम्; तदपुरुषार्थसाधने**

---

## दीपनम्

ज्ञानादेः कारणकारणतारूपमनुकूलत्वं बाधितं नानुमानात्सिद्ध्यतीति भावः । नन्वनुकूलत्वस्य कारणतत्कारणसाधारणत्वात्परम्पराकारणत्वबाधे साक्षात्कारणत्वेनैव तत्सिद्ध्यतीत्याशङ्क्याह—**न चेति** । व्याप्तिग्रहात्पूर्वं यत्र यत्र साधननिश्चयस्तत्र सर्वत्र व्यापकनिश्चयाभावेऽपि तत्संभावनादशायामेव लाघवतर्केण व्याप्तिग्रहो वक्तव्यः, अन्यथा लाघवानवतारात् । इतरथा क्वचिद्वह्निधूमसाहचर्यग्रहणदशायां वह्निमात्रे धूमसाहचर्यनिश्चयः, ततोऽय पिण्डादावप्यनुद्भूतरूपस्पर्शधूमानुमानं च स्यात् । एवं च यावदनित्यज्ञानाजन्यत्वेन निश्चिते स्व-[2]शरीरतरुदूर्वादौ सर्वेषामबाधितकार्यत्वानुभवोऽस्तीति तत्रापि व्यापकसंभावना प्रागेव वक्तव्या । [3]न च साऽनित्यज्ञानं विषयीकरोतीति नित्यज्ञानादिकमादायैव ज्ञानादिप्रयोज्यत्वसंभावना वक्तव्या । न च व्याप्तिग्रहात्पूर्वं नित्यज्ञानादिकं प्रसिद्धमस्तीत्यसंभावितविषयतया लाघवानवतारान्न व्याप्तिनिश्चयः । प्रकारान्तरेणापि लाघवानवताराय ज्ञानादिप्रयोज्यत्वे बाधकमाह—**तदपुरुषार्थेति** । यद्यस्य [4]सुखादेः

---

## पूरणी

का क्षतिरित्यत्राह—**तत इति** । कार्यत्वे ज्ञानादिमज्जन्यत्वव्याप्तिग्रहे सति क्षित्यादावनित्यज्ञानबाधे नित्यज्ञानादिकल्पनवत् प्रथमगृहीतवह्निव्याप्तिग्रहबलेनायःपिण्डादावयोग्यधूमकल्पना स्यादित्यर्थः । यद्यपि

---

[1] च-**क. छ.** [2] शरीरज्ञानतरु-**च.** [3] न वा संभावनाऽनित्य-**ख.** नच सा संभावनाएऽनि-**च.** [4] सुखादिसाधनं-**ख. ग.**

**तदिच्छाजन्यत्वस्यापि बाधितत्वात्। अवाप्तकामस्ये[1]च्छाऽसंभवेन तन्निमित्तज्ञानस्याप्यसंभवात्। वर्णितलाघवेन मन-**

### दीपनम्

साधनं [2]तदेव तच्चिकीर्षाप्रयत्नजन्यम्, न चेश्वरस्य किञ्चित्तादृशमस्तीति न तदिच्छाप्रयत्नजन्यत्वं क्षित्यादेरित्यर्थः। ईश्वरस्य चिकीर्षाद्यभावादेव न ज्ञानमपि कल्पनीयम्, तद्धेतुतयैव कुलालादावुपादानज्ञानकल्पनादिच्छानधिकरणस्य ज्ञानानधिकरणत्वनियमाच्चेत्यभिप्रेत्याह—**अवाप्तेति**। किं च यदि कुलालादौ ज्ञानं दृष्टमितीश्वरेऽपि तत्कल्प्येत तर्ह्यशरीरी स न सिद्ध्येत्। शरीरादेरपि लाघवेन कार्यमात्रहेतुताकल्पनापत्तेः। न च सर्गाद्यकाले शरीरादिकं न संभवतीति वाच्यम्; ज्ञानवदनित्यस्यासंभवेऽपि नित्यस्य तस्य संभवात्। शरीरमनित्यमेवेति व्याप्तिश्च ज्ञानमनित्यमेवेति व्याप्तिवत्पक्षधर्मताबलाद्बाधितेत्याह—**वर्णितेति**। ननु तच्छरीरस्य पार्थिवत्वादौ विनिगमका-

### पूरणी

सर्वत्र व्याप्यवति व्यापकसंशयो न व्याप्तिग्रहहेतुः; मानाभावात्, व्यभिचारज्ञानविरहस्यैव व्याप्तिग्रहहेतुत्वात्, व्यभिचाराज्ञानदशायां वह्न्यादौ व्याप्तिग्रहेऽपि पश्चाद्बाधेन तत्परित्यागस्योचितत्वात्, वह्निधूमसाहचर्यं विना विपक्षे बाधकाभावाच्च। प्रकृते च कर्तारं विना कार्योत्पत्त्यसंभवेन कार्यकारणभावस्यैव विपक्षे बाधकत्वात्। अन्यथा अयोगोलकादावपि धूमसंशयदशायां तद्व्याप्तिग्रहे का गतिः स्यात्। तथापि नित्यज्ञानानुपस्थितिदशायां ज्ञानमनित्यमेवेति व्याप्त्यवधारणात्। अनित्यज्ञानजन्यत्वव्यतिरेकस्य च क्षित्यादौ निश्चितत्वेन व्यभिचारज्ञानान्न व्याप्तिग्रह इत्यभिप्रायः। **अवाप्तकामस्येति मूलम्।**

[1] च्छाया असंभवेन—**छ.** च्छाघसंभवेन—**ख.** [2] तच्चिकीर्षिततया प्रयत्न—**घ. च.**

**स्संयोगशरीरादेरपि कारणत्वप्रसङ्गेन तयोरपि नित्ययोः सिद्धिः स्यात् । देवशरीरवदस्मदाद्ययोग्यस्याप्यङ्कुरादिजनकशरीरस्य**

---

## दीपनम्

भावेन क्लृप्तपदार्थानन्तर्भावः । एवं न तावत्तद्विभुः ईश्वरेण संयोगासंभवात्, मध्यमपरिमाणं च नित्यं बाधितमिति चेन्न तावत्क्लृप्तपदार्थानन्तर्भावः; ब्रह्मादिवद्देव[1]प्रवरस्वीकृतस्य तस्य तेजोरूप[2]शरीरतापपत्तेः । पार्थिवं वास्तु, आप्यादि[3]शरीरोपष्टम्भकतया पार्थिवभागानामावश्यकत्वात् । तच्च विभ्वेव, अजसंयोगस्याप्यस्मादेवानुमानात्सिद्धेः । क्षितिकर्तुर्विभुत्वे प्रमाणाभावाच्चेति भावः । न च योग्यानुप[4]लम्भाद्बाध इत्याह—**देवेति** । किं चास्तु लाघवादुक्तविधया कार्यमात्रस्य कृतिजन्यत्वव्याप्तिग्रहः; तथापि न क्षितिकर्तरि ज्ञानं सिद्ध्यति ।

---

## पूरणी

पूर्णानन्दस्वरूपस्येत्यर्थः । पार्थिवत्वे विनिगमकमाह **आप्यादीति** । **उपष्टम्भकतया** अवयवादिसंस्थानविशेषप्रयोजकतया । अतः आप्यादीनां पार्थिवशरीरनिमित्तत्वेऽपि तत्सन्निवेशाप्रयोजकत्वान्नानुपपत्तिः । इदं च परीत्योक्तम् । सिद्धान्ते तु सर्वेषामपि शरीराणां पाञ्चभौतिकतया विनिगमकासंभवादिति द्रष्टव्यम् । **क्षितिकर्तुरिति** । क्षित्यादिकर्तुर्वक्ष्यमाणरीत्या नानात्वमप्युपपद्यत इति तदैक्यासिद्धेर्विभुत्वमप्यसिद्धमित्यर्थः । अन्यथा क्षित्यादिजगत्कर्तुरेकत्वे तद्वैभवस्यावश्यकत्वेन तदसाङ्कर्त्यापातादिति द्रष्टव्यम् । नित्यज्ञानसद्भावे तदुक्तं विधान्तरं निराकर्तुं पूर्वोक्तमप्यनूद्यापवदति—**किं चेति** ।

---

[1] प्रवरस्य तस्य—क. घ. [2] शरीरापपत्तेः—क घ. [3] शरीरेऽप्युपष्टम्भक—ख. घ. [4] पलम्भबाध—च.

## दीपनम्

नच तदपि तथैव व्याप्त्या सिद्ध्यतीति वाच्यम्; उक्तविधया नित्यकृत्यैव [1]कार्योत्पत्तौ व्याप्तिमात्रात्तदसिद्धेः। न च नित्यकृतिमानेवेश्वर इति वाच्यम्; सर्वज्ञस्य सर्वशक्तेरेवेश्वरत्वात्। न च कृतिविषयत्वं ज्ञानविषयत्वनियतमिति नित्यकृतिसमानविषयमपि ज्ञानं सिद्ध्यतीति वाच्यम्; [2]जीवज्ञानविषयतया तथाभ्युपपत्तेः। समानाधिकरणज्ञानविषयत्वेन तु न व्याप्तिः; गौरवात्। जन्या कृतिश्च स्वसमानाधिकरणविषयज्ञानजन्येति नातिप्रसङ्गः। न च [3]कृतिज्ञानसमानाधिकरणेति नियमात्तत्सिद्धौ विनिगमकाभावेन सर्वज्ञसिद्धिरिति वाच्यम्; सहचारदर्शनमात्रेणैव व्याप्तिसिद्धौ दुःखादिनापि [4]व्याप्तिग्रहप्रसङ्गः। तर्कश्च प्रकृतेऽपि नास्त्येव। यत्तु कृतिसमानाधिकरणज्ञानविषयत्वमेव कृतिविषय[5]त्वमिति तदभावे कृतिविषयत्वं न सिद्ध्यतीति, तन्न; ज्ञानस्येव कृतेरपि स्वत एव [6]सविषयत्व-

---

## पूरणी

**जीवज्ञानेति।** जीवस्य क्षित्याद्युपादानगोचरज्ञानस्यापि सामान्यलक्षणादिना संभवादित्यर्थः। ननु कृतेः समानाधिकरणज्ञानसमानविषयतानियमाभावे अन्यज्ञानादप्यन्यकृतिः स्यादिति तन्नियमोऽभ्युपगन्तव्य इत्यत्राह—**जन्येति।** उक्तातिप्रसङ्गवारणाय तज्जन्यजनकभावे सामानाधिकरण्यप्रवेशोऽस्तु, न तूक्तनियमान्तरेऽपीति भावः। ननु ज्ञानविषयतैव कृत्यादावनुभूयत इति नार्थः, येनोक्तदोषः स्यात्, किं तु ज्ञानस्य विषयत्वं मुख्यं तदिच्छा-

---

[1] कार्योपपत्तौ—**क. घ. च.** [2] विनिगमकाभावेन सर्वज्ञानविषयतया तथाप्युपपत्तेः—**ख.** [3] कृतिज्ञाने समा—**च.** [4] व्याप्तिप्रसङ्गः—**ख. घ.**, व्याप्तिग्रहणप्रसङ्गः. [5] त्वम्, तद—**ख.** [6] सविषयत्वात् अन्यथा—**ख.**

**संभवादित्येवमादिदूषणे सति उपस्थितिमात्रेण न [1]धर्मिनिर्णयः। शरीरादिकं श्रुत्या बाधितमिति चेत्तर्हि सैव तत्र [2]मानम्। अनुमानस्य तया विना [3]अशक्तेः निर्गुणत्वश्रुतेश्च। एवमपि न सर्वज्ञत्वसिद्धिः। न च लाघवात्कर्त्रैकत्व[4]सिद्धौ तत्सिद्धि-**

---

दीपनम्

स्वभावत्वात्। अन्यथा कृतिकाले ज्ञानस्य नष्टत्वेन तस्या निर्विषयत्वप्रसङ्गात्। अन्यथा ज्ञानाविषयेऽपि जिज्ञासादर्शनेन तस्या इव कृतेरपि स्वत एव [5]सविषयत्वात्। अन्यथा दुःखादेरपि सविषयत्वं स्यादित्यभिप्रेत्याह—**एवमादीति**। **श्रुत्या** "अशरीरं शरीरेषु" इत्याद्यया श्रुत्या। शरीरमिव ज्ञानादिगुणोऽपि श्रुत्या बाधित इत्याह—**निर्गुणत्वेति**। ज्ञानमात्रसिद्धावप्यनुमानान्न सर्वविषयज्ञानसिद्धिरित्याह—**एवमपीति**। विचित्रप्रासादादेरिव नानाकर्तृकत्वस्यापि संभवान्न सर्वज्ञत्वसिद्धिरिति भावः। तत्र पराभिमतं प्रकारमाशङ्क्याह—**न चेति**। युगपदनन्तकार्याणामेककर्तृकत्वासंभवान्न लाघवेन तदे-

---

पूरणी

कृत्योस्तद्व्यवहारो गौण इत्यभ्युपगतमित्यनुशयादाह—**ज्ञानाविषय इति**। ननु सर्वमिदं वाक्कौशलमात्रम्, अनुमानेन कर्तृसिद्धेर्भवद्भिरप्यभ्युपगन्तव्यत्वात्। अन्यथा श्रुतीनां कर्तृत्वाद्यंशेऽनुवादकत्वानुपपत्तेः। तथा च यश्चोभयोः समो दोष इति न्यायेन तत्पर्यनुयोगानुपपत्तिरित्याशङ्क्याऽस्तु नाम कर्तृसिद्धिरनुमानात्। तत्सार्वज्ञ्यादिकं तु तेन न सिद्ध्यतीत्याह—**एवमपीति** मूलम्। कर्तृपदस्य ज्ञानादिमदर्थकत्वे

---

[1] धर्म—**ग.** [2] प्रमाणम्—**क. ग.** [3] तदशक्तेः—**ग.** [4] सिद्ध्या—**ग.**
[5] सविषयस्वभावत्वात्—**च.**

रिति वाच्यम्; क्षित्यादिकर्तुरुपस्थितिपूर्वं तद्भेदाभावरूपैकत्वासिद्धेः। कर्तृभेदः [1]प्रतीयत इति चेन्न; तस्य परमते तत्रानिषेध्यत्वात्। एकत्वसङ्ख्यायाश्च नानात्वा[2]विरोधित्वात्। न चानेन क्षितिकर्तृसिद्धौ क्षितिकर्ता चेतनः, किंचिज्ज्ञो न भवति, [3]अशरीरत्वात्, घटवदिति सर्वज्ञत्वसिद्धिरिति वाच्यम्; कर्तृनानात्वेऽप्यशरी[4]रत्वसिद्धेरप्रयोजकत्वात्। न च कर्त्रैकत्वे किंचिन्मानमस्ति। नापि वेदवाक्यानि स्वार्थज्ञानपूर्वकाणि,

---

दीपनम्

कत्वनिश्चयः[5]। न चासर्वज्ञस्य तत्कर्तृत्वासंभवेऽपि सर्वज्ञस्य तत्संभवतीति वाच्यम्; सर्वज्ञत्वकर्त्रेकत्वयोः परम्परा[6]यत्तसिद्धिकत्वेनान्योन्याश्रयात्। प्रकारान्तरेणापि तदसंभवमाह—**क्षित्यादीत्यादिना**। किं लाघवेन कर्तृभेदाभावरूपैकत्वसिद्धिः, उत तत्सङ्ख्यायाः। आद्येऽपि किं जलादिकर्तरि क्षितिकर्तृभेदस्याभावः, उत कर्तृमात्रभेदस्य। न तावदाद्य इत्याह—**क्षित्यादीति**। द्वितीयमाशङ्क्याह—**कर्तुरित्यादिना**। परमते आत्मैक्याभावादिति भावः। प्राथमिकद्वितीयं निराकरोति—**एकत्वेति**। क्षितिकर्ता क्षितिनिरूपितनित्यकृतिमान्, अत्यन्ताज्ञत्वेनार्थान्तरतानिवृत्तये चेतन इति। **कर्त्रिति**। आनुमानिकक्षितिकर्तुरुक्तविषयाऽशरीरत्वं चासिद्धमिति

---

पूरणी

चैतन्यविशेषणवैयर्थ्यमाशङ्क्याह—**क्षितिनिरूपितेति**। वस्तुतस्त्वनुमानेन भूतकर्तृमात्रसिद्धावपि न तस्य जीवातिरेकसिद्धिः, अदृष्टद्वारा

---

[1] प्रसिद्ध--ग. घ. [2] अविरोधात्-ग. छ. [3] अशरीरत्वात्-क. ख.
[4] रत्वोपपत्तेरप्र-ग. छ. [5] त्वनियमः-च. [6] यत्ततत्सिद्धि-क.

**वाक्यत्वादिति सर्ववेदार्थज्ञानवत्सर्वज्ञसिद्धिरिति वाच्यम्, शब्दज्ञानमात्रेण माणवकादिवद्वाक्यरचनोपपत्तेरप्रयोजकत्वात्। न चोद्दिश्यरचनायां वाक्यार्थज्ञानं कारणमिति वाच्यम्, परमात्मन उद्दिश्यरचनायां प्रमाणाभावात्। "अस्य महतो**

---

## दीपनम्

भावः। **उद्दिश्येति**। श्रोतुरर्थविशेषज्ञानमुद्दिश्येत्यर्थः। **प्रमाणेति**। उद्देशं विनापि [1]पाठकादिवत्तस्य वाक्यरचनोपपत्तेर्न वाक्यत्वादिना तत्सिद्धिः। नाप्यन्यत्तत्र प्रमाणमस्ति। अपि चाशरीरस्योद्दिश्य[2]रचनापि न संभवति; इच्छारूपोद्देशस्य शरीरस्यैवोत्पादविनाशानियमेन नित्यस्यासंभवात्। जन्यस्य चादृष्टरहिते तस्मि[3]न्नयोगात्। शरीरस्य भोगजनकत्वनियमाच्च। कालिदासादेः स्वकर्मार्जितशरीरेण शब्दरच-

---

## पूरणी

जीवानामपि तद्धेतुत्वात्। न चादृष्टाद्वारकेति साध्ये विशेषणम्; अप्रयोजकत्वात्। कार्यस्य कर्तृमात्रेण विनानुपपत्तावपि अदृष्टाद्वारककर्तृत्वादिकं विना तदनुपपत्तेरभावात्। तदर्थमीश्वरप्रमाणभूतश्रुत्यनुसरणे च तादृशभूतकर्तुः सिद्धं श्रुतिप्रमेयत्वमिति तत्त्वम्। **जन्यस्य चेति**। इच्छायाः स्वेष्टसाधनताज्ञानसाध्यत्वाददृष्टरहितेश्वरस्य स्वेष्टसुखादेरभावादित्यर्थः। शरीराभावादपि नोद्दिश्य रचना, तस्यास्तद्व्याप्यत्वादित्याह—**शरीरस्येति**। तस्य च भोगासंभवादिति भावः। ननु वेदवाक्यानि शरीरप्रणीतानि, वाक्यत्वात्, कालिदासवाक्यवदित्यनुमानाच्छरीरसिद्धिरित्याशङ्क्याह—**कालिदासादेरिति**। तथा च [4]कर्म्यनुमानमपि न स्यादित्यर्थः।

---

[1] माणवकादिवत्—**च**. [2] रचनैव—**ख. घ. च**. [3] न्नसंभवात्—**च**. [4] कर्मानु.

## पूरणी

नन्वेवं श्रुतिस्मृतिपुराणप्रसिद्धलीलाविग्रहाणामपलापप्रसङ्गः, न च भक्तादिकर्मार्जितान्येव तानीति वाच्यम्; एवं सति वेदाध्येतृकर्मार्जितशरीरस्यापि तत्र संभवादिति चेन्न; जगन्निर्माणानन्तरमन्तरा तद्रक्षणायैव लीलाविग्रहधारणस्य श्रुत्यादिसिद्धत्वात्। सृष्ट्याद्यसमये च तच्छरीरसद्भावे मानाभावेनोद्दिश्य वेदरचनायोगात्। यद्वा ईश्वरस्य विग्रहधारणं नास्त्येव। प्राण्यज्ञानकल्पितानि प्रातीतिकान्येव तच्छरीराणि, भक्तेच्छाकल्पितविग्रहाणां बहूनां श्रवणात्। न चैवं प्रातीतिकतच्छरीरसाध्यवरप्रदानरावणवधादेर्व्यावहारिकत्वं न स्यादिति वाच्यम्; स्वप्नकल्पितमन्त्रोपदेशादिकार्यवदुपपत्तेः। वरप्रदानादेस्तदीक्षणमात्रसाध्यत्वाच्च। तच्छरीरोपहितकृतित्वादिकं त्वज्ञानकल्पितमेवेति दिक्। न चैवमुद्देशाभावे ईश्वरस्य सृष्टिवैफल्यम्; राज्ञामिव प्रयोजनानुद्देशेनापि लीलया तदुपपत्तेः। लीला च प्राणिकर्मोपार्जिताविद्यावृत्तिविशेषात्मकेच्छाभासः। कविकाव्यादिमूलज्ञानाभासस्य क्लृप्तज्ञानहेतुं विनाप्युत्पादवत्प्रयोजनज्ञानमन्तरापि तदुपपत्तेः। अतो नाध्येतृवाक्यार्थप्रतीतिफलोद्देशेनेशितुर्वेदरचना।

वस्तुतस्तु प्रतीत्युद्देशेन वेदरचनायां वाक्यार्थावबोधकामस्य वेदाध्ययनं स्यात्, लौकिकवाक्यवत्तद्वाक्यस्याप्यर्थप्रतीत्येकफलकत्वात्। तथा च कृत्स्नशाखाध्ययनमपि न कस्यचित्स्यात्, कृत्स्नवेदस्यार्थपरत्वाभावात्। अर्थपरेऽपि भागे स्वार्थपरवाक्यानामेवाध्ययनं स्यात्। विरक्तानां काम्यकर्मकाण्डाध्ययनं कामिनां चोपनिषद्भागाध्ययनं न कथंचिदपि स्यात्। न चाध्ययनविधिबलात्तत्सिद्धिः; तस्याप्यर्थावबोध एव पर्यवसानापातात्। अस्मन्मते तूद्दिश्यारचितत्वाद्वेदस्य तदध्ययनविधिः कृत्स्नस्वाध्यायाक्षरावाप्तिफलक एव। तथा हि "स्वाध्यायोऽ-

## पूरणी

ध्येतव्य" इत्यध्ययनकर्मता स्वाध्यायस्यावगम्यते । कर्मता च तस्याध्ययनप्राप्यत्वेन प्रोक्षणादिना व्रीह्यादिवत्संस्कार्यत्वेन वा । नच प्राप्तस्योपयोगाभावः; अक्षरावाप्तिः स्वत एव सिद्धप्रयोजनत्वात् । सफलब्रह्मयज्ञजपादौ तत्संभवाच्च । न ह्यनवाप्तस्वाध्यायस्य जपः संभवति । न चाध्ययनप्राप्त्योरेकार्थतया न हेतुहेतुमद्भाव इति वाच्यम्; अक्षरावाप्तिः स्वाधीनोच्चारणयोग्यता अध्ययनं तु तदनुकूलवाङ्मनसव्यापार इत्याकारभेदात् ।

नन्वेवं स्वाध्यायस्याविवक्षितार्थत्वं स्यात्, तदर्थावबोधस्य कथंचिदप्यध्ययनविध्यनपेक्षितत्वादिति चेन्न; निगमनिरुक्तादिसहायादधीतस्वाध्यायात्सविषयशब्दस्वभावेन ज्ञातार्थावबोधस्याध्ययनविध्यनुमतत्वात् । न चानुमतौ बीजाभावः, तस्य कथंचिदपि विध्यनुपकारकत्वादिति वाच्यम्; स्वविषयस्याध्यायस्यार्थावबोधद्वारापि पुरुषार्थत्वसिद्धये तत्संभवादित्यलमतिप्रसक्तकथया । तस्मादध्ययनविधिनिरूपणेऽप्यपौरुषेयो वेदः । एतेन वेदवाक्यानि स्वार्थज्ञानवत्स्वतन्त्रप्रणीतानि वाक्यत्वात्कालिदासादिवाक्यवदिति परास्तम् । वाक्यार्थज्ञानमन्तरापि शुकादीनां वाक्यप्रयोगदर्शनेनाप्रयोजकत्वात् । अर्थज्ञानवत्पूर्वकत्वमात्रेणाप्युपपत्तौ स्वातन्त्र्यप्रवेशे बीजाभावात् । तन्मात्रस्य च वेदार्थज्ञानवदध्यापकप्रयुक्ततया सिद्धसाधनत्वात् । वेदस्य प्रतिकल्पमपि क्रमादिसाजात्येन बुद्धिस्थक्रमाद्यन्यथाभावेन स्वेष्टपदरचयितृत्वात्मकस्वातन्त्र्यस्य वेदविषय ईश्वरे व्यभिचाराच्च । यत्त्वन्योच्चारणानधीनोच्चारणमेव स्वातन्त्र्यमिति तन्न; सर्गाद्यकाले ब्रह्मसृष्टवेदानां हिरण्यगर्भादिभिस्तपोविशेषमहिम्ना तदवगमपूर्वकं स्वयमेवोच्चारणमित्यर्थान्तरतापत्त्या पराभिमतपौरुषेयत्वासिद्धेः । प्रमाया गुणजन्यत्वाभ्युपगमा-

**भूतस्य निश्वसितं" इति श्रुतिविरोधाच्च। अतो "धाता यथापूर्वमकल्पयत्" इतिश्रुत्या सर्गाद्यकालीनाध्ययनं अनुभूतक्रमसजातीयविषयम्, वेदाध्ययनत्वादिदानीन्तनवेदाध्ययन-**

---

दीपनम्

नाया अपि दृष्टत्वेन तद्दृष्टान्तेन तादृशानुमानप्रसङ्गेन कथंचिच्छरीरानुमानायोगाच्चेति भावः। **निश्वसितमिति।** निश्वसितवन्निश्वसितम्। यथास्मदादीनां निश्वासो ज्ञानं विनैव जायते एवमीश्वरस्याप्यर्थज्ञानं विनैव वेदसृष्टिरिति[1]सा निश्वासकल्पैवेत्यर्थः। किं च यदि वेदः प्रतिकल्पं विसदृशस्वरक्रमादिमान् स्यात् ततोऽर्थानुसारेण क्रमादिरचनेत्युपलभ्य रचना स्यात्। अन्यथा तु पूर्वपूर्वक्रमानुस्मरणादेव माणवकानामिवेश्वरस्यापि तत्कर्तृत्वमिति न तस्मिन् पुरुषस्य स्वातन्त्र्यम्। नच क्रमादीनामन्यथात्वं संभवति ; पुरुषार्थतया क्लृप्तसजातीयक्रमादिनैवोपपत्तावक्लृप्त[2]कल्पने गौरवात्, श्रुत्यादिविरोधाच्चेत्यभिप्रेत्याह—**अत इति। अनुभूतेति।** तथा चास्मिन्कल्पे प्रागनुभवासंभवेन हिरण्य-

---

पूरणी

च्छाब्दप्रमायां योग्यताप्रमादेरेव गुणत्वसंभवाच्च न तदनुरोधेनापि यथार्थवाक्यार्थबुबोधयिषादिगुणद्वारा तत्पौरुषेयत्वसिद्धिरित्यलं पल्लवेन।

**क्रमानुस्मरणादिति।** अनुस्मरणं च क्रमविषयोपहितस्वरूप ज्ञानमेव। ईश्वरस्य जन्यज्ञानात्मकस्मृतेरसंभवात् प्राणिपूर्वानुभवजन्यसंस्कारोपधानमपि तत्र हेतुरिति तदुपहिततया स्वरूपज्ञानेऽप्यनुस्मरणव्यवहार इति भावः। वस्तुतस्त्वनुस्मरणमपि अस्मदुक्तरीत्या प्राणिसंस्कारादिजनिततद्गोचराविद्यावृत्तिविशेष एवेति स्मर्तव्यम्। **न तस्मिन्निति।** बुद्धिस्थक्रमान्यथाभावेन स्वेष्टपदरचनाया एव

---

[1] सनिश्श्वास—क. घ. [2] कल्पनायोगात्—ख.

वदित्यनुमानाच्च [1]वेदे क्रमादिरचनानादिरिति न च तदीश्वरेच्छाधीनत्तमित्यपौरुषेयो वेदः। भारताध्ययने च [2]स्पष्टकर्त्रागमबाधान्नानादित्वानुमानम्। वेदेषु तु पुरुषस्मरणस्य गतिः शास्त्रेषु प्रसिद्धा। तस्मान्नानुमानात्सर्वज्ञासिद्धिः।

सिद्धान्ते तु शास्त्रयोनितया सर्वज्ञत्वमित्थम्। शास्त्रं हि ऋग्वेदादिलक्षणं कार्यं सर्वज्ञानजननात्तच्छक्तिमत्। कार्ये

## दीपनम्

गर्भादिभिः प्राग्जन्मन्यनुभूतक्रमादिसाजात्यमेव सिद्ध्यतीति वेदोऽनादिरिति भावः। **भारतेति**। भारतादिष्वेव तेषां कर्तृपूर्वकत्वस्मरणादित्यर्थः। ननु "ऋचः सामानि जज्ञिरे" इत्यादिना वेदेऽपि [3]कर्त्ताऽऽम्नायत इति चेत्सत्यम्, सा परमात्मनोऽबुद्धिपूर्विकैव दृष्टा न त्वर्थमुपलभ्य कृतिः, उक्तश्रुतिविरोधादित्याह—**वेदे त्विति**। औपनिषदत्व[4]स्मरणमुपसंहरति **तस्मादिति**।

ननु यदि वेदोऽनुपलभ्य विरचितः कथं तर्हि तद्योनितया ईश्वरस्य सर्वज्ञत्वसिद्धिः सिद्धान्ते वर्ण्यत [5]इत्यत आह—**सिद्धान्त इति**। तत्र प्रथमं विवरणोक्तं प्रकारमाह—**शास्त्रं हीति**।

## पूरणी

स्वातन्त्र्यात्मकत्वादिति भावः। **वेदोऽनादिरिति**। सजातीयक्रमादिविशिष्टप्रवाहरूपेणेति शेषः। अन्यथा वेदस्यानुपदमेव ब्रह्मकर्तृत्वादिप्रतिपादनविरोधादिति मन्तव्यम्। **ऋचः सामानीति**। "तस्माद्यज्ञा-

[1] वेदक्रमादि—**क. ग.** [2] दृष्टकर्त्रादि—**क.** स्पष्टकर्त्रेवगम—**ख. ग.** [3] कर्ता श्रूयत—**क. च.** [4] समर्थनमु—**ख. ग. च.** [5] इति, तदाह—**क. घ.**

**ज्ञानानुकूलशक्तिश्च तदुपादानतादृशशक्तिपूर्विका, तद्गता वा, दीपादौ तथा दर्शनात्। घटादावपि सा तथैव। घटादिविरहात्तदभावदशायां [1]न तज्ज्ञानम्। अत एव शक्तिमात्रं तथेति केचित्। [2]ब्रह्मैव शास्त्रोपादानमिति सर्वज्ञानानुकूल-**

---

## दीपनम्

**तद्गतेति।** उपादानोपादेययोरभेदाच्छक्तिरप्येकैवेति भावः। नन्वेवं घटस्य तदाकारज्ञानानुकूला शक्तिः [3]केवलायां मृद्यपि स्यात्, अस्त्येवेत्याह—**घटादाविति।** शक्तौ ज्ञानानुकूलत्वं विशेषणं वा न देयम्, कार्यगतशक्तिमात्रस्य तदभिन्नकारणेऽपि संभवादित्यभिप्रेत्याह—**अत एवेति।** [4]न चैवं कारणगतशक्तिमात्रमपि कार्ये स्यादिति स्वोत्पादनशक्तिरपि तत्र स्यादिति वाच्यम्; विरोधेन प्रमाणाभावेन च तन्नियमाभावादिति भावः। ततः किम्, तत्राह—**ब्रह्मैवेति।**

---

## पूरणी

त्सर्वहुत" इति सर्वयज्ञैर्हूयमानयज्ञशब्दवाच्याद्ब्रह्मणस्तत्सृष्टिश्रुतेरित्यर्थः। **प्रमाणाभावेनेति।** कार्यस्य कारणातिरिक्तस्वरूपाभावेन कार्यशक्तेः कारणगतत्वेऽपि कारणस्य कार्यातिरिक्तस्वरूपवत्तया तद्गतशक्तेः कार्यगतत्वे न किंचिन्मानमित्यर्थः। ननु कारणकर्तृशक्त्योर्विलक्षणत्वाज्ज्ञानकारणवेदगता शक्तिः कथं तत्कर्तृब्रह्मणि

---

[1] तदज्ञानम्—छ.　[2] ब्रह्म च शास्त्रो—ख. छ.　[3] केवला मृद्यपि—क.
[4] न चैवमपि—क.

## दीपनम्

न च कारणगता शक्तिः कथं कर्तरि स्यादिति वाच्यम्; कर्तृकारणस्वरूपभेदेऽपि शक्तेरेकत्वात्। वस्तुतस्तु कार्यानुमेयायास्तस्याः कर्त्रादिगतत्वेऽप्यविरोधात्। तदुक्तं भट्टपादैः—

"शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते।
तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयापि वा॥"

इति भावः। एवं तस्मिन् सर्वज्ञानजननशक्तिमुपपाद्य समर्थस्य कार्ये

---

## पूरणी

स्यादित्याशङ्क्य निषेधति—**न च कारणेति**। **कर्तृकारणेति**। करणवेदवाक्यस्य कर्तृब्रह्मोपादेयतया तयोः कर्तृकारणत्वावस्थावैलक्षण्येऽप्युपादानोपादेयभावनियामकरूपेण तदुभयशक्तिरेकैवोपादानब्रह्मगतेत्यर्थः। उपादानोपादेयताव्यतिरिक्तविषयेऽपि कृत्स्नकारकगता शक्तिरेकैव। समाहृतकारकचक्रादेव कार्योत्पत्तिदर्शनेन तत्प्रमाणगम्यायास्तस्या लाघवादेकस्या एव कल्पनादित्याह—**वस्तुतस्त्विति**। यद्वा ननु करणवेदगता शक्तिर्वेदकर्तरि ब्रह्मणि कथं स्यात्, अन्यशक्तेरन्याश्रयत्वेऽतिप्रसङ्गादित्याशङ्क्याह—**न च कारणेति**। उपादानोपादेयभावस्य नियामकत्वान्नातिप्रसङ्ग इत्यभिप्रेत्याह— **कर्तृकारणेति**। प्रकृत इति शेषः। अन्यत्रापि तदैक्यमाह—**वस्तुतस्त्विति**। यद्यपि यद्व्यापारानन्तरं कार्यमुपलभ्यते तदनुकूला शक्तिस्तद्गतैव कल्पयितुं युक्ता नान्यगता, प्रमाणाभावात् अतिप्रसङ्गाच्च, तथापि यावत्कारकव्यापारादेव कार्यमिति तदनुकूला शक्तिर्लाघवादेकैव सर्वकारकगता कल्प्यत इति भावः। एवं च स्वमात्राश्रया प्रतिकारकं भिन्ना स्वान्यकारकाश्रिता एकैवेत्यक्षरार्थः। अत एवापिग्रहणमिति मन्तव्यम्। **एवं तस्मिन्निति**। यद्यपि तत्कार्यसमर्थात्सहकारि-

**शक्तिमत्। तच्च सृज्यमानप्राणिकर्मणा स्वस्मिन् सर्वज्ञानं वृत्तिमुत्पादयतीति सर्वज्ञमिति केचित्॥**

## शास्त्र....द्वितीयवर्णकम्.

**अन्ये त्वनन्तशाखाप्रभेदभिन्नशास्त्रकर्तृत्वेन तद्विषयज्ञानं तावत्सिद्धम्। एतच्च ब्रह्मणोऽनावृतज्ञानत्वे भवतीत्यन्यदपि**

---

### दीपनम्

विलम्बाभावात् सहकारिदशायां [1]सर्वज्ञानादीत्याह—**तच्चेति**। **वृत्तिः** अविद्यावृत्तिः। [2]स्वोपपादनमानमाह—**अन्ये त्विति**। **तद्विषयेति**। सृज्यमनविषयज्ञानवत एव कर्तृत्वादिति भावः। **एतच्चेति**। अनन्तशाखाप्रभेदभिन्नवेदज्ञानं हि ब्रह्मणो न प्रमाणान्तरात्,

---

### पूरणी

समवधाने तदेव कार्यमुत्पद्यत इति वेदवाक्यकरणज्ञानजननसमर्थाद्ब्रह्मणस्तद्वाक्यश्रोतुस्तदर्थज्ञानं स्यात् न तु स्वस्मिन् तत्करणानपेक्षज्ञानान्तरम्, मृद्धटशक्तात्कुलालात्सुवर्णघटस्याप्युत्पत्तिप्रसङ्गात्, तथापि वेदयोनितया सामान्यतः सर्वविषयकज्ञानजननशक्तिमात्रं बाधकं विनावधारितमिति वेदकरणनैरपेक्ष्येणापि स्वस्मिंस्तज्ज्ञानसंभव इति भावः। **स्वोपपादनेति**। स्थितिसमये ब्रह्मणः सार्वज्ञ्यालाभाद्वेदान्तिप्रतिपाद्यार्थगोचरज्ञानाप्राप्तेश्चोक्तप्रकारस्य मन्दत्वादिति भावः। वस्तुतस्तु जगत्स्रष्टृतया जगन्नियन्तृतया च ब्रह्मणः सार्वज्ञ्यं सिद्ध्यति। स्रष्टव्यनियम्यज्ञानं विना तदुभयानुपपत्तेः। तद्विषयकं च स्वरूपज्ञानमविद्यावृत्तिविशेषो वेत्यन्यदेतत्। शास्त्रपदं च जगन्मात्रोपलक्षणम्।

---

[1] सर्वं जानातीत्याह—**ख. घ. च.** [2] स्वोपपादनमाह—**क.**

**स्वसंबन्धि तत्किमिति न जानीयादिति सर्वज्ञं ब्रह्मेति [1] संभवति। अत एव "तं त्वौपनिषदं" इत्यादिश्रुतिरुपनिषद्गम्यत्वमाह। न ह्यनुमानगम्यमुपनिषद्गम्यम्; मानान्तराधिगते तत्र श्रुतेरतात्पर्यात्। तत्र श्रुतितात्पर्याभावेऽप्यन्यतोऽर्थस्य सिद्धत्वात्॥**

---

## दीपनम्

तस्य श्रोत्रादेरभावात्, अपि तु स्वरूपज्ञानादेव, तच्च यदि स्वरूपं ब्रह्म प्रत्यावृतं स्यात् तदा अप्रकाशमानचैतन्यं वेदप्रकाशो न स्यादिति तस्य तत्स्वरूपात्मकचैतन्यं सर्वगतमनावृतमिति वक्तव्यम्। एवं चानावृतचैतन्यसंबन्धादनन्त[2]वेदतदर्थोऽपि किमिति न प्रकाशेतेति वेदकर्तृत्वाद्ब्रह्म सर्वज्ञं सिद्ध्यतीति भावः। एव[3] न्यायसिद्धौपनिषदत्वे न वयं व्यसनितयेश्वरस्यानुमानिकत्वं निराकुर्मः, अपि तु श्रुत्यैव निराकृतत्वादित्याह—**अत एवेति**। **अतात्पर्यादिति**। [4] तथा च न तच्छ्रुत्यर्थः "यत्परः शब्दार्थ" इति न्यायादित्यर्थः। ननु यद्येन वाक्येन गम्यते तत्तत्परम्, तन्मानान्तरगम्यमगम्यं वास्त्विति, तत्राह—**तत्रेति**। न तावत्ततस्तज्ज्ञानाय तत्र तात्पर्यं कल्प्यते, अतात्पर्यादप्यर्थ-

---

## पूरणी

सूत्रकृतस्तु शब्दलाघवकुतूहलाः सकृदुच्चरितसूत्रवाक्येनोपनिषद्गम्यत्वसार्वज्ञ्यलाभाय तथा समसूत्रयन्निति न काप्यनुपपत्तिः अन्यथा स्वप्रकारेऽपि स्थितिसमये सार्वज्ञ्यलाभादनागतत्वादेः स्वेनासत्त्वाभ्युपगमेनानागतस्रष्टव्यगोचरज्ञानानुपपत्त्या च सृष्टिसमयेऽपि सर्वज्ञानानुपपत्तेश्चेति दिक्। **श्रुत्यैवेति**। यद्यपि सार्वज्ञ्यादिविशिष्टब्रह्मणः

---

[1] सम्भवतीति–छ. [2] वेदार्थोऽपि–ख. घ. च. [3] न्यायसिद्धोपनिषदर्थे. [4] तथात्वे–ख.

## पूरणी

आनुमानिकत्वमधुना निराकृतम् । श्रुतिश्च निर्विशेषब्रह्मविषया तदेकगम्यतां बोधयतीति इदमयुक्तम्; तथापि विशिष्टविषयैव । विशिष्टस्य तदेकगम्यत्वप्रतिपादने स्वरूपे मानान्तरप्रयुक्तेर्दूरतो निरासादित्यभिप्रेत्येदमुक्तम् । ननु तथापि सार्वज्ञ्यादिगुणविशिष्टब्रह्मणि वेदान्तानां तात्पर्याभावात्कथं तस्योपनिषद्गम्यत्वमिति चेन्न; वेदान्तेषु त्रिविधं वाक्यजातं जीवविषयं ब्रह्मविषयमद्वैतविषयं चेति । "योऽयं विज्ञानमयः प्राणेषु" इत्यादि जीवविषयम् । "यः सर्वज्ञ" इत्यादि विशिष्टब्रह्मविषयम् । "तत्त्वमसि" इत्याद्यद्वैतविषयम् । तत्र "तत्त्वमसि" इत्यादिकं साक्षादद्वैतं बोधयति । जीवब्रह्मवाक्यजातं त्ववान्तरतात्पर्येण तत्स्वरूपनिरूपणद्वारेणेति भवति सार्वज्ञ्यादिगुणविशिष्टं ब्रह्मोपनिषद्गम्यम् । न चैवं जीवस्यापि तदापत्तिः; अहंकारातिरिक्तकल्पितकर्तृत्वाद्यधिष्ठानस्वरूपस्याहमनुभवे विविच्याप्रकाश्यमानतया तद्गम्यत्वस्येष्टत्वात् । न चोपनिषत्तात्पर्यविषयत्वे सार्वज्ञ्यादिगुणविशिष्टस्वरूपस्य सत्यत्वापातः; परमतात्पर्यविषयत्वस्यैव तत्प्रयोजकत्वात् । अन्यथा 'श्रोतव्य' इत्यादिवाक्यस्य श्रवणादिविधाववान्तरतात्पर्यमस्तीति श्रवणादेरपि सत्यत्वप्रसङ्गादित्यलमनेन ।

ननु मानान्तरसिद्धेऽर्थेऽपि क्वचित्तात्पर्यमस्त्येव, "दध्ना जुहोति" इत्यादौ मानान्तरसिद्धदध्यादिगुण एव तात्पर्यात् । अन्यथा तत्रापि दध्यादिविशिष्टहोम एव तात्पर्ये "दध्ना जुहोति" इत्यादयो गुणविधयः "सोमेन यजेत" इत्यादौ विशिष्टविधय इति व्यवस्था न स्यात् । विशिष्टमानान्त[1]रासिद्धिरूपतात्पर्यस्याविशेषादित्य-

[1] रासिद्धितात्पर्य–ट.

## समन्वयसूत्रप्रथमवर्णकम्

नन्वेवं सिद्धस्य वस्तुनो लोके मानान्तरगम्यत्वदर्शनान्न वेदान्तानां ब्रह्मणि तात्पर्यं स्यात्, मानान्तरसंवादविसंवादयोस्तदयोगात्। एवं सिद्धवस्तुज्ञानात्प्रयोजनाभावादपि न वेदान्ता

---

### दीपनम्

वादादे रुद्ररोदनादिज्ञानदर्शनात्। नाप्यर्थतत्त्वव्यवस्थित्यै; अन्यत एव तत्सिद्धेः। एवं विधयोऽपि सर्वत्र [1]गुणविषया विशिष्टविषया वा स्युरिति न [2]गुणविध्यादिव्यवस्थार्थमपि तात्पर्यं कल्पनीयम्। किं च वेदान्तार्थज्ञानसाध्यप्रयोजनस्य प्रमाणान्तरायत्तज्ञानादेव सिद्धेस्तदध्ययनमदृष्टार्थमेव स्यात्। एतेन वाक्यार्थवत्त्वसिद्ध्यर्थं ज्ञातेऽपि तात्पर्यं कल्प्यत इति निरस्तम्; शक्त्यादिनापि तत्सिद्धेः। अतोऽ[3]र्थतत्त्वव्यवस्थायै वाक्यस्योपक्रमादिना तात्पर्यं कल्प्यत इत्यज्ञात एव तात्पर्यम्। तदुक्तं भगवता जैमिनिना "अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति भावः॥

ननु ब्रह्म मानान्तरगम्यम्, असाध्यत्वात्, घटादिवत्, ततश्च तत्र मानान्तरभावाभावयोर्वेदान्तानां न प्रामाण्यमित्याक्षिपति—**नन्विति**। **एवं** सति **लोके** नदीतीरे पञ्च फलानि सन्तीति वाक्यप्रमेये। **संवादेति**। संवादे न पूर्वोक्तं तात्पर्यम्। विसंवादे च

---

### पूरणी

त्राह—**एवं विधय इति**। विशिष्टतात्पर्याविशेषेऽपि विशेष्यस्य वाक्यान्तरप्राप्त्यप्राप्तिभ्यां तद्व्यवस्थोपपत्तेरिति शेषः। **एतेनेति**। अर्थवत्त्वालाभेनेत्यर्थः। ननु वाक्यार्थावगमसाध्यप्रयोजनाभावेऽपि तदर्थावगमरूपप्रयोजनायैव तात्पर्यकल्पनमस्त्वित्यत्राह—**अतोऽर्थेति**। **एवं सति** वेदान्तप्रमेयस्य

---

[1] गुणसंबन्धविषया—घ. [2] तद्गुणविशिष्टविध्यादि—च. [3] अर्थतथात्व—च.

**ब्रह्मपराः। न ह्यध्ययनविध्युपात्तानां तेषां निष्प्रयोजने पर्यवसानं संभवति। न वा प्रवृत्तिनिवृत्ती विना प्रयोजनम्। नच सिद्धवस्तुज्ञानात्प्रवृत्तिनिवृत्ती स्तः। तस्माद्वेदान्तास्तद्गतोपासनाविधिपरा इति। न; किमेवमहंप्रत्ययविषये वेदान्तानां**

### दीपनम्

योग्यानुपलम्भबाधः। एवं [1]सिद्धार्थत्वेऽपि लौकिकवाक्यवदवश्यं मानान्तरसापेक्षतया स्वतः प्रामाण्यहानिरपीत्यर्थः। तर्ह्युपेक्षाप्रत्यक्षव[2]त्प्रमाणमस्तु, तत्राह—**न हीति**। तर्हि प्रयोजनमप्यस्तु, तत्राह—**न चेति**। कस्तर्हि वेदान्तानामर्थः, नच कर्माङ्गकर्तैवार्थ इति वाच्यम्; भिन्नप्रकरणस्थानां [3]कर्मार्थत्वायोगात्, तत्राह—**तस्मादिति**। न तावद्वेदान्तानां विवक्षिते ब्रह्मण्यबोधकतालक्षणमप्रामाण्यम्; सत्यादिवाक्यादधिकारिणः शुद्धब्रह्मप्रतिपत्तेरनुभवसिद्धत्वात्। नापि विसंवादिरूपम्; मानान्तरयोग्ये वस्तुनि मानान्तरा[4]नुवादे वाक्यमप्रमाणं स्यात्, यथा लोके नदीतीरफलादौ, ब्रह्म तु न मानान्तरयोग्यमिति चोदनाया इव धर्मे तत्र वेदान्तानां प्रामाण्यमविरुद्धमेव। तथा चानुमानं बाधितमित्यभिप्रेत्याह—**न किमेवमित्यादिना**।

### पूरणी

ब्रह्मणः सिद्धत्वाभ्युपगमे सतीत्यर्थः। **योग्यानुपलम्भेति**। विसंवादः संवादिमानान्तराभावः विपरीतार्थबोधकसद्भावो वा। आद्ये मानान्तरयोग्ये ब्रह्मणि मानान्तरानुपलम्भेन तद्विरहावगमेनायोग्यतानिश्चयान्न शाब्दबोधः। द्वितीये चासद्धर्मबोधकत्वमित्युभयथाप्यप्रामाण्यमिति भावः।

**न वा प्रवृत्तीति** मूलम्। कृत्स्नस्यापि पुरुषार्थस्य प्रवृत्त्यादिसाध्यत्वादित्यभिमानः।

---

[1] सिद्धार्थेऽपि—च. [2] प्रामाण्यमस्तु—च. [3] कर्मशेषार्थत्वा—क. घ. च.
[4] अनुदये—क. घ.

तात्पर्यं निषिद्ध्यते, किं वा अशनायाद्यतीते निरतिशयानन्दात्मनि। तत्राद्योऽस्मदिष्ट एव। द्वितीये तु किं तन्मानम्, येन वेदान्तानामनु[1]वादकता। [2]यदनुदये च मिथ्यार्थता। न हि प्रत्यक्षादिना तादृशं वस्तु सिद्ध्यतीत्युक्तम्। स्वरूपबोधस्तु विद्यमानोऽप्यनाद्यविद्यावृतो न साधक इति न संवादकः। तस्मात्सिद्धवस्तुविषयचक्षुरादिवत्सिद्धे वेदान्तप्रामाण्यमविरुद्धम्॥

ननु न वयमङ्गीकृत्यालौकिकमात्मानं तत्र वेदान्तानामप्रामाण्यं ब्रूमः; किं तु वेदान्ता यदि सिद्धबोधकाः स्युस्तर्हि मानान्तरसापेक्षाः स्युः घटोऽस्तीति लौकिकवाक्यवदिति

---

## दीपनम्

**न संवादक इति**। तथा च नानुवादक[3]तेति भावः। व्यभिचारादपि सिद्धत्वं न मानान्तरसापेक्षताप्रयोजकमित्याह—**तस्मादिति**॥

**मानान्तरेति**। तथा च वेदान्तानां स्वतः प्रामाण्यहानिप्रसङ्गः। एवं च यद्वैशेषिका आहुः प्रमाणानां प्रामाण्यं न स्वत इति

---

## पूरणी

**न वयमिति** मूलम्। तथा च भिन्नप्रकरणस्थानामपि वेदान्तानामगत्या कर्माङ्गकर्त्रादिप्रकाशकत्वमुपासनाविधिपरत्वं वाभ्युपगन्तव्यमिति समन्वयसूत्रप्रथमवर्णकपूर्वपक्ष एवायमिति भावः। यद्यपि वैशेषिकादिभिः प्रमितीनां प्रमात्वं परतो न स्वत इत्यभ्युपगतम्, अत्र च वेदान्तानां मानान्तरावेद्यत्वलक्षणस्वतस्त्वहानिश्चोदिता, अत्र

---

[1] वादिता—क. [2] येन च—कं. [3] तेत्यर्थः—ख. घ.

## दीपनम्

तदेव सिद्धान्तिनाप्यभ्युपेतं स्यादिति भावः। न तावदिदं वैशेषिकादिमतं युक्तम्; प्रामाण्यं हि विद्यमानार्थ[1]स्वरूपविषयत्वम्। तच्च ज्ञानग्राहकग्राह्यमेव; सविषयस्यैव ज्ञानस्य स्वतः साक्षिणा वा प्रकाशमानत्वात्। येषां च ज्ञानमनुव्यवसायग्राह्यं तेषामपि सविषयमेव तद्ग्राह्यम्। विषयेषु धर्मधर्मिणोरिव तद्वैशिष्ट्येऽपि ज्ञानं प्रत्यासत्तिरस्त्येवेति घटत्वादिवैशिष्ट्यविषय[2]ज्ञानस्वरूपप्रामाण्यभानसामग्री[3]सत्त्वेन प्रथमं ज्ञानमात्रग्रहः, पश्चात्प्रामाण्यग्रह इति नियन्तुमशक्यत्वात्। न ह्यप्रतिबद्धसामग्र्यां सत्यां कार्ये विलम्बः। ननु [4]प्रामाण्यसंशयदर्शनात्प्रथमं ज्ञानमात्रं गृहीतमिति वक्तव्यम्, तत्र च प्रामाण्यग्रहे तत्संशयोऽनुपपन्न इति चेत्, तत्किमिदंत्ववैशिष्ट्यांश इवाप्रतिबद्धसामग्र्यां सत्यां कार्यानुदय उपपन्न एव, न च तत्संशयदर्शनाद्दोष एव तत्प्रतिबन्धक इति वाच्यम्; सर्वत्र तदभावेनासन्दिह्यमानज्ञान-

## पूरणी

च वैशेषिकादिमतसिद्धज्ञानप्रामाण्यपरतस्त्वनिराकरणमनुपयुक्तम्, तथापि प्रसङ्गात्तत्पराचष्टे—**न तावदिति।** **विद्यमानेति।** विशेष्यवृत्तिधर्मविशेषविषयकत्वमित्यर्थः। **तत्किमिति।** सामग्रीबलेन प्रामाण्यग्रहावश्यकत्वे अग्रिमसंशय एवान्यथोपपादनीय इति भावः। सामग्र्यप्रतिबन्ध एवासिद्ध इत्याशङ्क्य निषेधति—**न च तत्संशयेति।** नन्वेवं प्रामाण्यग्रहाय प्रतिबन्धकदोषाभावापेक्षायां स्वतस्त्वहानिरित्य-

---

[1] स्वरूपविशेषविषय.—**ख. घ.** [2] ज्ञानत्वरूप—**ख. घ. च.** [3] सत्त्वे—**ख. घ.**
[4] प्रामाण्ये संशय—**घ.**

## दीपनम्

ग्राहकसामग्र्यैव प्रामाण्यग्रहोपपत्तेः प्रतिबन्धका[1]भावस्याहेतुत्वेनासन्दिह्यमानज्ञानग्राहकसामग्रीमात्रस्यैव हेतुत्वात्। दोषासहकृतयावज्ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वस्यैव स्वतस्त्वशब्दार्थत्वात्। अत एव स्वतस्त्वे संशयानुपपत्तिरपि निरस्ता। [2]अत्र दोषप्रतिबन्धेन प्रामाण्यस्यानिश्चयात्। यद्यप्रामाण्या[3]ग्राहकसामग्रीमात्रग्राह्यत्वं स्वतस्त्वम्, तदा धर्मिज्ञानं प्रामाण्यविषय[4]मपि तदंशे [5]दोषवशादनवधारणात्मकमिति न संशयानुपपत्तिः। एककोटिकज्ञानस्यापि क्वचिदनवधारणात्मकत्वं परैरभ्युपगन्तव्यम्। अन्यथा [6]तन्मतेऽपि प्रामाण्यसंशयानुपपत्तेः। न हि जले जलत्ववैशिष्ट्ये निश्चिते [7]करकस्थोदक इव जलत्ववति तदभाववति वा [8]जलज्ञानमिदमिति संशयो भवति;

---

## पूरणी

त्राह—**प्रतिबन्धकाभावस्येति**। नन्वेवमपि ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वलक्षणं स्वतस्त्वमसिद्धमित्यत्राह—**दोषासहकृतेति**॥

नन्वत्र दोष एव दुर्निरूपः, नच निष्कम्पप्रवृत्तिप्रतिबन्धकादृष्ट एव दोषः, गन्धर्वनगरादौ तत्त्वस्य दोषत्वेन दर्शनादिति वाच्यम्; एवं सत्युपेक्षाज्ञाने प्रामाण्यसंशयानापत्तेः ततः प्रवृत्तिविरहेण तत्प्रतिबन्धकादृष्टविशेषस्य तत्रासिद्धेः। सर्वत्राप्यदृष्टविशेषस्यैव दोषत्वे दोषान्तरकल्पनावैयर्थ्यापाताच्च। नाप्यनभ्यासदशाजन्म दोषः; उत्पत्तेर्दोषत्वासंभवात्। नच तदुत्पत्तिक्षण एव दोष इति वाच्यम्; तस्य

---

[1] अभावस्य हेतुत्वेऽसन्दि—ख. घ. [2] तत्र—ख. घ. च. [3] अग्राहकयावज्ज्ञानग्राहकसाम—ख. घ. [4] मपीदमंशे—ख. [5] दोषबलादनव—घ. [6] तन्मते प्रामा—ख. [7] करस्थोदक—ख. [8] जलज्ञानमिति—ख.

## पूरणी

ज्ञानमात्रसाधारणतया तथात्वासंभवात्। प्रमाऽव्यावृत्तधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वस्यैव दोषत्वात्। प्रतिक्षणऽव्यक्ति प्रतिबन्धकत्वग्रहस्यानुगतरूपमन्तरेणासंभवाच्च। नच दोषाननुगमो न दोषाय, पित्तादेरप्यननुगमादिति वाच्यम्; तत्र पित्तत्वकाचत्वादेरनुगतरूपत्वसंभवात्। तत्तत्क्षणत्वस्यैकऽव्यक्तिकत्वेनातथात्वात् एकस्मिन्नेव क्षणे पुरुषभेदेन प्रमाभ्रमोभयोत्पत्तेः। भ्रमस्यापि धर्म्यंशज्ञाने प्रमात्वाच्च। नच भ्रमानुरोधेन यत्किंचिद्दोषकल्पनम्; प्रामाण्यग्रहसामग्रीविरहादेव विशेषादर्शनादिना तत्संशयसंभवेन तद्बलेन तन्निर्णयप्रतिबन्धकदोषकल्पनाया असंभवादिति चेत्॥

अत्र ब्रूमः—उक्तं तावत् ज्ञानद्वैविध्यम्; तत्रापरोक्षवृत्तिप्रमाण्ये तदुपहितसाक्षिनिष्ठप्रामाण्ये च प्रामाण्यग्राहकसामग्र्यवश्यंभावः। वृत्तिज्ञानस्य साक्षिवेद्यतया विषयचैतन्यैक्यापन्नसाक्षिणा वृत्तिविषयविशेषणादिवैशिष्ट्यस्फूर्तिप्रयोजकेन तद्देशस्थापरोक्षवृत्त्यनुभवदशायां अयं घटः इदानीं घटत्वप्रकारकं ज्ञानमित्येवमाकारप्रामाण्यानुभवस्य संभवात्। साक्षिणो वस्तुमात्रे स्वतन्त्रतया मानसानुऽव्यवसायादाविव बहिर्विषयास्वातन्त्र्यादिप्रयुक्तदोषाप्रसङ्गात्। साक्षिनिष्ठप्रामाण्यमपि अयं घटः अहं घटमुपलभ इत्येवमाकारकसाक्ष्यनुभवेन विषयीक्रियत एव। अत्रोभयत्रापि प्रामाण्यग्रहसामग्र्यवश्यंभावेन तस्य स्वतो वेद्यत्वसिद्धौ यत्र मरुमरीचिकादौ तोयापरोक्षभ्रमे सति तत्र प्रमाण्यसंशयः तत्र फलबलेन दूरस्थविषयकत्वादिदोषान्तरकल्पनमेव युक्तम्; एवं परोक्षज्ञानेऽपीति न परतः प्रामाण्यग्रहवार्तेति निरवद्यम्॥

ननु परमते समानप्रकारकनिश्चयस्यैव संशयविरोधित्वान्न जलत्वप्रकारकनिश्चयाज्ज्ञाने प्रामाण्यसंशयानुपपत्तिः। निकटस्थजलज्ञाने

## दीपनम्

विशेषदर्शनस्य तद्विरोधित्वात् । किं चेदमाकारज्ञानांशप्रामाण्यस्य वर्णितज्ञानसामग्रीमात्रग्राह्यत्वेन जलादिज्ञानप्रामाण्यमपि तथैव । नच तत्र व्यवसायविषयीभूतमिदंत्ववैशिष्ट्यमनुव्यवसायविषयो न भवतीति वक्तुं शक्यम्; सामग्रीसत्त्वाद्बाधकाभावाच्च ! न चार्धवैशसं न्याय्यम् । तस्माद्बाधकाभावाद्वर्णितज्ञानग्राहकसामग्रीमात्रग्राह्यमेव प्रामाण्यम् ॥

अपि च परतोऽपि न मनसा तावत्तद्ग्रहः; बहिर्विषये तदसामर्थ्यात्, ज्ञानप्रत्यासत्तेश्च निरस्तत्वात्, संशयपूर्वधर्मिज्ञानेऽपि तत्प्रतीतिप्रसङ्गाच्च । नापि समर्थप्रवृत्तिजनकत्वादिलिङ्गात्; लिङ्गज्ञान-प्रामाण्यनिश्चयं विना तस्य पक्षवृत्तित्वनिश्चयासम्भवेन तदयोगात् । लिङ्गज्ञानप्रामाण्यनिश्चयस्यापि [1] लिङ्गान्तराधीनतयानवस्थानात् । नच प्रामाण्यनिश्चयं विनैव ज्ञानमर्थसत्तानिश्चय इति वाच्यम्; अनभ्यास-दशायामपि ज्ञानस्य तथात्वेन करतलामलकज्ञानवत्तत्प्रामाण्यसंशया-योगात् । एवमत्र निष्कम्पप्रवृत्तिविरहोऽपि न स्यात् । नचाप्रामाण्य-शङ्काशून्यमेव प्रवर्तकमिति नोक्तदोष इति वाच्यम्; गृहीतप्रामाण्य-

## पूरणी

तु गृहीतप्रामाण्यज्ञानसमानविषयत्वादिप्रामाण्यव्याप्यधर्मग्रहादेव न संशय इत्यनुशयादाह—**किं चेति** । नन्विदमंशप्रामाण्यग्रहस्यापि स्वतो ग्राह्यत्वमसिद्धमित्याशङ्क्य निषेधति—**नच तत्रेति** । तत्रेदम-निदं वेति कदाचिदपि संशयादर्शनेन तदनुपपत्तिरूपबाधकाभावात्त-दंशेऽपि स्वतः प्रामाण्याग्रहे कदाचित्तत्संशयापाताच्च तद्ग्रहावश्यकते-त्याह—**सामग्रीति । न चार्धेति** । सामग्रीसाम्यादिति भावः । परिशेषा-दपि स्वतो ग्राह्यं तदित्याह—**अपि चेति । न चाप्रामाण्येति । प्रवर्तकं**

[1] लिङ्गान्तरत्वेनानवस्थानात्—ख.

दीपनम्

स्यैव लाघवेन प्रवर्तकत्वात्। प्रामाण्यनिश्चयवैयर्थ्येन परतस्त्वादिनिरूपणस्यानुपयोगप्रसङ्गाच्च। एवं प्रमोत्पत्तावपि न ज्ञानसामग्रीतोऽतिरिक्तापेक्षा; तत्र प्रमाणाभावात्। ज्ञानसामान्यसामग्र्या एवासति प्रतिबन्धके तद्विशेषप्रमाजनकत्वस्याप्युपपत्तेः॥

अत एवैवं सत्यप्रमापि प्रमैव स्यादिति प्रत्युक्तम्; तत्र [1]दोषस्यैव चक्षुरादेः प्रमाजननशक्तिप्रतिबन्धकत्वात्। न चैवं कारणवैजात्याभावे कार्यवैजात्यमनुपपन्नमिति [2]ज्ञानत्वप्रमात्वरूपवैजात्यं न स्यादिति वाच्यम्; जातिरूपो हि कार्यविशेषः कारणविशेषमपेक्षते, न तूपाधिरूपोऽपि, तस्य घटकपदार्थवैचित्र्या[3]दन्यथासिद्धेः। घटकस्य

पूरणी

व्यवहाराङ्गम्। लिङ्गज्ञानादेरप्रामाण्यशङ्काशून्यतयैव स्वार्थसत्तानिश्चयरूपत्वेनानुमित्यादिहेतुत्वम्। एवं जलादिज्ञानमपि तथैव प्रवर्तकमिति सर्वत्र ज्ञाने प्रामाण्यग्रहस्यावश्यकत्वान्नानवस्थादोष इति वाच्यमित्यर्थः। **लाघवेनेति।** अप्रामाण्यशङ्काशून्यत्वस्याभावरूपत्वात्प्रामाण्यस्य भावरूपत्वादित्यर्थः। **परतस्त्वादीति।** इदं चापाततः। अप्रामाण्यशङ्काविरहद्वारा प्रयोजकत्वेनापि तदुपपत्तेरिति पूर्वोक्तमेव स्मर्तव्यम्। **अप्रमेति।** यदि प्रमा अप्रमाविलक्षणहेतुजन्या न स्यात् तद्विजातीयकार्यं न स्यादित्यापादनं निरस्तम्, तद्विलक्षणहेतुमन्तरापि दोषप्रतिबन्धविरहादेव विलक्षणप्रमाकार्योपपत्तेरित्यर्थः। **घटकेति।** उपाधिघटकविषयादिवैचित्र्यादित्यर्थः। ननु तर्हि विलक्षणतत्तद्विषय एव हेतुरित्यत्राह—**घटकस्य चेति।** तदेतत्ज्ञानत्वा-

[1] दोषवदेव—क. [2] ज्ञानेऽप्रमात्वप्रमात्व—च. [3] दन्यथोपपत्तेः—च.

## दीपनम्

च जनकत्वानियमात् । एकविषयतदेतज्ज्ञानत्वयो[1]रनित्यज्ञानत्वानित्यानुभवत्वयोः [2]करणविशेषासंभवात् नीलघटत्ववदनित्यप्रमात्वस्या[3]प्यार्थसमाजत्वात् । अप्रमायास्तु [4]दोषोत्कर्षाद्यनुविधायितया सा दोषजन्या ।

---

## पूरणी

युगाधिघटकविषयविशेषादेर्न तदुपाध्यवच्छिन्नहेतुता, परोक्षज्ञानादौ तद्धेतुत्वासिद्धेरित्यर्थः । तादृशोपाधि[5]विशेषं दर्शयति—**एकविषयकेति** । विषयहेत्ववैलक्षण्यं प्रतिपादयितुं तद्विशेषणम् । तदेतज्ज्ञानत्वतत्प्रमात्वयोरित्यर्थः । **अनित्यज्ञानेति** । आत्ममनस्संयोगादेरनित्यज्ञानत्वावच्छेदेन हेतुत्वेऽप्यनित्यानुभवत्वावच्छेदेनानुगतहेतुविरहादित्यर्थः । नन्विन्द्रियार्थसन्निकर्षादीनामेव स्मृत्यन्यज्ञानजनकत्वाद्यनुगतरूपेण तद्धेतुतेत्यनुशयादाह—**नीलघटत्ववदिति** । अर्थ.प्रत्येकसामग्रीद्वयसमाहारः, तदधीन आर्थिकः । नीलघटद्वयसामग्रीसमाहारेण नीलत्वघटत्वसमाजवत् । तद्वद्विशेष्यकत्वतत्प्रकारकत्वसामग्रीद्वयसमाहारादेव तद्वति तत्प्रकारकत्वरूपप्रमात्वनिर्वाहान्न तदवच्छेदेन पृथक्सामग्री कल्पनीयेत्यर्थः ॥

यद्यपि तद्वद्विशेष्यकत्वसामग्री गुणघटितैव, विशेषणवद्विशेष्येन्द्रियसन्निकर्षस्यैव तद्धेतुत्वात् , तस्य च भ्रमविषयव्यावृत्ततया प्रमाऽसाधारणकारणत्वेन गुणत्वात् । किं चास्मन्मते विषयेन्द्रियसन्निकर्षादिरेव गुणः । तस्य प्रमाणान्तःकरणवृत्तावेव हेतुत्वात् । भ्रान्तिरूपाविद्यावृत्तौ तदनपेक्षणात् । अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयस्यैव गुणत्वात् । तथापि; शुक्तिरजताहमाकाराद्यविद्यावृत्तेस्तद्वति तत्प्रकारत्वेन घटाद्यन्तःकरणवृत्तिवत्प्रमात्वेऽपि तत्र

---

[1] रनित्यज्ञाननित्यानुभव—ख. घ. [2] का॰ वि—क. [3] प्यार्थिकसमाज—च.
[4] दोषोत्कर्षानुवि—क. [5] विशेषान्.

## दीपनम्

अप्रमात्वज्ञानं च बाधादिना। अन्यथा तत्पूर्वमप्रवृत्तिप्रसङ्गात्। न चैवं प्रमाया अपि [1]गुणोत्कर्षाद्यनुविधायितया सापि तज्जन्यैवेति

## पूरणी

विशेषणवद्विशेष्येन्द्रियसन्निकर्षस्य विषयेन्द्रियसन्निकर्षादेर्वा व्यभिचारेण प्रमाणत्वावच्छेदेन अपरोक्षप्रमात्वाद्यवच्छेदेन वानुगतहेत्वसंभवान्न गुणसिद्धिः। प्रमाणान्तःकरणवृत्तित्वावच्छेदेन तद्धेतुत्वेऽपि न स गुणः; प्रमारूपाविद्यावृत्तेस्तज्जन्यत्वमन्तराप्यप्रमावैजात्यासिद्ध्या तस्य तद्वैजात्याप्रयोजकत्वात्। तद्वैलक्षण्यहेतोरेव च गुणत्वादित्यस्मात्सिद्धान्तरीत्यैव प्रमापरतस्त्वनिराकरणमिति संक्षेपः॥

अप्रमात्वज्ञप्तावपि परतस्त्वं दर्शयति—**अप्रमात्वेति**। इदं ज्ञानमप्रमाणं बाधितविषयत्वात्। नच हेतुसाध्ययोरविशेषः; बाधस्य विपरीतप्रमारूपतया विपरीतप्रमाविषयार्थकत्वरूपहेतोः साध्यभिन्नत्वादित्यर्थः। आदिपदेन प्रवृत्तिसंवादादिसङ्ग्रहः। **गुणोत्कर्षेति**। अवयवसान्निकर्षादितारतम्येन प्रमायाः शुक्लतरत्वपरिमाणविशेषादिविषयत्वलक्षणोत्कर्षदर्शनादित्यर्थः। एवं भूयोवयवेन्द्रियसन्निकर्षादिर्गुणः स्यात्। स च न प्रमामात्रव्यापकः; प्रमाविशेषेऽपि तत्तदवयवसन्निकर्षस्तदवयवसाक्षात्कार एवोपयुज्यत इति न तदवयविप्रमायां तद्धेतुता। शुक्लतरत्वादेरपि दूरस्थत्वादिदोषप्रतिबन्धविरहादेव ग्रह इति न तद्ग्रहेऽपि तदपेक्षेति न भूयोवयवेन्द्रियसन्निकर्षो गुण

[1] गुणोत्कर्षानु—क.

## दीपनम्

वाच्यम्; न [1]तावच्चक्षुरादिकमेव तत्र गुणतया कारणम्, भ्रमसाधारणस्य तस्य गुणत्वासंभवात्। अत एव न चतुष्टयसन्निकर्षोऽपि गुणः, तस्यापि परिमाणविशेषभ्रमसाधारणत्वात्। नच विशेषणवद्विशेष्येन्द्रियसन्निकर्षः; तस्य[2] विषयसन्निकर्षत्वेन [3]कारणत्वे संभवति गौरवेण तत्त्वेनाहेतुत्वात्, विशेष्यांशज्ञाने तदभावात्, प्रमाणाभावाच्च। अत एव न पराभिमतविशेषदर्शनमपि हेतुः। नापि दोषाभाव एव गुणः; प्रतिबन्धकाभावस्याहेतुत्वात्। इदमंशज्ञाने तन्निरूपितदोषा-

---

## पूरणी

इत्यभिप्रेत्य गुणान्तरं निराकरोति—**न तावदिति**। **तस्यापीति**। निकटस्थघटादावपि परिमाणसंशयदर्शनादित्यर्थः। **विशेष्यांश इति**। धर्म्यन्तरप्रमायां रजतत्वादिविशेषणवदिन्द्रियसंनिकर्षविरहादित्यर्थः। ननु तत्तद्विशेषणवदिन्द्रियसन्निकर्षस्तत्तत्प्रमायां हेतुरितीदमंशप्रमायामपीदंत्वविशेष्येन्द्रियसन्निकर्षसत्त्वान्न व्यभिचार इत्यरुचेराह—**प्रमाणेति**। अथ वा विशेष्यते व्यावर्त्यतेऽनेनेति विशेष्यं विशेषणम्, तदंशज्ञाने विशेषणवद्विशेष्येन्द्रियसन्निकर्षस्य स्वसंबन्धिविशेष्यांशज्ञानहेतुत्वेऽपि विशेषणवैशिष्ट्यांशेऽहेतुतया तत्र गुणालाभ एवेत्यर्थः। ननु विशेषणविशिष्टेन्द्रियसन्निकर्षो विशेषणवैशिष्ट्यविशेष्यत्रितयज्ञानेऽपि हेतुरित्यभ्युपगमान्नायं दोष इत्यत्राह—**प्रमाणेति**। अन्येन्द्रियसन्निकर्षस्यान्यत्र हेतुत्वेऽतिप्रसङ्गादित्यर्थः। **अत एवेति**। करादिशून्ये करादिभ्रमात्पुरुषभ्रमस्थलेऽपि विशेषदर्शनस्य हेतुतया भ्रमसाधारणत्वादेवेत्यर्थः। तद्धेतुत्वमभ्युपेत्याह—**इदमंशेति**।

---

[1] नच चक्षुरादि–**घ**. [2] विशेष्यसन्नि–**घ**. [3] हेतुत्वे–**च**.

**चेन्न; लौकिकस्य मानान्तरयोग्यार्थत्वात्पौरुषेयत्वाच्च। अन्यथा घटमानयेति वाक्ये मानान्तरापेक्षा न स्यात्। यत्तु प्रयोजनाभावान्न तत्र तात्पर्यमिति, तदपि न; रज्ज्वादिज्ञानादिव सर्पादिभ्रमनिवृत्त्या कल्पितसंसारनिवृत्त्या प्रयोजनस्य भाष्यादौ दर्शितत्वात्॥**

---

## दीपनम्

भावस्याप्यसंभवात्। न हि क्वचिदिदंत्वप्रकारकोऽपि भ्रमः संशयो वास्ति, येन तन्निरूपितो दोषस्तदभावो वा कल्प्येत। अन्यनिरूपितदोषाभावस्तु भ्रमादिस्थलेऽपि सुवच इति प्रामाण्यपरतस्त्वमयुक्तमेवेति स्वत एव प्रामाण्यम्। नापि लौकिकवाक्यवद्वेदान्तानामपि सापेक्ष[1]त्वेन स्वतः प्रामाण्यानिर्वाहः; तद्वदस्य मानान्तरयोग्यार्थत्वाभावादित्याभिप्रेत्याह—**न लौकिकस्येति। पौरुषेयत्वाच्चेति।** पुरुषाणां ह्यर्थमुपलभ्यैव वाक्यरचनेति तत्र मानान्तरमपेक्ष्यते, वेदस्त्वपौरुषेय एवेति न तदर्थं मानान्तरापेक्षेति न ब्रह्मपरत्वे किञ्चिद्बाधकमस्तीति भावः। **अन्यथा** सिद्धवस्तुबोधकस्यैव मानान्तरसापेक्षताप्रयोजकत्वे। **प्रयोजनस्य** वेदान्तजन्यब्रह्मज्ञानसाध्यस्य॥

---

## पूरणी

एवं प्रासङ्गिकज्ञानप्रमाण्यपरतस्त्वं निराकृत्य प्रस्तुतं वेदान्तानां मानान्तरसापेक्षत्वलक्षणप्रामाण्यपरतत्त्वं निषेधति—**नापीति। मानान्तरेति।** मानान्तरयोग्यार्थकत्वं तत्रोपाधि[2]रिति भावः। पौरुषेयत्वस्य सापेक्षताप्रयोजकत्वं दर्शयति—**पुरुषणामिति॥**

---

[1] त्वप्रसङ्गेन–च. [2] रित्यर्थः–झ.

## द्वितीयवर्णकम्

### एवं सिद्धे तात्पर्यमुपक्रमोपसंहारादिलिङ्गैः शास्त्रे दर्शितमिति

---

### दीपनम्

ननु "दृष्टो हि तस्यार्थः कर्मावबोधनं" इति शबरस्वामिवचनात्कार्य एव वेदस्य तात्पर्यं गम्यते। तात्पर्य[1]लिङ्गमपि प्रमेयस्य कार्यत्वम्। अन्यथा अर्थवादादेर्लक्षणया विधिशेषत्वकल्पनायोगादिति, तत्राह—**एवमिति**। शबरस्वामिवाक्यं हि धर्म[2]विचारत्वा[3]त्कर्मकाण्डादिपरम्, न तु वेदान्तानामर्थान्तरव्यावृत्तिपरम्; तद्व्याख्यातृभिरेवात्मज्ञानस्य स्वतन्त्रपुरुषार्थतोपगमात्। तदुक्तं [4]भट्टपादैः—

"सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गं चात्म[5]विज्ञानादन्यत्रेत्यवधार्यताम्"॥

इति। यत्तु प्रमेयस्य कार्यत्वं तात्पर्य[6]गम्यमिति, [7]तदपि तत्रैव; तत्परत्वं विनार्थवादानां प्रयोजनाभावात्। ब्रह्म तु स्वत एव

---

### पूरणी

**तात्पर्यलिङ्गमिति**। अयं वेदवाक्यतात्पर्यविषयः, कार्यत्वादिति तात्पर्यविषयत्वे कार्यत्वं हेतुरित्यर्थः। **संस्कारत्वेन** अर्थगोचरासत्त्वादिशङ्कानिवर्तकत्वेन। पराङ्गमित्यत्र आत्मविज्ञानादन्यत्रेति संबध्यते। सर्वत्र वेदे आत्मविज्ञानादन्यद्विज्ञानं कर्माङ्गमिति वदद्भिरात्मविज्ञानस्य स्वतन्त्रपुरुषार्थत्वमभ्युपगतमित्यर्थः। नन्वत्रापि

---

[1] लिङ्गरूपप्रमेय—**क**. [2] धर्मविचाराधिकारात्—**घ**. [3] कर्मकाण्डपरम्—**ख**. [4] भट्टाचार्यैः—**ख**. **घ**. [5] विज्ञान दन्यत्रेत्यव—**ख**. [6] गमकमिति—**घ**. **च**. [7] तत्र—**च**. तत्रैव तत्परत्वं—**च**.

**नात्रोच्यते। तात्पर्यं च शब्दस्य फलवत्प्रतीत्यनुकूलत्वं शब्दधर्मः।**

## दीपनम्

पुरुषार्थ इति न तज्ज्ञानस्यान्यापेक्षा। [1]श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च। किं तर्हि वेदान्तानां तात्पर्यलिङ्गम्,

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"

इति श्लोकोक्तानि। तानि च भाष्यकारादिभिस्तत्र तत्र प्रपञ्चितानीति भावः। ननु वाक्यस्य तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्वम्, तच्चापौरुषेये वेदे कथमित्यत आह—**तात्पर्यं चेति**। फलवती या [2]प्रवृत्तिस्तदनुकूलत्वं तन्निरूपितशक्तिविशेषः। न तूद्दिश्यरचितत्वम्; वेदकर्तरीच्छाशरीरासंभवस्योक्तत्वात्। तच्च कारणतत्कारणसाधारणमिति [3]क्वचिदार्थिकेऽपि तात्पर्यं न विरुद्ध्यते। एतच्च पदानामभिधादि-

## पूरणी

तत्तज्ज्ञानं तत्तदुपासनायामुपकारोत्वित्यत्राह—**श्रुतहानीति**। **उपक्रमेति**। "सदेव सोम्येदमग्र आसीत्" इत्युपक्रमः। "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इत्युपसंहारः। इमौ च मिलित्वा लिङ्गम्। "तत्त्वमसि" इत्यसकृदुक्तिरभ्यासः। मानान्तरागम्यत्वमपूर्वत्वम्। एकविज्ञानेन सर्वविज्ञानं फलम्। सृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः। मृदादिदृष्टान्ता उपपत्तयः। एतैर्लिङ्गैर्ब्रह्मपरत्वं निर्णेयमित्यर्थः। **तन्निरूपितेति**। तज्जननानुकूलशक्तिविशेष इत्यर्थः। **क्वचिदिति**। धूमोऽस्तीति वाक्यस्य वह्निता-

[1] कृतहा—क. ख. [2] प्रतीतिरतद—क. ख. [3] क्वचिदार्थकेति—घ.

**तच्चोपक्रमादिना यद्विषयं ज्ञानं फलवदिति निरूप्यते तन्निरूपितमिति शब्दशक्त्यादिना प्रतीयमानोऽप्यन्यार्थो न शब्दार्थः ॥**

**तात्पर्यज्ञानं च न वाक्यार्थज्ञानहेतुः; एकस्मिन्वाक्ये यावदुपस्थिताकांक्षित[1]योग्यपदार्थानां तेन विनाप्यन्वयबोध-**

## दीपनम्

वृत्तिनिर्वाह्यमिति न वृत्तिलोपो न वा वृत्त्यन्तरमिति भावः । फलवदितिविशेषणस्योपयोगमाह—**तच्चेति** । **अन्यार्थः** ग्रहैकत्वादिः ।

प्रसङ्गात्सिद्धान्तमाह—**तात्पर्यज्ञानमिति** । अथ वा एवंविधशब्दतात्पर्यज्ञानात्पूर्वं शब्दैक[2]मेयब्रह्मोपस्थित्यसंभवात् तथा च विना तात्पर्यज्ञानासंभवान्न तात्पर्यज्ञानं [3]वाक्यार्थधीहेतुः । नापि स्वरूपसत्; अतात्पर्यगोचरेऽपि शाब्दप्रतीतिदर्शनादिति तात्पर्यनिरूपणं [4]मुधेत्यत आह—**तात्पर्येति** । प्रमाणाभावादिति शेषः । तथाप्यसंभावनादिनिवर्तकत्वान्न तन्मुधेति भावः । ननु [5]तात्पर्यसंशयदशायां तदभावनिश्चयदशायां च शाब्दज्ञानानुदयात् "यत्संशयव्यतिरेकनिश्चयौ" विति न्यायेन तात्पर्यनिश्चयस्तद्धेतुरिति चेन्न; ग्रहैकत्वादौ तात्पर्याभावनिश्चयेऽपि ज्ञानदर्शनात् । संशयदशायामपि योग्यता[6]संशयदशायामिवाकाङ्क्षादिसमवधाने ज्ञानोत्पत्तौ बाधकाभावात् । नन्वयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति वाक्ये राजपदस्य [7]पुत्रपुरुषान्यतरान्वयतात्पर्यसंशयदशायामपि शाब्दज्ञानप्रसङ्ग इति चेत्तत्राह—**एकस्मिन्निति** । समभिव्याहृतपदानामेकवाक्यताज्ञानं शाब्दज्ञाने

## पूरणी

त्पर्यमपि युज्यत इत्यर्थः । **ग्रहैकत्वेति** । तत्र नानाग्रहसंमार्गस्यैव फलत्वेन तदेकत्वप्रतीतेर्निष्फलत्वादित्यर्थः । **एकवाक्यताज्ञानमिति ॥**

[1] योग्यतार्थानां—क. [2] प्रमेय—च. [3] वाक्यार्थज्ञानहेतुः—ख. घ. च.
[4] मुधेत्याह—ख. [5] तात्पर्यसंशयतदभावनिश्चयदशायां—ख. घ. च. [6] संशयादिवा—ख. [7] पुरुषान्वयतात्पर्य—च.

संभवेन तद्धेतुत्वे प्रमाणाभावात् । क्वचिद्वाक्यार्थसंशयस्तु शब्दादापातप्रतिपन्नेऽर्थे तात्पर्यविपर्यासादिदोषा[1]दुपपद्यते ।

---

## दीपनम्

कारणम्, अन्यान्वितत्वेन ज्ञातादन्यशाब्दज्ञानादर्शनात् । तच्चात्र राजपदे न निर्णीतमिति न शाब्दज्ञानम्, न तु तात्पर्यसंशयात् । न च विनिगमकाभावः ; अतात्पर्यनिश्चयेऽप्यर्थवादादेः शाब्दज्ञान-दर्शनादिति भावः । नन्वेकवाक्यस्थानामप्याकाङ्क्षादिप्रतिसन्धान-दशायामपि क्वचित्संशयो दृश्यते, हस्तेन दीर्घेण कुठारेण वृक्षं छिनत्ती-त्यादौ, किं हस्तः कुठारो वा दीर्घ इति, तदेवं सति न स्यादित्यत आह—**क्वचिदिति** । तत्रापि योग्यतादिप्रतिसन्धानदशायां भवत्ये-

---

## पूरणी

नन्वेकवाक्यत्वमेकार्थतात्पर्यकत्वमेवेत्यागतं तज्ज्ञानस्य हेतुत्वम् ; न च सामान्यतात्पर्यज्ञानहेतुतायामपि तद्विशेषज्ञानं न हेतुरिति तदर्थ इति वाच्यम् ; सामान्यतात्पर्यज्ञानहेतुताया अपि निराकरिष्यमाणत्वात् । नच मिलित्वा एकार्थबोधकत्वमेकवाक्यत्वम्, न तु तत्तात्पर्यकत्वमिति वाच्यम्; एकार्थबोधकत्वं हि तज्जननशक्तत्वं न तु फलोपधानम्; तदर्थबोधो-त्पत्तेः पूर्वं तदनिरूपणात् । तच्छक्तत्वं च तत्पूर्वमेवेति चेन्न ; एकवा-क्यता आसत्तिः । सा च पदानां प्रकृतान्वयप्रतियोग्युपस्थापकसमाहारा-त्मिका । तन्निर्णयश्च शाब्दधीहेतुः । गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ प्रकृतान्वयाप्रतियोग्यर्थोपस्थापकपदसमभिव्याहारे शाब्दबोधादर्शनात् । राजपदे च पुत्रपुरुषान्वयसंशयदशायामेकतरान्वयप्रतियोग्युपस्थापकत्वा-

---

[1] दुत्पद्यते—छ.

## दीपनम्

वान्वयबोधः। परं तु तात्पर्याज्ञानादिदोषात् स निश्चयो न भवति। निवृत्ते च तस्मिन् शब्दादेव निर्णय इति न क्वापि तात्पर्यज्ञानं कारणं,

---

## पूरणी

निर्णयेनासत्तिसंशयादेव नान्वयबोधः। न चान्वयबोधात्पूर्वं तदन्वयप्रतियोग्युपस्थापकनिर्णयासंभव इति वाच्यम्; अनुगुणपदान्तरानपेक्षाद्यनुरोधात्सामान्येनान्वयोपस्थितेः कथंचिदवश्यवाच्यतया तत्प्रतियोग्यर्थोपस्थापकत्वनिर्णयसंभवात्। प्रकृतन्वायाननुगुणपदान्तराव्यवहितपदसमभिव्याहारो वा आसत्तिः। गामानयेत्यादवविरुद्धविभक्तिमत्त्वादिना परस्परपदार्थान्वयोपस्थितिमन्तरापि आनुगुण्यग्रहसंभवेन विशिष्टाभावघटितासत्तिनिर्णयस्य गिरिर्भुक्तमित्यादौ विभक्तिविरोधादिना आनुगुण्यव्यतिरेकग्रहस्य चोपपत्तेः। राजपदस्योभयान्वयसंशयेऽन्यतराननुगुण्यस्यानिर्णय इति तत्र तन्निश्चयासंभवाच्च न शाब्दधीरिति दिक्॥

नन्वेवं शाब्दनिर्णये तात्पर्यनिर्णयो हेतुः स्यादित्याह—**निवृत्त इति**। अप्रतिबद्धशब्दादेव तन्निर्णयोपपत्तेर्न तत्रापि तद्धेतुतेति भावः। नन्ववधारणानवधारणात्मकशाब्दबोधकार्यवैचित्र्यं कारणवैचित्र्यमन्तरानुपपन्नमित्यवधारणात्मकशाब्दबोधे तात्पर्यबोधो हेतुः स्यात्, प्रत्यक्षविशेषे विशेषदर्शनवदिति चेन्न; प्रमाणानां निर्णयज्ञानजनकत्वमौत्सर्गिकं दोषप्रतिबन्धाच्चानवधारणज्ञानोपादानम्। तदिह तात्पर्यसंशयादिदोषदशायां शब्दादनवधारणज्ञानोत्पत्तावपि तदपगमे ततो निर्णयज्ञानमुत्पद्यत इति किं कारणान्तरकल्पनया। अत एव दूरत्वादिदोषविरहाच्चक्षुषापि निर्णयज्ञानमुत्पद्यत इति न विशेषदर्शनं तत्र हेतु-

**अनेकार्थेऽपि युगपत्तावत्पदार्थस्मृतौ मानाभावात् योऽर्थः स्मर्यते तस्यैवान्वयबोधः। क्वचित्सर्वपदार्थस्मृतौ सति च**

## दीपनम्

कल्पनागौरवादिति भावः। नन्वनेकार्थप्रयोगाद्युगपत्ताव[1]त्पदार्थसंबन्धबोधो न जायते, तत्र च तात्पर्यज्ञानातिरिक्तकारणस्य सत्त्वात्, तद्विरहादेव [2]तद्विरहात्सर्वत्र तात्पर्यज्ञानं हेतुरित्यत आह—**अनेकेति।** न हि यावन्तो ज्ञातास्ते सर्वेऽपि युगवत्स्मर्यन्त इति नियमः। दृश्यते ह्यद्यापि कदाचित्कस्यचित्स्मरणं कदाचिन्नेतीति। **क्वचिदिति।** यथा युगपदनेकेषु तात्पर्यज्ञाने तावतामन्वयबोधः तथैव तत्र तेन विनाप्युपपद्यत इति भावः। किं च वाक्यार्थनिरूपिततात्पर्यस्य प्रथमं ज्ञातुमशक्यत्वेन न तज्ज्ञानं तत्र हेतुः, इतरथा [3]अन्योन्याश्रयात्। नच समभिव्याहृतपदानां [4]परस्परार्थान्वये तात्पर्यमिति सामान्यज्ञानं वाक्यार्थविशेषज्ञाने हेतुरिति नान्योन्याश्रय इति वाच्यम्; [5]तात्पर्यागोचरविशेषस्यैव शब्देन प्रतिपादनेन तात्पर्यज्ञानस्यानुपयोगादित्यभि-

## पूरणी

रित्यलमधिकेन। **नन्वनेकार्थेथि।** सैन्धवमानयेत्यत्राऽश्वलवणरूपार्थद्वयोपस्थितावपि कदाचित्किंचिदर्थान्वयबोध एव भवतीत्यत्र तात्पर्यग्रहादन्यन्न नियामकमस्तीत्यर्थः। **यथा युगपदिति।** त्वया तत्रोभयान्वयबोधस्यावश्याभ्युपगन्तव्यत्वात्; युगपदुपस्थितौ नियामकाभावनावृत्तेरसंभवात्प्रकृतेऽपि तथा वक्तुं शक्यत्वाच्चेत्यर्थः। **इतरथेति।**

[1] पदार्थबोधो—**ख.** पदार्थसंबन्धो—**घ.** [2] तद्विरहे सर्वत्र—**ख. घ.** [3] अन्योन्याश्रयः स्यात्—**घ.** [4] परस्परान्वये—**घ. च.** [5] तात्पर्यगो—**क.**

**योग्यतादिज्ञाने भवत्येवान्वयबोधः । [1]अन्यतोऽनवगतवाक्यार्थविशेषनिरूपिततात्पर्यस्य प्राग्ज्ञातुमशक्यत्वाच्च वाक्यमात्र[2]श्रवणे सति तात्पर्यलिङ्गोपस्थितिनियमाभावात् समभिव्याहारस्यान्यथापि [3]दृष्टत्वादिति सिद्धं ब्रह्मणि वेदान्तानां [4]तात्पर्यम् ॥**

---

## दीपनम्

प्रेत्याह—**अन्यत इति** । सामान्यतात्पर्यज्ञानमपि न नियतं तद्धेतुः; नियमाभावादित्याह—**वाक्यमात्रेति** । नच समभिव्याहारानुपपत्तिरेव तत्कल्पिके[5]त्यत आह—**अन्यथापीति** । स्थानजिघृक्षया पित्रा त्वमाहूत इत्यादिप्रयोगदर्शनादित्यर्थः ॥

---

## पूरणी

नच विमर्शरूपान्वयबोधानन्तरं तत्तात्पर्यनिर्णये सति शाब्दनिर्णय इति नान्योन्याश्रयः न वा व्यभिचारः, शब्दनिर्णय एव तद्धेतुत्वाभ्युपगमादिति वाच्यम्; पूर्वोक्तरीत्या तत्र तद्धेतुत्वे मानाभावादित्यत्रैव तात्पर्यादिति । **तद्धेतुरिति** । इदं वाक्यं समभिव्याहृतपदार्थान्वयपरं, प्रयोजनान्तरशून्यत्वे सत्याकांक्षादिमद्वाक्यत्वादाप्तवाक्यत्वाद्वेत्यादिना तदनुमानं वाच्यम् । तद्धेतूपस्थितिश्च नियमेन न संभवतीति तदनुपस्थितिदशायामनुभवसिद्धशाब्दबोधो न स्यादिति भावः ॥

---

[1] अतोऽनवगत—**छ.** [2] श्रवणे तात्पर्य—**घ.** [3] सिद्धत्वादिति—**छ.** [4] प्रामाण्यम्—**ख. च.** [5] त्याह—**क. घ.**

## केवलब्रह्मणि वेदान्तसमन्वयाक्षेपसमाधाने.

नन्वेवमपि कार्यपरा एव वेदान्ताः ब्रह्म [1]प्रमापयिष्यन्ति, न तु ब्रह्मपरा एव, लोके पदानां कार्ये एव सङ्गति[2]ग्रहणात् । प्रवर्तक[3]वाक्ये [4]प्रयोगाधीना हि [5]व्युत्पत्तिः; सिद्धप्रयोगात्तल्लिङ्गप्रवृत्त्यसंभवात् । प्रवृत्त्या च प्रवर्तकमेवानुमीयते । तच्च कार्यमिति ज्ञानादेव प्रथमप्रवृत्तिदर्शनादिति तत्रैव शब्दस्य सामर्थ्यमवगम्यते । न च कार्योपस्थितिं विनैव प्रसिद्धपद-

### दीपनम्

वेदान्ताद्ब्रह्मसिद्धिमभ्युपेत्य केवले ब्रह्मणि वेदान्तसमन्वयमाक्षिपति—**नन्वेवमिति** । कार्यसंसृष्टे शक्तिरपि कार्य [6]एवेत्युक्तम् । तथा च सिद्धस्य लोके शब्दार्थत्वाभावाद्वेदेऽपि न तस्य शब्दार्थत्वमिति भावः । ननु किमयं राज्ञामाज्ञा, न; प्रमाणस्येत्याह—**प्रवर्तकेति** । अत्र हेतुः **सिद्धेति** । व्युत्पित्सुना हि मध्यमवृद्धज्ञानमनुमाय तत्र पदानां शक्तिर्ग्राह्या । तदनुमानं च [7]प्रवृत्त्या विना नेति सा प्रवर्तकवाक्याधीना, ततः किं, तत्राह—**प्रवृत्त्येति** । ततोऽपि किं तत्राह — **तच्चेति** । **प्रथमेति** । स्वस्य भोजनादिप्रवृत्तिदर्शनादित्यर्थः । **प्रसिद्धेति** । प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र प्रसिद्धार्थ-

### पूरणी

**केवल इति** । तथा च वेदान्ताः ज्ञानविधिशेषा इति समन्वयसूत्रद्वितीयवर्णकपूर्वपक्षोत्थापनमिति भावः । ननु गवादिपदानां गवाद्यर्थेष्वपि शक्तिस्वीकारावधारणानुपपत्तिरित्यत आह—**कार्यसंसृष्ट इति** ।

---

[1] प्रतिपादयिष्यन्ति—**क.** बोधयिष्यन्ति—ख. [2] श्रवणात्—**क.** [3] वाक्यप्रयोग—**ग. च.** [4] प्रयोगादिना हि—**क.** [5] प्रवृत्तिः—**ग. छ.** [6] एवेत्येवमुक्तम्—**घ.** [7] प्रवृत्ति विना—**घ.**

समभिव्याहारात् भ्रमरादिपदसङ्गति[1]ग्रहेण न कार्यं सर्वपदार्थ इति वाच्यम्; प्राथमिकव्युत्पत्त्यनुसारेण तत्रापि कार्यस्य कल्पनात्। [2]पुत्रस्ते जात इत्यादिवाक्यादपि मुखविकासादिलिङ्गेन पुत्रादिजन्मज्ञान[3]मनुमाय कार्यबोधं विनैव प्रथमं व्युत्पत्तिर्भवतीति [4]चेन्न; हर्षहेतूनामन्येषामपि संभवेन पुत्रजन्मपरिशेषासंभवात्। न चैवमपि न कार्यं लिङर्थः, इष्टसाधनताज्ञानस्यैव प्रवर्तकत्वादिति वाच्यम्; अतीतवर्तमानेष्टसाधनताज्ञानेऽप्यप्रवृत्तेः। कृतिसाध्येष्टसाधनताज्ञानस्य प्रवर्तकत्वे लाघवा[5]त्कार्यज्ञानमेव प्रवर्तकम्। कार्यं च कृतीप्सितमिति नातिप्रसङ्गः॥

नन्वेवमप्यन्वितमात्रे शक्तिरस्तु, [6]पदार्थे लाघवात्, न तु कार्यान्वित इति चेन्न; श्रोतुः प्रयोजनसाधनप्रवृत्ति-

---

दीपनम्

कमलादिपदसमभिव्याहारादित्यर्थः। **कार्यस्येति**। उपजीव्यकार्यान्वितप्राथमिककमलादिपदव्युत्पत्त्यनुरोधेन तं पश्येत्यध्याहारात्तत्रापि कार्यमेव शब्दार्थ इत्यर्थः। **अन्येषां** प्रियासुखप्रसवादीनाम्। **एवमपि** प्रवर्तकवाक्याधीनव्युत्पत्तावपि। **नातिप्रसङ्ग इति**। कूपपतनादावित्यर्थः। कृतिसाध्यं हि द्विविधमीप्सितमनीप्सितं च। कूपपतनादिकं चानीप्सितमिति न तत्र प्रवृत्तिप्रसङ्ग इति भावः॥

**एवमपि** कार्यज्ञानस्य प्रवर्तकत्वेऽपि। एवं व्युत्पत्तिबलाद्वेदान्तानां कार्यपरत्वमुक्त्वा ब्रह्मज्ञानानन्तरमपि प्रवृत्तिविधायकश्रुति-

---

पूरणी

**ब्रह्मज्ञानेति**। मोक्षस्य ब्रह्मज्ञानमात्राधीनत्वे वेदान्तानां सिद्धब्रह्ममात्रपरता भवेत्। न ह्येवं, तथा सति ब्रह्मज्ञानोद्देशेन श्रवण-

---

[1] ग्रहणे-**छ.** [2] नच पुत्रस्ते-**ग.** [3] मनुभूय-**क.** [4] चेत् हर्ष-**ग**
[5] कार्याधेताज्ञानमेव-**क.** [6] पदार्थमात्रे-**ग. छ.**

मुद्दिश्य प्रयुक्तवाक्यस्य [1]प्रवर्तकपरत्वं विनानुपपत्तेः । एवं श्रवणानन्तरमपि मननादिविधानात्प्रवृत्त्यधीनमेव फलं न ज्ञानमात्राधीनमिति, विधिपरं वेदान्तशास्त्रमिति, उच्यते— भवतु प्रवर्तकवाक्यात्प्रथमं व्युत्पत्तिः, तथापि न कार्यं शब्दार्थः। तन्न तावत्कृतियोग्यत्वमात्रम्; अतिप्रसङ्गात् । यत्तु कृतीप्सितं कार्यमिति तन्न; कृतीप्सितत्वं हि कृत्या साधयितुमिच्छाविषयत्वम्, न च तत्प्रवर्तकज्ञानात्पूर्वमशाब्दप्रवृत्तौ ज्ञातुं

दीपनम्

पर्यालोचनयापि तदाह—**एवमिति** । किं कृतेरनीप्सितसाध्यविलक्षणं यत्साध्यं[2] तत्कृतीप्सितमित्युच्यते, किं वान्यत् । नाद्यः; [3]सुखादिविलक्षणस्य तस्य तदयोगादित्यभिप्रेत्य द्वितीयमनूद्य दूषयति— **कृतीति । अशाब्दप्रवृत्तौ** स्वस्यैव भोजनादिप्रवृत्तौ । चिकीर्षादिरूपतादृशेच्छायाः प्रवर्तकज्ञानोत्तरभावित्वेन तद्विषयत्वस्य पूर्वं

पूरणी

विधानाद्विहितश्रवणेनैव ब्रह्मज्ञानफलसिद्धिरित्यनन्तरं मननादिविधानमनर्थकं स्यादिति विधिसाध्यो मोक्षो न ज्ञानसाध्य इति तत्फलकवेदान्तानां विधिपर्यवसानमेव न्याय्यमिति भावः । ब्रह्मज्ञानस्यापि ब्रह्म वेदेत्यादिश्रुतिबलादुपयोगावश्यकतां मत्वा मूले **मात्रग्रहणं** द्रष्टव्यम् । किमीप्सितादन्यदनीप्सितं अनिष्टं द्वेष्यं वा । आद्य आह— **सुखादीति** । धर्मस्य कृत्युद्देश्यसुखदुःखनिवृत्तिवैलक्षण्येन कृतीप्सितादन्यत्वादनीप्सितसाध्यवैलक्षण्यमसिद्धमित्यर्थः । द्वितीये चोपेक्षणीयेऽपि प्रवृत्तिः स्यादिति भावः । **प्रवर्तकज्ञानेति** । तदुत्तरभावीच्छा-

[1] प्रवर्तकत्वं विना—**क.** [2] तदीप्सित—**क.** [3] सुखाद्यविलक्षणस्य—**च.**

**शक्यम् । न च तदनन्तरभाविनः प्रवर्तकत्वं संभवति । कृत्या साधयितुमिच्छाविषयत्वयोग्यत्वं तदिति चेत्तर्हि योग्यताज्ञानात्प्रवृत्तिर्वक्तव्या । सा च न क्रियास्वरूपम्; तज्ज्ञानेऽप्यप्रवृत्तेः । किं तु हितसाधनत्वमेवेति कृतिसाध्यत्वे सति [1]श्रेयस्साधनत्वमेव प्रवर्तकमिति सिद्धमस्मन्मतम् । यत्तु कृतियोग्यताज्ञानमेव प्रवर्तकम्, न चातिप्रसङ्गः; इष्टसाधनताज्ञानजन्यस्य तस्य प्रवर्तकत्वादिति, तर्ह्यधिकं प्रविष्टं न तु तद्धानिः । न च वस्तुत इष्टसाधनताज्ञानजन्यं प्रवर्तकम्, न तु तत्प्रवर्तकज्ञानविषय इति वाच्यम्; अनतिप्रसक्तावच्छेद[2]कज्ञानं विना**

---

## दीपनम्

दुर्ग्रहत्वादित्यर्थः । अस्तु तर्हि तदनन्तरभावि तज्ज्ञानं प्रवर्तकम्, तत्राह—**न चेति** । **प्रवर्तकं** प्रवर्तकज्ञानविषयः । **अधिकमिति** । जन्यत्वांशप्रवेशादित्यर्थः । अग्निहोत्रादावसंभवाच्चेति द्रष्टव्यम् ।

---

## पूरणी

विषयत्वं न तज्ज्ञानविषयः; तदा तदिच्छानुत्पत्तेः, अनागतेच्छायाश्च मानाभावेनाग्रहात् । इच्छानन्तरभावितज्ज्ञानस्य च प्रवर्तकत्वे वा इच्छाविषयत्वं न तज्ज्ञानविषयः, आत्माश्रयादिदोषादित्यर्थः । ननु तज्जन्यत्वस्यावच्छेदककोटिप्रवेशेऽपि नेष्टसाधनताज्ञानस्य तद्धेतुत्वसिद्धिरित्यत्राह—**अग्निहोत्रादाविति** । नित्यापूर्वस्येष्टसाधनत्वाभावेन तत्र तज्ज्ञानाभावेऽपि कृतियोग्यताज्ञानस्य भावादित्यर्थः । नच नित्यापूर्वं स्वत एव कृतीप्सितमिति वाच्यम्; लोकसिद्धसुखदुःखनिवृत्त्यन्य-

---

[1] श्रेयस्साधनताज्ञानमेव—**क.** [2] कं विना—**क.**

प्रवृत्तिहेतुत्वावधारणायोगात् । किं चेदं कृतीप्सितं इष्टसाधनत्वादित्यनुमानासंभवात् । कृतिसाध्येष्टसाधनत्वादिति वक्तव्यमित्यावश्यकत्वात्तदेव प्रवर्तकमस्तु नान्यत् ; अशाब्दप्रवृत्तेः पूर्वं तदुपस्थितेरावश्यकत्वेन प्रवृत्तिकारणताग्रहस्य तद्विहाय कल्प्यज्ञानान्तरविषयत्वायोगादिति न कार्यं लिङर्थः । अत एव भावनापि न [1]लिङर्थः ; अशाब्दप्रवृत्तौ तदहेतुत्वेन प्रवृत्त्या

## दीपनम्

**असंभवादिति** । सुधामरीचिमण्डलादौ व्यभिचारादित्यर्थः । ननु-विशिष्टस्य पदार्थत्वे गौरवात्कृतीप्सितत्वलक्षणं कार्यमेव लिङर्थः । न ; धर्मिकल्पनागौरवाद्विशिष्टज्ञानमेव प्रवर्तकमिति तदेव [2]लिङर्थ [3]इत्याह—**अशाब्देति आवश्यकत्वेन** हेतुतयेति शेषः । अतः शब्दार्थमाह—**अशाब्दप्रवृत्ताविति** । स्वस्य भोजनादिप्रवृत्तौ शब्दव्यापाररूपायास्तस्या अहेतुत्वेन मध्यमवृद्धप्रवृत्त्या तदनुपस्थितेस्तत्र शक्तिग्रहासंभवात् । नच लोके रागादिकमेव प्रवर्तकमिति तदेव लिङर्थ

## पूरणी

तररूपत्वाभावेन तदयोगात् । वेदमेयस्वर्गापवर्गयोरपि लोकसिद्धसुखजातीयत्वेनैव पुरुषार्थत्वात् । अन्यथा काम्यापूर्वस्यापि स्वत एव पुरुषार्थत्वे स्वर्गादिफलश्रुतिवैयर्थ्यापातादिति दिक् । **धर्मिकल्पनेति** । विशिष्टज्ञानसाध्यकृतीप्सितताज्ञानलक्षणधर्मिकल्पनाप्रसङ्गादित्यर्थः । ननु प्रवर्तके लिङादेः शक्तिः । प्रवर्तकश्च लोके रागादिः वेदे च भावनेति तदुभयमपि लिङर्थ इत्याशङ्क्य निषेधति—**नच लोक इति** । ननु

[1] लिङर्थः—छ. [2] लिङ्शब्दार्थ—ग. [3] इत्यभिप्रेत्याह—च.

## दीपनम्

इति वाच्यम् ; तस्यानेकार्थतापत्तेः, शब्दव्यापारे अगृहीतसङ्गतिक-वैदिकलिङादेरबोधकत्वप्रसङ्गाच्च । न चानुगतप्रवर्तकव्यापारे लिङादेः सङ्गतिग्रहः ; तस्य मनस्संयोगादिसाधारणत्वात् शब्दात्तथा प्रतीत्यभावाच्च । अपि च स्वरूपतोऽपि सा दुर्निरूपा । न तावल्लिङादिश्रवणानन्तरमेव प्रवृत्तेर्लिङादिरेव सा ; अव्युत्पन्नानां तदवगच्छतां प्रवृत्तिप्रसङ्गात् । नापि तद्व्यापारः ; तस्य परिस्पन्दादेरसंभवात् । तज्ज्ञानाल्लोकस्याप्रवृत्तेश्च ॥

यत्तु ज्ञानमेव तद्व्यापार इति, तन्न ; लिङादिगोचरस्याप्रवर्तकत्वात् । आख्याताभिधेयार्थभावनातिरिक्तविषयाभावेन तज्जन्यज्ञानान्त[1]रासंभवाच्च । अर्थभावनाज्ञानं च न प्रवर्तकम् । अन्यतोऽपि

## पूरणी

प्रवृत्त्यसाधारणकारणत्वं शक्यतावच्छेदकमस्त्वित्यत्राह—**शब्दादिति** । शब्दजन्यप्रतीतिविषयत्वे सति तद्विषयतानिरूपकस्यैव प्रवृत्तिनिमित्तत्वादिति भावः । ननु स्वरूपसता उक्तरूपेणानुगमः स्यादित्यापाततोऽनुशयादाह—**अपि चेति** । लिङादिशब्दाभिव्यक्तिहेतुभूतताल्वोष्ठपुटव्यापारादिलक्षणः परिस्पन्दः शब्देऽपि केनचित्संबन्धेन संभवतीत्यत्राह—**तज्ज्ञानादिति** । लिङादिगोचरं तज्ज्ञानं तज्जन्यं तदर्थविषयकं वेति विकल्पाद्यं निरस्य द्वितीयं निरस्यति—**आख्यातेति** । **अर्थभावनेति** । पाकः कृतिविषय इति ज्ञानमात्रेण तत्र प्रवृत्त्यदर्शनादित्यर्थः । ननु फलस्य स्वकृतियोग्यताज्ञानात्तत्साधने पाकादौ तदिष्टसाधनताज्ञानादिना प्रवृत्तिः, अतोऽत्रापि स्वर्गरूपार्थस्य कृतियोग्यताज्ञाने तत्साधनयागादौ प्रवृत्तिर्भवेदित्यत आह—**अन्यतोऽपीति** ।

[1] राभावाच्च—ख.

**तदनुपस्थितेः। किं तु प्रवर्तकाभिधायी लिङादिः कृतिसाध्यत्वे सति श्रेयस्साधनत्वमेवाभिधत्ते। साध्यसाधनत्वे [1]कथमेकत्र शब्दः प्रतिपादयेद्विरोधादिति चेत्॥**

---

**दीपनम्**

सिद्धेश्च न तदभिधेयम्। यदपि लिङादि[2]श्रवणवल्लडादिश्रवणे प्रवृत्त्य-दर्शनादस्ति कश्चिल्लिङादेः प्रवृत्तौ विशेषः, [3]स एव च प्रवर्तनेत्युच्यते, सा चार्थभावनानुकूला [4]शब्दशक्तिः, सैव लिङर्थ इति, तदपि न; लिङादिर्हि ज्ञानद्वारैव प्रवर्तकः, अन्यथाऽव्युत्पन्नानामपि प्रवृत्तिप्रसङ्गात्, ज्ञानं च क्लृप्तश्रेयस्साधनविषयमेव प्रवर्तकं [5]नत्वक्लृप्त[6]शक्तिविषयम्; तत्कल्पने गौरवात्। विषभक्षणादौ नियुक्तस्यापि श्रेयस्साधनत्वज्ञानं

---

**पूरणी**

स्वर्गकाम इत्यादिकर्मिपदसमभिव्याहारादेव स्वर्गस्य भाव्यतासिद्धेर्न तद्भावना लिङाद्यर्थ इत्यर्थः। **न त्वक्लृप्तेति**। शक्तिज्ञानस्य तदर्थ-प्रत्यायकत्वेनैव गवादिपदेषु दर्शनादित्यर्थः। नच शक्तिर्नाम न पदार्थसङ्केतः, किं तु नियोगापरपर्यायालौकिकव्यापारः शब्दधर्मः, सैव च शब्दभावनेति भट्टसिद्धान्तान्नैवमिति वाच्यम्, तथा सति लोकसिद्धेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तावलौकिकव्यापारकल्पनायां मानाभावादिति भावः। नन्विष्टसाधनताज्ञानं न प्रवर्तकम्; गुर्वाज्ञया माणवकस्य स्वहितप्रतिसन्धानमन्तरेणापि मयि नियोगोऽस्तीति प्रवृत्ते-

---

[1] कथमेकस्य–ग. [2] श्रवणादिवत्–घ. च. [3] स एव प्रवर्तकतेत्युच्यते–ख. [4] शक्तिः–क. घ. [5] नावक्लृप्त–घ. [6] साधनशक्ति–च.

**न तावद्वस्तुविरोधः ; कृतिफलनिरूपितयोरेकत्राविरोधात्। अत एव न प्रतीति[1]विरोधोऽपि ॥**

**ननु तत्साध्यत्वं [2]तत्कालेऽसिद्धसत्ताकस्यैव धर्मः, [3]प्रतीयते च तथा, न च तदा तस्मिन् साधनत्वमस्ति ; असिद्धे तदयोगात्। [4]न वा तदा प्रतीयते। अतः कथं न विरोधः। न च कृतिसाध्यत्वफलसाधनत्वयोरेककालावच्छेदनाप्रतीतेर्न विरोध इति वाच्यम् ; विशिष्टबोधकयोः कृतिसाध्य-**

---

## दीपनम्

विना प्रवृत्त्यदर्शनात्। माणवकस्य गुर्वाज्ञा[5]परिपालनमेव श्रेय इति [6]व्यभिचाराच्चेत्यर्थः ॥

अन्यनिरूपितसाध्यत्वस्यान्यनिरूपितसाधनत्वस्य च दण्डजन्ये उदकाहरणादिसाधने दृष्टत्वेन न विरोध इत्याह—**न तावदिति**। **साधनत्वं** फलसाधनत्वम्। **तदयोगात्** सिद्धावस्थस्य साधनत्वेन साध्यावस्थस्य तदयोगादित्यर्थः। **एककालेति**। लिङादेः कालांशशक्त्यभावादित्यर्थः। **विशिष्टेति**। कृतिसाध्यत्वविशिष्टस्य श्रेयस्साधनत्वविशिष्टस्य च वाचकपदेन विशिष्टाभेदप्रतिपादनात्तयोरेक-

---

## पूरणी

दर्शनादित्यत्राह—**माणवकस्येति**। अन्यथा गुर्वाज्ञापरिपालनं स्वश्रेयस्साधनमित्यनवगच्छतां तदापत्तेरिति भावः। **कालांश इति**। लडादिवद्विधिलिङादेः कालविशेषोपाधिना विधानविरहादिति भावः।

---

[1] विरोधादपि—**क.** [2] तत्कालेऽविद्यमानसत्ता—**क.** [3] प्रतीयते, तथा च न तदा तस्मिन् साधन—**क.** [4] न च तथा—**क. ग. छ.** [5] प्रतिपालन—**ख. घ.** [6] तस्याव्यभिचाराच्चेत्यर्थः-**क. घ. च.**

श्रेयस्साधनपदयोः समभिव्याहारेण तदभेदबोधकेनैककाला-वच्छेदप्रतीतेरिति चेन्न; अत्र शब्दद्वयाभावात्। एक एव हि [1]लिङ्शब्दः। स च कृतिसाध्यत्वसमानाधिकरणश्रेयस्साधन-

दीपनम्

कालावच्छेदोऽपि प्रतीयेतैवेत्यर्थः। **समभिव्याहारेण** तदभेदबोधकेन लिङादिनेति शेषः। स्यादेवं दण्डी कुण्डलीत्यादाविव यदि विशिष्ट-बोधकपदद्वयसामानाधिकरण्यं स्यात्। अत्र त्वेकमेव लिङ्पदम्। तच्च सामानाधिकरण्यमात्रं बोधयति[2]। नच तद्विरुद्धमित्याह—**अत्रेति**। नन्वेवं कथं "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र फलसाधनीभूत-यागे वाजपेयगुणविधाने साध्यत्वसाधनत्वविरोधेन गुणविधि[3]निराकरण-मिति चेत् श्रूयताम्—तत्र हि स्वाराज्यकामपदसमभिव्याहृतेन यजेते-त्याख्यातेन फलभावनाकरणत्वं तृतीयान्तपदसमभिव्याहृतयजिना च गुणसाध्यत्वं पृथक्पृथगेव प्रतिपाद्यते, न त्वेकया शक्त्येत्यनेकशक्तपद-समभिव्याहाराधीनतया विशिष्टवैशिष्ट्यबोध एव भवतीति तत्र गुण-

पूरणी

**न त्वेकयेति**। तत्र शब्दतन्त्रता वास्त्वर्थतन्त्रता वा। सर्वथा शक्ति-भेदेन तदधीनार्थोपस्थितिभेदात्पृथगुपस्थितसाध्यसाधनावस्थयोरभेदबो-धने तदेकावच्छिन्नतया प्रतीतिरिति युक्तो विरोधाद्गुणविधिनिरास इति भावः। क्लीबतच्छब्देन पुल्लिङ्गविधिशब्दार्थपरामर्शानुपपत्तिमा-

[1] लिङादिशब्दः-ख. ग. छ. [2] बोधयतीति—च. [3] निराकरणादीति—च.

**त्वमाह। तच्चैकत्राबाधितम्। अयमेव हि वाजपेयाद्विशेषः।** [1]**तत्र हि गुणविधिपक्षे शब्दद्वयमस्तीति वैरूप्यात्तत्परित्यज्यते। अथ वा सर्वत्र प्रवर्तकमेतदेवास्तु, लिङर्थस्तु हितसाधनत्वमेव, न तु कृतिसाध्यत्वांशोऽपि; तस्यान्यलभ्यत्वेनाशब्दार्थत्वात्। आख्यातान्तधातुसामर्थ्यात्तत्सिद्धेः॥**

---

## दीपनम्

प्रधानवैरूप्यमित्याह—**अयमेव हीति**। **तत्** गुणविधानम्। **एतदेव** कृतिसाध्यत्वविशिष्टश्रेयस्साधनत्वमेव। ननु तदपि [2]लिङादिना प्रतीयत इति तत्राह—**तस्येति**। **आख्यातान्तेति**। लिङादेर्हि तिङ्त्वसामान्याकारेणास्ति लडादिवत्कृतौ शक्तिः। [3]सा च सविषया समभिव्याहृतभावार्थं विषयीकरोतीति प्रवृत्तिविषयस्य कृतिसाध्यत्वमन्यलभ्यमिति न लिङ्त्वाकारेण तत्र शक्तिरित्यर्थः॥

एवं शाब्दज्ञानस्य साक्षात्प्रवर्तकत्वाभावेऽपि शब्दात्पूर्वानुपस्थितकृतिसाध्यत्वप्रकारकज्ञानसंभवान्न तत्र [4]लिङः शक्तिरित्युक्तम्। इदानीं पूर्वोपस्थितस्यैव प्रकारत्वमिति परमतेऽपि शाब्दज्ञानानन्तर-

---

## पूरणी

शङ्कयाह—**गुणविधानमिति**। उक्तवक्ष्यमाणयोरसाङ्कर्यं दर्शयति—**एवमिति**। उक्तकल्पद्वयेऽपि शब्दज्ञानमेव साक्षात्प्रवर्तकम्। तत्र पूर्वकल्पे लिङः कृतिसाध्यत्वविशिष्टे शक्तत्वात्पदशक्त्युपस्थापितस्य च शाब्दज्ञाने प्रकारतया भानात्कृतिसाध्यत्वप्रकारकज्ञानं शब्दाज्जायते। द्वितीयकल्पे तु कृतिसाध्यत्वे न लिङः शक्तिः, किं तु लिङ्त्वा-

---

[1] अत्र—छ. [2] लिङा प्र—क. [3] तथा च—क. [4] लिङादेः—घ.

**अथ वा श्रेयस्साधनतया अवगते ह्यानयनादौ विद्यमान-प्रागभावप्रतियोगिनि स्वसामर्थ्याद्यनुसारेण भवति कृतिसाध्य-**

---

## दीपनम्

मनुमानेन तत्संभवान्न तत्र लिङः शक्तिरित्याह—**अथ वेति**। अथ वा तव्यादिपदादुक्तप्रकारेण कृतिसाध्यत्वज्ञानासंभवादुपायान्तरमाह—**अथ वेति**। **विद्यमानप्रागभावेति**। अत्र च प्रागभावपदेनानादि-वस्तु विद्यमानपदेन च सिद्धं व्यावर्तयता [1]कृति[2]साध्यत्वविरोधिधर्मा-

---

## पूरणी

कारेण यागादिविषयककृतिमात्रं प्रतीयते। विषयता च यागादेः कृत्यवच्छेदकत्वम्। तदन्विताभिधानापर्यवसानाच्च कृतिसाध्यत्वलाभः। [3]अकृतिसाध्यस्य तदवच्छेदकत्वानुपपत्तेः। तथा च कृतिसाध्यत्वस्य वाक्यार्थप्रतीत्येकविषयत्वेन शब्दशक्त्या पूर्वमनुपस्थितत्वेऽपि पूर्वानुप-स्थितमपि प्रकार इति मतेन कृतिसाध्यत्वप्रकारकं ज्ञानं शब्दादेव संभवतीति कल्पद्रुयनिगर्वः। अधुना तु पूर्वानुपस्थितमप्रकार इति पक्षमाश्रित्य प्रकारान्तरमुच्यत इत्यर्थः। ननु प्रकृतिप्रत्ययान्विताभि-धानसमय एव कृतिविषयतयावगतयागादेस्तत्साध्यत्वमपि तत्प्रतीत्य-पर्यवसानोपस्थितमित्यनन्तरवाक्यार्थप्रतीतौ पूर्वोपस्थितकृतिसाध्यत्वस्य प्रकारत्वं न विरुद्धमित्यरुचेराह—**अथ वेति**। ननु विद्यमानप्रागभाव-प्रतियोगित्वमनागतसुधामरीचिमण्डलादौ व्यभिचारीत्यत्राह—**अत्र चेति**। **कृतिसाध्यत्वेति**। साध्यत्वविरोधी च धर्मः सुधामरीचिमण्डलादौ कृत्ययोग्यत्वं तदधिकरणत्वान्न व्यभिचारः। नन्वेवमानयनादौ कृत्ययोग्य-त्वाभावः कृतियोग्यत्वात्, तदेव च साध्यमिति हेतुसाध्ययोरविशेष इति

---

[1] तत्कृति—च. [2] साध्यत्वे विरोधि—घ. [3] कृत्यसाध्यस्य—ङ.

त्वज्ञानम् । न च कृतिसाध्यत्वज्ञानं प्रागभावज्ञानं विना अशाब्द-[1]प्रवृत्ताविवान्यतोऽपि न भवति । नच कृतिसाध्यताज्ञाना-द्धितसाधनत्वज्ञानं भवतीति वैपरीत्यम् ; अहितसाधनानामपि क्रियाणां सत्त्वात् । आप्तस्यापि [2]स्वार्थमात्रोद्देशेन प्रवृत्त्युपदेशो-

## दीपनम्

नधिकरणत्वं विवक्षितम् । कृतिसाध्यत्वं च साध्यमिति न क्वापि व्यभिचारः । ननु विद्यमानप्रागभावप्रतियोगित्वज्ञानं तस्य [3]कुतो भवतीत्याह--**न चेति** । भविष्यत्कालः पाकाधारः, कालविशेषत्वात्, सम्प्रतिपन्नवदित्य[4]नुमानादिति भावः । **आप्तस्यापीति** । दृश्यते ह्युपाध्यायानामेव माणवकादिप्रवृत्त्युपदेश इत्यर्थः । इदं च [5]कार्य-ज्ञानमेव प्रवर्तकमिति पररीत्योक्तम् । इष्टसाधनताज्ञानस्य प्रवर्तकत्वे तु प्रवृत्तिपरलिङादिशब्दस्य तत्र शक्तिः कल्पनीयेति भावः । कृति-

## पूरणी

चेन्न; कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वं विवक्षितम् । सुधामरीचिमण्ड-लत्वादेर्विरुद्धधर्मत्वात्तदनधिकरणत्वस्य च प्रकृते सुग्रहत्वात् । वस्तुतस्तु कृतिसाध्यत्वविशिष्टेष्टसाधनत्वं लिङ्गमिति पूर्वोक्तमेव सम्यक् । **नच कृतिसाध्यतेति** मूलम् । प्रागभावज्ञानमन्यतो न संभवतीति न हि येन तदधीनकृतिसाध्यत्वज्ञानं न स्यादित्यर्थः । **कालविशेषत्वात्** व्यवहारकालविशेषत्वादित्यर्थः । **तत्र** इष्टसाधनत्वे । तथा च तदनु-रोधेन गुर्वाज्ञापरिपालनमेवेष्टमिति कल्पनीयमिति भावः । नन्वानयना-दिकं न कृतिसाध्यत्वे हेतुः ; अप्रयोजकत्वात्, परानयनादौ परकृति-

---

[1] प्रवृत्तावन्यतो न भवति—**क.** [2] स्वर्थोपदेशेन—**क.** [3] कुतो न भव—**च.**
[4] अनुमानात्तत्सिद्धेः—**घ.** [5] कार्यमात्रमेव—**क. घ.** कार्यमात्रं- **च.**

**पपत्तेः। धात्वर्थस्य धात्ववगतस्वरूपमात्रेणैव साध्यत्वज्ञानसंभवाच्च निषेधे नञर्थासिद्धिप्रसङ्गाच्च ॥**

## दीपनम्

साध्यत्वानुमाने तु नायं दोष इत्याह—**धात्वर्थस्येति**। **स्वरूपमात्रेण** आनयनत्वादिस्वरूपेण प्रागुक्तहेतोरुन्नेतुं शक्यत्वा[1]दिति भावः ॥

किं च यदि कृतिसाध्यत्वमेव लिङर्थः 'न हन्यात्' इत्यादौ नञर्थान्वयो न स्यात्, तस्यापि कृतियोग्यत्वात्। अतः श्रेयस्साधनत्वमेव लिङर्थो वक्तव्य इत्याह—**निषेध इति**। ननु श्रेयस्साधनत्वमपि तत्रास्तीति कथं तस्य नञर्थान्वय इति चेन्न; बलवदनिष्टासाधनेष्टसाधनत्वमेव लिङर्थः। निषेधे च विशेषणांशस्याभावात् तदन्वयसिद्धिः। नच बलवदनिष्टासाधनत्वं कृतिसाध्यत्वस्यैव विशेषणमस्त्विति वाच्यम्; इष्टापेक्षयैव

## पूरणी

साध्यत्वविरहाच्चेत्यत्राह—**प्रागुक्तेति**। हेतुः पूर्वोक्त एव, आनयनत्वादिकं पक्षतावच्छेदकतया निर्दिष्टमिति भावः ॥

**नच बलवदनिष्टेति**। तथा च कार्यताया लिङर्थत्वेऽपि नानुपपत्तिरिति भावः। **इष्टेति**। इष्टावधिकबलवत्त्वघटितविशेषणमिष्टसाधनत्वस्यैव युक्तम्; अन्यथा अनन्वयादिति भावः। ननु नेष्टावधिकं बलवत्त्वम्; तस्य दुर्निरूपत्वात्। न तावदिष्टोत्पादनान्तरीयकमनिष्टस्य दुर्बलत्वम्, तद्विपरीतं बलवत्त्वम्, तत्त्वस्य निर्वक्तु-

[1] दित्यर्थः—ख. घ. च.

## दीपनम्

बलवत्त्वस्य वक्तव्यत्वात् । नच दुरितमेवानिष्टशब्दार्थः ; लौकिकनिषेधाभावप्रसङ्गात् ॥

[1] नन्वेवं कथं श्येनादौ लिङर्थान्वयः, तस्य बलवदनिष्टसाधनत्वादिति चेन्न ; तत्साध्यस्य शत्रुवधस्य बलवदनिष्टत्वाभावात् । नरकस्य तत्प्रयोज्यत्वेऽपि [2] तदसाध्यत्वात् । निषिद्धं च सर्वं नरकसाधनमेव, दुरितापूर्वस्य कल्प्यस्य तद्व्यापारतया तदव्यवधायकत्वात् । न चैवं हिंसापि श्येनव्यापारः ; तदुद्देशेन [3] विहितस्य तस्यानुद्दिष्टफले

## पूरणी

मशक्यत्वात् । न चाविनाभावः स इति वाच्यम्; निषिद्धसुखदुःखयोरपि तत्सत्त्वात् । नापि व्यक्तयल्पत्वं तत् ; एतावद्दुःखमेतावत्सुखमित्यनिर्णयात् । तस्माद्बलवद्द्वेषविषयदुःखाजनकत्वं बलवदनिष्टाननुबन्धित्वम् । इदं च कार्यतायामपि विशेषणमिति चेन्न; एवमपि पूर्वोक्तरीत्या कार्यताया लिङर्थत्वासंभव इत्यत्रैव तात्पर्यादिति । ननु बलवदनिष्टशब्दस्य दुरितार्थतया तदसाधकत्वं कार्यतायामपि विशेषणं भवेदित्याशङ्क्य निषेधति—**नच दुरितेति** । **लौकिकेति** । [4] निषेध्यविषभोजनादौ दुरितसाधनत्वस्य सत्त्वादिति भावः ।

**नरकस्येति** । नरकसाधनत्वमेव लिङर्थः, न तु तदप्रयोजकत्वमात्रम् । तथा सति चित्रायागादेरपि पश्वादितत्फलोपभोगद्वारा उन्मादपातित्यादिप्रयोजकतया विध्यर्थानन्वयप्रसङ्गादिति भावः । नन्वेवं शतयातनादिकमपि [5] व्यवहितोत्पन्ननरकसाधनमिति तत्र निषेधानुपपत्तिरित्यत्राह— **निषिद्धं चेति** । **तदुद्देशेनेति** । मानान्तरावगत-

[1] ननु—क. [2] तत्साध्यत्वाभावात्-क. [3] विहितस्यानिष्टफले—च. विहितानुद्दिष्टफले—ख. [4] निषिद्धे वि—झ. [5] व्यवहिततया न नरकसा—झ.

## दीपनम्

नरकादौ [1]तद्व्यापारत्वायोगात्। वस्तुतस्त्विष्टसाधनत्वमेव लिङर्थः, न तु बलवदनिष्टासाधनत्वांशोऽपि। बलवदनिष्टसाधनत्वज्ञानस्य प्रवृत्तौ प्रतिबन्धकतया तदभावस्यैवापे[2]क्षणीयत्वात्। न तु तत्साधनत्वाभावज्ञानस्याप्यपेक्षा; अन्वयव्यतिरेकाभ्यां [3]जनकज्ञानाविघटकस्यापि ज्ञानस्य प्रतिबन्धकत्वात्। अन्यथा कारणाभावादेव कार्यानुदयेन तस्य प्रतिबन्धकत्वायोगात्। [4]बलवदनिष्टासाधनत्वेन ज्ञातेऽप्युपेक्षणीये

## पूरणी

साधनत्वोपपत्त्यर्थं व्यापारकल्पना। न चात्र श्येनयागस्य नरकसाधनत्वे किंचिन्मानमस्तीति भावः। ननु श्येनो मरणफलकव्यापारत्वेन हिंसा, तस्याश्च नरकजनकत्वं श्रुत्याद्यवगतमिति चेन्न; अनन्तरमरणफलकव्यापारस्यैव हिंसारूपत्वात्। नच श्येनस्तथा, मध्ये अपूर्वेण व्यवहितत्वात्। खड्गहननश्येनापूर्वजनितशिरस्तोदादेरेव तथात्वात्। अन्यथा कूपादौ नष्टे गवि तत्कर्तुर्गोवधदोषप्रसङ्गादिति दिक्। पूर्वत्रास्वरसं दर्शयन् प्रकारान्तरमाह—**वस्तुतस्त्विति**। ननु जनकज्ञानं विघटयदेव ज्ञानं प्रतिबन्धकमिति नियमाद्बलवदनिष्टासाधनताज्ञानस्याहेतुत्वे तत्साधनताज्ञानं प्रतिबन्धकमेव न स्यादित्यत्राह—**अन्वयव्यतिरेकाभ्यामिति**। जनकज्ञानाविघटकत्वे प्रतिबन्धकत्वमेव न स्यादिति तथा नियमोऽप्यसिद्ध इत्याह—**अन्यथेति**। ननु बलवदनिष्टासाधनताज्ञानमेव प्रवर्तकमस्तु न त्विष्टसाधनताज्ञानम्; येन बलवदनिष्टसाधनताज्ञानाभावमात्रमेवापेक्षितं स्यादित्यत्राह—**बलवदनिष्टेति**। नन्वेवं कृत्यसाध्यताज्ञानस्य प्रवृत्तिप्रतिबन्धकतया

[1] तद्वारकत्वा—ख. च. [2] क्षणात्—घ. [3] जनकाविघटक—क. [4] बलवदिष्टसाध—घ. च.

## दीपनम्

प्रवृत्त्यदर्शनेनेष्टसाधनताज्ञानस्यैव प्रवर्तकत्वात्। कृतिसाध्यताज्ञानं च चिकीर्षाजनकतया आवश्यकम्। न चैवं निषेधे नञर्थान्वयासंभवः, हननादेरपि तात्कालिकेष्टसाधनत्वादिति वाच्यम्; पाकादौ यागादौ चेष्टसाधनतासंबन्धित्वेनावगतबलवदनिष्टा[1]साधनत्वस्य विशेषणांशमात्रस्य वा प्रकृतेऽपि भ्रान्त्या प्रसक्तस्य लिङा लक्षणया[2]नूदितस्य नञर्थेनान्वयात्। निवृत्तिपरे निषेधवाक्ये तदन्यस्य लक्षणायोगात्॥

नन्वेवं प्रधानलिङ्मुख्यार्थानुरोधेन गुणभूतनञ्पद एव लक्षणेति निषेधस्यापि निवृत्तिकार्यपरतया जितं गुरुभिरिति चेत्सत्यम्, जितमस्मद्गुरुभिः, न तु प्राभाकरगुरुभिः। तथाहि—न तावल्लोके

---

## पूरणी

तदभावमात्रमेव हेतुः स्यान्न तु तत्साध्यताज्ञानमित्यत्राह—**कृतिसाध्यतेति**। कृतिसाध्यत्वप्रकारकेच्छायास्तत्साध्यताज्ञानं विना असंभवादित्यर्थः। ननु नियमेन बलवदनिष्टासाधनत्व एव कथं लक्षणा, इष्टसाधनत्वसबन्धाविशेषेण यागापूर्वद्वारकत्वादौ लक्षणास्त्वित्यत्राह—**निवृत्तिपर इति**। वाक्यार्थोपपादकत्वाल्लक्षणाश्रयणमित्यर्थः।

ननु निषेधवाक्ये लक्षणाभ्युपगमे नञ्पद एव निवृत्तिलक्षणास्तु, लिङादिकं च तद्विषयकापूर्वं बोधयत्विति शङ्कते—**नन्वेमिति**। यद्यपि क्रियासङ्गतनञः प्रतिषेधे मुख्यता। प्रतिषेधश्च निवृत्तिः प्रागभाव इति यावत्। तद्विषयकृतिसाध्यतया च निषेधापूर्वं वाच्यम्। प्रागभावश्च यद्यप्यनादितया कृत्यसाध्यत्वादपूर्वविषयत्वानर्हस्तथापि परि-

---

[1] साध्यत्वस्य—क. [2] साधितस्य—क.

## दीपनम्

प्रधानलिङ्मुख्यार्थानुरोधेन तल्लक्षणा, [1]स्थायिकार्यशक्ताया लिङो लोके लाक्षणिकत्वात्। न हि लाक्षणिकपदानुरोधेन नञर्थबाधो युक्तः। सत्यां गतौ पदद्वयलक्षणायोगाच्चेति, नञर्थानु[2]रोधेनैवेष्यत एव लक्षणिकं तत्पदम्। तथा च बलवदनिष्टाननुबन्धीष्टसाधनत्वं तादृशकार्यं वा लक्षयतीति कल्पनीयम्। किं च नेहोप[3]विशेदित्यादिलौकिकनिषेधस्य यदि तन्निवृत्तिः कार्येत्यर्थः तद्युपवेशस्येष्ट[4]साधनतालिङ्गसिद्धं कार्यत्वज्ञानं न बाधितमिति (न)प्रत्यक्षवाक्याभ्यां समबलाभ्यां

## पूरणी

पाल्यत्वेन तस्यापि साध्यत्वात्तदुपपत्तिरिति विनैव लक्षणां निवृत्त्यपूर्वं निषेधवाक्यप्रतिपाद्यमिति कलञ्जनये व्यवस्थापितम्। तथाप्यभावस्याकरणत्वादपूर्वासाधनस्य च तद्विषयत्वायोगात्तत्प्रागभावो नापूर्वविषयः। किं तु कलञ्जभक्षणादिनिवृत्त्यात्मकस्तद्विरोधिव्यापार एवापूर्वविषयतया वाच्यः। विरोधिव्यापारे च नञ्लक्षणैवेति भट्टसिद्धान्तरीत्येदमुक्तं वेदितव्यम्। **नञर्थानुरोधेनेति**। मुख्यार्थनञनुरोधे च क्रियापदलक्षणा मतद्वयेऽपि तुल्या। लाक्षणिकं च लिङादिपदं बलवदनिष्टाननुबन्धीष्टसाधनत्वं तदननुबन्धिकार्यतां वा लक्षयतीत्येतावानेव विशेषः। तत्र च विनिगमकमुक्तमेवेति भावः। ननु लिङादेः प्रधानभूतस्य क्रियाकार्यतालक्षणायामन्तरङ्गता, [5]बलवदनिष्टाननुबन्धीष्टसाधनत्वे तु बहिरङ्गतेति प्रधानलिङ्पदस्वारस्यानुरोधाद्गुणभूतनञो निवृत्तिलक्षणैव युक्तेत्यनुशयादाह— **किं चेति**।

[1] तत्र स्थायि-**ख. ग.** [2] रोधेनैव स्वत एव-**घ. छ.** [3] विशेत्यादि-**ख. घ.**
[4] साधनता लिङ्सिद्ध-**घ. च.** [5] बलवदनिष्टासाधनत्वे तु-**झ.**

## दीपनम्

पुंसः प्रवृत्तिनिवृत्त्योरव्यवस्थेति किं कृत[1]माप्तेन, क्रमेण वोभयानुष्ठामिति किं वा निषेधवाक्येन । न चाप्तवाक्यप्रामाण्यबलाद्बलवदनिष्टासाधनताविवेकसहितेष्टसाधनतानिमित्तकृतीप्सितताज्ञानस्य [2]बाधान्न प्रवृत्तिरिति वाच्यम् ; आप्तवचनप्रामाण्यस्यान्यथाप्युपपत्तेः । न हि विरुद्ध[3]कार्यज्ञानद्वयमप्रमाणं भवति । विकल्पेन क्रमेण वोभयानुष्ठानोपपत्तेरिति न नञर्थलक्षणायां नियमेन निवृत्तिरिति तद्वाक्यं विफलमेव

---

## पूरणी

**किं कृतमिति ।** निवृत्तीच्छया निषेधवाक्यं प्रयुञ्जान आप्तस्तन्निवृत्तेः कर्तुमशक्यतया निष्फलोद्यम एव स्यादित्यर्थः। यदि कदाचिन्निवृत्त्यापि तत्प्रयाससाफल्यं मनुषे तथापि तद्वचनमन्तरेणापि कादाचित्कनिवृत्तेः स्वतः सिद्धत्वात्तद्वचनं व्यर्थमेवेत्याह—**क्रमेण वेति । न चाप्तेति ।** बलवदनिष्टासाधनत्वे सतीष्टसाधनतया कृतीप्सितत्वमनुमेयम् । निवृत्तिकार्यताबोधने च तद्धेतोरसिद्धेः साध्यबाधाच्च न तथानुमानमिति न वाच्यमित्यर्थः । **अन्यथापीति ।** निवृत्तिकार्यतामात्रविषयत्वात्तद्वचनस्य न तदर्थावगमादुक्तहेतुविरहादिनिश्चय इत्यर्थः । ननु निवृत्तिकार्यताज्ञानमेव तत्कार्यत्वानुमितिविरोधीत्यत्राह—**न हीति ।** "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ विरुद्धषोडशिग्रहणाग्रहणयोः कार्यत्वेनावगमादित्यर्थः । ननु कृतिरनुष्ठानं, विरुद्धयोश्च युगपदनुष्ठानासंभवात्कथं कार्यत्वेन ज्ञानमित्यत्राह—**विकल्पेनेति ।** कार्यत्वेन युगपत्प्रतीतौ न विरोधः, किं त्वनुष्ठानसमये, स च विकल्पोऽपास्य इति भावः ।

---

[1] आप्तवाक्येन—ख. [2] बाधान्निवृत्तिरिति—ख. [3] कार्यद्वय- घ. च.

## दीपनम्

स्यात् । अत एव वेदेऽपि न नञर्थलक्षणा युक्ता; लोकवेदयो[1]रेकरूपस्यैव वक्तव्यत्वात् नियमेन निवृत्त्यसिद्धिप्रसङ्गाच्च ॥

ननु 'न हन्या" दिति वाक्यस्य निवृत्तिनियोगनिष्ठत्वेऽपि प्रबलनिषेधगिरा [2]दुर्बलानुमानकृतहननकार्यताज्ञानं बाध्यत इति नियमेन निवृत्तिसिद्धिरिति चेत्, प्रमाणान्तरभीत्या स्वार्थं निहायान्यत्र गच्छन्ती सा कथं बलवती स्वार्थपरिवारपरिकरापि [3]तमनिराकुर्वती तद्धीना वा कथं निराकुर्यात् ।

---

## पूरणी

**प्रमाणान्तरेति** । नञोऽभावार्थे मुख्यत्वेऽपि मुख्याभावार्थपरित्यागेन लक्षणया निवृत्त्यर्थकत्वकल्पनं हननादिकार्यताग्राहकप्रमाणविरोधेन स्वेन तत्कार्यत्वाभावस्य बोधयितुमशक्यतयेति कथं तद्भयात्पलायमानायास्ततो बलवत्त्वमित्यर्थः । विरोधाभावादपि न निषेधश्रुत्याऽनुमानबाध इत्याह—**स्वार्थेति** । स्वार्थो नियोगस्तत्परिवारस्तद्विषयो निवृत्तिः तत्परिकरः तत्प्रतियोगिनिषेध्यभक्षणादिः, भक्षणनिवृत्तिविषयककार्यनियोगं प्रतिपादयन्त्यपीति यावत् । **तं** हननकार्यतारूपमर्थम् । **अनिराकुर्वती** तदभावमप्रतिपादयन्ती । **कथं निराकुर्यात्** तत्कार्यताप्रतिपादकमनुमानं कथं बाधेत । ननु साक्षात्तदभावाप्रतिपादकत्वेऽपि एकदा विरुद्धोभयकार्यतयोर्विरुद्धत्वेन हननकार्यताविरुद्धनिवृत्तिकार्यताबोधकत्वात्तद्बाधकत्वमस्त्वित्यत्राह—**तद्धीनेति** । ततः अनुमानप्रमाणाधीना । पूर्वोक्तरीत्या तद्भयात्पलायमानायाः श्रुतेस्ततो हीनत्वादित्यर्थः । यद्वा तेन विरोधेन होमापूर्वोक्तरीत्या

---

[1] रैक्यस्यैव—ख. रैकरूप्यस्यैव—घ. च. [2] त्वदुक्तानुमान—च. [3] तदनि—क. ख.

## दीपनम्

नन्वेतदेव प्रमाणान्तरस्य बाधनं नाम यत्तदुपस्थापितप्रवृत्त्युन्मुखस्य तन्निवृत्तिकार्यबोधनम्, अनेन हि तस्याननुष्ठानं भवतीति चेन्न; [1]प्रमाणान्तरोपनीते प्रवृत्तिकार्ये बलवत्यखण्डिते सति तद्विपरीत[2]कार्यप्रतीतेरेव शब्दा[3]दसंभवेन [4]निषेध्यानभिमुखस्यैव कस्यचिन्नियोज्यस्य कल्प्यत्वात् ॥

ननु श्रुतिरात्यन्तिकं हितं दर्शयति, मानान्तरं तु नैवमिति तदधीनप्रवृत्त्युन्मुखोऽपि तद्विहाय श्रौताभिमुखो भवतीति सामर्थ्यप्राप्तं नियोज्यं विहाय (न) नियोज्यान्तरं कल्पनीयमिति चेन्न तावत्स्वर्गादि किंचित्ततो भवति, यदस्यात्यन्तिकं हितं स्यात्। न च नियोग एव तथाविधः; [5]तस्य "अलाभे मत्तकाशिन्या" इति न्यायेन नित्यादौ [6]तथोपगमेप्यैहिकसुखविपरीतस्य तदयोगात्। शतयातनावाक्याद्धिंसादिप्रवृत्तेर्नरकसाधनतावगमात् [7]इष्टं सुखं तस्य [8]विषसंयुक्तदधिवद्धेयमिति चेन्न; सर्वत्र निषेधे अर्थवादाभावात्। किं वा पुराणश्रवणा-

## पूरणी

युगपत्तत्प्रतीतौ विरोधाभावात्। एक[9]समयकार्यतायाश्चाप्रतीतेरिति भावः। अननुष्ठानलक्षणं बाधकमाशङ्कते—**नन्विति**। **ऐहिकेति**। ऐहिकसुखोन्मुखस्य तत्पुरुषार्थता न युक्तेत्यर्थः। **उपगमेऽपी**त्यापिशब्देन तत्रापि नापूर्वं स्वतः पुरुषार्थः; दृष्टविलक्षणत्वात्। सर्वत्रेष्टसाधनत्वस्यैव लिङर्थतया निरूपाधिककृतीप्सितत्वरूपेण तस्य वेदप्रमेयत्वासिद्धेश्च। नच नित्यसन्ध्यावन्दनादाविष्टाभावात्कथमिष्टसाधनत्वं

---

[1] प्रमाणान्तरापनीते—ख. घ. च. [2] वाक्यप्रवृत्तेरेव—घ. [3] दनुभवेन—घ. [4] निषेधानभि—क. [5] अस्य-ख. [6] तथैवोप—च. [7] दृष्टं—क. घ. च. [8] विषयसंयुक्तदधीवद्धेय—क. [9] समवाय—ट.

## दीपनम्

त्पूर्वं निवृत्तिरेव न भवति, अर्थवादानां [1]तत्पक्षे स्वार्थे प्रामाण्याभावाच्च। स्वर्गार्थवादस्तु विध्यपेक्षितनियोज्यानुकूलतया स्वार्थपरः। अत्र तु [2]तव निषेध्यप्रवृत्त्युन्मुख एव नियोज्य इति नार्थवादापेक्षा। किं चैवमर्थवादावगतानर्थ[3]साधनताबुद्धया स्वत एव पुरुषो निवृत्त इति

---

## पूरणी

लिङर्थ इति वाच्यम्; प्रत्यवायनिवृत्तिरूपत्वस्य तत्रापि सत्त्वात्। यद्वा सर्वत्र नित्यकर्मस्वार्थवादिकं फलं श्रूयते।

"सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्"॥

इत्यादि श्रवणात्। "कर्मणा पितृलोक" इति नित्यकर्ममात्रसाधारणतया पितृलोकश्रवणाच्च। तथा च पितृलोकादिकमेव तत्रेष्टम्। न चैवं काम्यत्वे नित्यत्वभङ्गः; वस्तुतस्तत्फलसत्त्वेऽपि तत्कामनोपाधिककर्त्तव्यत्वाभावाद्विपर्यये प्रत्यवायप्रदर्शनमात्रेण तत्र प्रवृत्तिसंभवेन तत्कामनाया अधिकारिविशेषणत्वकल्पनायां मानाभावात्। 'अहरह' रित्यादिविधिवाक्यप्रमितजीवनाद्यधिकारान्तरान्वितत्तयैव तद्विधेः प्रमितत्या तस्याधिकारान्तरनिराकाङ्क्षत्वाच्चेति दिक्। एतेन सन्ध्यावन्दनादिकर्मजातं कृत्स्नमपि नित्यकाम्यं कामनोपाधिकर्तव्यं चेति निरस्तम्। ननु सामान्यतो निन्दार्थवा[4]दानुमानात्पुराणश्रवणात्पूर्वमपि निवृत्तिः स्यादित्यनुशयादाह—**अर्थवादानामिति**। ननु झटिति स्वविप्रनिवृत्तिसिद्धये तदपेक्षास्तीत्यत्राह—**किंचैवमिति**।

---

[1] त्वत्पक्षे—**क. घ. च.** [2] तदनिषेध्य—**च.** [3] साधनतामवबुध्य—**घ.** साधनतामध्यवस्य—**च.** [4] दात्पुराण—**झ.**

**तस्माद्धितसाधनत्वमेव लिङर्थः । न च यागादेः क्षणिकत्वात् न समयान्तरभाविश्रेयःसाधनत्वमिति वैदिकवाक्यम-**

---

### दीपनम्

निवृत्तिवाक्यमनुवादमात्रमिति वृद्धिमिच्छतां मूलमपि नष्टम् । तस्माद्यदि शतयातना[1]र्थवादो विवक्षितार्थस्तर्हि तत एव पुरुषो निवृत्त इति न निवृत्तिर्विधेया । निवृत्तिविधिमन्तरेणाप्यर्थवादस्य निवर्तकतया पुरुषार्थसंभवात् न तदन्वयार्थमपि तद्विधिः । अथाविवक्षितार्थस्तर्हि प्रवृत्त्युन्मुखस्याभिलषितसुखविपरीतनिवृत्तौ कार्यबुद्धिरेव न भवेदिति न ततोऽपि निवृत्तिसिद्धिरिति नञर्थलक्षणायोगात् ततः प्रबल वाक्यानुरोधेन लक्षणया लिङोपस्थापितेनैव बलवदनिष्टासाधनेष्टसाधनत्वेन नञर्थान्वयः । निषेधानुपपत्त्या च निषेध्यस्य नरकसाधनत्वमित्यलमतिपल्लवेनेत्याभि[2]प्रायेणाह — **तस्माद्धितसाधनत्वमेव लिङर्थ इति ।**

---

### पूरणी

**अनुवादमात्रमिति** । प्रवर्तकत्वलक्षणं प्रामाण्यं भग्नमित्यर्थः । नन्वर्थवादानां विध्येक[3]वाक्यत्वात्तदर्थं विधिकल्पनेत्यत आह— **अर्थवादस्येति** । अर्थवादानां विध्येकवाक्यत्वं न राजाज्ञया, किं तु पुरुषार्थपर्यवसानाय । तत्पर्यवसानं च तदेकवाक्यतामन्तरापि स्वतो निवर्तकतयेति तद्वैयर्थ्यमित्यर्थः । **निषेधानुपपत्त्येति** । यद्यपि यातनाद्यर्थवादेपि नरकसाधनत्वं साक्षादेव श्रुतं नानुपपत्तिगम्यम्; तथापि यत्र निषेधे निन्दार्थवादो न श्रूयते तत्रेदं द्रष्टव्यम् । ननु

---

[1] अर्थवादा विवक्षिताः—**ख.** [2] प्रेत्याह—**च.** [3] वाक्यतया तद—**झ.**

**प्रमाणं स्यादिति वाच्यम्; कार्यानुकूलशक्तिमत्त्वलक्षणसाधनत्वस्य वेदबोध्यस्य मानान्तरेणा[1]बाध्यत्वात्। नारास्थिशुचि-**

## दीपनम्

**कार्यानुकूलेति।** परपक्षे शक्त्यभावेऽपि अनन्यथासिद्धनियतपूर्ववर्तित्वं च साधनत्वमस्तीत्यर्थः। **मानान्तरेणेति।** विधिप्रवृत्तेः पूर्वमेवं विधस्वर्गसाधनत्वस्य यागे केनापि प्रमाणेनाभावासिद्धेः। तत्संशयस्य च [2]शाब्दप्रतीतावनुकूलत्वादित्यर्थः। विध्यनन्तरभाविबाधकमानं [3]च तेनैवोपजीव्येन बाध्यत इत्यभिप्रेत्याह—**नारेति।**

## पूरणी

तथापि बलवदनिष्टसाधनत्वाभावस्य तत्साधनता[4]रूपत्वेन साक्षान्नैव तत्प्रतीतेः कथमुपपत्तिगम्येति चेन्न; वस्तुतदभावस्य तत्साधनत्वरूपत्वेऽपि तेन रूपेण तत्प्रतीतेस्तदभावप्रतीत्यपर्यवसानलभ्यत्वेन तथोक्तिरिति द्रष्टव्यम्। ननु प्रवृत्त्युन्मुखं प्रति निवृत्तिकार्यताबोधने निवर्तत एव, निवर्तस्वेति लौकिकवाक्यान्निवृत्तेरनुभवसिद्धत्वात्। नच तत्र निवृत्तीष्टसाधनताज्ञानादेव निवर्तत इति वाच्यम्; एवमपि [5]प्रवृत्तीष्टसाधनतायास्तद्विरोधाभावेन प्रवर्तकज्ञानाबाधेनोक्तदोषानिस्तारादिति चेन्न; उपायेच्छायामिष्टसाधनताज्ञानस्यान्वयव्यतिरेकाभ्यां वृष्टीच्छास्थले हेतुत्वेन क्लृप्तत्वात्तदेव लिङर्थ इति भावः। **केनापि प्रमाणेनेति।** स्वर्गसाधनत्वस्य विध्येकगम्यतया तत्प्रवृत्तेः पूर्वं तदुपस्थितिविरहेण तदभावप्रतीत्यसंभवादिति भावः। **विध्यनन्तरभावीति।** यागो न स्वर्गसाधनं, क्षणिकत्वाद्भोजनवादित्यनुमानस्य

[1] अबाधितत्वात्–**ख. ग. छ.** [2] शाब्दप्रवृत्ता–**ख.** [3] चैतेनैव–**घ.**
[4] रूपतया–**झ.** [5] प्रवृत्तिरिष्टसाधनतया तद्वि–**झ.**

## दीपनम्

ननु यागः स्वध्वंसानन्तरभाविसुखजनको न भवति, धात्वर्थत्वात्, मर्दनादिवदित्यनुमानात्तद्बाधो भवतीति चेन्न; सामान्यतो दृष्टानुमानस्य प्रबलविशेषश्रुत्यनुरोधेन स्वर्गातिरिक्तविषयत्वस्यैव कल्प्यत्वात् ॥

ननु स्वर्गः सकारणकः, प्रागभावप्रतियोगित्वादिति [1] स्वर्गकारणसिद्धौ क्षणिकत्वेन यागे तन्निषिद्ध्यत इति चेन्न; अनुमानद्वयापेक्षया श्रुतेः शीघ्रतरप्रवृत्तित्वेन तद्विरोधे अभावानुमानानुदयात्, यागस्यापि श्रुत्येकमेयत्वात्, क्षणिकस्य तदव्यवहितपूर्ववर्तित्वाभावेऽपि तदनुकूलशक्तिमत्तारूपकारणत्वसंभवेनाप्रयोजकत्वाच्च। न चाव्यवहितपूर्ववर्तित्वाभावे कारणकारणतैव स्यान्न कारणतेति वाच्यम्; व्यापारस्याव्यवधायकत्वादिति केचित्। सिद्धान्ते नापूर्वं व्यापारः; प्रमाणा-

---

## पूरणी

श्रुत्या बाध इत्यर्थः। **सामान्यतो दृष्टेति**। भिन्नप्रकारकतया तज्ज्ञानस्याप्रतिबन्धकत्वादित्यर्थः।

ननु श्रुतावपि तात्पर्यनिरूपणाय बहुन्यायापेक्षया विलम्बस्तुल्य इत्यत्राह—**यागस्यापीति**। देवतोद्देशेन द्रव्यत्यागात्मकस्य तस्य मानान्तरागम्यत्वान्न विधिप्रवृत्तेः पूर्वं तत्र तदभावानुमानमित्यर्थः। ननु यागे रूपद्वयम्—देवतोद्देशेन द्रव्यत्यागत्वं क्रियात्वं चेति। तत्राद्यरूपस्यालौकिकत्वेऽपि द्वितीयरूपस्य मानान्तरगम्यत्वात्तदवच्छेदेन स्वर्गसाधनत्वाभावानुमानमस्त्वित्यत्राह—**क्षणिकस्येति**। अन्यथा पूर्वानुभवस्याप्येवं स्मृतिकारणता न स्यादिति भावः। **प्रमाणाभावादिति**। ईश्वरेक्षणेनैव कालान्तरभाविस्वर्गाद्युपपत्तेरिति भावः।

---

[1] स्वर्गसकारणत्वसिद्धौ—**ख. घ. च.**

त्वानुमान[1]वदभावानुमानस्यागमेनैव बाधात् । न चैवं विनष्टादपि दण्डात्तदितरकारणसमवधाने घटोत्पत्तिप्रसङ्गः; तद्ग्राहका-

## दीपनम्

भावात् । तथापि यागस्य पृथक् तत्कारणत्वासिद्धेश्चेति न यागः (कारण) कारणम् ॥

ननु चैवं विनष्टात् कथं स्वर्गोत्पत्तिः, किं तत्र प्रमाणं पृच्छ्यते तदुत्पत्तिप्रकारो वा । आद्ये श्रुतिः प्रमाणम्, क्षणिकस्यैवाग्निहोत्रादेस्तत्प्रतिपादनात् । द्वितीये यागाद्यनुष्ठानमवगच्छता परमेश्वरेण भृत्यस्य चिरकालव्यवहित[2]सेवाफलमिव राज्ञा तदितरहेतुसमवधानदशायां सेवाफलमिव स्वर्गाद्युत्पद्यत इति [3]कानुपपत्तिः । न चैवमतिप्रसङ्गः स्या[4]दित्याह—**न चैवमिति** । इदानीमव्यवहित[5]पूर्ववर्तित्वं विना

## पूरणी

**तथापि** अपूर्वसद्भावेऽपि **यागस्येति** । अपूर्वेण स्वर्गोत्पादनसमये यागस्वरूपविरहात् कार्योत्पत्तिसमयवर्तिनश्च कार्यप्रयोजकस्वतन्त्रकारणत्वात् अपूर्वमेव साक्षात्तत्कारणं, यागस्तु कारणकारणमेवेत्यर्थः । नन्वपूर्वव्यापारानभ्युपगमे कथं कालान्तरभाविस्वर्गादिकमित्याशङ्क्य निषेधति—**न चैवमिति** । अतीतकर्मानुष्ठानावगमेन फलप्रदाने दृष्टान्तमाह—**चिरकालेति** ।

ननु यागानुष्ठानानन्तरमेव तदवगमात्तत्फलं स्यादित्यत्राह—**तदितरेति** । ननु स्वर्गादौ किमपेक्षणीयसहकार्यन्तरम्, न तावद्देवदेहादिकम्; तस्याप्यदृष्टसाध्यत्वात्, नापि तत्तत्कालविशेषः;

[1] दाभासानु—ख. [2] सेवामिव—ख. घ. [3] न काप्यनुपपत्तिः—ख.
[4] दित्याशङ्क्याह—च. [5] पूर्ववर्तित्वमपि न साधनत्वम्—च.

**न्वयव्यतिरेकाद्यभावेन तदसंभवात् । अत्र च श्रुतिर्मानम् । अथ वा प्रवर्तकज्ञानविषयसाधनत्वं श्रुत्यर्थः । तच्चानुकूलत्वमात्रम्, न त्वव्यवहितपूर्ववर्तित्वरूपम्; तस्य प्रवृत्तावनुपयोगात् । समयान्तरभाविस्मृत्याद्यर्थमपि पुण्यवस्त्वनुभवादौ [1] प्रवृत्तिर्दृश्यते । तच्च यागे न केनापि बाध्यत इति न किंचिदनुपपन्नम् ।**

---

## दीपनम्

न साधनत्वं निर्वहतीत्यभिप्रेत्याह—**अथ वेति** । **तस्य** तज्ज्ञानस्य । येषां मते कार्यमेव लिङर्थस्तेषामपि कार्यानुकूलमेव कार्यतया श्रुतिः प्रतिपादयतीति यागकार्यतैव [2] लिङर्थः ; न तु नियोग इति प्रसङ्गा-

---

## पूरणी

तस्यापि साधारणत्वात्, अन्यथा ईश्वरावगमस्यापि तद्धेतुत्वानापाता-दिति चेन्न ; प्रारब्धकर्मार्जितदेहपातस्यैव तद्धेतुत्वात् । नन्वेवमपि चिरातीतकर्मानुष्ठानगोचरमीश्वरस्य स्वरूपज्ञानमविद्यावृत्तिविशेषो वा । नाद्यः ; तस्य वर्तमानमात्रविषयत्वादतीतादेरसत्त्वाच्च । न द्वितीयः ; तदविद्यावृत्तिविशेषे हेत्वनिरूपणात् । चिरातीतकर्मणां तद्धेतुत्वा-संभवात् । नापि कर्मध्वंसस्तद्धेतुः, तथा सति तत एव स्वर्गोपपत्तौ तज्ज्ञानकल्पनावैयर्थ्यादिति चेन्न ; कर्मसमय एवानेनेदं कर्मानुष्ठित-मित्येवमाकारस्वरूपज्ञानस्य स्वरूपेण नित्यस्य कालान्तरे तदनालम्बन-स्यापि तत्र हेतुत्वात् । यद्वा अविद्यावृत्तिविशेष एव तदवगमः । नच हेत्वसंभवः ; अविद्यातच्छरीरपातादेरेव हेतुत्वात् । वस्तुतस्त्वतीतादे-रसत्त्वनिराकरणेन स्वरूपज्ञानस्यातीतत्वादिरूपेण तत्कर्मादिगोचरत्वं

---

[1] प्रवृत्तिदृष्टेः—ख, ग, छ. [2] श्रुत्यर्थः—क, घ.

**कार्यमपि [1]तदेवोपादिश्यताम्, [2]न त्वकृतिसाध्यमपूर्वम्; यस्मिन्सत्यप्यग्रिमक्षणे पुरुषव्यापारं विना काम्यं न सिद्ध्यत्येव तस्यैव कामिकार्यत्वात्। एवं च सति प्राथमिकव्युत्पत्तिरप्यनुगृहीता भवतीति न किंचित्त्वदभिमतकार्ये प्रमाणम्॥**

## दीपनम्

दाह—**कार्यमपीति। न त्विति।** अपूर्वस्य स्वतः कृतिसाध्यत्वाभावादित्यर्थः। अनेनाव्यवहितस्यापि तस्य स्वतः कार्यबुद्ध्ययोग्यत्वमुक्तम्। नन्वेवं भोजनकामिनः कृष्यादावपि [3]प्रवृत्तिः स्यादिति चेन्न; यस्मिन् सत्यग्रे स्वाभिलषितसिद्धये स्वव्यापारान्तरं नापेक्ष्यते तदेव स्वानुकूलं कार्यम। भोजनादिकं तु नैवम्; तस्मिन् सत्यपि स्वस्याग्रे पाकव्यापारमन्तरेण तदसिद्धेरित्यभिप्रेत्याह—**यस्मिन्निति।** साधकान्तरमप्याह—**प्राथमिकेति।** लोके [4]धात्वर्थलक्षणकार्ये लिङादेर्व्युत्पत्तिरित्यर्थः॥

ननु प्रवर्तकज्ञानमुद्दिश्य प्रयुक्तवाक्यस्य कथ[5]मन्वितमात्रार्थत्वमित्याशङ्क्य गवादिपदसमभिव्याहारो न तदुद्देशेन, किं त्वन्वित[6]ज्ञान-

## पूरणी

नानुपपन्नमिति पूर्वोक्तं स्मर्तव्यम्। **कृष्यादावपीति।** तदानीमेवेति शेषः। ननु सिद्धार्थे प्रथमं क्वापि व्युत्पत्त्यग्रहात्प्राथमिककार्यव्युत्पत्त्यनुरोधेन सिद्धार्थप्रयोगेषु कार्याध्याहार एव युक्त इत्याशङ्क्य सिद्धार्थेऽपि

[1] तदेवोपादीयताम्—**ख.** [2] न तु कृत्यसाध्य—**ग.** [3] प्रसङ्ग इति चेन्न—**ख.**
[4] धात्वर्थ एव कार्ये—**ख. घ.** [5] अन्वितार्थमात्रपरत्व—**च.** [6] ज्ञानोद्देशेन—**क. घ.**

अस्तु वा यत्किंचित्प्रवर्तकम्, तथापि न प्रवर्तकान्विते शक्तिः; गौरवात्।[1] किं तु लाघवादन्वितमात्रे। प्रवर्तकज्ञानोद्देशस्तु लिङादिपदसमभिव्याहारनिमित्तम्, न तु पदमात्रप्रयोगेऽपि; संसर्गमात्रज्ञानोद्देशेनापि लोके बहुप्रयोगदर्शनात्। अपि च लोके भवत्येव पुत्रस्ते जात इत्यादिवाक्यादपि प्रथमं व्युत्पत्तिः, तत्पदाङ्कितपटोपायनादिप्रदर्शनादिना पुत्रजन्मपरिशेषसंभवात्। तस्मादन्वित एव शक्तिः। यद्यपि पदार्थमात्रे

---

## दीपनम्

मात्रोद्देशेनेत्याह—**प्रवर्तकेति**। **पदमात्रेति**। गवादिपदमात्रप्रयोगेऽपीत्यर्थः। **पटोपायनेति**। [2]दूरस्थे पितरि यस्तु पुत्रजन्मवार्तां नयति स तत्पदानुलिप्तकुङ्कुमाङ्कितपटं पित्रे दर्शयतीति केषांचिदाचार इति तेन भवति पुत्रजन्मपरिशेष इत्यर्थः। यदि पदार्थमात्रे शक्तिस्तर्हि वाक्यार्थे लक्षणा शक्त्यन्तरं वा कल्पनीयम्, वृत्तिं विना शब्दात्तदर्थ[3]प्रतीत्यसंभवात्, अन्यथा लक्षणामात्रोच्छेदप्रसङ्गात्, तीराद्युपस्थितेरन्यथापि संभवात्। न चात्रानुपपत्तिप्रतिसंधानमस्ति, न वा

---

## पूरणी

प्रथमं व्युत्पत्तिग्रहविषयं दर्शयति—**अपि चेति** मूले। **केषाञ्चिदिति**। लाटदेशीयानामित्यर्थः। ननु तथापि वार्ताहारवाक्यप्रयोगसमकालजनितेष्टवस्तुस्मरणादेस्तद्धेतुत्वसंभवात्कथं परिशेष इति चेन्न; तन्मुखविकासानन्तरमुत्सवदानादिना तदवश्यंभावादिति भावः। नन्वस्तु तर्हि मिश्रमतरीत्या वाक्यार्थे लक्षणैवेत्याह—**न चात्रेति**। लक्षणा-

---

[1] किं तु लोके लाघ–**ग.** [2] दूरस्थेऽपि- **ख.** [3] प्रतिपत्त्यभावात्–**क.**

**शक्त्यभ्युपगमेऽपि नाखण्डार्थवादिनामस्माकं काचित्क्षतिः;**

---

## दीपनम्

शक्त्यभावे शब्दस्य तत्कारणता। दोषासमवधानकालीनप्रतीतिकारणतानिर्वाहकशक्तिरेव हि तस्याभिधावृत्तिः तदन्यस्यां केवलपदार्थगोचरा-

---

## पूरणी

बीजासंभवात्सा न युक्तेत्यर्थः। **दोषासमवधानेति**। अत्र शक्तिः सामर्थ्यम्। घटपदादौ पटादिशक्तिभ्रमात्तदर्थप्रत्यायकेऽतिव्याप्तिवारणाय दोषासमवधानेति विशेषणम्। तत्र शक्तिभ्रमस्य दोषत्वात्। लाक्षणिकपदादावतिप्रसङ्गवारणाय निर्वाहकशक्तिरिति। तत्रौत्पत्तिकतत्सामर्थ्याभावात्। न चैतद्विशेषणेनैव शक्तिभ्रमविषयातिप्रसङ्गवारणाद्दोषासमवधानविशेषणवैयर्थ्यम्; तत्रागन्तुकदोषबलेन तदर्थप्रत्यायकत्वेऽप्यौत्पत्तिकसामर्थ्याभावात्, शक्तिपदेन कारणतानिर्वाहकव्यापारमात्रविवक्षायां च लाक्षणिकपदादावतिप्रसङ्गतादवस्थ्यादिति वाच्यम्; औत्पत्तिकसामर्थ्यरूपार्थलाभायैव तद्विशेषणात्। यद्वा परशब्दस्य परत्र प्रयोगो दोषः। शक्तिपदं च सामर्थ्यमात्रपरम्। तथा च लक्ष्यार्थप्रतीतिजननसमर्थलाक्षणिकपदादिव्यावृत्तये तद्विशेषणम्। तत्र मुख्यातिरिक्ततत्संबन्धिविषयप्रयोगात्मकदोषवशेन तदर्थप्रत्यायकत्वात्। नच तत्र तत्प्रतीतिजननसामर्थ्यमेव नास्तीति वक्तुं युक्तम्; सर्वथा असामर्थ्ये ततोऽबाधिततत्प्रतीत्ययोगात्। प्रतीत्यनुकूलशक्तिविशेषात्मकतात्पर्यस्य तत्राभ्युपगमाच्च। वस्तुतस्तु तत्तदर्थप्रतीतिजननानुकूलौत्पत्तिकसामर्थ्यविशेषोऽभिधेति तत्त्वम्॥

## दीपनम्

यामपि प्रमाणाभावात् गौरवाच्च । [1]तस्याश्चार्थसंबन्धित्वेन ज्ञानं धूमाग्न्योरिवार्थज्ञानेऽवगतमेवेति नातिप्रसङ्गः । अत एव देवदत्तादिपदे नाभिधारूपौत्पत्तिकी शक्तिः, किं तु सङ्केताहितैव । अन्यथा प्रतिव्यक्ति सङ्केतग्रहापेक्षा न स्यात् ॥

---

## पूरणी

ननु तत्तदन्वयप्रतियोग्यर्थप्रतीत्यनुकूलशक्तिविशेषोऽभिधा, सा च न पदार्थसंसर्गे, तस्यान्वयान्तराप्रतियोगित्वादित्यत्राह—**गौरवाच्चेति** । लाघवेन तत्तद्विषयप्रतीत्यनुकूलशक्तिविशेष एव सा । प्रतीतिविषयश्च संसर्गोऽपीति भावः । ननु शब्दस्यार्थेनौत्पत्तिकसंबन्धाभ्युपगमे शक्तिग्रहविरहदशायामपि तदर्थप्रतीतिः स्यादित्यत्राह—**तस्याश्चेति** । धूमाग्निसंबन्धस्य स्वाभाविकत्वेऽपि संबन्धित्वेन धूमज्ञानस्य वह्निधी-हेतुतावत् स्वाभाविकार्थशक्तेरपि तत्संबन्धित्वेन ज्ञानं तद्धेतुरित्यर्थः । ननूक्तरीत्यौत्पत्तिकसंबन्धस्यैवाभिधारूपत्वे साङ्केतिकदेवदत्तपदादौ तद्वि-रहादभिधावृत्तिर्न स्यादित्याशङ्क्य तत्र विवक्षिताभिधावृत्तिविरहे सम्प्रतिपत्तिमाह—**अत एवेति** । **अन्यथेति** । साङ्केतिकशब्देष्वपि विवक्षिताभिधावृत्तिसत्त्वे गवादिपदेष्विव सकृद्व्यक्तौ सङ्केतग्रहमात्रेण तदभिधेयव्यक्त्यन्तरस्यापि प्रतीतिप्रसङ्गः । अतः प्रतिव्यक्ति तत्तत्पुरु-षेच्छाहिता सा भिन्नैवेति भावः । नच गवादावनुगतरूपेण शक्ति-ग्रहात्तदवच्छिन्नव्यक्त्यन्तरप्रतीतावपि विलक्षणसाङ्केतिकदेवदत्तादि-व्यक्तिषु तद्रूपाभावाद्विलक्षणतत्तद्रूपेणैव शक्तिग्रह इति न व्यक्त्यन्तर-प्रतीतिः, अन्यथा नानार्थाक्षादिपदेष्वप्यौत्पत्तिकशक्त्यन्तरं न स्यात्,

---

[1] तस्याश्च संबन्धित्वेन—क. घ.

**तथाप्येकपदप्रयोगेऽप्यन्वयविशेषस्य नियमेन जिज्ञासादर्शनात्, तस्याश्चान्वयसामान्यज्ञानपूर्वकत्वात्, तज्ज्ञानस्य च तदा शब्दादन्यतोऽसंभवात् शब्द एवावन्वितमभिधत्त इत्यन्विताभिधानं चक्षुषा परिदृष्टफलविशेषे लिङ्गेन सामान्यतो रसोपस्थितौ तद्विशेषजिज्ञासेवात्रापि सामान्यतो भवतीति चेन्न; तत्र**

## दीपनम्

पदानामन्वयसामान्ये शक्तौ तु विशेषमविषयीकृत्य सामान्यबुद्धेरपर्यवसानात् तत्तत्पदसामान्यशक्तिभिरेव समभिव्यवाहृतपदार्थविशेषनिरूपितान्वयविशेषः सेत्स्यतीत्येकशक्तिलाघवादन्वित एव शक्तिरिति साधकान्तरमप्याह—**तथापीति**। मध्येप्रतीयमानप्रमाणा-

## पूरणी

एकत्र शक्तिग्रहे अर्थान्तराप्रतीतेरिति वाच्यम्; पुरुषेच्छां विना तत्र तत्सङ्केताप्रवृत्त्या तदधीनतत्पदशक्तेरपि तदाहितत्वस्यैवोचितत्वात्। अन्यथा साङ्केतिकादिविभागानुपपत्तेरिति भावः॥

ननु पदानां नान्वयविशेषे शक्तिः; तस्य प्रतिवाक्यं भिन्नतया तेनैत्पत्तिकतत्संबन्धायोगात्, नापि तत्सामान्ये, अन्वयविशेषस्य शक्त्यगोचरस्य वाक्यादलाभापत्तेरित्यत्राह—**पदानामिति**। तर्ह्यन्वये तदर्थे च पृथगेव शक्तिरस्त्वित्यत्राह—**एकशक्तीति**। **अत्रापि सामान्य इति मूलम्**। गवादिपदार्थः किंचिदन्वितः पदार्थत्वादित्यनुमानादन्वयसामान्यप्रतीतेरित्यर्थः। नन्वन्वयसामान्यव्याप्त्युपस्थितावपि पदार्थसंसर्गज्ञानपूर्वकत्वव्याप्त्यनुपस्थितेः कथमनुमानविषया शब्दः प्रमाणं भवेदित्यत्राह—**मध्य इति**। तद्व्याप्त्युपस्थितिरपि **कल्प्यतां**, **अविशेषादिति** भावः। **अन्वितशक्त्यभिदानं** चाखण्डार्थवाक्यव्यति-

नियमेन [1]तदभावात् । अन्यथा वैशेषिकमत इव [2]व्याप्तिप्रतिसन्धानदशायामेव शब्दार्थसंसर्गः प्रतीयत इति शब्दोऽप्यप्रमाणं स्यात् ॥

केचित्तु पदानि शक्त्या स्वस्वपदार्थानभिधाय संभूय शक्त्या लक्षणया वाऽन्वितमपि बोधयन्ति । न तु [3]पदाभिहिताः पदार्थाः संसर्गबोधका इत्यन्विताभिधानमाहुः । उभयथापि न कार्यं सर्वशब्दार्थः । किं चैवं विधिपराच्छब्दात्कीदृशं

## दीपनम्

न्तरेण संसर्गोपस्थितिकल्पनायां बाधकमाह –**अन्यथेति** । मिश्रमतमाह—**केचित्त्विति** । शक्त्येत्यना[4]स्थायाम् । अथवा दृष्टान्तार्थम् । एवं कुत्रापि पराभिमतं कार्यं वाक्यार्थो न भवतीत्युक्तम् । इदानीं कर्मवाक्ये तदभ्युपेत्यापि ब्रह्मणस्तच्छेषत्वं निराकरोति—**किं चैवमिति** । न तावच्छब्दातिरिक्तप्रमाणादद्वैतं ब्रह्म सिद्ध्यति, नापि शब्दात् ;

## पूरणी

रिक्तविषये द्रष्टव्यम् । तत्र तत्त्वमस्यादिवाक्यप्रतिपाद्यान्वयाभावेन तद्विषयशक्त्यनुपस्थितेर्वाक्यप्रतिपाद्यब्रह्मणि तत्पदानां शक्तिविरहाच्च ॥

**लक्षणया वेति** मुलम् । अन्यथा वाक्यात्तदर्थप्रतीत्यनुपपत्तेः । वृत्तिविषयार्थस्यैव पदगम्यत्वात् । नच वृत्त्या विनापि पदानामाकाङ्क्षादिमहिम्नैव संसर्गबोधकत्वमस्त्विति वाच्यम् ; प्रतिपादनसमर्थस्य ह्याकाङ्क्षादिसहकार्यपेक्षा । सामर्थ्यं च शब्दस्यार्थे वृत्तिरेवेति तदावश्यकत्वात् । नच पदोपस्थापिताः पदार्था एव संसर्गबोधका न तु पदानीति वाच्यम् ; पदार्थज्ञानस्य व्यापारशून्यतया वाक्यार्थ-

---

[1] तदसंभवात्–ख. [2] व्याप्त्यनुसन्धान–ग. [3] शब्दाभिहिताः–छ. [4] स्थया–ख. च.

## पूरणी

बोधकरणत्वानुपपत्तेः । तद्बोधे शाब्दत्वायोगाच्च । न च शब्दजन्यार्थोपस्थितिजन्यतया शाब्दत्वम्; वह्निव्याप्यवानयमिति वाक्यजन्यपरामर्शहेतुकानुमितेरपि शाब्दत्वापातात् ॥

किं च पदार्थोपस्थितिमात्रं न शाब्दबोधहेतुः, प्रत्यक्षादिना तदुपस्थितौ तदभावादिति शब्दजन्यार्थोपस्थितित्वेन तद्धेतुता वाच्येत्यावश्यकत्वाच्छब्द एव तदुपस्थितिद्वारा तदर्थबोधहेतुरिति दिक् । नच पदानां संसर्गे शक्तिरेवास्तामिति वाच्यम्; अनन्यलभ्यार्थ एव तत्कल्पनात् । अन्यथा गङ्गापदस्य तीरादावपि शक्तिकल्पनापत्तेः । नच पदसमुदायवाच्यार्थस्य कस्यचिदभावेन तत्संबन्धाभावात्कथं वाक्यार्थे लक्षणा, मुख्यार्थसंबन्धस्य तद्बीजत्वादिति वाच्यम्; प्रत्येकपदशक्यसंबन्धादेव तदुपपत्तेः । पदसमुदायात्मकत्वाद्वाक्यस्य । अन्यथा अर्थवादादौ तदनुपपत्तेः । न चैवमपि मुख्यार्थानुपपत्तिविरहात्कथं लक्षणेति वाच्यम्; वाक्यार्थप्रतीत्युद्देशेन वाक्यप्रयोगस्य वाक्यगततदर्थप्रतीतितात्पर्यस्य वा अनुपपत्तेस्तद्बीजत्वात् । लाघवेनानुपपत्तिमात्रस्यैव तथात्वात् । न चैकस्मिन्प्रयोगे पदेषु वृत्तिद्वयं विरुद्धमिति वाच्यम्; प्रत्येकरूपेण शक्तिः समुदायरूपेण लक्षणा चेत्यवच्छेदकभेदेन तदुभयाविरोधात् । गङ्गायां मत्स्यो घोषश्चेत्यादौ युगपत्तात्पर्यज्ञाने तदन्वयबोधस्य परैरभ्युपेतत्वाच्च । नच संसर्गमात्रलक्षणायां पदार्थविशेषितसंसर्गालाभः, तद्विशेषितलक्षणायां च शक्यस्य लक्ष्यताविरोध इति वाच्यम्; संसर्गमात्रलक्षणायामपि शक्त्युपस्थापित[1]पदार्थभेदस्य वृत्तिद्वयस्य परस्परसापेक्षतया लाभोपपत्तेः । छत्र्यादावजह[2]ल्लक्षणायां रूपान्तरेण मुख्यार्थस्यापि लक्ष्यत्ववदर्थविशेषसंसर्ग-

---

[1] पदार्थावच्छेदस्य—झ. [2] लक्षणाया—झ.

ब्रह्म सिद्ध्यति। न तावदद्वैतम्; तत्र मानाभावात्। शब्दस्य कार्यपरत्वादेकस्य वाक्यस्योभयपरत्वायोगात्। न च देवताधिकरणन्यायात्तत्सिद्धिः; भेदप्रमाणविरोधे तदसंभवात्। न च जीवातिरिक्तब्रह्मसिद्धिः; "तत्त्वमसि" "नान्योऽतोऽस्ति द्रष्टा" "स एष इह प्रविष्ट आनखाग्रेभ्य" इत्याद्यभेदनिर्णीततात्पर्यश्रुतिविरोधात्। न वा तत्प्रतिपादने प्रयोजनं पश्यामः। न च तदुपासनातः फलम्; तस्या अविद्यानिवृत्तौ ब्रह्मभावे वानुपयोगात्। एतच्च भाष्यादौ स्पष्टम्। यत्तु विधीयमानज्ञानान्मोक्षो

दीपनम्

तस्यान्यपरत्वादित्याह—**मानाभावादिति**। तदेव दर्शयति—**शब्दस्येति**। **नचेति**। मानान्तराविरुद्धो देवताविग्रहादिरन्यपरादपि सिद्ध्यति, अद्वैतं ब्रह्म तु मानान्तरविरुद्धमिति न तथा सिद्ध्यतीत्याह—**भेदेति**।

पूरणी

लक्षणायामपि दोषाभावाच्च। न चैवमर्थेषु पदानां पृथक्छक्तिर्न स्यादिति वाच्यम्; आकाङ्क्षादिप्रयोजकप्राथमिकोपस्थित्यर्थं तदपेक्षणात्। तस्माद्वाक्यार्थज्ञानं लक्षणाजन्यं, शब्दशक्त्यजन्यत्वे सति शब्दजन्यत्वात् संमतवदिति तेषामाशयः। इदं त्वयुक्तम्। अस्तु प्रयोगाद्यनुपपत्तिर्लक्षणाबीजम्, अस्तु वा प्रत्येकपदशक्यसंबन्धोऽपि तद्धेतुः, तथापि गवादिपदशक्यगवाद्यर्थसंबन्धस्यैव वाक्यार्थरूपतया तत्संबन्धात्तत्र [1]लक्षणा न युक्ता। न चाभेदः संबन्ध इत्युक्तमिति ध्येयम्॥

**एतच्चेति** मूले। उपासना हि क्रिया। क्रियासाध्यं हि चतुर्विधम्, उत्पाद्यविकार्यप्राप्यसंस्कार्यभेदात्। तत्र मोक्षस्योत्पाद्यत्वे

[1] लक्षणा युक्ता—ङ्म.

भविष्यति, [1]ज्ञानस्याविद्यानिवृत्त्यादौ समर्थत्वादिति, तन्न ; प्रमाणभावेनाभेद[2]ज्ञानस्यैवासंभवात् । ज्ञानस्याविधेयत्वाच्च ।

न तावच्छाब्दज्ञानं विधेयम् ; तस्याग्निहोत्रादिवाक्यार्थज्ञानवदविधेयत्वात् । नापि वाक्यार्थज्ञानावृत्तिरूपोऽभ्यासो विधेयः ; मोक्षस्य नित्यसिद्धस्य तदसाध्यत्वात् । नापि साक्षात्कारस्तत्फलम् ; अभ्यासस्याप्रमाणत्वेनातत्फलत्वात् । नाप्यभ्याससहितान्मनसः साक्षात्कारः ; मनसोऽप्यप्रमाणत्वात् । दृष्टफलत्वादपि न तद्विधेयम् । नच नियमविधिः ;

## दीपनम्

**अविधेयत्वादिति** । विधिं विनैव [3]सिद्धत्वादिति भावः । न तावत्तस्य मोक्षः फलमित्याह—**मोक्षस्येति** । किं चाभ्यासस्य दृष्टफलं चक्षुरादिवत्साक्षात्कारः, उत नैयोगिकः । नान्त्यः ; प्रमाणफले तस्मिन्नियो[4]गानुमतयोरयोगात् । नाद्य इत्याह—**दृष्टेति** । अपरिवधारणे । ननु यथावहननस्य तुषनिवृत्तिफलेऽन्यतोऽवगतेऽपि तदुद्देशेन "अवहन्यादि" ति नियमविधिः, एवमत्रापीत्याशङ्क्याह —**न चेति** । [5]दृष्टफलसाधनं विधौ नियमपूर्वकं स्वीकर्तव्यम् ।

## पूरणी

विकार्यत्वे वा ध्रुवमनित्यत्वम् । नित्यसिद्धत्वाच्च न प्राप्यत्वम् । नित्यशुद्धमुक्तत्वादिश्रुतिविरोधात् कूटस्थत्वादिश्रुतिविरोधाच्च न मलापकर्षणगुणान्तराधानरूपद्विविधसंस्कारभागित्वमपीति न क्रियासाध्यो मोक्ष इति प्रपञ्चितमिति भावः । **नापि वाक्यार्थेति** मूले ।

[1] तत्त्वज्ञान—**ग.** [2] ज्ञानस्यासंभ—**क.** [3] सत्वादित्यर्थ.—**च.** [4] नियोगानुपयोगात्—**ख. घ. च.** [5] दृष्टफलसाधनविधौ हि नियमापूर्वं स्वीक—**च.**

**नियमापूर्वस्यापि साक्षात्कारः फलं वक्तव्यः, अन्यस्यासंभवात्। ततश्च विधेरपि प्रतीयमानब्रह्मशेषतया अस्मदिष्टमेव चेष्टितम्। नापि साक्षात्कारो विधेयः; तस्य [1]श्रवणादिविधिफलतया स्वर्गादिवदविधेयात्वात्। न च साक्षात्कार एव विधिरस्तु न**

## दीपनम्

अन्यथा विधिवैयर्थ्यात्, तस्य चात्रावहनन[2]नियमापूर्ववन्न परमापूर्वं फलम्, तत्र दर्शपूर्णमासकरणकापूर्ववदत्र विधेयान्तरासंभवेन तदभावादिति साक्षात्कार एव फलं वक्तव्यमित्याह—**नियमेति**। **ब्रह्मशेषतयेति**। साक्षात्कारो हि ब्रह्माभिव्यञ्जकतया [3]ब्रह्मशेषस्ततस्तत्फलो विधिरपि तच्छेष एवेति ब्रह्मैव [4]प्रधानं वेदान्तप्रतिपाद्यम्। अभ्यासादिविधौ तु कस्याचिदेव वाक्यस्यावान्तरतात्पर्यमित्यस्मदभीष्टसिद्धिरित्यर्थः। **अविधेयत्वादिति**। अनन्यलभ्यस्यैव विधेयत्वादिति भावः। लोकेऽपि प्रमाणज्ञाने विधिर्नेत्याह—

## पूरणी

तदावृत्तेः पुरुषकृतिसाध्यत्वादिति भावः। **इत्यस्मदभीष्टेति**। यद्यपि ज्योतिष्टोमादिवाक्यफलभूतस्वर्गस्य पुरुषशेषत्वेऽपि ज्योतिष्टोमादिविधिपरत्वं न तु फलिपुरुषप्रतिपादकत्वं यथा तद्वाक्यस्य तद्वदत्रापि सर्वेषां वेदान्तवाक्यानां ब्रह्मशेषसाक्षात्कारफलकाभ्यासविधिपरत्वेऽपि स्वातन्त्र्येण साक्षात्कारशेषिब्रह्मप्रतिपादकत्वलक्षणमिष्टं न सिद्ध्यत्येव, तथापि तत्साक्षात्कारे प्रमाणान्तराभावाद्वेदान्तवाक्यानां चाभ्यासविधिपरत्वे तत्कारणत्वायोगाच्च तत्फलमेव न निर्वहेदिति न

[1] श्रवणविधि—ग. छ. [2] नियमापूर्वं न पर—च. [3] ब्रह्मशेषस्तफलो विधि—च. तत्त्वतां विधि—घ. [4] स्वप्रधानं—घ.

श्रवणादाविति वाच्यम्; साक्षात्कारो हि श्रवणादिद्वारैवानुष्ठेयो न स्वतः; प्रमाणव्यापाराहते तस्य पुरुषेण कर्तुमशक्यत्वात्। ततश्च श्रवणादिप्रवृत्त्यैवात्र साक्षात्कारसंभवे न तद्विधेयम्। किं च प्रमाणज्ञानमात्रं न विधेयम्; तस्येच्छासाध्यत्वाभावात्, इच्छां विनाप्यनिष्टज्ञानदर्शनात्। विध्यधीनपुरुषेच्छाजन्यप्रयत्नसाध्यस्यैव विधेयत्वात्। किं च यद्विषयं ज्ञानं विधेयमिष्यते तदप्यनिच्छतोऽपि शब्दादिना जायत इति न विधेयम्। कथं तर्ह्याज्यावेक्षणादिविधिरिति, न; ज्ञानानु[1]कूला-

## दीपनम्

किं चेति। प्रमाणपदेन श्रवणादितर्करूपज्ञानाभासं व्यावर्तयति। [2]ततः किम्, तत्राह—विध्यधीनेति। [3]विध्यधीनपदेन कृतिसाध्यश्रेयस्साधनत्वेन धात्वर्थेऽवगते सति चिकीर्षापूर्वकं कृत्या साध्यत इति विधेयो विध्यधीनपुरुषेच्छाधीनप्रयत्ननिष्पाद्य इति तादृशेच्छासाध्यत्वाभावे तस्य विधेयत्वं न स्यादित्यर्थः। कथमिति। "पत्न्यवेक्षित-

## पूरणी

सर्वेषामभ्यासविधिपरत्वमित्यत्र तात्पर्यम्। श्रवणादीति। श्रवणं हि तात्पर्यज्ञानं, न च तन्निश्चयरूपं, वाक्यार्थनिर्णयात्पूर्वं तन्निर्णयासंभवादिति विमर्शरूपं तदिति तस्य क्लृप्तहेत्वजन्यतया ज्ञानाभासरूपतेत्यर्थः। इदं च तात्पर्यावधारणं श्रवणमित्यभिप्रेत्योक्तम्। तदवधारणानुकूलचेतोव्यापारस्य श्रवणात्मकत्वे तु निदिध्यासनात्मकज्ञानाभासव्यावृत्त्यर्थं प्रमाणपदं मन्तव्यम्। ननु जिज्ञासितज्ञानविशेषस्य पुरुषेच्छाधीनत्वाद्विधेयतेत्याशङ्क्याह—किं चेति मूले। नियमेन तस्यापी-

[1] कूलावेक्षण—ग. [2] तत. कीमित्यत आह—घ. [3] विधिपदेन—ख.

ज्यावेक्षणक्रियाया एव तत्रापि विधेयत्वात्, तत्र चेच्छाजन्यत्वस्यावश्यं वक्तव्यात्। आज्यज्ञानस्यान्यत्र क्लृप्तकारणादेवोपपत्तेरिच्छाजन्यत्वाभावात्। न चैवं यागादावपि सामग्र्येव विधेया न क्रियेति वाच्यम्; क्रियामात्रस्याविधेयत्वे विधितः सामग्रीसम्पादनस्यैवायोगात्। ततश्च यागपदे लक्षणा न न्याय्येति श्रूयमाणक्रियां परित्यज्याश्रुतक्रियाविषयत्वे प्रमाणाभावात्, श्रुत्यनुरोधेन याग एव विधेयः। तस्माद्यज्ज्ञानं न तद्विधेयम्, या च विधेया योषिदग्न्यादिदृष्टिः न तज्ज्ञानम्।

दीपनम्

माज्यं भवति "इत्यादिविधिरित्यर्थः। [1]अवेक्षणक्रिया चक्षुरादिव्यापारः। **अवश्यमिति**। स्वेच्छया चक्षुरादिव्यापाराभावे ज्ञानस्यापि तत्र विधितः कर्तुमशक्यत्वादित्यर्थः। अन्यलभ्यत्वादपि नाज्यज्ञानं विधेयमित्याह—**आज्यज्ञानस्येति** सिद्धस्वभावात्मादिघटितसामग्र्या अविधेयत्वेन तत्सम्पादन[2]व्यापारो विधेयोऽभ्युपेयः। स च क्रियाया अविधेयत्वे न स्यादित्याह—**क्रियेति**। क्रियाविधौ सति देवतोद्देशेन द्रव्यत्यागरूपयागवाचकयजिपदे न लक्षणा कल्पनीयेत्याह—**तत इति**। ततः किं, तत्राह—**इति श्रूयमाणेति**। कथं तर्हि "योषितमग्निं ध्यायीत" इत्यादिज्ञानविधिरित्यत आह—**तस्मादिति**। यत्तु श्रवणानन्तरमपि मननाविधानान्न ज्ञानायत्तो मोक्षः,

पूरणी

च्छासाध्यत्वाभावान्न विधेयतेत्यर्थः। **योषिदग्न्यादीति** मूले। न च तस्यापि विषयावच्छेदाज्ज्ञानत्वम्; सविषयत्वस्येच्छादावतिप्रसक्तत्वेन

[1] अवेक्षणादिक्रिया—घ. [2] व्यापारोऽभ्युपेयः—ख.

**तस्या अग्निदृष्टेः क्लृप्तकारणाजन्यतया विध्यधीनेच्छाया[1]स्तद्हेतुत्वात्। मननादिविधानमपि परमपुरुषार्थसाक्षात्कारात्प्रागेवेति न तद्बलादपि विधेः प्राधान्यम्। एवं च ज्ञानविध्यसंभवादन्यविधिपरत्वानुपपत्तेश्च न विधिनिष्ठं वेदान्तप्रामाण्यम्। किं तु [2]स्वप्रकाशाखण्डसच्चिदानन्दब्रह्मनिष्ठमिति। तदुक्तं**

---

## दीपनम्

किं तु विध्यायत्त इति, तत्राह—**मननादीति**। तस्यापि [3]ज्ञानफलकत्वाज्ज्ञानायत्तो मोक्ष इत्यर्थः। **परमपुरुषार्थेति**। परमपुरुषार्थस्य साक्षात्कारादित्यर्थः। **अन्यविधीति**। वर्णितरीत्यो[4]पासनादिविधिपरत्वानुपपत्तेरित्यर्थः। तत् नित्यशुद्धमुक्तमद्वितीयं ब्रह्म शास्त्रप्रमाणकं कुतः, समन्वयादिति वदता सूत्रकारेण "तत्त्वमस्या"दिसमानाधिकरणवाक्यं प्रमाणं विवक्षितम्। व्यधिकरणवाक्यस्य संबन्धादिनिष्ठतया [5]ब्रह्मण्यप्रमाणत्वात्, ब्रह्मजिज्ञासाधिकारे तदन्यस्मिन्प्रमाणोपन्यासायोगात् तस्य समिति विशेषणेनाबाध्यतारूपसम्यक्त्वा न प्रतिपाद्यते, तृतीयसूत्रसिद्धापौरुषेयतयैव तत्सिद्धेः ; सखण्डसामानाधि-

---

## पूरणी

ज्ञानत्वाप्रयोजकत्वादिति भावः। ननु साक्षात्कारस्य ब्रह्मशेषत्वान्न स्वतः पुरुषार्थत्वमित्यत्राह—**परमपुरुषार्थस्येति**। सूत्रार्थं दर्शयन् तदनुवदति—**नित्यशुद्धेति**। तु शब्दस्तूक्तशङ्काव्यावृत्त्यर्थ इति भावः। **समानाधिकरणेति**। समानाधिकरणतयेत्यर्थः। ननु "यस्य ज्ञानमयं तप" इत्यादिवाक्यं सबन्धादिविषयमित्याशङ्क्य तदपि लक्षणयाऽखण्डब्रह्मपरमेवेत्याह-**तदन्यस्मिन्निति**। **सखण्डेति**।

---

[1] तद्धेतु-**छ**. [2] स्वप्रधानाखण्ड-**ग. छ**. [3] ज्ञानफलत्वात्-**ख**. [4] पासनाविधि-**क**. [5] ब्रह्माप्रमाणत्वात्-**घ**.

**सूत्रकृता—"तत्तु समन्वयात्"इति । अन्वयवस्य सम्यक्त्वं [1]चैकप्रातिपदिकार्थे वेदान्तानां पर्यवसानमेव । तस्यैवोपक्रमादिना अबाधित्वनिश्चयात् ॥**

---

### दीपनम्

करण्यबोधकस्याप्रसक्ते[2]रनिषेध्यत्वाच्च । तस्मान्नीलोत्पलादिवत्सामानाधि[3]करण्यगौणताव्यावृत्तय एव समितिविशेषणम् , अखण्डगोचरे तस्मिन्सामानाधिकरण्यगोचरकार्य[4]तया निरुपचरितत्वादित्यभिप्रेत्याह—**अन्वयस्येति** । एकस्मिन् ब्रह्मप्रातिपदिकार्थे सत्यज्ञानानन्दैकरस इति यावत् ॥

---

### पूरणी

अन्वयस्यैकार्थत्वा[5]सिद्धौ वेदान्तानां "तत्त्वमसी"त्यादीनां त्वं तन्नियोज्योऽसीत्यादिरूपेण सखण्डसामानाधिकरण्यं वाच्यम् । नच तद्बाधकं किंचित्प्रसक्तम् ; येन तद्बाधव्यावृत्तिसूचनाय सूत्रे संग्रहणं स्यादित्यर्थः । सामानाधिकरण्यबोधकस्येति क्वचित्पाठः । तत्र "तत्त्वमसी"त्यादेः सखण्डसामानाधिकरण्यबोधकस्य सतस्तत्र बाधाप्रसक्तेस्तद्व्यावृत्तिर्विफलेत्यर्थः । **सामानाधिकरण्येति** । तद्द्विविधम्——मुख्यं गौणं च । तत्रैकप्रातिपदिकार्थगोचरं तन्मुख्यम् । भिन्नप्रवृत्तिनिमित्तावच्छिन्नैकार्थगोचरं तद्गौणम् । यथा नीलोत्पलमित्यादौ । तद्व्यावृत्त्यर्थं च संग्रहणमिति भावः । **अखण्डगोचर इति** । अखण्डार्थे वाक्ये एकार्थतारूपसामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदाभावेन मुख्यत्वादित्यर्थः ॥

---

[1] चैकस्मिन्प्रा—**ग.** [2] रनिवार्यत्वाच्च—**क. घ.** [3] करण्यस्य गौ—**घ. च.** [4] तायां—**ख.** [5] सिद्धेः,

## दीपनम्

अनेनापर्यायपदानामेकप्रातिपदिकार्थत्वं, समभिव्याहृतपदोपस्थापितपदार्थसंसर्गागोचरप्रमाजनकत्वं वाखण्डार्थत्वलक्षणं विवक्षितम् ।

---

## पूरणी

**अपर्यायेति ।** एकप्रातिपदिकार्थमात्रनिष्ठत्वमित्यर्थः ; घटः कलश इत्यादावतिव्याप्तिवारणायापर्यायग्रहणम् । इदं च यदाकदाचिदेकप्रातिपदिकार्थमात्रनिष्ठत्वविवक्षया । समभिव्याहारेण तद्बोधकत्वविवक्षायां तु पर्यायपदानां तथा बोधकत्वाभावात्तद्ग्रहणं व्यर्थम् । नच पिकः कोकिल इत्यादिव्याख्यानव्याख्येयरूपपर्यायपदातिप्रसङ्गवारणाय तत्; तत्र पिकः कोकिलपदवाच्य इति वाच्यत्वसंसर्गार्थकत्वे तद्वाक्यस्यैकप्रातिपदिकार्थमात्रबोधकत्वविरहात् । तदुभयशब्दार्थस्वरूपाभेदपरत्वे तु तद्वाक्यस्याखण्डार्थत्वेन लक्ष्यतयातिव्याप्तिविरहादिति भावः । मात्रग्रहणं च नीलोत्पलादिवाक्ये प्रवृत्तिनिमित्तभेदेनैकार्थबोधके तद्वारणाय । **समभिव्याहृतेति ।** संसर्गागोचरप्रमाजनकत्वं अप्राप्तयोः प्राप्तिः संयोगः संसर्ग इत्यादिलक्षणवाक्ये लक्ष्यसंसर्गगोचरप्रमाजनके वक्ष्यमाणरीत्या अखण्डेऽव्याप्तिवारणाय । तद्वाक्यस्य वस्तुतः संसर्गात्मकलक्ष्याभिधायकत्वेऽपि समभिव्याहृतपदस्मारितपदार्थावच्छिन्नत्वरूपेण तत्संसर्गबोधकत्वाभावात् । प्रमापदं च धर्मिमात्रवाचकाकाशगोत्वपदादौ अखण्डार्थपदेषु वा प्रत्येकमतिप्रसङ्गवारणाय । वाक्यस्य लक्ष्यत्वात् पदस्य स्मारकत्वेन प्रमाऽजनकत्वान्नातिप्रसङ्गः ॥

यद्वा चन्द्रभिन्ने प्रयुक्ते प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये तत्राखण्डार्थबोधके तद्वारणाय तत्पदम् । प्रमाणवाक्यस्य लक्ष्यत्वात् । नच भ्रमस्य व्यधिकरणप्रकारकज्ञानात्मकत्वात्प्रकारतायाश्च वैशिष्ट्यघटित-

पूरणी

त्वात्तद्वाक्यजनितशाब्दबोधे वैशिष्ट्यभानावश्यकतया संसर्गगोचरज्ञान-जनकत्वं तत्रासिद्धमिति वाच्यम्; अन्यवस्तुनो वस्त्वन्तराभेदप्रतीते-रपि भ्रान्तिरूपतया चन्द्रभिन्नव्यक्तौ प्रकृष्टप्रकाशपदप्रतिपादितायां चन्द्र-पदवाच्यस्वरूपाभेदगोचरशाब्दप्रतीतेर्व्यधिकरणप्रकारतामन्तरापि भ्रान्ति-त्वोपपत्तेः। अभेदस्य च संसर्गत्वनिरासात्। अपि चैकप्रातिपदिकार्थे प्रातिपदिकान्तरार्थसंसर्गाबोधकत्वं तदर्थः। अत एव प्रकृष्टप्रकाशपद-लक्ष्यव्यक्तिविशेषे चन्द्रत्ववैशिष्ट्यबोधकत्वेऽपि न तत्राव्याप्तिरित्यनुपदं वक्ष्यति। एवं च चन्द्रभिन्नव्यक्तिविशेषे चन्द्रत्ववैशिष्ट्यबोधस्य व्यधिकरणचन्द्रत्वप्रकारकत्वाद्भ्रान्तित्वं तद्बोधकवाक्यस्याखण्डार्थत्वं चेति न काप्यनुपपत्तिः॥

वस्तुतस्तु संसर्गगोचरस्वविषयकप्रमायां सखण्डवाक्यस्यापि विषयत्वेन जनकतया तत्रातिप्रसङ्गापत्त्या नञ्व्यत्यासेन तादृशसंसर्ग-गोचरप्रमित्यजनकत्वमर्थो वाच्यः। तथा च प्रमापदादाने वेदान्तानां सम्यक् तात्पर्यानवधारणदशायां जीवब्रह्मनियम्यनियामकभावादि-संसर्ग गोचरभ्रमजनकत्वेनासंभव इति तद्वारणाय प्रमापदमिति तत्त्वम्॥

नन्वेवमपि विषं भुङ्क्ष्वेत्यादिवाक्ये एकलक्षणया शत्रुगृह-भोजननिवृत्तिबोधके समभिव्याहृतविषादिपदस्मारितपदार्थसंसर्गाबोधकेऽ-तिव्याप्तिरिति चेन्न; तत्रापि प्रत्येकपदलक्षणोपस्थापितविषादिपदार्था-नामेव संसर्गबोधनात्। अस्तु वा भुङ्क्ष्वेति भुजिप्रकृत्यन्ते पदसमु-दाये एकलक्षणा न तु विधिलोटप्रत्ययेऽपि, तद्वाच्यकर्तव्यताया एव लक्ष्यशत्रुगृहभोजननिवृत्तावन्वयात्। तथा च तद्वाक्यं तदुपस्थापितार्थ-संसर्गबोधकमेवेति न तत्रातिव्याप्तिशङ्केति भावः॥

## अखण्डार्थत्वाक्षेपसमाधाने

ननु कथमेकप्राति[1]पदिकार्थत्वं वेदान्तानाम्, तथात्वे सत्यज्ञानादिपदानां पर्यायतापत्तेः। ब्रह्मण एकप्रातिपदिकार्थत्वे पदान्तरवैयर्थ्यप्रसङ्गाच्च[2]। किं च सत्यादिवाक्यं मुख्यया वृत्त्या अखण्डार्थं प्रतिपादयन्ति लक्षणया वा। नाद्यः; वाक्यस्य नीलमुत्पलमित्यस्येव तदयोगात्। न द्वितीयः; लक्षणाबीजान्वयानुप[3]पत्त्यभवात्। न हि तया विना लक्षणा संभवति। तस्मात्सत्यादिवाक्यं विशिष्टार्थं, वाक्यत्वात्, ज्योतिष्टोमादिवाक्यवत्। नच प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये व्यभिचारः;

---

### दीपनम्

तदाक्षिपति—**नन्विति**। एकप्रातिपदिकस्य यावानर्थस्तावन्मात्रार्थकत्वमित्यर्थः। **पर्यायतापत्तेरिति**। तथा[4] चापर्यायपदघटितमखण्डार्थत्वलक्षणमसंभवीति भावः। **ब्रह्मण इति**। अनेन द्वितीयमपि लक्षणमाक्षिप्तम्। अखण्डार्थज्ञाने सामग्र्यपि नेत्याह—**सत्यादीति**। **तदयोगादिति**। प्रतिपदं वाच्यभेदेन तत्संसर्गस्यैव वाक्यार्थत्वप्रसङ्गात् पदोपस्थापितपदार्थस्य वाक्यार्थेऽन्वयनियमादित्यर्थः। **अन्वयेति**। सत्यत्वादिविशिष्टतादात्म्यसंभवादित्यर्थः। प्रश्नानुसारेण तत्समानविषयप्रकृष्टप्रकाश इति प्रतिवचनस्याखण्डार्थत्वं वक्तुं प्रश्नविषयं

---

### पूरणी

**ब्रह्मण इति** मूलम्। असंसृष्टरूपेण सत्यादिपदप्रतिपाद्यत्व

---

[1] पदिकत्वं वे—**क**. प्रातिपदिकमात्रार्थकत्वम्-व्याख्यानुसारपाठः [2] चेति—**ग.छ.**
[3] पत्त्यसंभवात्—**क**. [4] च पर्याय—**ख.घ.च.**

तत्रापि प्रतीयमानवैशिष्टयस्यैव वाक्यार्थत्वादिति, उच्यते – अस्ति तावल्लोके अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नः। स च चन्द्रप्रातिपदिकार्थनिष्ठ एव। तदन्यस्य तत्र प्रतीत्ययोगात्। ननु चन्द्रासाधारणधर्मविषय एवायं प्रश्न इति [1]चेन्न, यदि प्रकाशविशेष एवासाधारणो धर्मः सः तर्हि प्रत्यक्षत एव ज्ञायत इति तद्विषयप्रश्नो नोपपद्यते। अन्यस्तु न समाधानेऽपि प्रतीयते। नच प्रकृष्टप्रकाशस्य चन्द्रधर्मत्वं न जानातीति वाच्यम्; तर्हि चन्द्राज्ञानादेव तदिति तत्प्रश्न एव। ननु चन्द्रोऽपि प्रत्यक्ष इति चेन्न; प्रकृष्टप्रकाशश्चन्द्रो न वेति

दीपनम्

विवेचयति—**उच्यत इत्यादिना**। **तदन्यस्येति**। प्रश्नस्य प्रातिपदिकार्थमात्रविषयत्वाभावे तदसाधारणधर्मविषयत्वं वक्तव्यम्, तच्च न युक्तम्, तद्वाचकपदाभावेन ततस्तत्प्रतीतेरयोगादित्यर्थः। ननु चन्द्रपदार्थस्य प्रत्यक्षसिद्धत्वेन प्रश्नस्य तद्विषयत्वायोगादन्यविषयत्वं वक्तव्यमिति चेत्कस्तर्हि सः? किमसाधारणो धर्मः, [2]उतातद्व्यावृत्तिः, तत्पदवाच्यत्वं वा। तत्राद्यं शङ्कते—**नन्विति**। यदि ज्ञातत्वाच्चन्द्रपदार्थे न प्रश्नस्तर्हि धर्मेऽपि स न स्यादित्याह—**यदीति**। **अन्यः** प्रकाशातिरिक्तचन्द्रधर्मः। **समाधानेऽपि** प्रकृष्टप्रकाशश्चन्द्र इत्युत्तरवाक्येऽपि। न तावत्तस्य तदज्ञानादेव चन्द्रधर्मत्वाज्ञानम्; तस्य प्रत्यक्षेणैव व्यक्तिविशेषे निश्चितत्वात्, [3]अतश्च चन्द्रपदार्थज्ञानादेव तस्य चन्द्रवृत्तित्वाज्ञानमित्यज्ञातः स एव प्रश्नविषय इत्याह—**तर्हीति**। पूर्वपक्षिणः [4]पूर्वोक्तमनुशयबीजमनूद्यापवदति — **नन्विति**।

[1] चेत्–**क.** [2] उत तद्व्या–**ग. च.** [3] अतश्चन्द्र–**क.** [4] पूर्वोक्तमाशयबीज–**च.**

**संशयदर्शनेन तस्मिन् सत्तानिश्चयरूपानुभवाभावात्। अन्यथा अधिकरणे तद्वृत्तितया धर्मद्वये चानुभूयमाने सामानाधिकरण्य-संशयायोगात्। अतएवाचन्द्रव्यावृत्तिवैशिष्ट्यं बुभुत्सितमिति प्रत्युक्तम्। चन्द्रोऽचन्द्रव्यावृत्त इति निश्चितत्वात्। व्यक्तिविशेषे तदज्ञानं तु तदज्ञानादेव। अत एव चन्द्रपदवाच्यत्वविषयः**

---

## दीपनम्

**धर्मद्वये** चन्द्रत्वे प्रकृष्टप्रकाशे च। **सामानाधिकरण्येति**। तयोरिति शेषः। द्वितीयं प्रत्याह—**अत एवेति**। **तदज्ञानात्** चन्द्राज्ञानात्। तृतीयं प्रत्याह—**अत एवेति**। चन्द्रश्चन्द्रपदवाच्य इत्याप्तवाक्येनेति

---

## पूरणी

इत्यर्थः। **सत्तानिश्चयरूपेति** मूलम्। ननु व्यक्तिस्वरूपे तत्सत्ता-निश्चयरूपं तज्ज्ञानं भवत्येव। प्रत्यक्षदृष्टव्यक्तिविशेषे इदमानिदं वेति कदापि संशयादर्शनात्। नच चन्द्रत्वरूपेण तत्सत्तानिश्चयरूपत्वं नेति वाच्यम्; चन्द्रत्वस्य जातित्वे व्यक्तिप्रत्यक्षसामग्र्या तस्याप्यवश्यं भानात्। उपाधिरूपत्वेऽपि प्रकाशविशेषवैशिष्ट्यादिरूपस्य तस्यापि भानात्। चन्द्रत्वादिधर्मद्वयभानस्यानुपदं वक्ष्यमाणत्वाच्च। नच चन्द्र-त्वजातिविशेषस्येतरव्यावृत्तत्वेनानिश्चयात्तत्सत्तानिश्चयानात्मकत्वं तज्ज्ञा-नस्येति वाच्यम्; तज्जातिविशेषस्य स्वत एव व्यावृत्तत्वात्। व्यक्ति-विशेषतादात्म्यापन्नत्वेन जातिवैलक्षण्यस्य व्यक्तिविशेषवैलक्षण्या[1]धीन-त्वेन व्यक्त्यतद्व्यावृत्त्यनवधारणादेव तदनवधारणमिति प्रश्नस्य चन्द्रा-तद्व्यावृत्तिविषयत्वापाताच्चेति चेन्न; चन्द्रत्वजातिविशेषस्य स्वतो व्यावृत्तत्वेऽपि व्यावृत्ततयाऽवगतचन्द्रत्वजात्यवच्छिन्नतया तत्स्वरूपा-

---

[1] धीनतया—ख.

**प्रश्न इत्यपि न; चन्द्रश्चन्द्रपदवाच्य इति चन्द्रत्वे तद्विशिष्टे च तस्य निश्चितत्वात्। तच्चन्द्रत्वं कुत्रास्तीति चेत्तर्हि चन्द्र-प्रातिपदिकार्थमेव न जानातीति स एव प्रश्नविषयः। चन्द्र-श्चन्द्रपदवाच्य इति जानामि, तत्स्वरूपमेव न जानामि, तत्कि-**

## दीपनम्

शेषः। तत् चन्द्रपदप्रवृत्तिनिमित्ततयाऽवगतम्। **प्रातिपदिकेति**। चन्द्रत्वविशिष्टस्यैव प्रातिपदिकार्थत्वादित्यर्थः। किं च चन्द्र-पदवाच्यत्वमपि न स्वरूपेण संशयविषयः, किं तु तस्य व्यक्ति-विशेषवैशिष्ट्यमेव। तच्च व्यक्तिविशेषाज्ञानादेवेति लाघवादा-वश्यकत्वाच्च व्यक्तिविशेष एव [1]जिज्ञासेत्याह—**स एवेति**। इतोऽपि न वाच्यत्वं प्रश्नविषय इत्याह—**चन्द्रश्चन्द्रेति**। किं च चन्द्रपद-

## पूरणी

नवधारणात्। इतरव्यावृत्तिप्रयोजकस्वरूपविशेषानवधारणाद्वा न तज्ज्ञानं तत्सत्तानिश्चयात्मकम्॥

ननु तद्व्यक्तितज्जातिविशेषयोस्तदितरव्यावृत्तिरपि प्रत्यक्षेण प्रकाशविशेषलिङ्गादिना वानुभूयत एव। नच चन्द्रपदवाच्यतानिमित्त-तत्स्वरूपेण तद्वाच्यताप्रयोजकस्वरूपविशेषावच्छेदेन वा तदवधारणं नेति वाच्यम्; तथा सति प्रश्नस्य तत्पदवाच्यत्वविषयकत्वापातादिति चेन्न; चन्द्रपदाप्रवृत्तिनिमित्तव्यावृत्तिप्रयोजकस्वरूपेण चन्द्रत्वजाति-विशेषस्य चन्द्रपदवाच्यव्यावृत्तिप्रयोजकस्वरूपविशेषस्य वा अनवधार-णात् तद्विषयप्रश्नोपपत्तेः। व्यक्तिविशेषस्यैव तत्र बुभुत्सितत्वात्। नच चन्द्रपदप्रवृत्तिनिमित्तत्वं तदवच्छिन्नस्वरूपत्वं वा तद्व्यावृत्तिप्रयोजकमिति

[1] जिज्ञास्य इत्याह—घ.

मिति प्रश्नदर्शनाच्च। तस्मात्प्रातिपदिकार्थमात्रविषय एवायं

---

## दीपनम्

स्यानेकार्थत्वभ्रमवतः प्रकृष्टप्रकाशे तत्पदवाच्यत्वे निश्चितेऽपि किं चन्द्रस्तत्पदवाच्यः उतान्य इति जिज्ञासादर्शनात्तेन तत्स्वरूपं प्रतिपाद्यैव वाच्यत्वं प्रतिपादनीयमिति लाघवात्स्वरूपमेव जिज्ञासाविषय इत्यभिप्रेत्याह—**तस्मादिति**। एवं प्रश्नस्य प्रातिपदिकार्थमात्रविषयत्वमुपपाद्य

---

## पूरणी

तदनवधारणादेव प्रश्नपर्यवसानान्नैतस्य तद्विषयत्वं स्यादिति वाच्यम्; चन्द्रत्वं चन्द्रपदप्रवृत्तिनिमित्तम्। चन्द्रश्चन्द्रपदवाच्य इत्यवधारणेऽपि प्रत्यक्षदृष्टव्यक्तिविशेषादौ तत्संशयदर्शनेन तत्स्वरूपविशेषादेरेव तत्पदवाच्यव्यावृत्तिप्रयोजकत्वात्। तस्मात्तादृक्स्वरूपविशेषादिगोचर एव तत्प्रश्नः। वस्तुतस्तु चन्द्रव्यक्तिं प्रत्यक्षेणादृष्ट्वैव यत्र कश्चन्द्र इति प्रश्नः स तद्व्यक्तिविशेषमात्रगोचर एव। नच तदा कुत्र चन्द्र इत्येव प्रश्नः स्यादिति वाच्यम्; सेनायां राजव्यक्तिदर्शनमन्तराप्यत्र को राजेति प्रथमदर्शनसमय एव प्रश्नस्य दर्शनादिति सर्वं सुस्थम्॥

**किं चन्द्र इति**। तत्र चन्द्रपदस्य चन्द्रपदवाच्यार्थकत्वे चन्द्रपदवाच्यः किं चन्द्रपदवाच्य इति प्रश्नस्यानन्वयात्, तत्र चन्द्रपदवाच्योऽयमेव चन्द्रः उतान्य इति स्वरूपमात्रगोचर एव प्रश्न इत्यर्थः। ननु तत्र किमयं शशाङ्कपदाभिधेयः, उतान्य इति शशाङ्कपदाभिधेयतया प्रसिद्धार्थविषय एव प्रश्नः। अन्यथा चन्द्रपदवाच्यस्वरूपस्यापि निश्चिततया तदयोगादित्यत्राह—**तेनेति**। चन्द्रपदमभिधया तत्स्वरूपं प्रतिपाद्य पश्चाल्लक्षणया तत्पदवाच्यत्वं प्रतिपादयतीति मुख्यार्थस्वरूपस्यैव जिज्ञासार्हत्वाल्लक्षणया तद्विषयत्वं प्रश्नवचनस्य

प्रश्नः। उत्तरमपि प्रकृष्टप्रकाशश्चन्द्र इति [1] तत्समानार्थविषयमित्यखण्डार्थम्। वाच्यत्वादेरप्रतीतेरदृष्टविषयत्वकल्पनायोगाच्च ॥

ननूत्तरस्य प्रश्नसमानार्थत्वमप्रयोजकम्, यः कश्चिच्चन्द्र इत्यादेरप्युत्तरत्वप्रसङ्गात्। किं तु प्रश्नबीजसंशयविरोधित्वम्। तच्चासाधारणधर्मवैशिष्ट्यज्ञानं विना न संभवतीति धर्मवैशिष्ट्यमुत्तरार्थ इति [2] चेन्न, किमसाधारणधर्मविषयं ज्ञानं साक्षात्संशयनिवर्तकमुत चन्द्रपदार्थज्ञानस्य [3] सत्तानिश्चयत्वं सम्पादयत्सत्परम्परया। नाद्यः; भिन्नविषयस्य तदयोगात्। द्वितीये तु यद्विषयं सद्वाक्यजन्यं ज्ञानं संशयनिवर्तकं स वाक्यार्थः। प्रकृष्टप्रकाशवैशिष्ट्यं तु बहिर्भूतमपि तस्य सत्तानिश्चयरूपत्वं

---

दीपनम्

तत्प्रश्नोत्तरत्वात् प्रकृष्टादिवाक्यं तावन्मात्रनिष्ठमित्याह—उत्तरमपीति। अन्यथाऽऽम्रप्रश्ने कोविदारोत्तरवत् प्रतिवचनस्य प्रश्नवैयधिकरण्येनानुत्तरत्वप्रसङ्गात्। अतो लक्षणयोत्तरवाक्यमखण्डार्थमित्यर्थः ॥

बहिर्भूतमपि लक्षणया वाक्यजन्यज्ञानाविषयोऽपि। नन्वेवं यः कश्चिच्चन्द्र इति [7] वाक्यजन्यज्ञानादविशेष इत्याशङ्क्याह—

---

पूरणी

न कल्पनीयमित्यर्थः। यद्विषयं सदिति मूलम्। अयं चन्द्रो न वेति चन्द्रत्वावच्छिन्नस्वरूपगोचरः संशयो न तु प्रकाशविशेषवैशिष्ट्यादिगोचरः। येन तत्प्रकारकज्ञानं तत्संशयनिवृत्तयेऽपेक्ष्यत इति

---

[1] तत्समानविषय—ख. ग. छ. [2] चेत्,—छ. [3] सत्तानिश्चयप्रयोजकं सत्. सत्तानिश्चयत्वप्रयोजकं सत्—ख. छ. [7] वाक्यादविशेष—ख.

**तर्कविधया सम्पादयति । तथा हि—प्रकृष्टप्रकाशचन्द्रपदाभ्यां लक्षणया व्यक्तिविशेष उपस्थाप्यते । लक्षणा च तत्संबन्धितया ज्ञात [1]एवेति नियतव्यक्त्युपस्थितिः । ततश्च गुण[2]वैशिष्ट्यस्य तात्पर्यागोचरत्वेऽपि प्रातिपदिकार्थमात्रज्ञानस्य संशयनिवृत्तिप्रयो[3]जकसत्तानिश्चयत्वं लभ्यत एवेति तद्वाक्यमखण्डार्थपरम् ॥**

## दीपनम्

**तथाहीति । नियतव्यक्तीति ।** यथा गङ्गापदात्तीरत्वेनापि वस्तुतस्तत्संबन्ध्येव तीरं लक्ष्यत इति तत्रैव प्रवृत्तिर्लोकस्य एवमखण्डचन्द्रव्यक्तेरेव लक्ष्यत्वेऽपि वाच्यार्थप्रकृष्ट[4]प्रकाशव्यक्तिरेव लक्ष्यत इति नियतव्यक्त्युपस्थित्या संशयनिवृत्तिरुपपद्यत इति न तदर्थं विशिष्टार्थता वाक्यस्य । अतः प्रश्नानुसारेण लक्षणया अखण्डव्यक्तिरेव वाक्यार्थ इत्यर्थः । **सत्तेति ।** यदीयं व्यक्तिश्चन्द्रो न स्यात्तर्हि प्रकृष्टप्रकाशश्चन्द्र इत्याप्तो न ब्रूयादिति तर्कविषया[5] गुणवैशिष्ट्यं ज्ञातं सत्तस्य सत्तानिश्चयत्वप्रयोजकम् । यः कश्चिच्चन्द्र इति तु प्रयोगात्तर्कानवतारान्न व्यक्तिविशेषे तन्निश्चयः । [6]अतो लक्षणवाक्यजन्यज्ञानस्याखण्डविषयत्वं निश्चयत्वं चोपपद्यत इति भावः ॥

## पूरणी

फलितार्थः । उक्ततर्कविधानं दर्शयति—**यदीयमिति ।** प्रकृष्टप्रकाशश्चन्द्र इत्याप्तप्रयोगविषयो न स्यादित्यर्थः । अतो न वैयधिकरण्यम् । वस्तुतस्तूक्ततर्कावतारमन्तरापि नियतव्यक्तिविशेषे चन्द्रत्वसत्ताज्ञानं

[1] एवेति न नियत—**क.** [2] वैशिष्ट्यविषयत्वस्य तात्पर्यगोचरत्वेन—**ग.** [3] जकं सत्तानिश्चयत्वप्रयोजकं लभ्यत—**छ.** [4] प्रकाशसंबन्धिव्यक्ति—**घ. च.** [5] गुणवैशिष्ट्यस्यसत्ता—**घ,** गुणवैशिष्ट्य ज्ञानमस्य सत्ता—**ख.** [6] ततो लक्षणया वाक्य—**ख. घ. च.**

नन्वेवमपि चन्द्रत्ववैशिष्ट्यं वाक्यार्थो न व्यक्तिमात्रमिति चेत्, सत्यम्, एवमप्येक[1]प्रातिपदिकार्थमात्रस्य वाक्या-

---

### दीपनम्

संसर्गागोचरप्रमाजनकत्वाभावं दृष्टान्ते स्थूलमतिः शङ्कते—**नन्विति**। चन्द्रत्ववैशिष्ट्यस्य वाक्यार्थत्वेऽपि [2]प्रातिपदिकार्थनिरूपितसंसर्गागोचरप्रमाजनकत्वमक्षतमेवेत्यभिप्रेत्य तदुक्तमङ्गीकरोति—**सत्यमिति**। ननु दार्ष्टान्तिकेऽप्येवं वैशिष्ट्यं स्यादिति न निर्विशेष-

---

### पूरणी

लक्षणवाक्यजन्यम्। यः कश्चिच्चन्द्र इति वाक्येन त्वनियतव्यक्तिविशेषे तत्सत्ताज्ञानमिति तद्वैलक्षण्यं स्फुटमेवेति मन्तव्यम्। **प्रातिपदिकार्थेति**। चन्द्रत्ववैशिष्ट्यस्य चन्द्रप्रातिपदिकार्थान्तर्भूततया तदतिरिक्तनिरूपितसंसर्गागोचरप्रमाजनकत्वमक्षतमेवेत्यर्थः। नन्वेवं नीलोत्पलादिवाक्यस्याप्यखण्डार्थता स्यात्, नीलत्ववैशिष्ट्यस्य नीलप्रातिपदिकार्थत्वादित्यत्राह—**एकप्रातिपदिकार्थेति** मूले। तत्र प्रातिपदिकान्तरार्थवैशिष्ट्यवति प्रातिपदिकान्तरार्थवैशिष्ट्यं वाक्यार्थ इति नैकप्रातिपदिकार्थे वाक्यपर्यवसानम्। अत्र तु प्रकृष्टप्रकाशलक्ष्यचन्द्रप्रातिपदिकार्थव्यक्तावेव तदर्थवैशिष्ट्यं वाक्यार्थ इत्येतदखण्डार्थमिति भावः। वस्तुतस्तु नीलमुत्पलमित्यत्र नीलपदं नीलमात्रशक्तम्। तत्तादात्म्यं च समानाधिकरणपदद्वयसमाहारलभ्यं वाक्यार्थ इति न नीलवैशिष्ट्यस्य तत्प्रातिपदिकार्थान्तर्भावः। न चैवं नीलोत्पलपदयोः सामानाधिकरण्यानुपपत्तिः, एकार्थवृत्तिविरहादिति वाच्यम्; तादात्म्यैनैकार्थतात्पर्यमात्रेण तदुपपत्तेः। अन्यथा मृद्घट इत्यादिसामानाधिकरण्यानुपपत्तेरिति संक्षेपः।

---

[1] प्रातिपदिकमात्रार्थस्य—ग. प्रातिपदिकार्थस्य—छ. [2] प्रातिपदिकात्तन्निरूपित—ख.

र्थत्वानपायात्। सत्यादिवाक्ये ब्रह्मानन्तपदसमभिव्या[1]हाराद-प्येकव्यक्तिमात्रं वाक्यार्थः सिद्ध्यतीति न कोऽपि दोषः। न चैवं सर्वत्र वैशिष्ट्यस्यैव बुभुत्सितत्वेन न व्यक्तिमात्रं वाक्यार्थ इति वाच्यम्, अज्ञातमात्रस्यैव बुभुत्सितत्वात्। अज्ञानं च वैशिष्ट्यादन्यत्रापि, संबन्धिद्वयेऽप्यज्ञानाभावे वैशिष्ट्ये तदयो-गात्। तथा च [2]वैशिष्ट्यज्ञानसंशयवादिना तत्संबन्धिन्यपि तदभ्युपेयमिति धर्मवद्धर्मिण्यपि तदुपपद्यते। प्रकाशमाने चाप्र-काशमानत्वं नानुपपन्नम्; चैतन्यं नास्तीति व्यवहारादर्शनेन तद्योग्यतारूपावरणाभावात्। प्रकाशमाने तस्मिन् आनन्दादि-निरूपितस्य नास्तीति व्यवहारस्य दर्शनेन तद्योग्यतारूपावरण-

## दीपनम्

ब्रह्मसिद्धिस्तत्राह—**सत्यादीति**। तत्र भेदनिषेधकानन्तब्रह्मपद-सामर्थ्यात्तत्र प्रातिपदिकान्तर्गतोऽपि संसर्गो न सिद्ध्येदित्यर्थः। **अज्ञात-मात्रस्य** प्रयोजनवदज्ञातमात्रस्य। एवं चन्द्रत्वादिविशिष्टस्याज्ञाततया

## पूरणी

**भेदनिषेधकेति**। अनन्तपदं अन्तशब्दस्य परिच्छेदवाचिनः वनान्त इत्यादावभावमात्रपर्यवसानादभावाप्रतियोगित्वार्थकम्। न च वैशिष्ट्य-स्य वाक्यार्थत्वे तत्समाहारो युज्यते। तथा सत्यन्ततो वैशिष्ट्याधि-करणकभेदरूपाभावप्रतियोगित्वस्यैव प्रसङ्गात्। एवं ब्रह्मपदमपि सर्वात्मतायोग्यार्थकम्। वैशिष्ट्यस्य वाक्यार्थत्वे तस्य सत्यतापातान्न युक्तमित्यर्थः। [3]उत्तानदेवगोवहनादिकं व्यावर्तयति—**प्रयोजनवदिति**। नन्वेवमिदंत्वादिना व्यक्तिभाने तत्स्वरूपविशेषस्यापि भानात्तत्र स्थाणु-

[1] हारबलादप्येक-**ग. छ.** [2] वैशिष्ट्याज्ञान—**क. ग.** [3] देवगववह-**झ.**

**निरूपकतया आनन्दात्मनस्तस्यैवाज्ञाततोपपत्तेः । लोकेऽपि जातेरिव व्यक्तेरपि स्वरूपविशेषस्तदधिकरणतायोग्योऽस्तीति तदज्ञानात्तद्गोचर एव प्रश्नः । उत्तरं चाविद्यात्मकजातेः स्वतो विशेषाभावेन व्यक्तेरेव विशिष्टस्वरूपत्वाच्च । तस्मात् सत्यादि-वाक्यमखण्डार्थम् , [1]एकप्रातिपदिकार्थमात्रप्रश्नोत्तरत्वात् लक्ष-णवाक्यत्वाद्वा, प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यवत् । वाक्यत्वा-**

दीपनम्

वाक्यार्थत्वमुपेत्य चैतन्यमात्रस्यैवाज्ञाततोपपादनेन वाक्यार्थतोपपादिता । इदानीं व्यक्तिरेव लोकेऽप्यज्ञाततया वाक्यार्थ इत्याह—**लोकेऽपीति । अविद्येति** । व्यक्तितादात्म्यानुभवदशायामेव घटत्वपटत्वयोर्वैलक्षण्यानु-भवेन व्यक्तिविशेष[2]विषयमेव जातौ विशेषभानमिति व्यक्तिरेव सकलविलक्षणस्वभावा । स च तस्याः स्वरूपभूतोऽपि विशेषोऽविद्या वरणात्क्वचिद्भाति क्वचिन्नेति लोके सर्वत्र व्यक्तिस्वरूपमेव लक्षणवाक्यार्थ इति भावः । अत्र यद्यपि सत्यादिवाक्ये प्रातिपदिकार्थमात्रप्रश्नोत्तरत्वं न स्पष्टं प्रतीयते, तथापि "ब्रह्मविदाप्नोति परं" इति पूर्ववाक्ये मुक्तिसाधन-ज्ञानविषयतया निर्दिष्टस्य ब्रह्मणः स्वरूपजिज्ञासायामेव सत्यादिवाक्यं प्रवृत्तमित्यस्त्येवात्रापि [3]तावन्मात्रप्रश्नोत्तर[4]त्वादिति हेतुः । न चैवं कीदृशं ब्रह्मेति प्रश्नस्य कल्पनासंभवादसिद्धो हेतुरिति वाच्यम्; "ब्रह्मविदाप्नोती" इति तत्स्वरूपविद एव मुक्तिकीर्तनेन तन्मात्रस्यैव [5]जिज्ञासाहेतुत्वादिति नासिद्धिः। हेत्वन्तरमप्याह-**लक्षणवाक्यत्वादिति**।

पूरणी

त्वादिसंशयो न स्यादित्यत्राह— **स च तस्या इति** । परमते

[1] प्रातिपदिकार्थ—**छ.** [2] विषयत्वमेव—**ख.घ.** [3] तन्मात्र—**च.** [4] त्वमिति—**ख.घ.**
[5] जिज्ञासार्हत्वादिति—**घ. च.**

## दीपनम्

ननु सत्यादिवाक्यस्याखण्डब्रह्मपरत्वे न लक्षणवाक्यत्वमसाधारणधर्मविषयत्वाभावादित्यसिद्धिः । लक्षणवाक्यस्य लक्ष्यलक्षणसंसर्गमेयत्वनियमेन विरुद्धश्च । किं च वाक्यत्वमाकाङ्क्षायोग्यतासन्निधिमत्पदकदम्बकत्वम् । आकाङ्क्षादिकं चान्वयस्यैव वाक्यप्रमेयत्वे सङ्गच्छते । यस्य पदस्य येन पदेन विना न स्वार्थान्वयानुभावकत्वं साऽऽकाङ्क्षा । स्वप्रतिपाद्यान्वयाबाधो योग्यता । अन्वयप्रतियोग्युपस्थितिरासत्तिरिति तासां तद्घटितत्वादिति चेन्न तावदसिद्धिः ; विशेषादेरिवासाधारणस्वरूपस्यापि लक्षणत्वादित्युक्तम् । अत एव न विरुद्धता च, उक्तविधया लक्षणवाक्यानां लक्ष्यस्वरूपमात्रप्रमेयत्वात् । वाक्यत्व-

---

## पूरणी

प्रतियोगिघटादिज्ञानेऽपि तत्स्वरूपप्रतियोगित्वाज्ञानवदिति भावः ।

**लक्षणवाक्यानामिति ।**

ननु लक्षणपदाल्लक्ष्यतावच्छेदकोपस्थितिं विना लाक्षणिकान्वयबोधासंभवात्तद्वैशिष्ट्यमेव वाक्यार्थः । न च ब्रह्मण एकव्यक्तितया न तत्र लक्ष्यतावच्छेदकान्तरापेक्षा, एवमपि गन्धवती पृथिवीत्यादौ गन्धवद्व्यक्तीनामनन्ततया तत्र गन्धवत्त्वस्यैव लक्ष्यतावच्छेदकतयावश्यवाच्यत्वेन तद्वाक्यस्याखण्डार्थत्वाभावे तत्रोक्तहेतोर्व्यभिचारापातादिति चेन्न ; तत्राप्यननुगतस्वरूपविशेषाणामेव लक्ष्यत्वात् । यद्वा तद्वाक्यस्याखण्डार्थत्वाभावेऽपि न दोषः । एकव्यक्तिलक्षणवाक्यस्य प्रकृष्टप्रकाशश्चन्द्र इत्यादेरुक्तरीत्या तत्संभवात् । तद्दृष्टान्तेनैकब्रह्मलक्षणवाक्यत्वस्यापि तत्साधनत्वोपपत्तेः । एकव्यक्तिलक्षणवाक्यत्वस्य च तत्र हेतुत्वेन व्यभिचारासंस्पर्शात् । न च किं चन्द्रलक्षणमिति प्रश्नोत्तरोक्तलक्षणवाक्ये एवमपि व्यभिचारः, तद्वाक्यस्य प्रश्नानुसारेण

**नुमानं च व्यभिचार्यप्रयोजकं च। न चैवं पर्यायतापत्तिः;**

## दीपनम्

स्याप्यन्वयप्रमेयतां विनोपपत्तेश्च। यस्य पदस्य येन पदेन विना न [1]स्वार्थान्वयानुभावकत्वं साऽऽकाङ्क्षा। वाक्यार्थाबाधो योग्यता। अव्यवधानेन स्वार्थोपस्थितिरासत्तिः। अन्यथा गौरवादिति भावः। चस्त्वर्थे। **व्यभिचारि** प्रकृष्टप्रकाश इति वाक्ये। **अप्रयोजकं** उक्तविधया बाधकानां निरासादित्यर्थः॥

ननु यदि सत्यादिवाक्यजन्यं ज्ञानं पराभिमतनिर्विकल्पकवत् व्यक्तिमात्रविषयं न कस्यचिदसाधारणधर्मस्य वैशिष्ट्यविषयं तर्हि ततोऽविद्यानिवृत्तिर्न स्यादिति चेत्, न; ज्ञानस्याविद्यासमान[2]विषय-निश्चयत्वेनैव निवर्तकताया उक्तत्वात्। "एकधैवानुद्रव्यं" इति

## पूरणी

लक्षणीभूतधर्मपर्यवसानादिति वाच्यम्; लक्ष्यव्यक्तिविशेषज्ञानादेव तथा प्रश्न इति तस्य व्यक्तिविशेष एव पर्यवसानात्। अत एवास्वरसाद्वा तन्मात्रप्रश्नोत्तरत्वहेत्वन्तराभिधानादिति ध्येयम्। वस्तुतस्तु पृथिवीत्वादेर्लक्ष्यतावच्छेदकत्वेऽपि पूर्वोक्तरीत्या चन्द्रत्ववैशिष्ट्यबोधक-वाक्यवद्गन्धव[3]त्पदलक्ष्यव्यक्तिविशेषे पृथिवीत्वलक्ष्यतावच्छेदकवैशिष्ट्य-बोधकत्वेऽपि नाखण्डार्थताक्षतिरिति स्मर्तव्यम्॥

**ततोऽविद्येति**। तथा च तद्वाक्यजन्यज्ञानस्य सप्रकारकत्वं वाच्य-मित्यखण्डार्थत्वलक्षणसाध्यं बाधितमिति भावः। **समानविषयेति**। वस्तुतस्तु समानप्रकारकत्वेन निवर्तकत्वेऽपि नाखण्डार्थत्वक्षतिः। ब्रह्मस्वरूपानन्दत्वादिरूपेणानन्दादिपदार्थस्य ब्रह्मणस्तद्रूपेण तद्वाक्यार्थ-

[1] स्वार्थानुभाव—ख. घ. [2] विषयत्वेनैव—क. [3] पदाल्लक्ष्य—ग.

## दीपनम्

श्रुतिविरोधाच्च न वाक्यजन्यज्ञानस्य विशिष्टविषयत्वम् । एकाकारतारूपैकप्रकारतया[1]स्तदा बाधप्रसङ्गात् । "नेह नानास्ति किंचन" इति [2]वाक्ये भेदमात्रस्य निषिद्धत्वाच्च । न चात्र नानात्वमेव निषिद्ध्यते नान्यदिति वाच्यम्; नानाशब्दस्य धर्मिपरतया बहुलं प्रयोगात् । ब्रह्मातिरिक्तस्य कृत्स्नस्य निषेधाभावे नानात्वनिषेधायोगाच्च । सति धर्मिणि धर्मे चान्यस्मिन् तन्निरूपितनानात्वस्यावश्यकत्वात् । ब्रह्मनिरूपितनानात्वं चाप्रसक्ततया न निषेध्यम् । स्वप्रतियोगिकभेदाभावस्य घटादाविवान्यतः सिद्धत्वेन तदर्थं श्रुत्यनपेक्षणात् ॥

---

## पूरणी

त्वेऽपि प्रातिपदिकार्थनिरूपितसंसर्गागोचरप्रमाजनकत्वस्य तत्रानपायादिति ध्येयम् । ननु विधार्थे धाल्प्रत्ययः, विधा च प्रकारः, प्रकारता च भासमानवैशिष्ट्यप्रतियोगितात्मिकेत्युक्तश्रुत्यैव ब्रह्मज्ञानं सप्रकारकं सिद्ध्येदित्यत्राह---**एकाकारतेति** । प्रकारोऽत्राकारः । स च धर्म्येव । उक्तप्रकारार्थस्य द्विधा भवति काष्ठमित्यादावनन्वयात् । धर्मी चात्र ज्ञाने विषय एवेत्येकमात्रविषयत्वं तच्छ्रुत्यर्थः । तच्च तज्ज्ञानस्यातिरिक्तवैशिष्ट्यविषयकत्वे बाधितं स्यादित्यर्थः । **बहुलमिति** । नानावर्णावित्यादाविति शेषः । ननु तत्र धर्मार्थस्यैव नानाशब्दस्य शुक्लादिशब्दवद्धर्मिपरत्वमिति न मुख्यार्थधर्मनिषेधानुपपत्तिरित्यत्राह—**ब्रह्मातिरिक्तस्येति** । धर्मनिषेधोऽपि धर्मिनिषेध एव पर्यवस्यतीति भावः । नानात्वमात्रं निषेध्यं ब्रह्मनिरूपितं न वा । नाद्य इत्याह—**सति धर्मिणीति** । **अन्यस्मिन्**धर्म्यन्तरे । धर्मनानात्वे नानाभूतधर्म्यन्तरेषु भूतादिरूपेषु सत्सु तन्निरूपितनानात्वं ब्रह्मण्यपि स्यादित्यर्थः ।

---

[1] स्तथा—घ. च. [2] वाक्येन—घ. च.

## दीपनम्

ननु निषेधवाक्यैः प्रपञ्चाभावविशिष्टतया प्रमीयमाणब्रह्मणः कथमखण्डत्वमिति चेन्न; प्रपञ्चाभावस्यापि तस्मिन् [1]कल्पितप्रतियोगिकतया रजताद्यभाववदधिष्ठानमात्रत्वात्। ननु निषेधवाक्यस्य यदि ब्रह्ममात्रं प्रमेयं न त्वतिरिक्तः प्रपञ्चाभावस्तर्हि न प्रपञ्चनिराक्रिया, [2]तद्विरुद्धार्थविषयत्वाभावात्। ब्रह्ममात्रस्य प्रपञ्चाविरोधित्वादिति चेन्न; प्रपञ्चोपशमरूपं हि ब्रह्म वेदान्तप्रतिपाद्यम्। प्रपञ्चोपशमरूपत्वं च

---

## पूरणी

ननु भ्रमसिद्धनानात्वस्य निषेधः, "अजायमानो बहुधा विजायत" इत्यादिना सम्यक् तात्पर्यानवधारणदशायामीश्वरभेदभ्रमसंभवात्, पुराणादिषु ब्रह्मविष्ण्वादिरूपेण भेदश्रवणाच्चेति चेन्न; आजायमान इत्येकवचननिर्देशेन एकस्यैव बहुरूपेण भवनप्रतीत्या ईश्वरभेदस्य ततोऽप्रसक्तेः। "यतो वा इमानि भूतानि" इत्यत्रापि स्रष्ट्राद्येकत्वप्रतिपादनाच्च। पुराणवचनेषु क्वचिद्भेदप्रतीतावपि "एक एवेश्वरस्तस्य" इत्यादिभिरेव तदेकत्वप्रतीत्या पुराणादिवचनप्रसक्तभेदव्यावृत्त्यर्थमप्येतच्छ्रुतेरनुपयोगात्। किं च स्रष्टृपालयितृसंहर्तॄणां भेदे अन्यकार्येऽन्यस्य स्वातन्त्र्याभावेऽप्रतिहतशक्तित्वलक्षणेश्वरत्वमेव व्याहन्येतेति न्यायादपि तद्भेदाभावनिर्णयसंभवान्न तदर्थं श्रुत्यपेक्षेति दिक्। वस्तुतस्तु "प्रपञ्चोप[3]शमः शिव" इत्याद्यनन्यथासिद्धश्रुतिः ब्रह्मणो निष्प्रपञ्चतायां मानमिति तत्त्वम्॥

**अधिष्ठानमात्रत्वादिति**। प्रपञ्चाभावस्यातिरिक्तत्वपक्षे तु "नेह नानास्ति किं चन" इत्यादिवाक्यं समुदायैकलक्षणया प्रपञ्चाभावविशिष्टब्रह्मस्वरूपं प्रतिपादयतीति पृथक्पदोपस्थापितपदार्थनिरूपित-

---

[1] परिकल्पित—च. [2] तद्विरुद्धप्रमेयाभावात्—च. [3] शमं शिवमि—म.

## दीपनम्

तस्य सत्यज्ञानानन्दाद्यात्मनोऽपि तद्विरहरूपत्वेन न तु तद्वत्त्वेन, ततश्च घटाभावे घटो [1]नेति प्रमाणमिव तदात्मतया ब्रह्मप्रमाणमपि भवति प्रपञ्चसत्ताविरोधि, अभावग्राहकत्वाविशेषात्। किं तर्हि प्रपञ्चोपशमरूपत्वं नाम तस्मिन्धर्मोऽभ्युपेयते, तदभावे तत्प्रमाणस्य कथं [2]तद्विरोधित्वमिति चेन्न; अभावस्य भावानात्मकत्वं भावासामानाधिकरण्यं [3]चाभावस्वरूपकृतमेव न त्वभावत्वकृतम्। तस्य भावविरोधि[4]स्वभावत्वाभावे तस्मिन्नभावत्वस्यैवासंभवात्। अभावत्वधर्मवद्धर्मिणोऽपि तद्विरुद्ध[5]स्वभावकल्पने बाधकाभावाच्च अभावस्वभावातिरिक्ताभावत्वस्यासंभवाच्च। न तावदखण्डो धर्मोऽभावत्वम्; भावधर्मसमवा-

---

## पूरणी

संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थत्वस्य न क्षतिरिति द्रष्टव्यम्। ब्रह्मणस्तदभावात्मकत्वप्रयुक्ततुच्छत्वादिकं व्यावर्तयितुमाह—**सत्यज्ञानेति**। **घटाभाव इति**। अभावाधिकरणकातिरिक्ताभावविरहेण घटाभावात्मकतयाघटाभावं बोधयदपि प्रमाणं यथा घटाभावे घटसत्त्वधीविरोधि तथा प्रपञ्चाभावात्मकतया ब्रह्मज्ञानमपीत्यर्थः। ननु तद्विरुद्धधर्मविषयकत्वं तन्निर्णयविरोधित्वे तन्त्रम्, घटाभावे घटसत्ताविरोधिरूपं च तदभावत्वम्, ब्रह्मणि च तदभावान्न तज्ज्ञानस्य तद्विरोधितेत्याभिप्रेत्य शङ्कते—**किं तर्हीति**। विरुद्धस्वरूपविशेषविषयत्वं [6]तद्विरोधितायां तन्त्रम्, न तु तद्धर्मविषयत्वम्; गौरवादित्यभिप्रेत्याह—**अभावस्येति**। ननु तर्हि मास्त्वभावत्वस्य

---

[1] नास्तीति–ख. घ.	[2] प्रपञ्चविरोधित्वमिति–च. भावत्वमिति–घ.
[3] च स्वरूप–च.	[4] स्वरूपत्वा–ख.	[5] स्वभावत्वकल्पने–घ.	[6] तद्धीविरो–ग.

**वाच्यभेदस्य सत्त्वात् । तथा हि—ज्ञानादिपदं वृत्तिविशेष-विशिष्टं तदुपहितं वा स्वरूपमभिधत्ते । लौकिकव्युत्पत्तेर्विशि-ष्याज्ञानेऽपि तद्विषयत्वात् । सत्यशब्दोऽपि बाधायोग्यत्व-**

## दीपनम्

यिनस्तस्य संयोगादिवदभावत्वायोगात् । असति बाधके समवाया-तिरिक्तसंबन्धायोगाच्च । तस्मादभाव[1]वादिनामपि तत्स्वरूपप्रयुक्तमेव भावविरोधित्वं वक्तव्यम् । एवं भावरूपप्रपञ्चविरहस्यापि भावानात्मत्वं तदनधिकरणत्वं वा तत्स्वरूपप्रयुक्तमेवेति भवत्य[2]खण्डब्रह्मगोचरमपि प्रमाणम् । [3]प्रपञ्चसंसर्गविरोधिदृश्यस्य प्रागुक्तरीत्या ब्रह्मसंबन्धानिरू-पणादपि न संसृष्टार्थं सत्यादिवाक्यमिति । **ज्ञानादीति** । ज्ञानपदं चक्षुरादिजन्यान्तःकरणवृत्तिविशिष्टं तदुपहितं वा चैतन्यमभिधत्ते । एवं सुखपदं शुभकर्मोपार्जितेष्टज्ञानजन्यान्तःकरणवृत्ति[4]विशिष्टं तदुपहितं वा स्वरूपानन्दमभिधत्त इत्यर्थः । ननु लौकिकानामेवंविधविवेकज्ञानं कस्यापि न दृश्यत इत्यत आह—**लौकिकेति** । यद्यपि लौकिका एवं विविच्य न जानन्ति तथापि तेषां यत्राहंकारधर्मे वृद्धोपदेशात्

## पूरणी

समवायः संबन्ध इत्यत्राह—**असतीति** । वस्तुतस्त्वभावधर्मो भावोऽ-भावो वा नाद्यः ; अभावस्य भावानाश्रयत्वात् । न द्वितीयः ; तस्य प्रतियोग्यनिरूपणात् । तत्राप्यभावे अभावत्वस्योक्तरूपत्वेऽनवस्थापाता-च्चेति तत्स्वरूपमेवाभावत्वमिति मन्तव्यम् । **दृश्यस्येति** । तथा च दृश्यस्य संसृष्टस्याध्यासिकचैतन्यसंबन्धोऽभ्युपगन्तव्य इति संसृष्टस्य

[1] वादिनापि—**च.** [2] अखण्डगोचरमपि—**ख. घ.** [3] प्रपञ्चसत्ताविरोधि—**च.**
[4] विशिष्टं स्वरूप—**ग. छ.**

[1] **विशिष्टं तदुपहितं वा स्वरूपमाह । एकशब्दोऽपि सजातीयाभाववाचकः । ब्रह्मात्मशब्दावपि सर्वात्मत्व[1] विशिष्टं तदुपहितं वा स्वरूपमाहतुः । त्वमहंशब्दावप्यहंकारविशिष्टं तच्छब्दोऽप्यु[2] स्थितिविशिष्टमिति न पदानां पर्यायता ॥**

## दीपनम्

ज्ञानादिपदसंकेतिग्रहस्तद्वस्तुत एवंरूपमित्यर्थः । **सजातीयेति** । "एके मुख्यान्यकेवला" इति द्वितीयभेदरहिते केवले नैघण्टुकव्यवहारादित्यर्थः । **ब्रह्मात्मशब्दाविति** । न चैवं तयोः पर्यायतापत्तिः ; आत्मशब्दस्य [3] परमात्मतारूपाप्तिविशिष्टवचनत्वेऽपि त्वमहंशब्दयोरिव प्रयोगोपाधिभेदात्सहप्रयोगोपपत्तेः [4] आत्मशब्दोऽपि नियमेनाहमिति प्रकाशमान एव प्रयुज्यते ब्रह्मशब्दोऽपि जगत्कारणत्वविशिष्ट इति । **उपस्थितीति** । सर्वनाम्नां स्वबुद्धिस्थवाचकत्वादित्यर्थः ।

## पूरणी

मिथ्यात्वान्न तत्त्वावेदकश्रुतिप्रतिपाद्यत्वमित्यर्थः । **तद्वस्तुत इति** । तत् ज्ञानपदवाच्यतया गृहीतं एवंरूपं तत्पदवाच्यतावच्छेदकमेव न तु स्वातन्त्र्येण तद्वाच्यम् । यद्वा तत् ज्ञानपदवाच्यं एवंरूपं अन्तःकरणवृत्त्यवच्छिन्नमेवेत्यर्थः । तद्वाच्यधर्म्यज्ञानावच्छेदकवृत्तिविषयतया गृह्यमाणापि व्युत्पत्तिर्वस्तुतस्तदवच्छिन्नविषयैवेत्यर्थः । **प्रयोगोपाधीति** । यथा त्वमहंशब्दयोरहंकारविशिष्टवचनत्वे समानेपि प्रतिपाद्यप्रतिपादकपुरुषशरीरसमावेशस्य तत्प्रयोगनिमित्तत्वेन प्रयोगव्यवस्था तद्वदित्यर्थः । अत्र तद्व्यवस्थानिमित्तं दर्शयति—**आत्मशब्द इति । त्वमहंशब्दाविति** मूलम् । नच त्वमहंशब्दयोरात्ममात्रार्थत्वम् , न तु विशिष्टार्थत्वं,

---

[1] विशिष्टं स्वरूप—ग. छ. [2] स्थित—क. [3] सर्वात्मताविशिष्टवचनत्वेऽपि—**ख. च,** सर्वात्मतारूपाप्तिविशिष्टवचनत्वेऽपि—घ. [4] आत्मशब्दो हि—**क. घ.**

**नन्वेवं संसृष्टार्थत्वप्रसङ्गः, न च विशिष्टोपस्थि[1]तावपि योग्यतादिमहिम्ना ब्रह्माभेदमात्रं शब्दः प्रतिपादयतीति**

---

## दीपनम्

सत्यादिपदानां लक्षणया अर्थप्रतिपादकत्वे वाक्यार्थस्यासत्यत्वादिप्रसङ्गं लक्षणाबीजान्वयानुपपत्त्यभावं वा हृदि कृत्वा मुख्यवृत्त्यैव तत्प्रतिपादनं वक्तव्यमित्यभिप्रेत्य शङ्कते—**नन्विति** । **एवं** भिन्नभिन्नपदार्थत्व इत्यर्थः । तत्र लक्षणां विनापि [2]तद्वाक्यस्याभेदप्रमापकत्वमाशङ्क्याह—**न चेति** । विशेषणानां [3]कल्पितत्वे तत्प्रयुक्तपदार्थभेदस्यापि मिथ्यात्वेन बाधकाभावादखण्डब्रह्मैव वाक्यात्प्र-

---

## पूरणी

अन्यथा "अहमेक एवासं" इत्यादिश्रुतावीश्वरेऽहंशब्दप्रयोगानुपपत्तेरिति वाच्यम्; लोके त्वमहंशब्दाभ्यां परिच्छिन्नार्थत्वायोगात् । "अहमात्मा गुडाकेश" इत्यादावात्माहंशब्दयोः सह प्रयोगानुपपत्तेश्च । उदाहृतश्रुतौ चाहंशब्दो लक्षणया चैतन्यमात्रे प्रयुक्त इति भावः । **विशेषणानामिति** । विशिष्टरूपेणोपस्थितानां तेषामभेदेनान्वयायोग्यत्वाद्विशेष्यस्वरूपस्य च तद्योग्यत्वात् विशिष्टरूपस्य मिथ्यात्वेन तत्त्वावेदकश्रुत्या विधान्तरेणापि तदन्वयबोधायोगाच्च । घटेन जलमाहरेत्यादिवाक्यं च्छिद्रेतरत्वादिप्रकारकान्वयवदिदमप्यखण्डार्थं बोधयतीत्यर्थः । **नन्वत एव स्वरूपेण भेदप्रमितिर्भवेत्, न हि स्वरूपयोरपि** स्वसमानसत्ताकभेदप्रतीतिरस्ति, येन तद्रूपेणाप्यभेदबोधो न स्यादित्य-

---

[1] तादपि–**ग. छ.** [2] वाक्यस्याभेद–**घ.** [3] कल्पिततया–**क. ग. छ.**

**वाच्यम् ; विशिष्टयोः स्वसमानसत्ताकभेदवत्त्वेनाभेदायोगात् शब्दोपस्थितस्य वाक्यार्थान्वयित्वनियमाच्च । न हि पदार्थैक-**

---

## दीपनम्

मीयत इत्यर्थः । **विशिष्टयोरिति** । [1]शब्दोपस्थितरूपेण हि पदार्थानामन्वयबोधो वक्तव्यः । तच्च तेषां परस्परविरुद्धमिति नाभेदप्रमितिः संभवतीत्यर्थः । न हि पदार्थयोर्मिथ्या [2]स्वतोऽभेदः, सिद्धान्ते घटपटयोरप्यभेदप्रसङ्गात् । किं तु तत्समानसत्ताकभेदाभावेन । स च प्रकृते नास्तीति कथं शक्त्या अभेदधीरित्येतदभिप्रेत्योक्तम्—**स्वसमानसत्ताकेति** । किं च वृत्त्या शब्दोपस्थापिततात्पदार्थान्वयं वाक्यं प्रतिपादयतीति वक्तव्यम् । अन्यथा ततस्तदुपस्थितिवैयर्थ्यात् । [3]न च पदं व्यसनितया [4]कंचिदर्थं व्यवस्थापयतीत्याह—**शब्देति** । तदेव व्यतिरेकमुखेनाह—**न हीति** । वृद्धव्य-

---

## पूरणी

त्राह—**शब्दोपस्थितस्येति** मूले । तत्तात्पर्यमाह—**किं च वृत्त्येति** । योग्यतादिमाहिम्ना शब्दोपस्थितार्थातिरिक्तस्तत्प्रकारो भासते । यथा घटेन जलमाहरेत्यादौ घटशब्दोपस्थापितघटत्वाद्यवच्छिन्नातिरिक्तं छिद्रेतरत्वं न तु शब्दोपस्थापितार्थैकदेशस्य परित्यागस्तन्महिम्ना युक्तः ; क्वापि तदर्थादर्शनादिति फलितार्थः । नच विशिष्टयोर्मिथ्यात्वेन तत्त्वावेदकश्रुत्या तदन्वयबोधासंभवाद्विशेषणांशपरित्यागेन स्वरूपाभेदबोधकं तदिति वाच्यम् ; स्वरूपाभेदप्रमितेः पूर्वं विशिष्टरूपमिथ्यात्वस्यैवासिद्धेः ।

---

[1] शब्दोपजनित—ख.　[2] स्वकृतो—क. ग. च.　[3] न हि—क. ग. च.
[4] कञ्चिदर्थमुपस्थाप—घ.

**देशस्य लोकेऽन्वयः प्रसिद्धः। ततश्च तत्त्वावेदकश्रुतिजन्यज्ञानविषयतया तस्यापि परमार्थत्वान्नाद्वैतं वस्तु, न वा अखण्डार्थतेति चेन्न; ज्ञानादिपदेन पूर्णब्रह्मस्वरूपलक्षणया ब्रह्मप्रातिपदिकमात्रस्यैव प्रतिपादनात्। न चैवं गङ्गादिपदलक्ष्यस्यागङ्गात्ववज्ज्ञानादिपदलक्ष्यस्य ब्रह्मणो ज्ञानाद्यन्यत्वापत्तिः; ज्ञानादिपदवाच्यस्याज्ञानाद्यात्मकवृत्तिविशेषादेः परि-**

---

## दीपनम्

वहारे हि शब्दानामर्थप्रतिपादनस्वभावोऽवगम्यते। तत्र [1]शब्दोपस्थापितानां साक्षाद्वाऽवच्छेदकतया वा परस्परान्वयानुभवोऽवगम्यत इत्यर्थः। फलितमाह—**ततश्चेति**। **तस्यापि** वृत्तिज्ञानादेरपि। ज्ञानादीत्यादिपदेन वृत्त्याद्यंशपरित्यागे [2]नोपहितस्वरूपविरुद्धपूर्णलक्षणया वाक्यमखण्डार्थं प्रतिपादयतीति नाखण्डार्थत्वक्षतिः न वा वृत्त्यादेः [3]प्रमाणगम्यत्वापत्तिरित्याह—**न ज्ञानादीति**। लक्षणायां [4]पूर्वपक्ष्या-

---

## पूरणी

प्रत्युत विधान्तरेणान्वयासंभवेन विशिष्टरूपान्वयस्यैव तच्छ्रुतिबोध्यत्वे तद्रूपस्य सत्यताप्रसङ्गात्। **साक्षाद्वेति**। व्यक्त्याकृत्योरुभयोरपि शब्दोपस्थापितत्वेन व्यक्तीनां साक्षादानयनाद्यन्वयः गवाद्याकृतेस्तु तदवच्छेदकतया तदन्वय इति शब्दोपस्थितानां परस्परान्वये न विशेष इत्यर्थः। **उपहितस्वरूपविरुद्धेति**। परिच्छिन्नोपहितस्वरूपविलक्षणेत्यर्थः। द्वितीये तदनुशयबीजनिराकरणं चोत्तरत्र निराक्रियत

---

[1] शब्दोपस्थितानां—ख. घ. च. [2] नोपस्थित—ख. [3] प्रमाणत्वापत्तिः—च.
[4] पूर्वपक्ष्यभिमतमनूद्य—घ.

**त्यागेऽपि पूर्णज्ञानादेरेव लक्ष्यत्वात् । न चैवं स्वरूपमात्रस्यैव ज्ञानादिपदवाच्यता भवत्विति वाच्यम्; सर्वेषां पदानां**

---

### दीपनम्

शयमनूद्य दूषयति—**न चैवमिति** । लक्षणाबीजं च तात्पर्यानुपपत्तिरित्यग्रे वक्ष्यते । **एवं** वाक्यार्थब्रह्मणो ज्ञानादिस्वरूपत्वे । तथा च सर्वपदलक्षणा मुधेति भावः । किं ज्ञानादिकमानन्दादिभ्योऽतिरिक्तं सज्ज्ञानादिपदवाच्यम्, किं वानन्दाद्यभिन्नमखण्डस्वरूपम्, नाद्यः; उपाधिमन्तरेण [1] तदतिरेकासंभवात् । उपाधौ च विशिष्टमुपहितं वा स्वरूपं वाच्यमिति नाखण्डब्रह्मस्वरूपे कस्यचिच्छक्तिः । नापि द्वितीयः; विचारात्प्रागवगतनानार्थसङ्गतिकैरेव पदैर्लक्षणया वाक्यार्थ[2]प्रतीत्युपपत्तावपि शक्त्यन्तरकल्पने लक्षणामात्रोच्छेदप्रसङ्गात् । दूषणान्तरमाह—**सर्वेषामिति** । निनिगमका-

---

### पूरणी

इत्यत्राह—**लक्षणाबीजं चेति** । **पूर्णज्ञानादेरिति** मूलम् । तत्पदलक्ष्यत्वं न तद्रूपाभावे प्रयोजकम्, छत्रिणामपि छत्रिरूपत्वाभावप्रसङ्गात्, किं तु तत्पदवाच्यरूपान्यत्वम्, तच्च न पूर्णज्ञानाद्यात्मकब्रह्मस्वरूपे; तस्यैव वृत्त्युपहितरूपेण तत्पदवाच्यत्वात् । न चैवं वाच्यस्य तत्पदलक्ष्यत्वानुपपत्तिः; उपहितस्वरूपेण वाच्यस्य स्वरूपेण लक्ष्यत्वाविरोधात् । अन्यथा अजहल्लक्षणामात्रोच्छेदप्रसङ्गादिति भावः । ननु स्वरूपमात्रार्थत्वेऽपि न पर्यायता; अनतिरिक्तेनापि ज्ञानत्वादिरूपेण तस्य ज्ञानादिपदवाच्यत्वात्, अन्यथा प्रतियोग्यनुयोग्यादिपदानामपि पर्यायताप्रसङ्गादित्यत्राह—**विनिगमकेति** । ज्ञानादि-

---

[1] तदतिरिक्तत्वासंभ—**च.** [2] प्रतिपत्त्युपपत्तौ—**च.**

**पर्यायतापत्तेः । एकैकस्मात्सत्यज्ञानानन्दाद्वितीयब्रह्मसत्तानिश्चयरूपज्ञानप्रसङ्गात्, तस्य पदस्य पदान्तरेण विनाननुभावकत्वप्रसङ्गाच्च । न च सर्वपदलक्षणापक्षेऽपि पदान्तरं**

## दीपनम्

भावेन सर्वेषामप्येकशक्तिप्रसङ्गेन पर्यायतेत्यर्थः । **एकैकस्मादिति** । ज्ञानादिपदादिति शेषः । **सत्तानिश्चयेति** । पदं हि सर्वत्र सत्तानिश्चयरूपमेव पदार्थप्रतीतिमाधत्त इति प्रकृतेऽपि तथात्वप्रसङ्ग इति एकैकपदश्राविणामपि वाक्यार्थे ब्रह्मणि संशयो न स्यादिति भावः। **तस्येति** । घटकलशपदयोरिवेत्यर्थः । अत एव ब्रह्मपदस्य केवले ब्रह्मणि शक्तिरिति निरस्तम् । ननु लक्षणापक्षेऽप्येकपदलक्ष्यात्पदान्तरलक्ष्य[1]मतिरिक्तमनतिरिक्तं वा । आद्ये नाखण्डार्थत्वमिति द्वितीयमाशङ्क्याह—**न च सर्वेति** । वेदान्तेषु ज्ञानपदाभावे ब्रह्मणो [2]ज्ञानात्मत्वसंशयो न [3]निवर्तेत, तत्साधकप्रमाणाभावेनेतरपद-

## पूरणी

पदानामभिन्नार्थत्वे इदं पदं ज्ञानात्मतायां शक्तमिदमानन्दात्मतायामिति विनिगमकाभावात्सर्वं पदं ज्ञानाद्यात्मकाभिन्ने शक्तमिति तेषां पर्यायताप्रसङ्ग इत्यर्थः । वृत्त्युपहितस्य वाच्यत्वपक्षे तु ज्ञानादिपदैस्तत्तद्वृत्त्युपहितज्ञानात्मकस्यैव प्रतीत्या तत्तत्पदे लक्षणापि ज्ञानाद्यात्मकस्वरूप एवेति नास्मत्पक्षेऽयं दोष इति भावः । वस्तुतस्तु लोकव्युत्पत्तिपूर्वकत्वाद्वेदे शब्दार्थावधारणस्य लोके च ज्ञानमुत्पन्नमित्यादौ वृत्तावेव ज्ञानपदप्रयोगात् तत्पूर्वशक्तिकल्पनायाः कथंचिद्वृत्त्युपहितविषयत्वसंभवेऽपि न केवलस्वरूपगोचरत्वशङ्केति ध्येयम् । **अत एवेति** । पदान्तरवैयर्थ्यप्रसङ्गादेवेत्यर्थः । **इतरपदलक्ष्यस्येति** ।

[1] मतिरिक्तं न वा—**क.** [2] ज्ञानात्मत्व—**च.** [3] निवर्तते ततस्तत्सा—**घ.**

**व्यर्थम् । पदान्तरं विना तदर्थात्साभेदसत्ता[1]निश्चयाभावात् लक्षणानवताराच्च ॥**

---

## दीपनम्

लक्ष्यस्य तदात्मत्वेन निश्चयासंभवात् । एवमानन्दादिपदाभावेऽपि ब्रह्मणस्त[2]दनात्मत्वसंशयो न निवर्तेतेति भवति [3]सर्वमेव पदं विशिष्टाकारप्रतीतिं विदधदर्थवदित्याह—**पदान्तरमिति** । पदद्वयसा[4]मानाधिकरण्ये हि सति विरोधस्फूर्त्या लक्षणा भवतीत्यतोऽपि पदान्तरमर्थवदित्याह—**लक्षणेति** ॥

---

## पूरणी

आनन्दात्मत्वनिश्चयेऽपि ज्ञानात्मत्वनिश्चयायोगादित्यर्थः । ननु ज्ञानादिपदैरद्वितीयाखण्डस्वरूपमेव लक्ष्यमिति कथं तल्लक्षणया ज्ञानादिरूपत्वलाभ इति चेन्न; ज्ञानत्वादिरूपेणैवाखण्डस्वरूपस्य तत्तत्पदलक्ष्यत्वाभ्युपगमात् । न चैवं शाब्दज्ञाने ज्ञानत्वादेः प्रकारत्वापातः; तस्य तद्धर्मिस्वरूपत्वेन तदयोगात् । प्रकारप्रकारिभावस्य भेदघटितत्वात् । वस्तुतस्त्वभावप्रतीतौ अभावत्वमिवात्राप्यनतिरिक्तज्ञानत्वादिकं प्रकार इत्युक्तं स्मर्तव्यम् । **विशिष्टाकारेति** । ज्ञानाद्यात्मत्वप्रतीतिं जनयेदित्यर्थः । **विरोधस्फूर्त्येति** । पदोपस्थापितयोर्विशिष्टरूपयोरभेदेनान्वयायोग्यतयेत्यर्थः । विशिष्टवाचकपदान्तरसमभिव्याहारे सत्यवधारिताखण्डतात्पर्यानुपपत्तिर्वक्ष्यमाणलक्षणाबीजं स्फुटं भासत इति

---

[1] निश्चयासंभवात्—क. ग. [2] स्तदानन्दत्व—च. [3] तच्छक्तमेव पदं—क.
[4] साधारण्ये-क. ग.

**ननु [1]तत्तदुपहितं स्वरूपं वाच्यं चेत्किमिति लक्षणा, स्वरूपमात्रस्य वाच्यत्वात् लक्षणायां च तत्त्यागात्कथं ब्रह्म-तदात्मकं सिद्ध्यतीति चेत्, यद्यप्युपहितं स्वरूपमेव वाच्यम्, तथापि तत्तदुपहितत्वविशिष्टमेवेत्युपहितद्वयं स्वसमानसत्ताक-भेदवत्। ततश्च तयोर्नाभेदयोग्यता। ज्ञानानन्दशब्दाभ्या-**

## दीपनम्

ननु [2]तत्तद्विशिष्टे ज्ञानादिपदशक्तिरिति पक्षे लक्षणास्तु, उपहिते शक्तौ तु किमिति लक्षणेत्याशङ्कते—**नन्विति**। अनुप-पत्त्यभावान्न केवलं लक्षणासंभवः, बाधकमप्यस्तीत्याह—**लक्षणाया-मिति**। **तत्त्यागात्**। चैतन्यादिस्वरूपत्यागात्। समानसत्ताकोपाधि-द्वयेन [3]परस्परानपेक्षेण विशिष्टयोरिवोपहितयोरपि नाभेदयोग्यता; उपाधिभ्यां परस्परं व्यावर्तितत्वात्। न ह्येतद्घटाकाशस्तद्घटाकाश इति प्रयोगादुपहितयोरभेदप्रतीतिर्भवति। भवति तु तत्रापि ताभ्यामाका-शमात्रोपस्थितावभेदप्रतीतिरिति [4]पूर्णस्वरूपोपस्थित्यर्थं लक्षणा वक्तव्ये-त्यभिप्रेत्याह—**यद्यपीति**। ननु यद्यप्युपहितयोः स्वरूपसम्भेदोऽ-स्ति तथापि ज्ञानादिपदादभेदप्रतीतिविरुद्धोपस्थित्यभावात्किमित्यभेद-वाक्यार्थानुभवोऽपि न भवेदिति तत्राह—**ज्ञानानन्देति**। तथा च

## पूरणी

तदर्थं तदावश्यकमित्यर्थः। **ज्ञानानन्दशब्दाभ्यामिति** मूलम्। उपाधिवृत्तिविशेषादेः शक्यतावच्छेदकत्वेऽपि तद्व्यावर्तितत्वरूपेणैव ब्रह्मणो ज्ञानादिपदशक्यत्वमिति भिन्नरूपयोरेव तच्छब्दाभ्यां प्रतीति-

[1] तत्तदुपहितस्वरूपमात्रं चेत्—क. [2] तत्तत्पदविशिष्टे—च. [3] परस्परापेक्षया—घ.
[4] पूर्णोपस्थित्यर्थं—ख. च.

## दीपनम्

गौरश्व इतिवल्लोकसिद्धभेदत्वाल्लक्षणां विना नाभेदप्रतीतिरित्यर्थः। किं च तात्पर्यानुपपत्तिरेव लक्षणाबीजं न त्वन्वयानुपपत्तिः, तस्य विषं भुङ्क्ष्व छत्रिणो यान्तीत्यादावभावात्। तात्पर्यं च वेदान्तानां "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ," "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", "एकधैव" इत्यादिभेददर्शन-

## पूरणी

रिति तद्रूपोपस्थितयोर्नाभेदयोग्यतेत्यर्थः। अथ वा वृत्तिविशेषादेः शक्यतानवच्छेदकस्यापि प्रयोगोपाधितया लडादिप्रत्यये वर्तमानत्वादि-वज्ज्ञानानन्दशब्दाभ्यां तदुपाध्योः प्रतीत्या तत्पदार्थोपस्थित्यनन्तरं तदौपाधिकभेदोऽपि प्रतीयत इत्यर्थः। नन्वेवमपि साक्षाच्छब्दात्तद्भेदा-प्रतीतेः कथं तदभेदप्रतीत्यभाव इत्यत्राह—**गौरश्व इति**। गवाश्व-पदाभ्यां साक्षात्तदर्थभेदो न प्रतीयते, तत्र तयोरशक्तेः। किं तु गोत्वाश्वत्वावच्छिन्नप्रतीतिरेव साक्षात्। तदधीना च तद्भेदप्रतीतिः, तथापि तत्र यथा तयोर्नाभेदप्रतीतिस्तद्वदत्राभेदप्रतीतिर्न युक्तेत्यभिन्न-स्वरूपलक्षणा अभ्युपगन्तव्येत्यर्थः। ननु तथापि लक्षणाबीजमुख्यार्था-नुपपत्तिविरहात्कथं लक्षणा। नच विशिष्टयोरभेदान्वयानुपपत्तिरस्तीति वाच्यम्; नीलोत्पलमित्यादिवद्गौणसामानाधिकरण्येनाप्यन्वयोपपत्तेरिती-मामाशङ्कामुपसंहारव्याजेन पराचष्ट इत्याह—**किं च तात्पर्येति**। ननु भुङ्क्ष्वेति कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धीष्टसाधनत्वं [1] विधिलोडर्थः। नच तद्विषभक्षणान्वययोग्यमिति मुख्यार्थानुपपत्ति-रस्त्येवेत्यनुशयादाह—**छत्रिण इति**। आदिपदेन यष्टीः प्रवेशयेत्यादेः सङ्ग्रहः। **मृत्युं** संसारम्। संसारात्संसारान्तरमित्यर्थः। यद्वा भेद-

[1] विध्यर्थः—ङ.

**मनुभूयमानयोस्तयोः स्वसमानसत्ताकभेदानुभवात् । ततो-ज्ञानानन्दादिपदैः पूर्णचैतन्यानन्दात्मकं वस्तु लक्षणीयमिति सर्वलक्षणा, ब्रह्मणो ज्ञानादिस्वरूपत्वं चेति ॥**

---

### दीपनम्

निषेधतन्निन्दा[1]भ्यामभेदज्ञानस्य कर्तव्यत्वप्रतिपादनादभेद एवेति निर्णीतम् । तच्च लक्षणया शुद्धोपस्थितिं विना न निर्वहतीति लक्षणाऽऽवश्यकीत्यभिप्रेत्याह —**तत इति** ॥

---

### पूरणी

दर्शिनां दुःखप्रदत्वेन मृत्युरूपादीश्वरात्पुनः संसारान्तरं लभ्यत इत्यर्थः । **सर्वपदलक्षणेति** मूलम् ॥

ननु लाक्षणिकपदं मुख्यार्थानुग्राहकमात्रं, वाचकपदमेव लक्ष्यार्थोपस्थितिसहायेनान्वयानुभावकमिति यावज्जीवनयादौ दर्शितम् । तथा च सर्वपदलक्षणापक्षे कथमभेदान्वयबोधः । किं च ज्ञानादिपदेषु प्रत्येकमद्वितीयलक्षणा पदसमुदाये वा । नाद्यः ; प्रत्येकं ज्ञानाद्यात्मत्व-प्रतीतौ तदतिरिक्तवाक्ये बोध्याभावेन सत्यादिपदानां समभिव्याहार-व्युत्पत्तिसिद्धसापेक्षैकार्थबोधकत्वलक्षणैकवाक्यताभङ्गप्रसङ्गात् सत्यादि-पदेषु प्रत्येकं वाक्यव्यवहारापातात् । न द्वितीयः ; ब्रह्मणः सत्यादि-पदसमुदायात्मकवाक्यार्थत्वेन ज्ञानादिपदवाच्यत्वानुपपत्तिवर्णनविरोधा-च्चेति चेदत्र ब्रूमः—मुख्यार्थपदजातमेवान्वयानुभावकमिति नियमो नास्त्येव । विषं भुङ्क्ष्वेत्यादौ व्यभिचारात् । यत्तु विषं भुङ्क्ष्वेति न समुदाये शत्रुगृहभोजननिवृत्तिलक्षणा, किं तु शत्रुगृहभोजनोन्मुखं प्रत्याप्तेनानिष्टविषभोजनेष्टसाधनताबोधने प्रसक्तशत्रुगृहभोजनं विष-

---

[1] भ्यां भेदज्ञानस्याकर्तव्यत्व—च.

## पूरणी

भक्षणवदनिष्टसाधनमिति स्वयमेव प्रतिपद्यत इति, तन्न; आप्तवाक्यस्य विरुद्धार्थबोधकत्वेऽप्रामाण्यप्रसङ्गात्। गङ्गायां घोष इत्यादावपि स्वयमेव तीराद्युपस्थितेर्वक्तुं शक्यतया लक्षणामात्रोच्छेदप्रसङ्गाच्चेति ॥

वस्तुतस्तु वृत्तिमत्त्वमेवान्वयानुभावकतावच्छेदकम्, न तु शक्तिमत्त्वम्; गौरवात्। नच मुख्यार्थाविनाभावो लक्षणा, सा चार्थनिष्ठेति न शब्दस्य लक्षणादिवृत्तिमत्त्वमिति वाच्यम्; लक्ष्यार्थसंबन्धिमुख्यार्थोपस्थापकतया अर्थसंबन्धिनि पदेऽपि लक्षणावृत्तिसत्त्वात्। अन्यथा लक्ष्यार्थोपस्थितेः शाब्दत्वानुपपत्तेः। नच शक्तपदसंबन्धितया स्मारितो मुख्यार्थः स्वस्य वाक्यार्थान्वयानुपपत्त्या लक्ष्यार्थमुपस्थापयतीति तदुपस्थितिसहायेन वाचकपदस्यैवान्वयानुभावकत्वोपपत्तौ न लाक्षणिकपदस्यापि तत्र व्यापारकल्पना, तदन्वयबोधशाब्दताया अपि मुख्यार्थपदजन्यतयोपपत्तेरिति वाच्यम्; मुख्यार्थपद इव लाक्षणिकपदेऽप्यन्वयबोधप्रयोजकाकाङ्क्षादेस्तात्पर्यस्य चाविशिष्टतया अन्वयानुभावकताया अवश्यवाच्यत्वात्। मुख्यार्थपदजन्यतया तदंशेऽन्वयबोधस्य शाब्दत्वेऽपि लक्ष्यार्थांशे तदनुपपत्तेश्च। अत एव द्वारमित्यादौ शब्दाध्याहारकल्पनेतीयं दिक्। मुख्यार्थपदमेवान्वयानुभावकमिति प्रदर्शनं तु सति संभवे न सर्वपदलक्षणाश्रयणीयेत्येवंपरमिति ध्येयम् ॥

नापि प्रत्येकलक्षणादिविकल्पः; प्रत्येकपदैर्वस्तुतोऽभिन्नज्ञानाद्यात्मकस्वरूपोपस्थितावपि ज्ञानानन्दाद्यात्मकाभेदस्य प्रत्येकपदानुपस्थापितत्वेन तद्भेदसंशयादिनिवृत्त्यर्थं तदभेदस्य वाक्यबोध्यतया स्वीकर्तव्यत्वेन मिलित्वा सत्यादिपदानां तदभेदानुभावकत्वात्। अभेदस्य च

नन्वेवमपि शक्यसंबन्धितया ज्ञात एव लक्षणा स्यात्। तज्ज्ञानं च ब्रह्मणः शब्दादेव वक्तव्यम्। सोऽपि लाक्षणिकश्चेल्लाक्षणिकानवस्थेति गुरोरपि मूकतापत्तिरिति

## दीपनम्

सर्वपदलक्षणायां बाधकं शङ्कते—**नन्वेवमिति। सोऽपि** शक्यसंबन्धितया परब्रह्मोपस्थापकशब्दोऽपि। **मूकतापत्तिरिति।** ज्ञानपद[1]शक्यसंबधितया ब्रह्मणोऽन्यतोऽनवगतत्वेन [2]तल्लक्ष्यं किमिति शिष्येण पृष्टो गुरुर्यद्यानन्दादिपदेनोत्तरं ब्रूयात्तदा तस्यापि [3]लाक्षणिकत्वेन तल्लक्ष्यस्यापि शक्यसंबधित्वेनान्यतोऽनवगमाच्छब्दान्तरेणैव शिष्यस्य [4]प्रतिपत्तिर्वक्तव्या। शब्दान्तरमपि चेज्ज्ञानपदमेव तर्ह्यन्योन्याश्रयः। पदान्तरं चेत्तस्यापि लाक्षणिकत्वा[5]त्तत्तदनन्तशब्दोपन्यासेन श्रान्तो गुरुः सहसैव निवृत्तव्यापारः स्यात् शिष्यस्याप्रतिपत्तिश्च। ननु शुद्धपदादेव ज्ञानादिपदलक्ष्योपस्थितिरस्त्विति चेन्न; शुद्धपद-

## पूरणी

तत्स्वरूपत्वेऽपि तेन रूपेण वाक्यगम्यत्वात्। न चैवं तद्वाक्यस्य संसृष्टार्थतापातः; अभेदसंसर्गताया निरस्तत्वात्। न चैवं नीलोत्पलादिवाक्यं नीलोत्पलत्वविशिष्टाभेदबोधकमिति तदप्यखण्डार्थमापद्येतेति वाच्यम्; उत्पलत्वविशिष्टे नीलत्वविशिष्टाभेदस्य नीलत्वसंसर्गघटिततया तद्बोधकस्य तदयोगात्। अत एव तत्त्वमस्यादिवाक्यमपि शोधितजीवब्रह्मस्वरूपाभेदबोधकमिति सर्वं सुस्थम्॥

[1] वाच्यसं—**क.** [2] तल्लक्षणं—**घ. च.** [3] लाक्षणिकत्वे—**ख.** [4] प्रवृत्तिर्व—**घ.**
[5] तदनन्त—**ख, च.**

## दीपनम्

स्यापि सत्यज्ञानानन्दाद्यात्मकेऽखण्डे शक्तिश्चेत्पूर्वोक्तदोष एव । विशिष्टे चेत्तदपि लाक्षणिकमेव । तस्मात्पदान्त[1]राभिधेयमेव ज्ञानादि पदान्तरलक्ष्यमित्यभ्युपेयम् । अत एव च न पदान्त[2]रानभिधेयं पदान्तरलक्ष्यमिति न्यायविद इति भावः । न तावत्सत्यज्ञानानन्दात्मके ब्रह्मणि

## पूरणी

**पूर्वोक्तेति।** पदान्तरवैयर्थ्यादिरूपदोष इत्यर्थः। **तस्मादिति।** तथा च सर्वपदलक्षणापक्षो न युक्त इत्यर्थः। **अत एव न पदान्तरेति।** पदान्तरानभिधेयस्य लक्ष्यत्वाभावेनाभिधेयत्वस्य लक्ष्येऽपि सत्त्वात् तस्य केवलान्वयित्वे न किंचिद्बाधकमित्यभिप्रायेणेति भावः। ननु त्वच्छास्त्रव्यवहारसिद्धचैतन्योपलब्ध्यखण्डस्वरूपादिशब्दानां तद्वाचकत्वमस्त्येव। अन्यथा तैः शब्दैर्गुरोरद्वितीयातिरिक्तब्रह्मस्वरूपव्युत्पादनानुपपत्तेः। न च विशिष्टवाचकपदैरखण्डतात्पर्यादिव्युत्पादनसंभव इति चेत्, एतच्छास्त्रसङ्केतितचैतन्यादिशब्दानां तद्वाचकत्वेऽपि तैः शब्दैः परं प्रति बोधनानुपपत्त्या उभयतःसिद्धानन्दादिशब्दैरेव तल्लक्ष्यबोधनस्य वाच्यत्वेनोक्तानवस्थाया दुरुद्धरत्वात्। यदि च चेतनस्वभावश्चैतन्यमित्यादिरूपेण ज्ञानाद्यर्थकतया चैतन्यादिशब्दा अप्युभयमतसिद्धाः, तथात्वेऽपि परमतसिद्धजन्यज्ञानावच्छिन्नार्थकतया अस्मन्मते विशिष्टवाचका एवेत्युभयथापि न तच्छब्दैरभिधया आनन्दादिपदलक्ष्योपस्थापनम्। गुरुणा अद्वितीयब्रह्मव्युत्पादनाय विशिष्टवाचकपदप्रयोगेऽपि गुरूच्चारिताद्वितीयादिशब्दतात्पर्याद्यनुपपत्त्या शिष्यः स्वयमेव गुरूच्चारितशब्देष्वप्यखण्डस्वरूपलक्षणावगमपूर्वकं वेदान्तवाक्येषु तत्तात्पर्यमवधारयतीति न किंचिदनुपपन्नमिति प्रघट्टकार्थः।

---

[1] रानभिधेय—क, घ. [2] राभिधेयमेव पदान्तर—ख.

**चेन्न ; ब्रह्म सत्याद्यात्मकमपि सत्यादिपदसमुदायवाक्यार्थत्वान्न कस्यापि पदस्य शक्यम् । अतो न सत्यादि[1]स्वभावयत्किंचि-**

## दीपनम्

वाक्यार्थे [2]ज्ञानानन्दादिपदानामन्यतमपदस्य शक्तिः संभवतीत्युक्तम् । न वा सत्यज्ञानानन्दं ब्रह्मेत्येकं पदं संभवति ; तस्य नानापदसमूहात्मकवाक्यत्वात् । किं तु यथा गङ्गायां घोष इत्यादिप्रयोगाच्छक्यसंबन्धितयावगतमीनादिकं विहाय योग्यताद्यनुसारेण[3]तीरमेव [4]घोषान्वयितया श्रोता लक्षणयावगच्छति, एवं ज्ञानादिपदवाच्ये तल्लक्ष्ये वा प्रथमं व्युत्पादितः शिष्यो गुरुणोपदिष्टसत्यादिवाख्याद्योग्यताद्यनुसारेण स्वयमेव लक्षणयार्थं प्रतिपत्स्यत इति न तदर्थे शक्तिः कल्पनीया, न वा पूर्वोक्तः कोऽपि दोष इत्याह—**न ब्रह्म सत्याद्यात्मकमित्यादिना** । अनेन ब्रह्म यदि ज्ञानादिस्वरूपं स्यात्तर्हि किमिति तत्पदवाच्यं न स्यादिति शङ्का निरस्ता । **अत** इत्यनेन ग्रन्थेन ज्ञानादिपद-

## पूरणी

**वाक्यार्थ इति** । तत्पदवद्वाक्यार्थस्य तत्पदवाच्यत्वायोगात् पदान्तरवैयर्थ्याद्यापत्तेश्चेति भावः । **वाक्यत्वादिति** । वाक्ये च शक्तिर्नेष्टेति भावः । **योग्यतादीति** । लक्ष्यवाचकपदान्तरसत्त्वेऽपि योग्यतैव नियतलक्ष्योपस्थितौ तन्निमिति तत्पदविरहेऽपि योग्यतावशादत्रापि तदुपस्थितिर्न विरुध्यत इत्यर्थः । **न वा पूर्वोक्त इति** । गुरुमूकतादिरूप इत्यर्थः । ब्रह्म सत्याद्यात्मकमपीत्यादिगुरुव्युत्पादनप्रकारः । तत्र तत्तद्विशेषणैस्तत्तद्विरोधिशङ्कानिवृत्तिं दर्शयति—**अनेनेत्यादिना** । असत्त्वा-

[1] स्वभावात्किंचि-**ख**. [2] ज्ञानानन्दादीनामन्य-**ख**. [3] अनुक्तमेव-**क. ग.** अनुक्तमपीतरमेव-**क. च.** [4] घोषान्विततया-**ख**.

द्विशिष्टमेव ब्रह्म[1]तत्तत्पदवाच्यम् । विशिष्टं च परोपाधिना भिन्नमेव । वाक्यस्यैकप्रातिपदिकार्थे[2] तात्पर्यमित्येवमादि-[3]ज्ञानवतः सत्यादिपदलक्ष्यस्य ज्ञानादिपदानभिधानेऽपि विचारेण तत्तत्पदवाच्यसंबन्धितयावगतज्ञानादिव्यक्तेरेव लक्षणयोप स्थितिरिति नातः परमाशङ्क्येत्यनवस्थाभावादिति सिद्धं सत्यादि

## दीपनम्

वाच्यान्यत्वेनाज्ञानाद्यात्मकतेति शङ्का निरस्ता । ब्रह्म सदाद्यात्मकमिति शेषः । विशिष्टं चेत्यनेन वाच्ययोरेवाभेदोऽस्त्विति शङ्का निरस्ता । परोपाधिनेत्यनेन स्वतो ज्ञानानन्दादीना[4]मभेदयोग्यतामाह । वाक्यस्येत्यनेन नानार्थत्वलक्षणाशङ्का निरस्ता । ब्रह्मातिरिक्तस्य मिथ्यात्वेन तत्त्वावेदकशास्त्रप्रतिपाद्यत्वानुपपत्तिरित्येवमादीत्यादिपदेन दर्शयति । अत एव पदान्तरवाच्यमेव पदान्तरलक्ष्यमित्यपि न । अन्यथापि नियतलक्ष्योपस्थित्युपपादनेनाप्रयोजकत्वात् । न हि कुल-धर्मतया लक्ष्यस्य वाच्यत्वनियमोऽभ्युपेयः । ननु सर्वपदलक्ष्यं ब्रह्मेति प्रयोगेऽपि किं सर्वपदलक्ष्यमिति पदस्य ब्रह्मणि लक्षणा शक्तिर्वा । नाद्यः; शक्तं हि पदं लाक्षणिकम् । न हि ब्रह्मातिरिक्ते तस्य पदस्य शक्तिरस्ति । द्वितीये च न ब्रह्मणः सर्वपदलक्ष्यतेत्याशङ्का-मुपसंहारव्याजेन निराकरोति—इति सिद्धमिति । न तावदस्य पूर्ण-

## पूरणी

द्यात्मकत्वव्यावृत्तिस्फोरणायापेक्षितं पूरयति—सदाद्यात्मकमिति । ब्रह्मातिरिक्त इति । सर्वपदलक्ष्यस्य वस्तुनोऽन्यस्याभावादिति भावः । न तावदस्येति । तत्पदस्य सर्वपदलक्ष्यताविशिष्टवाचकत्वेन सत्यादिपद-

[1] तत्पद—क. [2] र्थमात्रे-ग. [3] जानतः—ग. [4] मभिधेययोग्य—क.

## दीपनम्

ब्रह्मणि शक्तिः संभवतीत्युक्तम् । व्याघाताच्च न तस्य तत्र शक्तिः । वस्तुतस्तु नेदमेकं पदम् , येनोक्तदोषः स्यात् ॥

ननु लक्ष्ये ब्रह्मणि यदि सत्यादिपदवाच्यसंबन्धित्वमस्ति तर्हि तल्लक्ष्यपदाभिधेयमेव, शक्यसंबन्धित्वस्यैव तत्प्रवृत्तिनिमित्तत्वात् । अथ नास्ति तर्हि लक्ष्यमपि न स्यादिति चेन्न ; यद्यपि पूर्णे ब्रह्मणि सर्वपदलक्ष्ये सत्यादिपदवाच्यसंबन्धित्वमस्त्येव, तथापि तद्विशिष्टमेव तदभिधेयं न स्वरूपणेति नोक्तदूषणद्वयम् । तस्मात् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्य[1]तात्पर्यपरं ब्रह्म नैतद्वाक्यस्थपदशक्यम् , वाक्यार्थत्वात् , गवादिसंसर्गवत् । न चासिद्धिः ; "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः, तस्य तदन्यार्थत्वासंभवाच्च । न चैवं वस्तुत्वेन घटादेरपि घटादिपदवाच्यत्वानुमानं स्यादिति वाच्यम् ; तस्य वाच्यान्तरा[2]भावेन तदेकार्थत्वात् घटादेर्वाच्यत्वे बाधकाभावात्

---

## पूरणी

वत्पूर्णब्रह्मस्वरूपवाचकत्वायोगात्सर्वपदलक्ष्यस्य तत्पदवाच्यत्वविरोधाच्चेत्यर्थः । नन्वतिरिक्तमुख्यार्थविरहाल्लक्षणापि न संभवतीत्युक्तमित्यत्राह—**वस्तुतस्त्विति** । **नोक्तदूषणेति** । अत एव ब्रह्मणो लक्ष्यपदवाच्यत्वे सर्वपदलक्ष्यत्वव्याघातः, लक्ष्यपदलक्ष्यत्वे चालक्ष्यत्वापत्तिः, गङ्गापदलक्ष्यतीरवदिति निरस्तम् , सत्यादिपदशक्यसंबन्धविशिष्टरूपेण लक्ष्यपदवाच्यस्यैव ब्रह्मणः स्वरूपेण तत्पदलक्ष्यत्वाभ्युपगमेन सत्यादिपदलक्ष्यत्वानपायादिति । **तस्य** तत्त्वावेदकवाक्यस्य । **वाच्यान्तरेति** । तथा च घटो न घटपदवाच्य इत्यनुमानस्य बाध इति भावः ।

---

[1] तात्पर्यास्पदं ब्रह्म–घ. च. [2] भावे–ख.

## दीपनम्

ततोऽर्थान्तरमप्रतीत्यैव झटिति तदुपस्थितेश्च। न चैवं सत्यादिपदाना-मर्थान्तराभावः न वा शुद्धस्य ब्रह्मणस्ततो झटित्युपस्थितिः। एवं सत्यादिपदं न वेदान्ततात्पर्यगोचरब्रह्मवाचकम्, पदत्वात् गवादि-पदवत्। न चैवं लक्षणाभावोऽप्यनुमातुं शक्यत इति वाच्यम्; "सर्वे वेदा यत्पदमामनन्ति", "तं त्वौपनिषदं" इत्यादिश्रुति-विरोधात् [1]मुक्तिसाधनज्ञानोपायविधानानुपपत्तेश्च। न हि ब्रह्मणि तदन्यन्मानं संभवति। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति शब्दस्य [2]मुख्यप्राप्तिरूपायाः शक्तेर्निषिद्धत्वादपि न कस्यचित्पदस्य तत्र शक्तिः। [3]लक्षणात्वर्थसंबन्धरूपा न [4]संबन्धस्य मुख्य प्राप्तिरिति न सा निवार्यत इति सर्वपदलक्ष्यं ब्रह्मेति सिद्धमिति भावः॥

## पूरणी

**अर्थान्तरेति**। विशिष्टरूपार्थस्योपपादनादित्यर्थः। ननु सत्यादिपदं न वेदान्ततात्पर्यगोचरब्रह्मलक्षकम्, पदत्वादित्यप्यनुमानं सुकरमित्य-त्राह—**न चैवमिति**। **यत्पदमिति**। यस्य पदं स्वरूपम्। **मुक्तिसाधनेति**। वेदान्तवाक्येषु ब्रह्मविषयशक्तिलक्षणयोरुभयोरपि विरहे ततस्तज्ज्ञानासंभवादित्यर्थः। नन्वन्यत एव तज्ज्ञानमस्त्वित्य-त्राह—**न हीति**॥

ननु वाक्यार्थस्य संसर्गस्य पदवाच्यत्ववत्पदलक्ष्यत्वस्याप्यदर्श-नात्कथं वाक्यार्थब्रह्मणः सत्यादिपदलक्ष्यत्वम्। तत्पदलक्ष्यत्वे च प्रत्येकपदवृत्त्युपस्थापितत्वेन वाक्यगम्यत्वानुपपत्तिरिति चेन्न; ज्ञानादि-रूपेण प्रत्येकपदलक्ष्यस्य ब्रह्मणस्तदभिन्नरूपेण वाक्यार्थत्वाभ्युपगमे-नोक्तदोषानवकाशात्॥

---

[1] मुक्तिसाधनीभूत—**च.** [2] मुख्यवृत्ति—**क.** [3] लक्षणा शक्यसं—**च.** [4] शब्दस्य मुख्याप्तिरिति—**ख.**, मुख्या वृत्तिरिति—**च.**

**वाक्यानां लक्षणया अखण्डब्रह्मप्रतिपादकत्वमिति । एवं तत्त्वमस्यादिवाक्यार्थोऽप्येकप्रातिपदिकार्थः, तद्भेदस्य मिथ्यात्वात् ॥**

---

## दीपनम्

ननु लक्षणायामपि लक्ष्यतावच्छेदकसंसर्गभाननैयत्यात्कथमखण्डार्थतेति तत्राह—**अखण्डेति** । किं लक्ष्यस्येतर[1]व्यावृत्तस्वरूपसिद्धयेऽवच्छेदकोऽभ्युपेयः उतानुगमाय । नाद्यः ; स्वरूपस्यैव [2]सर्वतो व्यावृत्तत्वात् । न द्वितीयः ; लक्ष्यस्वरूपस्यैकत्वादिति भावः । अवान्तरवाक्यस्याखण्डार्थत्वे सिद्धे तत्सिद्धपदार्थाभेदबोधकमहावाक्यमप्यख[3]ण्डार्थमित्याह—**एवं तत्त्वमसीति** । ननु जीवपरयोर्भेदस्य प्रमाणसिद्धत्वात्कथमभेदः । [4]अतो न वाक्यस्याखण्डार्थत्वमत आह—**तद्भेदस्येति** । न तावत्तत्राहमीश्वराद्भिन्न इति प्रत्यक्षं प्रमाणम् ; नित्यसर्वज्ञत्वादेर्जीवाभिन्नसर्वगतात्मवृत्तित्वेन शरीरानवच्छिन्नप्रदेशवृत्तितया विभ्वात्मनि घटसंयोगित्वादिवदनुपलम्भसंभवेन योग्यानुपलम्भासंभवात् । नियमेनाहङ्काराद्युपाधिप्रतिसन्धान एव नाहमीश्वर इति

---

## पूरणी

**अवान्तरवाक्यस्येति** । जीवब्रह्मविषयस्येत्यर्थः । प्रमाणगम्यस्य मिथ्यात्वानुपपत्तिमाशङ्क्य तदेवासिद्धमित्याह—**न तावदिति** । ननु शरीरावच्छेदेनापि तदभेदसत्त्वात्तदुपलम्भः स्यात् । नच शरीरानवच्छिन्नप्रदेशे तत्सत्त्वात्तदनुपलम्भः ; शरीरावच्छिन्नप्रदेशवृत्तित्वस्यैव तत्प्रयोजकत्वादित्यनुशयादाह—**नियमेनेति** । नन्वहङ्कारप्रतिसन्धान-

---

[1] व्यावर्तक—**ख. घ. च.** [2] स्वतो—**च.** [3] ण्डार्थबोधकमित्याह—**च.**
[4] ततो—**ख.**

## दीपनम्

प्रतीयमानभेदस्य जीवभेदवदौपाधिकत्वात् सर्वज्ञत्वाद्यधिकरणाच्चैतन्यादहंकारातिरिक्तप्रत्यगात्मनो भेदाननुभवाच्च ॥

नापि जीव ईश्वरो न भवति, सर्वज्ञत्वानधिकरणत्वात्, घटवदित्यनुमानं तत्र प्रमाणम्; शरीरावच्छिन्नजीवप्रदेशस्य सर्वज्ञत्वानधिकरणत्वेऽपि तदनवच्छिन्ने तस्मिन् सर्वज्ञत्वानधिकरणत्वे प्रमाणाभावादसिद्धेः। एकत्वेऽपि बाधकाभावेनाप्रयोजकत्वात्। न चैवं कथमेकस्य संसारित्वादिविरुद्धधर्म इति वाच्यम्; जीवेऽपि [1]संसारित्वस्यापरमार्थत्वात्। अपरमार्थस्य तस्य प्रतिबिम्बश्यामत्वादिवत्प्रतिबिम्बजीवधर्मतैव न तु बिम्बस्थानीयेश्वरधर्मता। नित्यमुक्तत्वादिकं त्ववदातत्वमिव बिम्बमुखस्य बिम्बस्यैवेश्वरस्य न तु प्रतिबिम्बजीवस्यापि ॥

नापि "द्वा सुपर्णा" इत्यादिश्रुतिर्भेदे प्रमाणम्; तस्याः भ्रान्तिसिद्धभेदानुवादेन "अनश्नन्नन्य" इति भोक्तृत्वनिषेधमुखेनाभेदपरत्वात्। सा हि श्रुतिरनश्नन्नन्य इति शरीरेन्द्रियाद्यभिमानवतोऽ-

## पूरणी

स्यार्थसमाजसिद्धतया न तावता तदुपाधिकत्वं भेदस्येत्याशङ्क्य केवलात्मनि तद्भेदाननुभवादुपाधित एव तत्प्रतिसन्धानमिति तदुपाधिक एव तद्भेद इत्याह—**सर्वज्ञत्वादीति**। **शरीरावच्छिन्नेति**। तत्प्रदेशवृत्तिसर्वज्ञत्वादेरयोग्यत्वेन योग्यानुपलब्ध्या तदभावनिर्णयासंभवादित्यर्थः। **एकत्वेऽपीति**। औपाधिकभेदमादाय सिद्धसाधनाच्चेति द्रष्टव्यम्। **सा हि श्रुतिरिति**। सुपर्णत्वेन रूपेण तयोर्जीवेश-

[1] संसारस्याप-च.

## दीपनम्

तिरिक्तस्य तस्यैव तदभिमानराहित्यदशाया[1]मन्यताऽवगत[2]भोक्तृत्वाभावं ज्ञापयति न तु जीवस्य परस्माद्भेदं भोक्तृत्वं वा। वाक्यभेदप्रसङ्गात्।

---

## पूरणी

योर्लोकसिद्धं भेदमनूद्य भिन्नतयावगतजीवस्यापि वस्तुतो भोक्तृत्वादिशून्यत्वप्रतिपादनेनेश्वरतुल्यस्वरूपतया तदभेदप्रमितिपरा। तथा च यौ वृक्षस्थानीयाविद्यासंवन्धिनावविद्यावृक्षस्य सुपर्णस्थानीयौ नियम्यनियामकभावादिना साहचर्यमापन्नौ जीवेशौ लोकतो भिन्नतयावगतौ तयोर्जीवेशयोर्मध्ये अन्यः कार्यकरणसङ्घाताभिमानी जीवः कर्मफलमश्नाति। अन्यः कार्यकरणसङ्घाताभिमानरहितः, तद्दशायामिति यावत्। स एव जीवः कर्मफलमनश्नन् स्वात्मना प्रकाशते। न च भोक्तृत्वादेर्वास्तवत्वे ज्ञानेन तन्निवृत्तिः संभवतीति तस्यापरमार्थत्वं लभ्यते। ततश्चासङ्गस्वभावो जीवः स्वरूपेणेशाभिन्न एवेति तत्तात्पर्यार्थः। न चानश्नन्नन्य इत्यन्यशब्देन पूर्वोक्तभोक्तृभिन्नस्य प्रतीतेः कथं भोक्तृजीवस्य परामर्श इति वाच्यम्; पूर्वान्यशब्देनान्तःकरणावच्छिन्नजीवस्य भोक्तुरुक्तत्वेन अन्तःकरणातिरिक्तजीवस्वरूपस्य द्वितीयान्यशब्देन परामर्शेऽविरोधादिति भावः। वाक्यभेदेति। पूर्ववाक्यं भेदप्रतिपादकमुत्तरवाक्यं चैकांशेन जीवभोक्तृत्वमपरांशेनेशाभोक्तृत्वं च प्रतिपादयतीति प्रतिपाद्यभेदेन वाक्यभेदः स्यादित्यर्थः। अस्मन्मते तु तात्पर्यतः प्रतिपाद्यस्याभेदस्यैकत्वान्न वाक्यभेदः। नन्विदं वाक्यं भेदमेव प्रतिपादयति, उत्तरवाक्येन भेदप्रयोजकविरुद्धधर्माधिकरणताया एव प्रदर्शनादिति चेत्तथासत्यनुमानविषया धूमोऽस्तीतिवाक्यवत्

---

[1] मन्यतोऽनवगत—क. [2] भोक्तृत्वासंभवं—च.

## दीपनम्

तयोरन्यतः सिद्धत्वाच्च । [1]तथा च जीवस्य स्वरूपेणाभोक्तृत्वं प्रतिपादयन्ती पराभेदमेवाभिप्रैतीति गम्यते। अत एव "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं, अनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यतिज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ। तदेतत्सत्त्वं येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञ" इति पैङ्गिरहस्यब्राह्मणमपि द्वा सुपर्णेति वाक्यमस्मदुक्ताभिप्रायं व्याकुर्वत्सुसङ्गतार्थम्। एवमन्यत्रापि भेदानुवादस्यायमेवाभिप्रायः। यत्तु जीवस्य परस्माद्भेदाभावे तस्य मुक्तिसाधनोद्देशेन श्रवणादिविधानानुपपत्तिरिति तदप्यत एव प्रत्युक्तम्। कल्पितभेदेनैव तदुपपत्तेः। किं च "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता" इति श्रुत्या तयोर्भेदः प्रतिषिद्ध्यत इति स मिथ्यैवेति भावः॥

---

## पूरणी

श्रुतिर्भेदं प्रमापयेन्न तु साक्षादिति भेदस्य श्रुतिप्रमेयत्वव्याहतिः। अनुमानं चोक्तरीत्या तदसाधकमेवेति भावः। **तयोरिति**। भेदभोक्तृत्वयोर्लोकसिद्धत्वादित्यर्थः। **अस्मदुक्ताभिप्रायमिति**। क्षेत्रज्ञशब्दाभिधेयजीवस्यैवाभिमानराहित्यदशायां भोक्तृत्वाभावं साक्षाद्दर्शयदिदं वाक्यमभेदपरमेवेत्यवगमयतीत्यर्थः। नच सत्त्वमिति सत्त्वपदाभिधेयान्तःकरणस्यैव भोक्तृत्वं प्रतीयते न तु जीवस्येति वाच्यम्; केवलान्तःकरणस्य जडस्य भोक्तृत्वायोगेन सत्त्वपदस्य तदवच्छिन्नजीवपरत्वेनाविरोधादिति भावः। **एवमन्यत्रापीति**। "ऋतं पिबन्तौ सुकृतस्य लोके" इत्यादावपीत्यर्थः॥

---

[1] तथा जीवस्य—घ.

**जीवो ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावप्रातियोगिभेदप्रतियोगी ब्रह्मनिष्ठात्यन्ताभावप्रतियोगिभेदप्रतियोगी वा, पदार्थत्वात्, ब्रह्मवत्। ब्रह्मनिष्ठानौपाधिकभेदप्रतियोगी न भवतीति वा, साध्यम्। जडान्यत्वात्, ब्रह्मवत्। जीवो ब्रह्मैव, तदविलक्षणत्वात्**

## दीपनम्

श्रुत्यनुग्राहकमनुमानमप्याह—**जीव इति**। मुक्तिफलभागित्यर्थः। अधिष्ठानमेवात्यन्ताभाव इति मतेन प्रथमं साध्यमाह—**ब्रह्मणीति**। ब्रह्मणि स्वस्य भेदस्य या सत्ता तर्किता तद्विरोधी योऽत्यन्ताभावः ब्रह्मरूपस्तत्प्रतियोगी यो भेदस्तत्प्रतियोगीत्यर्थः। स्ववृत्त्यत्यन्ताभावप्रतियोगिभेदप्रतियोगितयार्थान्तरतावरणाय ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावविशेषणम्। अतिरिक्तात्यन्ताभावमतेऽपि साध्यमाह—**ब्रह्मेति**। **पदार्थत्वादिति**। घटादिकं च पक्षतुल्यमिति न व्यभिचार इति भावः। **तदविलक्षणत्वादिति**। जीवो हि प्रथमपरिच्छेदे सच्चिदानन्द इत्युक्तम्। ब्रह्मापि तादृशमेवेति न हेत्वसिद्धिः। नच सव्येतरयोरवैलक्षण्येऽपि भेदो दृष्ट इति वाच्यम्; सूक्ष्मदृशां तत्रापि यत्किंचिद्वैलक्षण्यानुभवसत्त्वात्। अतोऽभेदप्रतिपादने विरोधाभावात्तत्त्वमस्यादि वाक्यं जहदजहल्लक्षणयाखण्डब्रह्माभेदं

## पूरणी

ननु जीवपदेनान्तःकरणावच्छिन्नविवक्षायां जीवब्रह्मभेदस्यान्तःकरणोपाधिकत्वेऽप्यन्तःकरणविशिष्टब्रह्मभेदस्यानौपाधिकत्वेन ब्रह्मनिष्ठानौपाधिकभेदप्रतियोगी न भवतीति साध्ये बाधः, जडान्यत्वहेतोरसिद्धिश्च, विशिष्टस्य जडत्वादित्यत्राह—**मुक्तिफलेति**। भेदस्य वास्तवसत्ताविरहादाह—**तर्कितेति**। भ्रमसिद्धेत्यर्थः। **जहदजहदिति**।

**तद्वत्। अत्र च तत्पदं [1]प्रकरणोपस्थितं विशिष्टं ब्रह्मै-वाभिधत्त इति तत्रापि लक्षणा। यद्यपि तात्पर्यं शुद्ध एव गृह्यते, तथापि तत् कृत्स्नप्रकरणावगमाधीनमिति प्रस्तोष्यमाणमेव, न तु प्रस्तुतम्, "तत्वमसि" इति वाक्य-**

## दीपनम्

प्रतिपादयतीति भावः। नन्वस्त्वहंकारशबलवाचिनि त्वंपदे लक्षणा। तत्पदं तु बुद्धिस्थवाचकं केवलं ब्रह्मापि शक्त्योपस्थापयितुमर्हतीति न तत्र लक्षणेत्याह-**अत्र चेति**। सत्य[2]मुपस्थापितवाचकं तत्पदं वैदिकशब्दोप-स्थितमेव वैदिकस्य तत्पदस्याभिधेयमिति प्रकरणसिद्धं जगत्कारणत्ववि-शिष्टं ब्रह्मैव तत्पदार्थो न तु केवलमित्यर्थः। ननु प्रकरणस्यापि शुद्धेऽ-द्वितीये ब्रह्मण्येव विचारादिना तात्पर्यनिरूपणात्तदेव शक्त्या तत्पदेनो-पस्थाप्यतामिति शङ्कापूर्वकमाह—**यद्यपीति**। शुद्धेऽद्वितीये तात्पर्यं हि तत्त्वमस्यादिवाक्यपर्यालोचनया कल्पनीयम्, न तु तेन विनेति शुद्धं प्रस्तोष्यमाणमेव न तु प्रस्तुतम्। तत्पदं चोपस्थापितवाचक-मेव न तूपस्थाप्यमानवाचकम्। न वा स्वाधीनोपस्थितिविषय-

## पूरणी

कर्तृत्वादिविशेषणांशस्य त्यागात् विशेष्यस्वरूपांशस्यात्यागाज्जहदजह-त्स्वार्थेयं लक्षणेत्यर्थः। न चैतादृग्लक्षणा अन्यत्र न दृष्टचरीति वाच्यम्; अन्यत्रादर्शनेऽपीहैवोक्तरीत्या कल्पनात् सोऽयं देवदत्त इत्यादौ तदावश्यकत्वाच्चेत्यर्थः। अविद्यादिदोषराहित्यलक्षणं शुद्धत्वं [3]नाद्वितीयब्रह्मणोऽपीत्यत्राह—**अद्वितीय इति**। **न वा स्वाधीनेति**।

[1] प्रकरणोपस्थितिविशिष्टं-ग. [2] मुपस्थितवाचकं-ख. घ. [3] सद्वितीयबिम्ब-ब्रह्मणोऽपी-ङ.

**स्यापि तदन्तर्गतत्वात्। सोऽयमिति वाक्यं चात्राखण्डार्थत्वे उदाहरणम्।**

---

## दीपनम्

वाचकता तस्य संभवतीति किंचिद्धर्मावच्छिन्न एव सर्वनाम्नः प्रवृत्तेर्निर्धर्मके तदयोगाच्चेति तन्निरपेक्ष्यसृष्ट्यादिवाक्यसिद्धजगत्कारणत्व-विशिष्टमेव ब्रह्म तत्पदार्थ इति [1] तत्रापि भागत्यागलक्षणेति भावः। तत्त्वमस्यादिवाक्यमेकप्रातिपदिकार्थकम्, स्वपदोपस्थापितपदार्थनिरूपितसंसर्गागोचरप्रमाजनकमिति वा, एकप्रातिपदिकार्थमात्रतात्पर्य-कत्वात्, एतद्वाच्यसंसर्गागोचरवाक्यत्वाद्वा, सोऽयमिति वाक्यवदित्यनुमानमभिप्रेत्याह—**सोऽयमिति**। न चाद्यहेतोरसिद्धिः; न तावदिदं वाक्यं [2] राजपुरुष इत्यदिवाक्यवज्जीवेश्वरयोः स्वामिभृत्यभावं प्रतिपादयति, "तत्त्वमसी" ति वाक्यात्तदप्रतीतेः, संबन्धवाचकपदाभावाच्च। नापि मृद्धट इति वाक्यमिव तादात्म्यप्रतिपादकम्;

---

## पूरणी

"तत्वमसी" ति वाक्यार्थपरामर्शाधीनतात्पर्यनिरूपणविषयाद्वितीय-ब्रह्मणि तत्पदस्य शक्त्यभ्युपगमे आत्माश्रयादिदोषापातादिति भावः। **एकप्रातिपदिकार्थेति**। तत्तात्पर्यवत्त्वं हेतुः तदधीनार्थकत्वं च साध्यमिति न हेतुसाध्ययोरविशेषः। **एतद्वाच्येति**। ननु संसर्गागोचरत्वं वाक्यस्य तदसंसर्गगोचरप्रमितिजनकत्वम्, तथा च हेतुसाध्ययोरविशेष इति चेन्न; संसर्गविषयतात्पर्यशून्यवाक्यत्वस्य हेतुत्वादिति भावः। अप्रतीतौ हेतुमाह—**संबन्धवाचकेति**। जीवस्येशनियम्यत्वे प्रमाण-

---

[1] तत्राप्यगत्या भाग–च. [2] राज्ञः पुरुषः–ख. घ.

## दीपनम्

वास्तवभेदाभेदयोरसंभवेन कल्पिततादात्म्यस्य श्रुतिप्रतिपाद्यत्वायोगात् । जीवेश्वरयोरनादितया तादात्म्यप्रयोजककार्यकारणत्वासंभवेन तदयोगाच्च । नाप्यभेदोपासनापरम् ; उपासनावाचकपदाभावेन श्रुतहानाश्रुतकल्पनाप्रसङ्गात् ।

ननु तत्पदेन [1]तत्कार्यं जीवनियमनमेव लक्ष्यताम् , त्वं तन्नियम्योऽसीति, लक्षणायास्त्वत्पक्षेऽप्यावश्यकत्वात् । एवं चैकपदलक्षणैवेति लाघवम् । "आत्मानमन्तरो यमयति" इत्यनेनेश्वरस्य तन्नियन्तृत्वमवगतं चेति चेत् , सत्यं सिद्धान्ते पदद्वयलक्षणागौरवम् , तथापि लघुतात्पर्यकप्रधानीभूतवाक्यप्रतिपिपादयिषितार्थानुगुणतया सैव श्रुतिसंमता न [2]तु लघ्व्यपि त्वदुक्तलक्षणा । तथा हि—"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं" इत्येकविज्ञानात्सर्वविज्ञानोपक्रमस्तावत्परापरात्मनोरत्यन्ताभेदपरः । अन्यथा ब्रह्मज्ञानाज्जीवज्ञानायोगेन तद्बाधप्रसङ्गात् । नन्वेवमपि वियदादिज्ञानासंभवात्स बाधित एवेति कुतस्ततोऽभेदसिद्धिरिति चेन्न; येन हि [3]ज्ञाने यत्स्वरूपं विषयीक्रियते यदज्ञानं च निवर्तते तेन [4]तज्ज्ञानं

---

## पूरणी

माह—**आत्मानमिति** । **लघुतात्पर्यकेति** । भेदघटितानियम्यनियामकभावापेक्षया स्वरूपाभेदस्य लघुत्वादित्यर्थः । भेदस्य श्रुतिप्रतिषेधादपि न तद्घटितनियम्यनियामकबोधो वाक्यार्थ इत्याह—**तथा हीति** । आदिश्यत इत्यादेशः परमात्मा तमप्राक्ष्यः पृष्टवानसि आचार्यं येनादेशेन श्रुतेन श्रवणविषयीकृतेन मतेन मननविषयीकृतेन

---

[1] आन्तर्यं—**घ.** [2] लघ्वपि लक्षणा, गौचरभ्—**च.** [3] ज्ञानेन—**ख. घ. च.** [4] तज्ज्ञातं—**च.**

## दीपनम्

भवति । ब्रह्मणश्च सर्वप्रपञ्चाधिष्ठानतया तत्स्वरूप[1]भूतस्यानवच्छिन्नस्य साक्षात्कारो घटं न जानामीत्यनुभूयमानमज्ञानं स्वरूपभूतचैतन्यविषयं निवर्तयतीति भवति स सर्वप्रपञ्चस्वरूपविषयः । न ह्यनवच्छिन्नब्रह्मसाक्षात्कारवतो घटाद्यज्ञानमज्ञातो वा घटादिरस्ति, प्रमाणाभावात् । अज्ञानैक्यस्य तस्य सर्वप्रपञ्चोपादानतायाश्चोक्तत्वात् । तद्भेदेऽपि तत्तदज्ञानविषयावच्छिन्नचैतन्यानामपि पूर्णब्रह्माभिव्यञ्जकवृत्त्यभिव्यक्तत्वेन निवृत्तिसंभवाच्च । ब्रह्मगोचरशाब्दनिर्णयस्यापि श्रुतिसिद्धघटादिस्वरूप-

---

## पूरणी

अश्रुतादिकमपि श्रवणादिविषयीकृतं भवतीत्यर्थः । **ब्रह्मणश्चेति** । वियदादिप्रपञ्चस्वरूपगोचरवियदाद्यज्ञाननिवर्तकब्रह्मगोचरसाक्षात्कारस्य विवक्षितवियदादिगोचरत्वस्यापि संभवादित्यर्थः । [2]अज्ञातघटसत्त्वे हेतुमाह—**सर्वप्रपञ्चेति । तद्भेदेऽपीति** । अभिव्यक्तचैतन्यमात्रस्याज्ञाननिवर्तकत्वात् । न चेदमाकारवृत्त्यभिव्यक्तचैतन्यादपि शुक्त्यज्ञानादिनिवृत्त्यापत्त्या तत्तदाकारवृत्त्युपहितस्यैव तत्तदज्ञाननिवर्तकत्वं वाच्यमिति कथं तया विना तन्निवृत्तिरिति वाच्यम् ; एवमपि पूर्णाकारवृत्त्यभिव्यक्तचैतन्येन मूलाज्ञाननिवृत्तौ तद्धर्मतत्प्रयुक्तावस्थाज्ञानानामपि ततो निवृत्तेरावश्यकत्वादिति भावः । **शाब्दनिर्णयस्येति** । ब्रह्मगोचरसाक्षात्कारस्येत्यर्थः । **श्रुतिसिद्धेति** । "येनाश्रुत" मित्यादिश्रुत्या दर्शिते घटादिस्वरूपगोचरत्व इत्यर्थः । नन्वेवं ब्रह्मनिर्णयाद्घटादिसंशयनिवृत्तिः स्यात् , समानविषयनिश्चयस्य तन्निवर्तकत्वा-

---

[1] भूतस्यावच्छिन्नस्य-क. [2] अज्ञानघटासत्त्वे-ञ.

## दीपनम्

गोचरत्वे न किंचिद्बाधकम् । घटाद्याकारसंशयस्तु परस्य प्रमेयमिति ज्ञानादिव मा निवर्तताम् । एवं संभावितार्था सा श्रुतिर्नान्यथा नेया । अत एवेयं श्रुतिः "कथं नु भगवः स आदेशः" इत्युत्तरवाक्येन त्वदुक्ताभिप्रायेणेममर्थमाक्षिप्य "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादि-

## पूरणी

दित्यत्राह—**घटाद्याकारेति** । तत्स्वरूपगोचरस्यापि तत्सत्तानिश्चयात्मकत्वाभावान्न ततस्तन्निवृत्तिरित्यर्थः । यद्यपि ब्रह्मसाक्षात्कारदशायां घटादिसंशये न किंचिन्मानं, तन्मूलाज्ञानानिवृत्तेस्तदसंभवश्च, तथापि प्रपञ्चोपादानब्रह्मणस्तत्स्वरूपत्ववत् "मृत्तिकेत्येव सत्यम्" इति श्रुतेर्वाचारम्भणन्यायेन मृदोऽपि घटादिस्वरूपत्वेन मृदाद्याकारवृत्तेरप्युक्तरीत्या घटादिगोचरत्वात्केवलमृद्ज्ञानादपि संशयानिवृत्तिः स्यादित्याशङ्कायामिदं द्रष्टव्यम् । ननु सर्वविज्ञानश्रुतिर्ब्रह्मज्ञानेन तदुपासनापूर्वकलब्धयोगैश्वर्यप्रभावासादितसर्वज्ञानपरेत्यत्राह—**एवं संभावितेति** । उक्तविधया मुख्यार्थसंभवे तथाकल्पनमयुक्तमित्यर्थः । **कथं न्विति** । [1] केन प्रकारेण अश्रुतादिश्रवणकर आदेशः परमात्मा भवति । अन्यज्ञानेन अन्यज्ञानासंभवादित्याक्षेपार्थः । **वाचारम्भणमिति** । विकारो घटशरावादिः वाचा आरभ्यते व्यवह्रियत इति वाचारम्भणं वागालम्बनमात्रं, न तु पृथक्स्वरूपेण सन् । ननु वाचा व्यवह्रियमाणस्य कथमसत्त्वमित्यत्राह—**नामधेयमिति** । अवस्थाविशेषापन्नमृद एव घटशरावादिनामसंबन्धः । न च तावता अवस्थाविशेषस्य पृथक्सत्त्वम् । किं तर्हि सत्यमित्यत्राह—**मृत्तिकेति** । इतिर्हेतौ । कार्यस्य मिथ्यात्वे कारण-

[1] केन रूपेण अश्रुतादिपरमात्मश्रवणादिना श्रवणादिविषयः स्यात् । अन्य—झ.

## दीपनम्

दृष्टान्तप्रपञ्चेन कार्यस्य मृषात्वं कारणस्य च सत्यत्वं प्रतिपादयन्त्यस्मदुक्ताभि[1]प्रायानुसारेणैवोपपादयति । न हि स्वानभिप्रेतोऽर्थः श्रुत्योपपादनीयः । एवं तत्र तत्र ब्रह्मविषयासु श्रुतिषु "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्यादिकासु—

"यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।"

इत्यादिस्मृतिषु चैतस्यार्थस्य प्रतिज्ञापूर्वकमुपपादितत्वेनाविवेकिबुद्धिबाधितोऽपि ज्योतिष्टोमादिवाक्यार्थ इव न तत्त्वविद्भिर्बाध्यते । एवं तदनु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति सर्गात्पूर्वं सदद्वितीयप्रतिज्ञापि जीवब्रह्माभेदपरा । अन्यथा जीवस्यासत्यत्वं

---

## पूरणी

मृद एव सत्यत्वमित्यर्थः । यत्तु विकारो नामधेयं प्राकृतादिशब्दः वाचारम्भणं वागिन्द्रियजन्यम्, मृत्तिकेति संस्कृतनामधेयं सत्यं नित्यमिति श्रुतिव्याख्यानं, तदयुक्तम्; व्याकरणाधिकरणादिन्यायोपबृंहितव्याकरणस्मृतिभिरेव प्राकृतादिशब्दानां सादित्वमितरेषां चानादित्वमिति निर्णीततया श्रुत्या तत्प्रतिपादनवैयर्थ्यात् । प्राकृतादिशब्दानामप्यनादिश्रुतिसंबन्धित्वेऽनादित्वापातात् । "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इत्युपक्रमविरोधाच्चेति दिक् । न च सिद्धान्ते मृदोऽपि मिथ्यात्वेन कथं तत्सत्यताप्रतिपादनमिति वाच्यम्; घटशरावाद्यसत्यताया एव श्रुत्या बोधनादिति भावः । यदि ब्रह्मविज्ञानात्सर्वविज्ञानं श्रुत्यनभिहितं स्यात् तदैतद्दृष्टान्तोपादानं न स्यादित्याह—**न हीति । अविवेकीति ।** एकविज्ञानात्सर्वविज्ञानोपवर्ण[2]नादिना अभेदपरत्वनिर्णयाकुशलैर्नियम्यनियामकभावलक्षणस्तत्त्वमसीति वाक्यार्थोऽवगतोऽपि तन्निर्णयकुशलैर्न तद्वाक्यार्थत्वेनावगम्यते, कामिनाम-

---

[1] प्रायेणै- **क. ग.** [2] नादेरभेदपरत्ववर्णनायाकुशलैः.

## दीपनम्

सर्गाद्यकाले अभावो वा स्यात्। न च जीवस्यापि वियदादिवदुत्पत्तिरिति न प्रागद्वैतश्रुतिविरोध इति वाच्यम्; [1]कल्पान्तरीयजीवादेस्तस्यानन्यत्वे तदयोगात्। अन्यत्वे [2]चाकृताभ्यागमादिप्रसङ्गात्। कार्यस्य विनाशनियमेन कारणब्रह्मप्रतिपादनवैफल्यात्। "न जीवो म्रियते" इति श्रुतिविरोधाच्च। एवं तदनन्तरं "अनेन जीवेनात्मनानुप्रविश्य" इति स्रष्टुर्ब्रह्मणो जल इव सवितुः प्रवेशश्रुतिरप्यभेदपरा। प्रविष्टे जीवशब्दप्रयोगबलान्न तस्य जीवान्यत्वं, बिम्बप्रतिबिम्बयोर्भेदश्च प्राङ्निरस्तः। अत एव "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" इति श्रुतिर्जीवानां प्रतिबिम्बविषया ततो विभागमात्रपरा उपाधिमात्रसृष्टिपरा वा। एवं तदनन्तरमपि "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इति सुषुप्तावुपाधिप्रवि-

## पूरणी

विवेकिनां ज्योतिष्टोमयागो मदिष्टसाधनमिति ज्योतिष्टोमवाक्यार्थावगमेऽपि विवेकिनां स्वर्गाद्यकामिनां स्वर्गस्येष्टसाधनत्वाभावेन तथा वाक्यार्थावगमविरहवदित्यर्थः। यद्वा पुरुषार्थस्वरूपाविवेकिभिरपूर्वस्य स्वतन्त्रपुरुषार्थतया ज्योतिष्टोमादिवाक्यादवगमेऽपि तद्विवेकिनां तदभाववदित्यर्थः। **अभावो वेति।** अभावश्चेत्यर्थः। **कार्यस्येत्य**नन्तरं प्रलय इति शेषः। प्रलये कृत्स्नकार्याणां विनाशः प्रलयश्रुत्यादिभिरेवावगत इति तदा कारणस्वरूपमात्रावस्थानस्य सिद्धत्वात् "सदेव सोम्य" इति तत्प्रतिपादनं व्यर्थम्। अस्मत्पक्षे त्वद्वितीयस्य तदावस्थानप्रतिपादनं तस्य जीवाभेदसिद्ध्यर्थमिति न तद्वैफल्यमिति भावः। ननु प्रविष्टस्तत्प्रतिबिम्बो न तु [3]तदवच्छिन्न इत्यत्राह—**बिम्बप्रतिबिम्बयोरिति॥**

[1] कल्पान्तरजी—घ. [2] वाकृता—क. [3] तदभिन्न—झ.

दीपनम्

लयनेन सद्ब्रह्माभेदं [1]दर्शयन्त्यभेदमेव प्रतिपादयति। एवं भगवान्व्यासोऽपि—

"बहवः पुरुषा राजन्नुताहो एक एव तु।"

इति प्रश्नमवतार्य—

"बहवः पुरुषा [2]राजन् साङ्ख्ययोगविचारिणाम्"

इति मतान्तरमुपन्यस्य—

"बहूनां पुरुषाणां हि यथैका योनिरिष्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥
ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित्॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः।
एकश्चरति भूतेषु स्वैरचारी यथासुखम्॥"

इति स्वमतमात्मैक्यं दर्शयति। एवं याज्ञवल्क्योऽप्याह—

"आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैकोऽप्यनेकः स्याज्जलाधारेष्विवांशुमान्॥"

इति। भगवानप्याह—"क्षेत्रज्ञं चापि मां विद्धि" इति। ततश्च पदद्वय[3]वाच्ययोरपि स्वरूपांशपरित्यागेऽपि प्रमाणप्रतिपन्नस्वरूपपरित्या-

---

पूरणी

**विश्वमिति**। विशन्ति भूतान्यत्रेति विश्वशब्दो ब्रह्मपरः। **एकश्चरतीति**। सर्वभूतेषु व्याप्य तिष्ठति। **स्वैरचारी** अप्रतिबद्धक्रियाशक्तिः। ननु तत्त्वंपदयोर्लाक्षणिकत्वेन जीवब्रह्मस्वरूपवाक्यार्थपरित्यागात्तयोरभेदो न सिद्ध्येदित्यत्राह -**पदद्वयेति**। कर्तृत्वसर्वज्ञत्वादिपरित्यागेऽपि जीवब्रह्म-

---

[1] दर्शयन्त्योऽभेदमेव द्रढयन्ति-**ख**. [2] ब्रह्मन्-**ख. घ**. [3] वाच्ययोरन्यतरांशपरित्यागेऽपि प्रमाणस्वरूपापरित्यागात् लक्ष्योऽप्यसौ-**च**.

## दीपनम्

गाभावाल्लक्ष्योऽप्यसौ मुख्यार्थ एव। [1]अतो वाक्यस्याद्वैतब्रह्मपरत्वात् गुणभूतपदद्वयलक्षणैवोचिता। "आत्मानमन्तरो यमयति" इति श्रुतिरपि न जीवस्य ब्रह्मनियम्यत्वं प्रतिपादयति, येनात्र तल्लक्ष्येत। "एष त आत्मान्तर्याम्यमृत" इत्युत्तरवाक्येनान्तर्याम्यनुवादेन [2]तस्य नियम्यात्मत्वप्रतिपादनात्। न हि स्वेनैव स्वयं वस्तुतो नियम्यते। नच तत्रैष त आत्मेत्यनूद्यान्तर्यामी विधीयत इति वाच्यम्; "आत्मानमन्तरो यमयति" इत्यनेनैव सिद्धत्वात्। सिद्धस्य च विधानायोगात्। आत्मशब्देनाप्रस्तुतस्य 'एष त आत्मा' इत्यनुवादायोगाच्च। "नान्योऽतोऽस्ति द्रष्टा" इत्यादिवाक्यशेषविरोधाच्च। पराक्रान्तं चात्र पूर्वाचार्यैरिति

---

## पूरणी

स्वरूपयोरपरित्यागान्नोक्तदोष इत्यर्थः। **अत इति**। प्रधानवाक्यतात्पर्यानुरोधित्वाद्गुणपदवृत्तिकल्पनायाः। अन्यथा लक्षणामात्रोच्छेदप्रसङ्गादिति भावः। **न जीवस्येति**। वस्तुतो भिन्नस्येति शेषः। **नच तत्रेति**। व्यापितया त्वत्संबन्धी परमात्मा अन्तर्यामीति तदर्थ इति भावः। **आत्मशब्देति**। "आत्मानमन्तरो यमयति" इति पूर्ववाक्ये नियम्यजीवात्मन एव प्रकृतत्वादित्यर्थः। तथा च काल्पनिकभेदघटित एव नियम्यनियामकभाव इति न स तत्त्वावेदकश्रुत्यर्थ इति भावः। एवं "जीवेशावाभासेन करोति" इति श्रुतिरपि जीवेशस्वरूपयोर्मिथ्यात्वायोगेन तद्भेदस्याभासत्वं दर्शयतीति तदभेदस्य वास्तवत्वात्तत्परमेवेदं वाक्यं द्रष्टव्यम्। ननु जीवस्य तदाश्रितत्वादिति व्यपदेशः, "समर्थः पदविधिः" इत्यत्र समर्थपदाश्रितविधेः समर्थपदेनाभिधानस्य महाभाष्ये दर्शितत्वात्। नच जीवस्य ब्रह्माश्रितत्वासिद्धिः; "सन्मूलाः सोम्येमाः

---

[1] ततः—**ख**. [2] तस्यानिय—**च**.

**तच्च मूलग्रन्थेषूपपादितमिति ।**

---

## दीपनम्

नेह प्रतन्यते। एवमन्योऽपि परोत्प्रेक्षितार्थाभासो निराकार्यः। तस्माद्वेदान्तानामेकप्रातिपदिकार्थमात्र एव तात्पर्यमिति नासिद्धो हेतुः। [1]द्वितीयहेतावपि जीवो ब्रह्मानियम्य इति वाक्ये [2]गुरुत्वादिबुद्धौ च व्यभिचारवारणाय विशेषणद्वयम्। दृष्टान्तस्य साध्यवैकल्यं परिहरति—**तच्च मूलग्रन्थेष्विति**। तदेतद्देशकालविशिष्टयोरभेदायोगात् अन्यतरपदोपलक्षितस्यान्यतरपदवाच्याभेदे चैकतरदेशकालवैशिष्ट्यस्य [3]सर्वदा

---

## पूरणी

प्रजाः सदायतनाः सत्प्रतिष्ठा" इति श्रुतेरित्याह—**एवमन्योऽपीति**। उक्तरीत्या अभेदतात्पर्यनिरूपणाज्जीवस्य वास्तवब्रह्माश्रितत्वायोगादुक्तश्रुतेश्च जीवोपाधिशरीरपरत्वात् "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिश्रुतिभिरौपाधिकभेदप्रतिपादनाच्च नार्थान्तरशङ्केति भावः। **गुरुत्वादाविति**। तस्य निर्विषयतया वाच्यसंसर्गागोचरत्वात् संसर्गागोचरप्रमितिजनकत्वरूपसाध्याभावाच्चेत्यर्थः। **अन्यतरपदेति**। तद्देशकालविशिष्टस्यैतत्कालोपलक्षितदेवदत्तस्वरूपाभेदे यावत्तत्स्वरूपं तद्देशकालवैशिष्ट्यं स्यादित्यर्थः। नन्विदं वाक्यं नाभेदं बोधयति; येनोक्तदोषः स्यात्, किं तु देवदत्ते तद्देशकालवैशिष्ट्यमात्रम्, तच्च समयभेदेऽप्य-

---

[1] द्वितीयहेतौ च—**ख**, **ग**. [2] वाक्यत्वादौ च—**च**. [3] सर्वदा भानप्रस—**ख**

### दीपनम्

सत्त्वप्रसङ्गात् समानाधिकरणवाक्यस्यान्यार्थप्रतिपादकत्वायोगादेकस्मिन् कालद्वयवैशिष्ट्यमिति प्रतीतेः पूर्वमेकत्वासिद्धेरसंभवाच्च। घटत्वसमानाधिकरणं कालद्वयवैशिष्ट्यमिति प्रतीतावपि भेदभ्रमनिवृत्त्ययोगा[1]दिति तद्वाक्यं पदद्वयलक्षणयाऽखण्डार्थम्। स्वरूपमात्रपरस्यापि तस्य तत्त्वे-

---

### पूरणी

विरुद्धमित्यत्राह—**समानाधिकरणेति**। तस्य तत्पदोपस्थापितार्थाभेदैकप्रमेयत्वादित्यर्थः। ननु भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्, तच्चैकधर्मिणि धर्मद्वयप्रतिपादनेनाप्युपपन्नम्। अन्यथा सोऽयमिति प्रत्यक्षप्रतीतेः का गतिः। नच तत्रापि स्वरूपमात्रमेव तद्धीविषय इति वक्तुं युक्तम्; प्रत्यभिज्ञायास्तत्ताविषयत्वस्य सर्वैरभ्युपगमादित्यत्राह—**एकस्मिन्निति**। सोऽयमिति प्रत्यक्षप्रतीतिरपि स्वरूपेण तदैक्यमेवावगाहते अन्यथा तदसिद्धिप्रसङ्गात्, तस्य तदेकमानत्वादिति भावः। [2]ननु कालद्वयवैशिष्ट्यमेकत्र वृत्तीति न प्रतीत्याकारः, येन पूर्वमेकत्वप्रतीत्यभावेन तथा प्रतीतिर्न स्यात्। किं तु घटत्वसमानाधिकरणं कालद्वयवैशिष्ट्यमित्येवेत्यत्राह—**घटत्वेति**। तथा सति तद्धर्मैक्यासिद्ध्या तद्वाक्यश्रवणानन्तरं तद्भेदभ्रमनिवृत्तिर्न स्यादित्यर्थः। **पदद्वयेति**। ननु तदिदंतासंबन्धित्वं लक्ष्यतावच्छेदकमिति तत्संसर्गस्य प्रमेयत्वात्कथमखण्डार्थत्वादीति चेन्न; लक्ष्यव्यक्त्यैक्ये लक्ष्यतावच्छेदकानपेक्षायाः प्रागुपपादितत्वादिति भावः। ननु वाक्यस्य देवदत्तस्वरूपमात्रबोधकत्वे सोऽयं न वेति संशयादिनिवृत्तिस्ततो न स्यादित्यत्राह—**स्वरूपमात्रपरस्यापीति**। तदिदंपदाभ्यां

---

[1] देतद्वाक्यं—**ख. च.** [2] ननु तदेकत्वेन रूपेण न प्रतीतिः; किं तु देवदत्तत्वं वैशिष्ट्यसमानाधिकरणमित्यत्राह.

**केचित्तु सर्वपदानामर्थवत्त्वार्थं लक्षणापरिहारार्थं च भिन्नाभिन्नं ब्रह्म वाक्यार्थ इत्याहुः । तन्न; कल्पितभेदस्य तत्त्वावेदकश्रुतिप्रतिपाद्यत्वायोगात्, स्वात्यन्ताभावरूपाभेदसमानाधिकरणभेदस्य मुक्तावविद्यमानस्य शुक्तिरजताद्यविशेषात् । ब्रह्मविलक्षणसत्ताविशिष्टत्वात् । ब्रह्म च स्वसमानाधिकरणात्यन्ता-**

---

## दीपनम्

दन्तासमभिव्याहारप्रतिसन्धानादितर्कमहिम्ना [1] सत्तानिश्चयजनकत्वं संभवतीति तस्य संशयविरोधितापीति भावः ॥

**अर्थवत्त्वार्थं** प्रयोजनसिद्ध्यर्थम् । जीवब्रह्मणोरत्यन्ताभेदे अन्यतरपदेनैव तत्सिद्धेः पदान्तरं व्यर्थमिति तत्परिहाराय भिन्नाभिन्नं ब्रह्मेति तदभिमानः । अस्तु तर्हि भेदोऽपि सत्य इति चेत् तर्हि [2] किं अभेदस्तस्यैवाभावः उत धर्मान्तरम् । द्वितीये द्रव्ययोर्घटपटयोरिव भेद आत्यन्तिक एवेति न सामानाधिकरण्योपपत्ति[3]रित्याद्यं प्रत्याह— **स्वात्यन्तेति** । वैलक्षण्यमेवाह— **ब्रह्म चेति** । बाधयोग्यान्यादित्यर्थः ।

---

## पूरणी

लक्षणापि तत्तद्वाच्यसंबन्धिनियतव्यक्तिविशेषे, तदभेदश्च तद्वाक्यप्रतिपाद्यः, अत एव च न पदान्तरवैयर्थ्यम् । तज्ज्ञानस्य च तत्सत्तानिश्चयात्मकत्वं यद्ययं स न स्यात् सोऽयमित्याप्तप्रयोगविषयो न स्यादिति तर्कमहिम्ना लभ्यत इति तदुभयसत्तानिश्चयात्मकात्तज्ज्ञानात्तत्संशयनिवृत्तिरप्युपपद्यत इति न काप्यनुपपत्तिरिति भावः । **भिन्नाभिन्नमिति** । जीवब्रह्मभेदाभेदावेव "तत्त्वमसी" ति वाक्यार्थ इति भावः । **धर्मान्तरमिति** । भिन्नयोरेवानुगतं द्रव्यत्वादिरूप-

---

[1] सत्तानिश्चयरूपत्वं—ख. [2] किं भेदस्तदभेदस्यैवाभावः—क. [3] रित्यभिप्रेत्याह—घ. च.

भावप्रतियोग्यन्यदेव । शुक्तिरजतादेरर्थक्रिया नास्तीति चेन्न; ज्ञानावच्छेदकत्वेन प्रयोजकत्वरूपार्थक्रियायास्तत्रापि सत्त्वात् । अर्थक्रियाविशेषसत्त्वेऽपि सत्त्वांशे शुक्तिरजताविशेषात् । न चार्थक्रियायोग्यत्वमेव सत्त्वम्; देहात्मतादात्म्यवद्बाधयोग्यस्यापि तत्संभवेन तस्य परिभाषामात्रत्वात् । परमते परमाण्वादिपरिमाणा[1]देरप्यसत्यत्वप्रसङ्गाच्च । [2]न चार्थक्रियायां सत्त्वं व्यापकम्; पूर्वक्षणे [3]विद्यमानत्वस्वरूपस्य तद्व्यापकत्वेऽपि तदा अबाधि[4]तत्वस्वरूपस्य तस्याप्रयोजकत्वात् । भेदो मिथ्या दृश्यत्वात् भेदत्वादित्यादिलिङ्गैश्च तस्य मिथ्यात्वं सिद्धमिति न तस्य तत्त्वावेदकप्रमाणगम्यत्वम् ।

दीपनम्

परमाण्वादीति । तत्परिमाणस्यानारम्भकत्वात् योगिज्ञानस्य विषया-

पूरणी

मित्यर्थः । ज्ञानावच्छेदकत्वेनेति मूले । स्वध्वंसार्थक्रियाकारित्वाच्चेति द्रष्टव्यम् । ननु जीवब्रह्मभेदो व्यावहारिकसंसारादिहेतुः, शुक्तिरजतादिकं तु नैवमित्यत्राह—अर्थक्रियेति मूले । अर्थक्रियावान्तरवैलक्षण्येऽपि ब्रह्मविलक्षणकल्पितसत्तावच्छिन्नत्वमुभयत्र तुल्यमित्यर्थः । नन्वर्थक्रियायोग्यस्यैव परमार्थत्वात्तद्योग्यत्वे भेदोऽपि ब्रह्मवत्परमार्थः स्यात्, शुक्तिरजतादिकं च विप्रतिपन्नमेवेत्याशङ्क्य निषेधति न चार्थक्रियेति मूले । तत्परिमाणस्येति । तैर्द्व्यणुकपरिमाणस्य परमाणुद्वित्वारभ्यत्वाभ्युपगमा[5]दित्यर्थः । ननु सत्त्वस्यार्थक्रियानियतत्वादप्यर्थक्रियायाः सत्त्वनियमः संभवतीत्याशङ्क्य निषेधति—न चार्थेति ।

[1] देरसत्य—क. घ. [2] नाप्यर्थ—क. ग. [3] विद्यामानस्वरूपस्य—ग. [4] तत्वरूप-ग. [5] दिति भावः—ङ.

किं चैवं मुक्तावपि भिन्नाभिन्नं ब्रह्म स्यात्, तद्रूपस्य प्रमाणसिद्धत्वात् रूपान्तरे ब्रह्मणि प्रमाणाभावात्। न च संसारदशायामेव[1] भिन्नाभिन्नम्; कालभेदस्याश्रुतत्वात्। नच "ब्रह्म वेद ब्रह्मैव भवति" इति शास्त्रान्तरान्मुक्तिसमयेऽत्यन्ताभिन्नमेव तदिति वाच्यम्; तस्य वाक्यस्य [2]त्वन्मते प्रतीयमानार्थायोगात्। तथा हि न तत्र "ब्रह्म वेद" इति शाब्दं ज्ञानं तदभ्यासो वा वक्तुं शक्यते। इदानीं तयोः सत्त्वेऽपि फलादर्शनात्। नापि ब्रह्मसाक्षात्काराच्चत्सिद्धिः; भेदाभेदगोचरसाक्षात्कारात् स्वगोचरभेदनिवृत्त्ययोगेन ततोऽप्यत्यन्ताभेदासंभवात्। न च साक्षात्कारस्यात्यन्ताभेदो विषय इति वाच्यम्; [3]भेदनिवृत्तेः पूर्वमसतस्तस्यापरोक्षत्वायोगात्। सत्त्वे वा अस्मन्मतप्रवेशापत्तिः। न च [3]भेद-

---

## दीपनम्

जन्यत्वान्न ज्ञानमपि तज्जन्यमिति भावः। **प्रमाणसिद्धत्वात्** तत्त्वावेदकश्रुतिसिद्धत्वात्। **रूपान्तरे** अत्यन्ताभिन्ने। किं साक्षात्कारस्य भिन्नाभिन्नं ब्रह्म विषयः उताभिन्नमेव। आद्यं निरस्यति—**भेदाभेदेति**। द्वितीयमाशङ्क्याह—**न चेति**।

---

## पूरणी

मूले। ननु "तत्त्वमसि" इति वाक्यं संसारदशायामेव भिन्नाभिन्नं ब्रह्म प्रतिपादयतीत्याशङ्क्य निराकरोति—**न च संसार इति** मूले। **स्वगोचरेति** मूले। विरोधिसाक्षात्कारस्यैव विषयनिवर्तकत्वादिति भावः। **असतस्तस्येति** मूले। अन्यथा नष्टपुत्रसाक्षात्कारवत्तस्या-

---

[1] भिन्नाभिन्नं वाच्यम्–ग. [2] तन्मते–ग. [3] भेदाभेद–ग.

काले योऽभेदस्तावन्मात्रगोचरसाक्षात्काराद्भेदांश[1]निवृत्तेरत्यन्ताभेदसिद्धिरिति वाच्यम्; तस्य भेदाविरुद्धत्वेनानिवर्तकत्वात्। न हि जातिज्ञानाद्व्यक्तयो निवर्तन्ते। विद्यमानभेदस्य यथाश्रुत्यभ्यस्तस्या[2]प्रतीतेः कल्पनायोगात्। न च फलवाक्यावगतात्यन्ताभेदस्यैवा[3]भ्यासात्स एव साक्षात्क्रियत इति वाच्यम्; तत्त्वमस्यादिशास्त्रस्या[4]त्यन्तानपेक्षाप्रसङ्गात्। कर्मकाण्डव्यवहारस्या[5]त्यन्ताभेदेऽप्युपपत्तेः। फलवाक्यादेव मोक्षोपयोगिज्ञानस्य सिद्धत्वात्। अभ्यासेऽप्यहेतुभूतस्य

---

## दीपनम्

यथाश्रुतीति। श्रुतिप्रमाणानु[6]रोधेन वस्तुसद्भेदाभेदगोचरा[7]भ्यासेन जायमानसाक्षात्कारस्यापि [8]तद्विषयत्वस्यैव वक्तव्यत्वादित्यर्थः। फलवाक्यं "ब्रह्म वेद" इति वाक्यम्। तदनपेक्षत्वमेवोपपादयति—कर्मकाण्डेत्यादिना। स च भेद औपाधिकः

---

## पूरणी

प्रमाणत्वादिति भावः। अविरुद्धविषयज्ञानस्यानिवर्तकत्वं व्यतिरेकमुखेन द्रढयति—न हि जातीति। यद्वा तन्मते जातिव्यक्तिविषयेऽपि भेदाभेदयोरभ्युपगमादभेदज्ञानस्य च भेदनिवर्तकत्वे अभिन्नजातिज्ञानाद्भिन्नव्यक्तीनामपि निवृत्तिः स्यादित्याह—न हीति मूले। न केवलं तज्ज्ञानस्यान्यतः सिद्ध्या तद्वैयर्थ्यमपि तु तत्त्वमस्यादिवाक्यात्तदुपयोगिज्ञानासंभवाच्चेत्याह—अभ्यासेऽपीति मूले। अपिशब्देन

---

[1] निवृत्तावत्यन्ताभेद—क. ख. [2] अप्रतीतिकल्पना—ग. [3] अभ्यासात्तदेव—क. [4] त्यन्तमनपेक्षा—ग. [5] त्यन्तभेदे—ग. [6] सारेण—ख. घ. [7] अभ्यासात्—घ. [8] तद्विषयस्यैव—ख.

मोक्षोपयोगित्वासंभवाच्च । "तत्त्वमसि" इत्यादि[1] वाक्यविरोधेन फलवाक्यस्य स्वार्थपरत्वायोगाच्च । किं चात्यन्ताभेदो नाम भेदांशविनाशः । न च तत्संभवति; जीवस्वरूपस्य विनाशप्रसङ्गात् । न हि धर्मिणि सति तत्स्वरूपं तत्समान[2]सत्ताको वा भेदो विनश्यति । न च भेदांशविनाशेऽप्यभेदांशस्य सत्त्वान्न काचित्क्षतिरिति वाच्यम्; विद्यमानस्याप्यभेदांशस्यासंसारिब्रह्मस्वरूपतया संसारिनाशे मोक्षार्थि-

---

### दीपनम्

स्वाभाविको वा । आद्यं निरस्य द्वितीयं प्रत्याह—**नचेति** ।

---

### पूरणी

त्वन्मते वेदान्तवाक्यस्य साक्षान्मोक्षोपयोग्यपरोक्षज्ञानहेतुत्वाभावात् साक्षात्कारहेत्वत्यन्ताभेदरूपफलप्रदर्शनमात्रतया न तस्य स्वजनितज्ञानाभ्यासद्वारा मोक्षोपयोगशङ्केत्यपि द्रष्टव्यम् । ननु जीवस्यांशद्वयं भेदोऽभेदश्चेति । तत्र यावद्धर्मनाश एव धर्मिनाशो हेतुर्न तु यत्किंचिद्धर्मनाशे; सत्येव घटादौ संयोगादिनाशात् । एवं च भेदधर्मस्य मुक्तिदशायामपि सत्त्वेन तन्नाशायोगात्किंचिद्भेदधर्मनाशो जीवनाशमन्तरापि स्यादित्याशङ्क्य निषेधति—**न च भेदांशेति** मूले । **विद्यमानस्यापीति** मूले । भेदाभेदौ हि न परस्परप्रतियोगिकौ परस्परं विद्येते; तथा सति जातिव्यक्त्योरनुगमाननुगमाभ्यां वैलक्षण्यानुपपत्तेः, ब्रह्मवज्जीवस्यापि सर्वव्यापित्वापत्तेः, ब्रह्मणो जीवभेदसत्त्वे तद्वत्परिच्छिन्नत्वापत्तेश्च । किं त्वेकत्र भेदांशोऽपरत्राभेदांशश्च । तत्र जातेर्व्यक्त्यभेदो व्यक्तेस्तु जाति-

---

[1] वाक्यानुरोधेन—**छ.** [2] सत्ताको धर्मो वा भेदो—**ग.**

**प्रवृत्त्यनुपपत्तेः। [1]अभेदांशो जीवः किमभिन्नो भिन्नो भिन्नाभिन्नो वा। आद्ये न ब्रह्मणो भिन्नाभिन्नो जीवः। अभेदांशस्य ब्रह्मत्वात्। द्वितीयेऽत्यन्तं भिन्न एव स्यात्। तृतीये त्वनन्ताप्रामाणिकभेदाभेदप्रसङ्गः।**

---

## पूरणी

प्रतियोगिकभेदः। एवं ब्रह्मणो जीवाभेदः जीवस्य च ब्रह्मप्रतियोगिकभेदः। तथा च भेदाभेदांशयोर्जीवब्रह्मधर्मतया तत्स्वरूपतया वा व्यवस्थितत्वेन जीवस्याभेदांशाभावात् तद्धर्मभेदांशविनाशे धर्मिणो जीवस्यापि नाशः स्यादेवेत्यर्थः। किं च ब्रह्मणो जीवाभेदांशः तद्धर्मः स्वरूपं वा। नाद्य इत्याह—**अभेदांश इति मूले**। जीव इत्यनन्तरं परस्परस्मादित्यध्याहर्तव्यम्। भेदांशो जीवाज्जीवश्चाभेदांशादत्यन्तभिन्नो भिन्नाभिन्नो वा। जीवाभेदांशयोः किमत्यन्ताभेद इति यावत्। **अभेदांशस्येति मूले**। ब्रह्मधर्माभेदेन जीवस्यात्यन्ताभेदे तद्धर्मिब्रह्मात्यन्ताभिन्न एव जीवः स्यादित्यर्थः। यद्यपि धर्मात्यन्ताभेदे तद्धर्मतैव स्यान्न तु तद्धर्मिस्वरूपत्वम्, तथापि तद्धर्मेण ब्रह्मणो भेदाभ्युपगमेऽनवस्थापत्त्या आनन्दादिवत्तदभिन्न एवाभेदांशस्तद्धर्मतया भवद्भिरङ्गीकर्तव्य इति तद्रीत्येदं धर्म्यभेदापादनं द्रष्टव्यम्। **द्वितीय इति मूले**। ब्रह्मधर्माभेदेनात्यन्तमभेदे घटधर्मघटत्वात्यन्तभिन्नपटस्य घटात्यन्तभेदवत् जीवस्य ब्रह्मात्यन्तभेदः स्यादित्यर्थः। **तृतीये त्विति मूले**। अभेदस्य जीवेन भेदाभेदाभ्युपगमे तत्राप्यभेदांशस्य जीवात्यन्ताभेदादिना उक्तदोषप्रसङ्गेन भेदाभेदयोरभ्युपगन्तव्यत्वे तत्राप्यभेदांशे एवमेवेति भेदाभेदानवस्था स्यादित्यर्थः॥

---

[1] अभेदांशे—**क.**

[1] नन्वभेदः स्वरूपमेव, भेदस्तु तत्रोपाधितो [2] भवतीति निरंशस्य [3] जीवस्य न कश्चिद्धर्म इति न भेदविनाशे स्वरूपनाशः [4] न वा भेदानन्त्यादिदोष इति । न; भेदधर्मिणो जीवस्यासंसारिब्रह्मभेदोऽस्ति न वा । न [5] चेत्कार्यं भेदा भेदः स्यात् । "तत्त्वमसि" इति श्रुतिर्वा कथं प्रमाणं स्यात् । अस्ति चेद्ब्रह्मैव संसारि स्यात् । तदभेदाविरोधिभेदस्य कल्पित-

पूरणी

द्वितीयं शङ्कते—**नन्वभेद** इति मूले । पूर्वोक्तदोषमपि परिहर्तुमाह—**भेदस्त्विति** । **कश्चिदिति** मूले । कादाचित्क इत्यर्थः । न निरंशस्येति नञ्सहितपाठे स्वाभाविकः कश्चिद्धर्मो नास्तीत्यर्थः । **न भेदेति** मूले । औपाधिकनाशे उपाधिनाशमात्रस्य प्रयोजकत्वादिति भावः । **तत्त्वमसीति** मूले । अविद्यमानाभेदबोधकेति शेषः । ननु संसारिणो जीवस्य ब्रह्मभेदाभ्युपगमान्नायं दोष इत्यत्राह—**तदभेदेति** मूले । भेदस्य सत्यत्वे भेदाभेदबोधिका श्रुतिः प्रमाणं स्यात् । भेदवतः संसारित्वमभेदवतोऽसंसारित्वमिति वास्तवसंसारित्वासंसारित्वव्यवस्था च । तस्य कल्पितत्वाभ्युपगमे तु कल्पितभेदबोधकत्वाच्छ्रुतेरप्रामाण्यम् । त्वन्नये जीवब्रह्मगतसंसारासंसारयोः सत्यत्वेन कल्पितभेदस्य न तद्व्यवस्थापकतापीति प्रघट्टकार्थः ॥

न चौपाधिकभेदस्याप्यस्मन्मते कल्पितत्वान्नायं दोष इति वाच्यम्; तथा सति तत्प्रयुक्तधर्माणां धर्मिनाशमन्तरा नाशायोगाद्ब्रह्मातिरिक्तजीवांशस्य नाशोऽवश्यमापद्येत । किं च तद्भेदस्यापि जीवेन भेदाभेदावभ्युपगन्तव्यौ । अत्यन्ताभेदे अत्यन्तभेदे च धर्मधर्मिभावानुपपत्तेः । ब्रह्मप्रतियोगिकभेदेन जीवस्यात्यन्ताभेदे जीवस्य

[1] नन्वभेदस्वरूपत्वे भेद—ग. [2] भवति—क. [3] जीवस्य कश्चिद्धर्म—ग.
[4] न वाऽभे—छ. [5] त्कोऽयं—ग.

**तया वास्तवसंसारित्वाव्यवस्थापकत्वात्। [1] तत्र च भेदाभेदे वा कथं नोक्तानन्त्यम्। कथं वा [2] ब्रह्मातिरिक्ते जीवभागस्य [3] विनाशो नाभ्युपगन्तव्यः।**

**ननु मुक्तावपि भिन्नाभिन्नमेव वस्त्विति चेत्, तर्हि भेदकोपाधेरपि सत्त्वात्संसारादविशेषः। न च भेदः स्वाभाविकः;**

**"उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा"।**

**इत्यादिश्रुतिविरोधात् जीवस्य ब्रह्मांशत्वविरोधाच्च। प्रत्युतेदानीं ब्रह्मैव भिन्नाभिन्नात्मकजीवैकांशः स्यात्। एवं ज्ञानानन्दादेरपि ब्रह्मणोत्यन्ताभेदे अनेकशब्दविरोधः। तत्रापि**

---

### दीपनम्

जीवस्य भिन्नाभिन्नांशद्वयवत्त्वे ईश्वरस्य चाभेदता[4]मात्रत्वे बाधकमाह—**जीवस्येति। अनेकशब्देति।** ज्ञानादिपदानामपर्यायता न स्यादित्यर्थः।

---

### पूरणी

भेदमात्रतापत्तेश्चेति तत्रापि भेदाभेदाभ्युपगमे भेदमुखानवस्थापत्तेः। तथा चैतदुभयमपि चेतसि निधायाह—**तत्र चेति। तर्हि भेदकेति** मूले। उपाधिमन्तरा तदौपाधिकभेदस्यासंभवादिति भावः। **जीवस्येति** मूले। जीवस्य स्वाभाविकब्रह्मभेदवत्त्वे निरंशब्रह्मणः स्वाभाविकांशांशिभावायोगाद्भिन्नजीवस्य घटादिवद्ब्रह्मांशत्वं न स्यादित्यर्थः। किं च मुक्तौ भेदांशमात्रसत्त्वे संसारादविशेषापत्त्या अभेदांशोऽपि वक्तव्यः। संसारदशायां चाभेदांशस्य भेदांशेन तिरोधानम्। एवं चाभेदमात्रांशवद्ब्रह्मणः द्व्यंशवज्जीवांशतैव स्यात्। एकांशतन्त्वादेरनेकांशपटाद्यंशतावधारणादित्याह—**प्रत्युतेति** मूले। इममर्थं दर्शयति—**जीवस्य भिन्नाभिन्नेति। अपर्यायतेति।** त्वया वृत्तिविशेषादिविशिष्ट-

---

[1] अत्र च—**ग.** [2] ब्रह्मातिरिक्तभागस्य—**क. ग.** [3] विनाशोऽभ्युपगन्तव्यः—**क.**
[4] तावन्मात्रार्थत्वे—**ख.** तावन्मात्रत्वे—**घ.**

[1]भेदाभेदश्चेत् भिन्नांशस्यानन्दाद्यस्वरूपत्वेन ब्रह्मानानन्दाद्यात्मकमित्युपेक्ष्यं दृश्यमित्यादिदोषः स्यात् । निर्गुणश्रुतिविरुद्धं च। ततो मतिदौर्बल्यकृत एवायं पक्षः। [2]तस्मादद्वैतवाद एव सर्वदोषरहित इति स एव श्रेयोर्थिभिराश्रयणीय इति ॥

## दीपनम्

**मतिदौर्बल्यं** अखण्डवाक्यार्थन्यायापरिज्ञानम्। **अद्वैतवादः** शुद्धाद्वैतवादः ॥

एवं वेदान्तानामकार्यपरत्वमुपपाद्याखण्डे ब्रह्मणि तात्पर्यमुपपादितम्। न चैवमपि वेदान्तजन्यपरोक्षज्ञानात्कथमविद्यातन्मूलकर्तृत्वाद्यध्यासनिवृत्तिः, अपरोक्षज्ञानस्यैवाविद्यानिवर्तकताया उक्तत्वात्। नच

## पूरणी

वाचकत्वानभ्युपगमादित्यर्थः। नन्वानन्दाद्यात्मकत्वमुपादेयत्वे प्रयोजकं न त्वानन्दभेदशून्यत्वम्। तथा चानन्दभेदवतोऽपि ब्रह्मणस्तदभेदसत्त्वादुपादेयत्वम्। आनन्दाभेदशून्यत्वस्योपेक्षणीयताप्रयोजकत्वादनपेक्षणीयता चेत्यनुशयादाह—**निर्गुणेति** मूले। ब्रह्मणः आनन्दादिभेदाभ्युपगमे आनन्दादेस्तद्गुणत्वं स्यात्। नच तत्संभवति; "साक्षी चेता केवलो निर्गुणः" इत्यादिश्रुतिविरोधादित्यर्थः। वस्तुतस्तु मुक्तिदशायां भेदाभेदाभ्युपगमे "ब्रह्म वेद ब्रह्मैव भवति" इत्यानन्दाद्यात्मकब्रह्मात्यन्ताभेदश्रुतिविरोध इति द्रष्टव्यम्। ननु विशिष्टाद्वैतं भेदाभेदवादिभिरभ्युपगतमित्यत्राह—**शुद्धाद्वैतेति** ।

---

[1] भेदश्चेत्—**क. ग.** [2] तस्मादद्वैतपक्ष—**ख.**

## शब्दापरोक्षनिरूपणम् ॥

**इदं च ब्रह्म शब्दादेव साक्षात्क्रियते, ब्रह्मणि प्रामाणान्त-**

---

### दीपनम्

शुद्धात्मगोचरमिन्द्रियमस्ति, येन ततस्तत्साक्षात्कारो भवेत् । अतः प्रयोजनाभावदोषस्तदवस्थ [1] एवेत्यत्राह—**इदं चेति** । निर्विशेषमित्यर्थः । यत्तु शाब्दज्ञानाभ्यासस्तत्सहकृतमनो वा साक्षात्कार[2]मुत्पादयिष्यतीति किं शब्दस्य तद्धेतुत्वकल्पनया, अन्यत्रादृष्टत्वादिति तत्राह—**ब्रह्मणीति** । न तावन्मनः पृथक्प्रमाणं भवतीत्युक्तम् । नाप्यभ्यासः, [3] अत्रैव तु तत्कल्पने इन्द्रियत्वं करणत्वसामान्यं साक्षात्कार[4]करणत्वं च कल्प्यम् । अतो लाघवात्करणतया क्लृप्तस्य शब्दस्यैव साक्षात्कारकरणत्वं कल्पनीयमिति वेदान्तवाक्यमेवात्मसाक्षात्कारहेतुरित्यर्थः ॥

नन्विन्द्रियजन्यज्ञानेष्वेवापरोक्षत्वम्, तत्कथं शाब्द[5]ज्ञाने स्यादिति चेन्न तावत्तत्र ज्ञानेऽपरोक्षत्वं जातिः; जातिमात्रे प्रमाणाभावस्योक्तत्वात् । प्रत्यभिज्ञातत्तांशज्ञाने [6] तदभावेनाव्याप्यवृत्तिजात्ययो-

---

### पूरणी

**अतः प्रयोजनेति** । वेदान्तानामिति शेषः । नित्यपरोक्षसगुणब्रह्म व्यावर्तयति—**निर्विशेषमिति** । **प्रत्यभिज्ञेति** । तदंशे इन्द्रियसान्निकर्षविरहेण तत्प्रयोज्यापरोक्षत्वजात्यभावादित्यर्थः । ननु फलबलेन तत्र

---

[1] एवेत्यत आह—घ. च. [2] मुपपादयि—च. [3] अत्रैव तस्य तत्कल्पने—च.
[4] कारणत्वं—ख. [5] ज्ञानस्यापीति चेन्न—घ. [6] तदसंभवेन—घ. च.

## दीपनम्

गाच्च। नच तत्रापि साक्षात्कारत्वमस्तीति वाच्यम्; तदंशे साक्षात्करोमीत्य[1]नुभवाभावेन तत्र तदयोगात्। किं चेयं जातिर्वृत्तिनिष्ठा चेच्छुक्तिरजतसुखादेस्तदभावेन साक्षात्करोमीत्यनुभवो न स्यात्। चैतन्यवृत्तित्वे च चैतन्यगोचरवस्तुमात्रे साक्षात्करोमीत्यनुभवप्रसङ्ग इत्युक्तम्। एकव्यक्तिजात्यसंभवाच्च। नापीन्द्रियजन्यज्ञानत्वं तत्; शुक्तिरजतभ्रमादिज्ञाने तदभावात्, तज्जन्यतावच्छेदकानिरूपणाच्च। नापि ज्ञानाकरणकज्ञानत्वं तत्त्वम्; परपक्षे अनुमितेरपि तथात्वात्। नच तत्र परामर्शः [2]करणमिति वाच्यम्; व्यापाराभावात्। नापि व्याप्तिज्ञानं लिङ्गज्ञानं वा तद्द्वारा करणमस्त्विति वाच्यम्; विशकलितसहचारादिज्ञानाद्यत्र पक्षवृत्तिधूमे सहचारवैशिष्ट्यं तत्र चाव्यभिचारवैशिष्ट्यं विषयीकुर्वत् ज्ञानमेकमेवोत्पद्यते। तदेव परामर्शो व्याप्तिज्ञानं चेति तज्जन्यानुमितौ ज्ञानकरणत्वासंभवात् स्मरणरूपपरामर्शजन्यानु-

---

## पूरणी

संस्कारः स्मरणं वा कल्प्यतामित्यत्राह—**न च तत्रापीति**। फलमेवासिद्धमित्याह—**तदंश इति**। ननु तमिमं साक्षात्करोमीत्यनुभवोऽस्तीत्यनुशयादाह—**किं चेति**। **वस्तुमात्र इति**। परोक्षवह्न्यादावपीत्यर्थः। ननु तद्ध्युपाधिरूपं तदित्यत्राह—**नापीति**। नन्विदं विप्रतिपन्नमेवेत्यरुचेराह—**तज्जन्यतेति**। **विशकलितेति**। पूर्वं व्याप्तिग्रहमन्तरेणैव सहचाराव्यभिचारमात्रप्रतिसन्धानेन पर्वतधूमे स्वसमानाधिकरणात्यन्ताभावप्रतियोगिवह्निसामानाधिकरण्यमित्येवंरूपज्ञानजन्यानुमितावित्यर्थः। [3]नन्वत्र सहचारज्ञानमेव तद्द्वारा करणं स्यादित्यरुचेराह—**स्मरणरूपेति**। ननु मानान्तरासहकृतसंस्कार-

---

[1] नुव्यवसायाभावेन—च. [2] कारण—च. [3] ननु तत्र—झ.

दीपनम्

मितावपि व्याप्तिज्ञानादिकरणकत्वाभावात्। नच तत्र पूर्वपरामर्श एव स्मृतिद्वारा करणम्; [1]तस्यापि जनकसंस्कारव्यवधानात्। संस्कारस्यापि जनकत्वे अनुमितेः स्मृतित्वापातः, प्रमाणाभावश्च। किं चैवं सुरभि चन्दनमित्यत्र चन्दनांशेऽपि तन्न स्यात्। नच चन्दनांशे ज्ञानं लौकिकसाक्षात्कारः, सौरभांशे तु नैवमिति तथानुभवाननुभवाविति वाच्यम्; लौकिकसाक्षात्कारत्वस्य [2]ज्ञानकरणकत्वान्यत्वेऽस्यैव साक्षा-

---

पूरणी

जन्यत्वं स्मृतित्वे प्रयोजकमिति नानुमितेः स्मृतित्वप्रसङ्ग इत्यत्राह— **प्रमाणाभाव इति।** धर्मिग्राहकमानेन स्मृतिमात्रजनकतयास्य सिद्धत्वादिति भावः। ननु परामर्शजनकत्वेन रूपेण व्याप्तिज्ञानादीनां करणता, न चान्यं प्रतीत्यादिनाऽन्यथासिद्धिः; परामर्शस्य व्यापारत्वात्, व्यापारान्यामिति च तत्र विवक्षणात्, अतो न क्वापि व्यभिचार इत्यपरितोषादाह—**किं चैवमिति।** घ्राणेन सौरभानुभवानन्तरं जातं सुरभि चन्दनमिति चाक्षुषज्ञानं सौरभानुभवस्य व्यापाराभावेनाकरणतया ज्ञानाकरणकत्वेन सौरभांशेऽप्यपरोक्षं स्यात्। अन्यथा चन्दनांशेऽपि न स्यादित्यर्थः। ननु तज्ज्ञानमुभयांशेऽप्यपरोक्षमेव, किं तु सौरभांशे तज्ज्ञानस्य लौकिकत्वाभावात्सौरभं पश्यामीत्यनुभवविरहमात्रम्, लौकिकसाक्षात्कारत्वस्यैव तथानुभवविषयत्वादित्याशङ्क्य निषेधति— **न च चन्दनेति। लौकिकेति।** लौकिकसाक्षात्कारत्वं ज्ञानाकरणकज्ञानत्वमात्रं तदन्यद्वा। आद्ये सौरभां[3]शेप्यलौकिकत्वाभावः स्यादित्यभिप्रेत्य द्वितीयं निरस्यति—**अन्यत्व इति।** तथा सति तद्भिन्न-

---

[1] तस्याजनक—ख. च. [2] ज्ञानकरणाजन्यत्वस्यैव—घ. [3] शेऽपि लौकिकत्वापात इत्य—झ.

**राभावात् । शब्दजन्य[1] ज्ञानस्याप्यनुभवविषयतया अपरोक्षत्वात् । इन्द्रियजन्यज्ञानानामपि तथैवापरोक्षत्वात् । अर्थस्य**

---

## दीपनम्

त्कारानुभवाविषयतया तस्य तद्विषयत्वे प्रमाणाभावात् । शुक्तिरजतादेश्च साक्षात्करोमीत्यनुभवो न स्यात् । [2] तस्मादपरोक्षार्थविषयत्वमेव ज्ञानेऽपरोक्षत्वम् । तच्च ज्ञानं किंचिदिन्द्रियजन्यं किंचिच्छब्दजन्यं किंचिदन्यजन्यमिति शब्दजन्यज्ञानस्याप्यपरोक्षत्वमविरुद्धमित्याह—**शब्दजन्यज्ञानस्येत्यादिना** । नन्वेवमपरोक्षज्ञानविषयत्वमेवार्थस्याप्यपरोक्षत्वमिति परस्पराश्रय इति तत्राह—**अर्थस्य चेति** । संविद्रूपब्रह्मविवर्त-

---

## पूरणी

स्यास्य लौकिकसाक्षात्कारत्वस्यैव साक्षात्करोमीत्यनुभवे तत्पूर्वके साक्षात्कार इति शब्दाभिलापे च निमित्ततया **तस्य** ज्ञानाकरणत्वस्य **तद्विषयत्वे** साक्षात्कारव्यवहारनिमित्तत्वे । अपरोक्षत्वात्मकत्व इति यावत् । **प्रमाणाभावात्** अनुभवाभिलापयोरन्यथासिद्धत्वादित्यर्थः । साक्षात्कारानुभवनिमित्तं ह्यपरोक्षत्वम् । ज्ञानाकरणकत्वस्योक्तरूपत्वाभावे तदपरोक्षत्वमेव न स्यादिति फलितार्थः । ननु तर्हि संयोगाद्यन्यतमप्रत्यासत्तिजन्यानुभवत्वरूपं लौकिकसाक्षात्कारत्वमेवापरोक्षत्वमस्त्वित्यत्राह—**शुक्तिरजतादेरिति** । तत्साक्ष्यनुभवस्य नित्यत्वेनेन्द्रियसन्निकर्षाजन्यत्वादिति भावः । **अन्यजन्यमिति** । [3] व्याप्तिज्ञानादिजन्यानु-

---

[1] ज्ञानस्याप्यपरोक्षविषय—**ग**. [2] चैतन्यवृत्तित्वे च . . . . गोचरवस्तुमात्रे साक्षात्करोमीत्यनुभवप्रसङ्ग इत्युक्तम् । इत्यधिकः क्वाचित्कः पाठः. [3] व्याप्तिज्ञानादिजन्यापरोक्षादिगोचरानुमिति—**झ**.

[1]चापरोक्ष्यमनावृतसंवित्तादात्म्यम् । घटादेरपि वृत्तिनिर्गमनदशायां तदस्त्येव । अन्यथा सुखादेरपरोक्षत्वानुपपत्तेः । तत्रेन्द्रियजन्यज्ञानादेरसंभवात् । साक्षिण्यध्यस्तत्वेनानावृतसंविदभेदस्य सत्त्वात् । न चैवं धर्मादेरपरोक्षत्वापत्तिः; स्वरूपविशेषस्य परमत इव तत्राप्यपेक्षितत्वात् ।

## दीपनम्

तया व्यवहितस्यापि संवित्तादात्म्यमस्तीत्यनावृतेत्युक्तम् । [2]साक्ष्यभिन्नमित्यर्थः । तथा चेदमंशसामान्यावच्छिन्नचैतन्यस्यानावृतत्वेऽपि न तस्य [3]तदा अपरोक्षतेति भावः । नन्वेवं घटादेरपरोक्षता न स्यात्, आन्तरसाक्षितादात्म्याभावादित्यत आह—**घटादेरिति** । ननु [4]घटादेरिन्द्रियजन्यज्ञानविषयत्वस्यापि सत्त्वात्तदेव तस्या[5]परोक्षत्वं किमिति न भवेदिति, तत्राह—**अन्यथेति** । अज्ञानाहंकारशुक्तिरजतस्वप्नादिकमादिशब्दार्थः । **स्वरूपेति** । चितिरेव स्वतोऽपरोक्षा, "यत्साक्षा-

## पूरणी

मिति रूपमित्यर्थः । **संवित्तादात्म्यमिति** । संवित्प्रतियोगिकसत्तावच्छेदकभेदशून्यत्वम् । न च संवित्प्रतियोगिकसत्तावच्छेदकभेदस्याप्रसिद्धिः, कृत्स्नप्रपञ्चस्य संविद्रूपब्रह्मोपादानकत्वादिति वाच्यम्; अनावृतसंवित्प्रतियोगिकतादृशभेदस्यावरणदशायां शुक्त्यादौ नित्यातीन्द्रियसूक्ष्मभूतादौ च प्रसिद्धेः । तच्च विषयात्मसाधारणमित्युक्तं स्मर्तव्यम् । **तस्येति** । अन्तःकरणोपधानमन्तरा साक्ष्यभेदायोगादिति भावः ।

---

[1] चापरोक्षत्वमनावृतसंविदभिन्नत्वम्–ग. [2] साक्षिभिन्नत्वमित्यर्थः–ख. साक्ष्यभिन्नत्वमित्यर्थ.–च. [3] सदा–ख. घ. [4] घटादेरैन्द्रियकस्वरयापि–घ. [5] अपरोक्षं–क. ख.

**वेदान्तप्रतिपाद्यं तु शुद्धं ब्रह्म । तच्च सदा [1]संविद्रूपं भवतीति**

## दीपनम्

द्परोक्षात्" इति श्रुतेः । अन्यत्र तु सत्त्वमिवानावृतचैतन्यात्मतादात्म्यादेवापरोक्षता । एवं च यस्य स्वरूपमुद्भूतस्वभावं तत्रैव चैतन्यात्मापरोक्षताभिव्यज्यते, नानुद्भूतधर्मादौ । यथा [2]तत्र परमते सत्तेति भावः । अथ वा यथा संयुक्तसमवाये सत्यपि न धर्मादेरपरोक्षज्ञानजनकत्वम्, एवमस्मन्मतेऽपि न तस्यापरोक्षताव्यञ्जकत्वमिति भावः । नन्वेवं सर्वज्ञत्वादिगुणकब्रह्मणोऽपरोक्षत्वाभावात् कथं तद्विषयकवेदान्तज्ञानस्यापरोक्षत्वमित्याशङ्क्य विशिष्टस्य तस्य तज्ज्ञानस्य च परोक्षत्वेऽपि शुद्धस्य [3]संविन्मात्रस्वभावतया नित्यापरोक्षत्वेन तद्विषयं शाब्दज्ञानमपरोक्षमेवेत्याह— वेदान्तेति ॥

नन्वेवमहंकारातिरिक्तात्मानुमितिरपरोक्षा स्यादिति चेत् किमपरोक्षार्थविषयत्वमापाद्यते तद्बुद्धा; अथानुमितिविषयस्य तस्य साक्षात्करोमीत्यनुभवविषयत्वम्, तदप्यस्त्येव, चैतन्यं साक्षात्कारोमीत्यनु-

## पूरणी

**सत्त्वमिवेति** । तदधिष्ठानचैतन्यतादात्म्यादेव सत्त्वाभ्युपगमादिति भावः । ननु जातेर्व्यक्तिप्रत्यक्षवेद्यत्वाद्धर्मादेरप्रत्यक्षत्वे तदवच्छेदेन सत्ताजातेः प्रत्यक्षेणानुपलम्भेऽपि त्वन्नयेऽपि धर्मादेरपरोक्षताव्यञ्जकस्य सत्त्वे तदभिव्यक्तिः स्यादेवेत्यनुशयादाह—**अथ वेति** । विषयोद्भवादिः सर्वमतेऽपि कल्प्य इति न तस्यापरोक्षावभास इत्यर्थः । **तज्ज्ञानस्य** तद्गोचरज्ञानस्य । **अहंकारेति** । आत्मनः संविद्रूपस्य नित्यापरोक्षत्वा-

[1] संविद्रूपमिति भवति तद्विषयमिदं शब्दजन्य—**ग.** [2] तत्रैव—**ख.** [3] स्वभावादेव नित्या—**ख.**

## दीपनम्

भवात् । न चैवमनुमितेरपि साक्षात्कारतयानुभवविषयत्वप्रसङ्गः; अपरोक्षार्थविषय[1]ज्ञानत्वस्याप्यनुभूयमानत्वात् । घटादिविषयेन्द्रियजन्यज्ञानेऽपि इतोऽतिरिक्त[2]साक्षात्कारताया अनुभवविषयत्वाभावात्। न चैवमनुमित्याप्यविद्यानिवृत्तिप्रसङ्गः ; देहातिरिक्तानुमितिगोचरसाक्षिविषयाज्ञानाभावात् । पूर्णब्रह्मविषयाज्ञानस्य भिन्नविषयिण्या तया निवृत्त्यसंभवात् । शुद्धे [3]सत्यज्ञाना[4]नन्दात्मके ब्रह्मणि नियमेन पक्षसाध्यादिवैशिष्ट्यविषयानुमितिर्न संभवत्येव । तत्त्वमस्यादिवाक्यसन्नि-

---

## पूरणी

दित्यर्थः । **भिन्नविषयिण्येति** । यद्यप्यज्ञानविषयस्वरूपमनुमितिगोचरस्वरूपं चैकमेव, तथाप्यात्मानुमितेरहंकारातिरिक्तात्मस्वरूपमात्रसत्तानिश्चायकत्वेऽपि अखण्डानन्दादिस्वरूपसत्तानिश्चयरूपत्वाभावान्न ततस्तन्निवृत्तिरित्यर्थः । **पक्षसाध्यादीति** । निर्विशेषब्रह्मणो वैशिष्ट्यायोगात्पक्षतावच्छेदकसाध्यवैशिष्ट्यस्य चानुमितिविषयत्वान्निर्विशेषब्रह्मपक्षका तत्साध्यका वानुमितिरवश्यं नैव संभवतीत्यर्थः । नियमेनेत्येतदसंभवान्वयि, न तु तत्प्रतियोगिसंभवान्वयि । तथा सति तादृशानुमितेरपि कदाचिदनुज्ञापातात् । नच जगत् अभिन्ननिमित्तोपादानकम्, कार्यत्वादित्यादिना अद्वितीयब्रह्मानुमितिः संभवत्येवेति वाच्यम्; उपादानत्वादिविशेषाक्रान्ततयैव तदनुमानादिति ध्येयम् । श्रुत्यननुमतत्वादपि नानुमितेरज्ञाननिवर्तकत्वमित्याह—**वाक्येति** । "तत्त्वमसि" इति वाक्यजन्याभेदज्ञानस्य सन्निहितस्य मोक्षहेतुत्वं समभिव्याहाराल्लभ्यत इत्यर्थः । ननु तदर्थप्रतिपादकवचनं विना न समभिव्याहारमात्रात्त-

---

[1] ज्ञानस्याप्य—घ. [2] साक्षात्कारत्वानुभव—क. [3] सत्यज्ञानानन्दानवच्छिन्ने—घ. च. [4] नन्दावच्छिन्ने—ख.

दीपनम्

त्रावेव "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति मोक्षश्रवणेन "वेदान्तविज्ञानसुनिश्चितार्थाः" इति वचनेन श्रुतिजन्यज्ञानस्यैव मुक्तिसाधनत्वावगमात् । "नैषा तर्केण मतिरापनेया" इति [1]तर्कज्ञानस्य प्रतिषेधादपि न मुक्तिसाधनत्वम् । न चैवमात्मानुमितेरपि प्रत्यक्ष[2]प्रमाणत्वेन व्यवहारप्रसङ्गः ; प्रत्यक्षव्यवहारस्येन्द्रिय[3]मात्रजन्यज्ञान-

---

पूरणी

लाभ इत्यत्राह—**वेदान्तेति** । नन्वेतावता श्रुतिजन्यज्ञानस्याविद्यानिवर्तकत्वमागतं न त्वनुमितेस्तन्निषेध इत्यत्राह—**नैषेति** । अत्र तर्कस्य स्वातन्त्र्यमात्रं निराक्रियते, न तु तर्कस्य मोक्षहेतुज्ञानोपयोगः ; मननविधानानुपपत्तेरिति ध्येयम् । ननु यथेन्द्रियजन्यज्ञाने उक्तोपाधिपरामर्शमन्तरापि साक्षात्त्वानुभवः एवमनुमितावपि स्यात् अपरोक्षप्रमात्वेन परिगणनं वा स्यादित्याशङ्क्य निषेधति—**न चैवमिति** । **प्रत्यक्षव्यवहारस्येति** । इन्द्रियजन्यवृत्त्यभिव्यक्तप्रकाशगोचरतयेत्यर्थः । अन्यथा शुक्तिरजतं साक्षात्करोमीत्यनुभवानुपपत्तेः । न चैवं वेदान्तवाक्याद्ब्रह्मसाक्षात्कारानन्तरं ब्रह्म साक्षात्करोमीत्यनुभवानुपपत्तिरपरोक्षप्रमात्वेनापरिगणनं वा, तथानुभवाभावे बाधकाभावात् । वस्तुतस्त्वर्थापरोक्षतानिमित्तवृत्त्यभिव्यक्तप्रकाश एव तथानुभवालम्बनमिति तत्रापि तदुपपत्तिः । अनुमितेस्तु नार्थापरोक्षतानिमित्तत्वमित्यनुपदं वक्ष्यमाणत्वादिति दिक् । ननु चक्षुरादिवदात्मानुमितिकरणलिङ्गपरामर्शादेरप्यपरोक्षप्रमाणतया प्रत्यक्षप्रमाणव्यपदेशः स्यात् । न चेन्द्रियजन्यज्ञानकरण एव तद्व्यपदेशः ; वेदान्तवाक्येषु तद्व्यपदेशानापत्तेरित्यत्राह—

---

[1] तर्कजन्यज्ञानस्य—**घ. च.** [2] प्रमात्वेन—**घ.** [3] मात्रगोचर—**क. ख.**

## दीपनम्

गोचरतया तद्गोचरत्वानुपपत्तेः । नापि चक्षुरादाविवा[1]परोक्षव्यवहार-प्रसङ्गः ; आत्मानुमानं [2]ह्यन्यतःसिद्धापरोक्षताविशिष्टार्थ[3]विषयतया दैवादपरोक्षं, न त्वर्थस्यापरोक्षतायां निमित्तम्। चक्षुरादिकं त्वर्थापरोक्ष-तायां प्रयोजकमित्यनेनैव विशेषेण तन्मात्रगोचरोऽपरोक्षव्यवहारः ।

---

## पूरणी

**नापीति। अन्यतः सिद्धेति।** स्वयंप्रकाशसिद्धेत्यर्थः। **अनेनैवेति।** अर्थापरोक्षतानिमित्तवृत्तिकरणत्वं प्रत्यक्षप्रमाणव्यपदेशे निमित्तमित्यर्थः।

नन्वेवं संविदः स्वत एवापरोक्षतया वेदान्तवाक्यजन्यतदाकारवृत्तेरपि तदपरोक्षतानिमित्तत्वाभावात्तत्करणवेदान्तवाक्येष्वपि प्रत्यक्षप्रमाणता न स्यात। नच संविदः स्वरूपेणापरोक्षत्वेऽप्यखण्डानन्दादिरूपेणावृतत्वान्न स्वतोऽपरोक्षत्वमिति तेन रूपेण तदपरोक्षतानिमित्तत्वं तदाकारवेदान्त-वृत्तेरप्यस्त्येवेति वाच्यम्; आवृताद्वितीयानन्दादेरनावृतान्तरसंवित्साक्षि-स्वरूपतया तत्प्रतियोगिसत्तावच्छेदकरूपापरोक्षत्वस्यावृतानन्दादावपि सत्त्वात्। नन्वावृताखण्डचिदानन्दानावृतान्तरसंविदोरन्तःकरणोपहितानु-पहितरूपेण भेदोऽस्त्येव। [4]स च भेदसत्तावच्छेदकः, नाहं ब्रह्मेति स्फुटं तद्भेदप्रतीतेः। समानाधिकरणप्रतीत्यनिर्वाहकभेदमात्रस्य सत्ताव-च्छेदकत्वात्। अन्तःकरणोपाधिकभेदस्य च सन् घट इत्यादिवदहं ब्रह्मेति समानाधिकरणप्रतीत्यविषयत्वात्। अखण्डाकारापरोक्षान्तःकरण-वृत्तिद्वारा अखण्डस्य तदन्तःकरणो[5]पधाने तु न तदौपाधिकभेद इत्य-नावृतसंवित्तादात्म्येनाखण्डस्यापरोक्षत्वमिति वृत्तेस्तदपरोक्षतानिमित्तत्व-मस्तीति चेत्तथा सति संविदपरोक्षतावर्णनाविरोधादिति चेन्न ;

---

[1] अपरोक्षप्रमाणव्य—घ. [2] ह्यनन्यतः—घ. [3] विशिष्टतया—घ. [4] न च भेदसत्तानव—ङ. [5] णोपादाने—ङ.

## दीपनम्

तस्मात्त्वमस्यादिवाक्यजन्यं ज्ञानं न परोक्षम्। अपरोक्षार्थविषयत्वात्। चक्षुरादिजन्यज्ञानवत्। [1]न चेन्द्रियजन्यत्वमुपाधिः ; सुखादिज्ञाने

## पूरणी

वृत्तेर्नार्थापरोक्षत्वाधीनमपरोक्षत्वम् ; तस्यास्तदपरोक्षतानिमित्तत्वात्। अन्यथा वृत्तिवैफल्यात्। किं तु विषयदेशस्थतया तदवच्छिन्नचैतन्यावच्छेदकत्वं वृत्तेरपरोक्षत्वम्। घटादौ तादृशवृत्त्युपहितचैतन्यस्यैवाज्ञाननिवर्तकत्वात्। तत्करणतया चक्षुरादौ प्रत्यक्षप्रमाणताव्यपदेशः। परोक्षवृत्तेस्त्वान्तरतया न विषयदेशस्थत्वेन भासकचैतन्यावच्छेदकत्वमिति नापरोक्षता, न वा तत्करणे प्रत्यक्षताव्यपदेशः। अत एवात्मानुमितेरपि विषयदेशस्थतयावच्छेदकत्वादपरोक्षत्वम्। परं त्वनुमितिगोचरात्मस्वरूपे [2]आवरणाभावेन तस्य स्वतोऽपरोक्षावभासतया न सानुमितिस्तदज्ञाननिवृत्तिद्वारकतदपरोक्षतायां प्रयोजकेति तत्र नापरोक्षप्रमाव्यपदेशः। न वा तत्करणे प्रत्यक्षप्रमाणव्यवहारः। एतेनापरोक्षार्थविषयत्वेन ज्ञानस्यापरोक्षत्वे सिषाधयिषाजन्यप्रत्यक्षदृष्टवह्न्याद्यनुमितेरप्यपरोक्षत्वं स्यादिति निरस्तम्। तदनुमितेर्विषयदेशस्थत्वाभावेनास्मदुक्तापरोक्षत्वस्य तत्राप्रसङ्गात्। तदिह वेदान्तजन्यवृत्तेरपि विषयपूर्णानन्ददेशस्थत्वे सति तद्भासकस्वरूपचैतन्यावच्छेदकत्वादपरोक्षत्वम्। तदावरणनिवृत्तिपूर्वकापरोक्षावभासनिमित्तत्वाच्चापरोक्षप्रमाव्यपदेशः। अखण्डानन्दाद्यपरोक्षावभासस्यान्यतोऽसिद्धत्वात्। अत एव तत्करणवेदान्तवाक्यमपि प्रत्यक्षमानमिति सर्वं सुस्थम्॥

**अपरोक्षार्थेति**। विषयदेशस्थत्वे सति भासकचैतन्यावच्छेदकज्ञानात्वादित्यर्थः। अतो न प्रत्यक्षदृष्टवह्न्याद्यनुमितौ व्यभिचारः, तस्या उक्तरीत्या अपरोक्षत्वायोगादिति भावः। **सुखादिज्ञान इति**।

---

[1] न चैन्द्रियकत्वमु—**घ.** [2] अवधारणरूपत्वाभावेन स्वतो—**ङ.**

## दीपनम्

दशमस्त्वमसीतिवाक्यजन्यज्ञाने च साध्याव्यापकत्वात् । दशमस्त्वमसीति वाक्यजन्यज्ञानं चापरोक्षभ्रमाविद्यानिवर्तकतया अपरोक्षम् ।

---

## पूरणी

परमतसिद्धेश्वरप्रत्यक्षे चेति द्रष्टव्यम् । ननु दशमस्त्वमसीति वाक्यं नापरोक्षप्रमितिजनकम् । तथा हि; किं स्वात्मनो दशमत्वं पश्यतः शब्देनापरोक्षधीः, उतापश्यतः नाद्यः; तस्य प्रत्यक्षवह्निं प्रति वह्निरुष्ण इत्यादिवाक्यजन्यज्ञानस्येव परोक्षत्वेऽपि प्रत्यक्षसिद्धानुवादत्वमात्रेण प्रत्यक्षत्वाभिमानात् । अन्यथा शब्दात् स्पार्शनत्वजातिमज्ज्ञानानुपपत्तेः । द्वितीये यदीन्द्रियव्यापारोऽस्ति तदा उपदेशसहकृतेन्द्रियेणैव प्रत्यक्षधीः । यदि नास्ति, धर्मवांस्त्वमसि पर्वतोऽग्निमानित्यादाविव विशेष्यापरोक्षत्वेऽपि विशेषणदशमत्वे परोक्षधीरेव । तस्मान्न शब्दस्य स्वातन्त्र्येणापरोक्षधीजनकत्वमित्यत्राह— **दशमस्त्वमसीति** । नाहं दशम इति तद्वाक्यश्रवणात्पूर्वमपरोक्षभ्रमस्तन्मूलाविद्या चानुभूयते । तद्वाक्यश्रवणानन्तरं च नेति सर्वसिद्धम् । यदीन्द्रियेणैव तदपरोक्षप्रमितिस्तदा वाक्यवैयर्थ्यम् । नच तदिन्द्रियव्यापाराज्ञानेन प्रयुक्तवाक्यं तदर्थानुवादकमेव, वह्निरुष्ण इति वाक्यवदिति वाच्यम्; नाहं दशम इति विपर्यासवचनादिना तद्भ्रमा[1]नुमानदशायामेव आप्तेन वाक्यप्रयोगात् । न चैवमपि तदुपदेशसहकृतेन्द्रियमेव तदपरोक्षधीजनकमास्तामिति वाच्यम्; इन्द्रियस्य शब्दानपेक्षत्वात्, प्रमाणस्य प्रमाणान्तरासहकारित्वाच्च । नापि वाक्यार्थज्ञानं सहकारि; इन्द्रियजन्यदशम[2]त्वापरोक्षधीमात्रे तस्याहेतुत्वात् । न चैवं व्यभिचाराद्वाक्यमपि तदपरोक्षधीहेतुर्न स्यादिति वाच्यम्; शाब्दापरोक्षज्ञाने शब्दाव्यभिचारात् ॥

---

[1] नुभवदशा–झ. [2] त्वपरोक्ष–झ.

## पूरणी

नापि विशेषणज्ञानतया वाक्यार्थज्ञानोपयोगः ; दशमपदार्थज्ञानमात्रस्यैव विशेषणज्ञानतया तद्धेतुत्वसंभवेन कृत्स्नवाक्यार्थज्ञानस्यानुपयोगात् । अस्मन्मते विशेषणज्ञानस्य विशिष्टधीहेतुत्वासिद्धेः । वाक्यार्थधीसमनन्तरमेवापरोक्षभ्रमादिनिवृत्तेरनुभवसिद्धत्वाच्च नान्तरैन्द्रियकवृत्तिकल्पना । अत एव वह्निमान्पर्वत इत्यादावपि विशेषणे परोक्षधीरेवेति निरस्तम् । तत्रापरोक्षभ्रमविरहात् । सत्यपि तन्निवृत्तेरनुभूयमानत्वात् । परोक्षवह्निभ्रमादेश्च परोक्षज्ञानमात्रादेव निवृत्त्युपपत्तेः । तज्ज्ञानस्य परोक्षत्वेऽपि प्रकृते तदयोगात् । नच प्रतियोग्यपरोक्षप्रमायास्तदवधिकदशमत्वापरोक्षधीहेतुत्वात् दशमस्त्वमसीति वाक्याच्चाविद्याप्रतियोग्यपरोक्षप्रमितिविरहात् कथं तदवधिकार्थापरोक्षधीरिति वाच्यम् ; श्रोतुरपरप्रतियोग्युपस्थितिदशायामेव स्वस्मिन्दशमत्वसंशयादिरिति वाक्येन तदपरोक्षप्रमितिजनने बाधकाभावात् । नच वाक्यस्य मानान्तरापेक्षयार्थबोधकत्वासंभवः ; स्वप्रतिपाद्यार्थविषयमानान्तरानपेक्षायामपि स्वप्रतिपाद्यार्थस्य स्वावधिकतया मानान्तरजनिततदवध्युपस्थित्यपेक्षायां विरोधाभावात्, इयं प्रतीचीत्यादिवाक्यवत् । यद्वा दशमपदं सन्निधानादिनाऽवधिविशेषविशिष्टमेवार्थमुपस्थापयतीति न काप्यनुपपत्तिः । यत्त्वेवं सति वह्निरुष्ण इति वाक्यमप्यपरोक्षप्रमितिजनकं स्यादिति, तदपरोक्षभ्रमनिवृत्त्यनिवृत्तिभ्यां वैलक्षण्यात्प्रत्युक्तम् । तत्रापरोक्षभ्रमे सति दिङ्मोहादिवत्तद्वाक्येन तदनिवृत्तेरिति सम्प्रदायः । वस्तुतस्तु विषयदेशस्थत्वे सति तद्भासकचैतन्यावच्छेदकत्वं वृत्तेरपरोक्षत्वमित्युक्तम् ॥

एवं दशमत्वं शरीरादिगतं शरीरावच्छिन्नात्मगतं वा । उभयथापि तदाकारवाक्यजन्यवृत्तेर्विषयदेशस्थत्वैवेत्यपरोक्षता । वह्निरुष्ण

**तद्विषयं ज्ञानं शब्दजन्यमप्यपरोक्षम् । ततश्च वेदान्तजन्यतत्त्वसाक्षात्कारादेव कर्तृत्वाद्यनर्थहेत्वविद्यानिवृत्तिः भेदभ्रमनिवृत्त्या [1]ब्रह्मात्माभेदसिद्धिश्चेति ॥**

---

## दीपनम्

अपरोक्षे ब्रह्मणि शब्दजन्यज्ञानस्य परोक्षत्वे वेदान्तानामप्रामाण्यं च स्यात् । परोक्षार्थविषयत्वमेव ज्ञाने परोक्षत्वम् । न च ब्रह्म परोक्षमस्ति । तत्सत्त्वे वा ब्रह्मणो " यत्सक्षात् " इति श्रुतेरप्रमाण्यप्रसङ्गादिति भावः ॥

वेदान्तादेव तत्त्वसाक्षात्कारसमर्थनफलमाह—**ततश्चेति** ॥

ननु न तावदविद्यानिवृत्तिर्ब्रह्मैव ; साध्यत्वानुपपत्तेः । नाप्यतिरिक्ता ; तत्र न तावत्सा सती ; अनिर्वचनीयप्रतियोगिकाभावस्य

---

## पूरणी

इत्यादिवाक्यजन्यवृत्तेस्तु विषयदेशस्थत्वाभावान्नापरोक्षताशङ्का । अत एव दशमस्त्वमसीति शरीरादिविषयकवाक्योदाहरणमिति तत्त्वम् । एतेन तत्त्वमस्यादिवाक्यं परोक्षज्ञानजनकं, वाक्यत्वादिति प्रतिपक्षानुमानं निरस्तम् ; अप्रयोजकत्वात्, बाधाच्च । यत्तु मन एव श्रवणादिसहायेन साक्षात्कारमुत्पादयतीति, तन्न ; " यन्मनसा न मनुते " इति श्रुतिविरोधादिति दिक् ॥

स्वानुमाने विपक्षे बाधकमाह—**अपरोक्ष इति । परोक्षार्थेति ।** परोक्षत्वं न जातिः, अनुभवत्वादिना साङ्कर्यात् । सुरभि चन्दनमित्यादिज्ञानस्यापि सौरभांशे परोक्षत्वेनाऽव्याप्यवृत्तित्वाच्चेत्यपरोक्षत्ववदुपाधिरूपमेवेत्यर्थः । **नच ब्रह्मेति ।** तथा च ब्रह्मऽव्यतिरिक्तपरोक्षार्थबोधकत्वे तस्य मिथ्यात्वात् तद्बोधकवेदान्तानामप्रामाण्यं स्यादित्यर्थः ॥

---

[1] ब्रह्माभेद—**क. घ.**

**सा चाविद्यानिवृत्तिर्ब्रह्मणोऽतिरिच्यते । प्रपञ्चात्यन्ताभावस्याखण्डार्थशास्त्र[1]प्रतिपाद्यस्य ब्रह्मस्वरूपत्वेऽपि तन्निवृत्तेः**

## दीपनम्

तदयोगात्, दृश्यस्य सत्यत्वानुपपत्तेश्च । नाप्यसती; ज्ञानसाध्यत्वानुपपत्तेः । विरुद्धत्वान्नोभयात्मिका च । [2]अनिर्वचनीयकार्यस्याविद्योपादानकत्वनियमान्न तत्क्षयस्यानिर्वचनीयत्वम् । मोक्षस्य मिथ्यात्वप्रसङ्गाच्च । अतः कीदृशीयमविद्यानिवृत्तिरित्यत आह—**सा चेति** । ननु कल्पितप्रतियोगिकस्यात्यन्ताभावस्येव ध्वंसस्याप्यधिष्ठानाभेद एव वक्तव्य इत्याशङ्क्य वैषम्येणोत्तरमाह—**प्रपञ्चेति** । अत्यन्ताभावो हि निषेधशास्त्रप्रतिपाद्य इति सत्यो वक्तव्यः । अन्यथा शास्त्राप्रामाण्यप्रसङ्गात् । न चारोपितात्यन्ताभावस्य विरहरूपस्य [3]सत्यत्वं संभवतीत्युक्तम् । तस्य च ब्रह्मणो भेदे शास्त्रस्याखण्डार्थत्वं भज्येत । ब्रह्मसंबन्धाभावे तस्य तद्वृत्तिरप्यनुपपन्नैव । न चैवमविद्यानिवृत्तिः

## पूरणी

**दृश्यस्येति** । दृश्यत्वं चैतन्यविषयत्वम् । तच्च कल्पिततत्तादात्म्याधीनमिति न तस्य सत्यतेत्यर्थः । तर्हि सदसद्विलक्षणाऽस्त्वित्यत्राह—**अनिर्वचनीयेति** । स्वक्षये च विनश्यदवस्थाया उपादानत्वासंभवादिति भावः । **मोक्षस्येति** । अनिर्वचनीयस्य ज्ञाननिवर्त्यत्वनियमान्मोक्षनाशेन पुनः संसारः स्यादित्यर्थः । ननु तच्छास्त्रं न प्रपञ्चात्यन्ताभावब्रह्मसंबन्धं बोधयति, किं तु तत्स्वरूपद्वयमात्रमित्यत्राह—**ब्रह्मसंबन्धेति** । शास्त्रेण ब्रह्मात्यन्ताभावसंबन्धाबोधने

[1] प्रतिपाद्यब्रह्म–ग. [2] अनिर्वाच्य–क. [3] सत्त्वं–घ.

**प्रतियोग्यसमानकालीनत्वेन ब्रह्मस्वरूपत्वायोगाच्च। तस्यास्तत्त्वावेदकशास्त्राप्रतिपाद्यतया सत्यत्वाभावेऽपि नानुपपत्तिः। न चासौ पुरुषार्थः; प्रतिबन्धका[1]भावतया तत्कामनायामपि पूर्णानन्दावाप्तेरेव पुरुषार्थत्वादिति केचित्॥**

## दीपनम्

शास्त्रार्थः, "तरति शोकमात्मवित्" इत्यस्य यथाप्राप्तार्थानुवादकत्वात्। अतस्तस्याः, सत्यत्वाभावे बाधकाभावात् निवृत्तेः प्रतियोग्यसमानकालीनत्वनियमाच्च सा ब्रह्मातिरिक्तैवेत्यर्थः। यदि सदसदादिपक्षान्तर्भावोऽनुपपन्नः तर्ह्यन्यैव काचिद्विधास्तु। तदुक्तम्—

"न सन्नासन्न सदसन्नानिर्वाच्योऽपि तत्क्षयः।
यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन्॥"

इत्यभिप्रेत्याह—**तस्या इति**। न चैवं मोक्षस्य मिथ्यात्वप्रसङ्ग इत्याह—**न चासाविति**। तत्कामनायां सत्यामपि। इदानीं "यत्र त्वस्य सर्वमात्मैवाभूत्" "प्रपञ्चोपशमः शिवोऽद्वैतः" इत्यादिश्रुतेः

## पूरणी

तत्र प्रमाणान्तराभावात्स एव न सिद्ध्येदित्यर्थः। **यथाप्राप्तेति**। ज्ञानेनाज्ञाननिवृत्तेर्लोकसिद्धतया तदनुवादमात्रत्वादित्यर्थः। **काचिद्विधेति**। ब्रह्मप्रपञ्चोभय[2]विलक्षणत्वादित्यर्थः। **मिथ्यात्वेति**। अपरमार्थत्वमित्यर्थः। अपेक्षितं पूरयति—**सत्यामपीति**। अतो मूले [3]अपिसहितोपाधिः पूर्णानन्दाभिव्यक्तिप्रतिबन्धकाभावतया तत्कामना न स्वातन्त्र्येणेति भावः। **प्रपञ्चोपशम इति**। अनया प्रपञ्चनिवृत्तिरूपतायाः स्फुटमवगमादिति भावः॥

[1] भावविषयतया तत्कामनायाः—**ग.** [2] विलक्षणसत्त्वैवेत्यर्थः-**झ.** [3] अपिसहितोपपातः—**झ.**

अन्ये तु कल्पिताभावस्यात्यन्ताभाववद्[1]नृतत्त्वायोगान्निवृत्तिरप्यात्मैव, प्रतियोगिसमानसत्ताकनिवृत्तेरेव प्रतियोग्यसमान[2]कालीनत्वात् । कल्पितस्य स्वात्यन्ताभाववृत्तित्ववत्

## दीपनम्

सकलाचार्याणां च संमतं [3]मतान्तरमाह—अन्ये त्विति । अभावस्य ह्यधिकरणाद्भेदे प्रतियोगिनस्तद्भिन्नसत्ताकत्वं प्रयोजकमित्यत्यन्ताभावोऽधिष्ठानान्न भिद्यत इत्युक्तम् । ततो ध्वंसोऽप्यभावरूपोऽधिष्ठानान्न भिद्यत इत्यर्थः । ननु ध्वंसस्य प्रतियोग्यसमानकालीनत्वादविद्यासमान[4]कालीन आत्मा कथं तद्ध्वंसः स्यादिति, तत्राह—प्रतियोगीति । प्रतियोगिसत्ताविरुद्धस्यैव प्रतियोग्यसमानकालीनत्वनियमः । अयं च न तथेति नास्याविद्याकालीनत्वं विरुध्यते । अत एव [5]तस्यापि स्वध्वंसाश्रयत्वमनुपपन्नमिति कथमविद्याश्रय आत्मा तद्ध्वंस इत्येतन्निरस्तमित्याह—कल्पितस्येति । नन्वेवमपि किं ज्ञानेन, अविद्यानिवृत्त्यात्मनः सदा सत्त्वात् । न चात्माभिव्यक्तिः प्राङ्नास्तीति वाच्यम्; अभिव्यक्तिर्ह्य[6]विद्यादिनिवृत्तिस्तत्कृतयोग्यतारूपावरणनिवृत्तिर्वा, तदुभयं चात्मस्वरूपतया प्रागस्त्येव । न च वृत्त्युपहितं चैतन्यमेवाविद्यानिवृत्तिरिति न ज्ञानात्मिका वृत्तिर्विफलेति वाच्यम्; वृत्त्युपहित-

## पूरणी

प्रतियोगिसत्तेति । विरोधश्च प्रतियोगिसमानसत्ताकस्यैवेति समानसत्ताकध्वंस एव तथा नियम इत्यर्थः । अविरुद्धस्येति वा छेदः ।

[1] दन्यत्वा—ग. [2] कालत्वात्—ग. [3] पक्षमाह—ख. घ. [4] काल आत्मा—ख. [5] कस्यापि—ख. [6] अविद्यानिवृत्तिश्चैतन्यं वा । तदुभयं—घ.

**स्ववृत्तिनिष्ठत्वस्याप्याविरोधात्। न चैवं ज्ञानवैफल्यापत्तिः;**

## दीपनम्

त्वस्य मुक्तिकाले असत्त्वेन तत्कालीनात्ममात्रत्वानुपपत्तेः। तद्विनाशेऽभावोन्मज्जनप्रसङ्गश्च। नच ज्ञानेनोपलक्षित आत्मा अविद्यानिवृत्तिः, उपलक्षितं चोपलक्षणनाशेऽप्यस्त्येवेति नोक्तदूषणमिति वाच्यम्; [1]उपलक्षितत्वस्यात्मातिरिक्तस्य कस्यचिदभ्युपगमे अपसिद्धान्तप्रसङ्गात्, आत्ममात्रस्य प्रागपि सत्त्वात्। यत्त्वात्मैव मुक्तिरिति मते [2]ज्ञानवैफल्यापादनमिष्टमेव। न चैवं ज्ञानोद्देशेन प्रवृत्त्यनुपपत्तिः; मुक्तेर्ज्ञानसाध्यत्वभ्रान्त्या तदुपपत्तेरिति, तन्न; विवेकिनामपि बहूनां प्रवृत्तिदर्शनात्। तस्मात्कल्पिताविद्यानिवृत्तेरात्मस्वरूपत्वायोगात् प्रागुक्तरीत्यातिरेकानुपपत्तेश्च आत्यन्तिकदुःखोपरम एव ज्ञानसाध्यो मोक्ष इत्याशङ्क्याह— **न चैवमिति।** न तावद्दुःखोपरमो ज्ञानसाध्यः, तत्प्रागभावस्य ज्ञानासाध्यत्वात्, प्रागभावस्य प्रतियोगिजनकत्वनियमेन मुक्तित्वानुपपत्तेश्च। नापि दुःखध्वंसो मोक्षस्तत्त्वज्ञानसाध्यः; दुःखं मे मा भूदिति कामनाया दुःखानुत्पादविषयत्वेन दुःखध्वंसे पृथक्का[3]मनाऽदर्श-

## पूरणी

तत्सत्ताऽविरुद्धसत्ताकस्य तत्समानसत्ताकस्येति यावत्। **तद्विनाश इति।** उपाधिवृत्तिनाशे तदुपहितस्यापि नाशादित्यर्थः। **अपसिद्धान्तेति।** ब्रह्मणोऽद्वितीयत्वनिर्धर्मकत्वसिद्धान्तविरोधप्रसङ्गादित्यर्थः। ननूपलक्षितत्वमात्मस्वरूपमित्यत्राह — **आत्ममात्रस्येति। प्रागभावस्येति।** मध्ये संसारापातादिति भावः। दुःखध्वंसस्य पुरुषार्थत्वमभ्युपेत्याह —

[1] उपलक्षणस्यात्मा–ख. [2] ज्ञानवैफल्यसाधन–क. [3] मनाया अद–घ.

## दीपनम्

नेन तस्यापुरुषार्थत्वात्। उत्पन्नदुःखस्य स्वविषयज्ञाननाश्यतया तत्र तत्त्वज्ञानस्य विद्यमानस्याप्यन्यथासिद्धत्वात्। अनुत्पन्नस्य च तत्त्वज्ञानेन नाशासंभवात्॥

यत्तु चरमदुःखं तत्त्वज्ञानादृते न नश्यतीति तन्न; तत्रापि तवावश्यकस्वविषयसाक्षात्कारादेव नाशोपपत्तेः। नच प्रमाणबलात्तत्त्वज्ञानमपि तत्र हेतुरिति वाच्यम्; चरमदुःखं तत्त्वज्ञानान्नश्यतीति बोधकप्रमाणस्य श्रुतेरन्यस्य वा अदर्शनात्। किं चोत्पन्नं चरमदुःखं स्वोत्पत्त्यवधिकतृतीयक्षणवर्तिध्वंसप्रतियोगि न वा। आद्ये किं तत्त्वज्ञानेन। द्वितीये च तवापसिद्धान्तः। किं च दुःखप्रागभावासह-[1]वृत्तिध्वंसत्वं चरमदुःखध्वंसत्वम्। तच्च नीलघटवत्सामग्रीद्वयायत्तम्। विशेषणांशस्य तत्प्रागभावनाशकदुःखसामग्र्यायत्तत्वादिति। नच चरमदुःखध्वंसत्वं तत्त्वज्ञानजन्यतावच्छेदकम्, दुःखध्वंसमात्रे तु तत्त्वज्ञानस्य व्यभिचारः [2]स्फुट एवेति न श्रुत्यापि [3]तस्य जन्यत्वसिद्धिः॥

ननु चरमदुः[4]खमेव तत्त्वज्ञानादृते [5]न संभवतीति चेत्, अहो [6]अतीव लक्षणोऽयं नैयायिकमुमुक्षुः, यतोऽयं ब्रह्मलोकान्तं

## पूरणी

**उत्पन्नेति**। **आवश्यकेति**। सुखदुःखयोर्ज्ञातैकसत्त्वादिति भावः। ननु "तरति शोकमात्मवित्" इति श्रुतिस्तत्र मानमित्यत्राह—**किं चेति**। **किं तत्त्वज्ञानेनेति**। आवश्यकस्वविनाशसामग्र्यैव तन्नाशादिति भावः। **अपसिद्धान्त इति**। त्वया ज्ञानादेर्द्विक्षणाव-

[1] वृत्तिदुःखध्वंस—क. घ. च. [2] स्पष्ट एवेति—क. घ. [3] तज्जन्यत्व—घ.
[4] खार्थमेव—क. [5] न भवतीति—ख. [6] अतीवावि—ख.

**ज्ञानाभावकाले कल्पिताविद्यादेः सत्त्वेन प्राक्सिद्धनिवृत्तेरपि**

## दीपनम्

सुखं परित्यज्य दुःखार्थमेव यतते। [1]न वा तत्त्वज्ञानाद्दुःखमित्यत्र किंचित्प्रमाणमस्ति। इदानीं दुःखानुत्पादप्रसङ्गात्। चरमदुःखं तेन विना नेति चेन्न; यावद्दुःखप्रागभावेषु नष्टेषु तत्कालीनदुःखस्यान्यत्र क्लृप्तकारणत एव संभवात्। तत्त्वज्ञानादृते दुःखप्रागभावा एव न नश्यन्तीति चेत्, तत्किमिदानीमपि तर्हि दुःखं नेति वक्तुमध्यवसितोऽसि। तस्मान्नैयायिकमते तत्त्वज्ञानं विफलमेव। एवं मतान्तरेऽपि तत्त्वज्ञानं निष्फलम्। तच्च पूर्वाचार्यैः प्रपञ्चितमिति नेह प्रतन्यते। कथं तर्हि सिद्धान्ते ज्ञानस्यार्थवत्त्वम्, [2]तत्राह—**ज्ञानाभावेति**। यद्यप्यविद्यानिवृत्तिरूपात्मा प्रागप्यस्त्येव, तथापि तस्मिन् [3]कल्पिताविद्यातत्कार्यप्रपञ्चो यावज्ज्ञानमनिवारितास्तिष्ठत्येवेति न ज्ञानं विना मुक्तिरित्यर्थः। अत एव प्रवृत्तिरुपपन्नेत्याह—**प्राक्सिद्धेति**।

## पूरणी

स्थायित्वाभ्युपगमादिति भावः। बाधकमप्यस्तीत्याह—**इदानीमिति**। **तत्किमिति**। इदानीं दुःखप्रागभावनाशात्मकदुःखं न स्यादित्यर्थः। यद्यपि क्रमेण दुःखनाश्यानां प्रागभावानां युगपद्दुःखोत्पादेन निवृत्तिस्तत्त्वज्ञानाधीनैव, तथापि दुःखप्रागभावानां परिमितत्वे तत्त्वज्ञानमन्तरापि तत्संभवात्तद्वैयर्थ्यमिति मन्तव्यम्। **एवं मतान्तर इति**। दुःखप्रागभावो मुक्तिरिति गुरुमते तत्त्वज्ञानं व्यर्थमेव, तस्यानादित्वेनासाध्यत्वात्, पूर्वोक्तरीत्या प्रागभावस्य मुक्तिरूपत्वाभावाच्च। नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टमते तद्वैयर्थ्यं, अभिव्यक्तिर्हि ज्ञानम्,

[1] न तावत्तत्त्वज्ञानात्—**च.** [2] इत्यत्राह—**च.** [3] अतीताविद्या—**घ.**

## दीपनम्

यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं तत्तस्य साध्यमिति ज्ञानं प्रवृत्त्यङ्गम्। तच्चात्रापि सुलभमेव। तत्त्वज्ञानस्य स्थितिक्षणे प्राक्सिद्धाया अप्यविद्यानिवृत्तेः सत्त्वात्, तत्पूर्वमात्मरूपाविद्यानिवृत्तेरसत्त्वस्याविद्यादेः सत्त्वाच्च। आत्मनस्तदभावत्वेऽविद्याया अपि तदभावत्वात्। ततः परमते दुःखानुत्पादार्थिनः प्रायश्चित इव घटार्थिनो दण्डादाविव आत्मरूपाविद्यानिवृत्त्यर्थिनः तदुपाये प्रवृत्तिरुपपन्नैवेति भावः। नन्वेवमपि किं तत्त्वज्ञानसाध्यम्, अविद्यानिवृत्तिरिति चेत् सा किं प्राङ्नासीत्, नासीदेव तदभावस्य सत्त्वादित्याह—

---

## पूरणी

तन्नित्यमनित्यं वा। आद्ये तस्यासाध्यता। द्वितीये तद्धेतुशरीरादिविरहात्तदसंभव इत्येवमादिनेत्यर्थः। **यस्मिन्सतीति**। अन्यथा त्वन्मते दुःखप्रागभावार्थिनः प्रायश्चित्तादौ प्रवृत्त्यनापत्तेरिति भावः। **तत्पूर्वमिति**। अविद्यानिवृत्तेरसत्त्वं तद्विरहः। स चाविद्यात्मकः साक्षात्कारात्पूर्वमस्त्येवेत्यर्थः। **आत्मन इति**। नन्वेवं ब्रह्मणः प्रपञ्चात्यन्ताभावत्वेन प्रपञ्चस्यापि तदत्यन्ताभावत्वे ब्रह्मणोऽपि प्रपञ्चवन्मिथ्यात्वप्रसङ्गः। अत्यन्ताभावप्रतियोगित्वमात्रस्य तथात्वात् विवक्षितात्यन्ताभावप्रतियोगित्वस्य च ब्रह्मणः प्रपञ्चानधिकरणतया तत्र विरहादिति भावः। फलस्योक्तरूपं साध्यत्वं तदुपायप्रवर्तकमिति (निर्दिश्य) फलोपायेऽप्युक्तरूपसाध्यत्वमेव तत्र प्रवृत्त्यङ्गम्। अन्यथासिद्धवनस्थदण्डादौ प्रवृत्त्यनापत्तेरित्याह— **घटार्थिन इति**। अस्मदुक्तसाध्यस्य च प्राप्त्यप्राप्तिभ्यां दण्डादावपि सत्त्वादिति भावः। यद्वा दुःखानुत्पादार्थिप्रवृत्तिबलेन लाघवाच्चोक्तरूपसाध्यत्वमेव घटादेस्तदुपायप्रवृत्तिहेतुरित्याह—**सा किमिति**। निवृत्तिरूपस्य प्राक्सत्त्वे साध्यत्वानुपपत्तिः। दुःखप्रागभावादावपि

प्रवृत्त्यङ्गसाध्यत्वसंभवात्। तेन विना तस्याभावमात्रावस्थानाभावात्। अत एव तस्या उद्देश्यत्वम्। नित्यसिद्धाविद्या-[1]निवृत्तिरपि अविद्यारूपाभावप्रमादशायां लोक इव तदुपपत्तेः ॥

तस्मात्सिद्धं जीवस्याद्वैतब्रह्मसाक्षात्काराद्भेदभ्रमनिवृत्त्या सच्चिदानन्दावाप्तिरिति ॥

## दीपनम्

**तेनेति** । तस्य निवृत्तिरूपात्मनोऽभावमात्रतयावस्थानाभावात्। प्रागिह प्रतियोगिनोऽप्यवस्थानान्नाभावमात्रतयावस्थानम्। इदानीं तु प्रतियोगिनो नाशात्केवल आत्मेति भावः। अत एव प्राक्सिद्धस्योद्देश्यत्वाभावात्कथं तदुद्देशेन प्रवृत्तिरिति शङ्का न कार्येत्याह—**अत एवेति** । **नित्यसिद्धेति** । यद्धि सुखादि प्रागभावप्रतियोगितया प्रतीयते तदुद्देश्यम्। आनन्दात्मरूपाविद्यानिवृत्तिश्च श्रवणादेः प्रागविद्यारूपप्रागभावप्रतियोगितया प्रमीयत इति [2]न तस्या उद्देश्यत्वं विरुद्धमित्यर्थः ॥

प्रकरणार्थमुपसंहरति——**तस्मादिति** । सूत्रचतुष्टयार्थं प्रकरणप्रतिपादितं सङ्क्षेपतो दर्शयन् परमेश्वरं प्रार्थयते—

## पूरणी

परिपालनरूपस्य पूर्वमविद्यमानस्यैव साध्यत्वादिति भावः। **अवस्थानाभावादिति** । अवस्थानं यद्यपि तत्स्वरूपमेव, तथापि तत्स्फुरणवत् गुरुमते घटध्वंसादिवच्च कादाचित्कस्यापि तत्स्वरूपत्वमिति भावः। **श्रवणादेः प्रागिति** । तथा च "अविद्यारूपाभावप्रमादशायां" इति मूलस्याविद्यारूपप्रागभावप्रतियोगिताप्रमितिदशायामिति भावः।

[1] निवृत्तिरप्यभावप्रमादशायां लोकत उपपत्तेः—ग. [2] नास्या—घ.

**जिज्ञासितव्यमनवद्यपुमर्थचित्तैः**
**प्रज्ञासुखं स्वमहिमाऽनवशेषयोनिः ।**
**शास्त्रैकहृद्गतमशेषविधेयशेषि**
**श्रेयोऽस्तु नो नरमृगाकृति मङ्गलाङ्घ्रिः ॥**

## दीपनम्

**जिज्ञासितव्यमिति** । अनेन मुमुक्षोर्विचारकर्तव्यताविधायकप्रथमसूत्रार्थो दर्शितः । प्रज्ञा प्रकृष्टं ज्ञानं [1]नित्यशुद्धं चैतन्यम् । अनेन [2]स्वरूपलक्षणं स्वमहिम्ना स्वरूपाप्रच्युत्या अनवशेषस्य निखिलस्य योनिरिति विवर्ताधिष्ठानत्वं तटस्थलक्षणं च दर्शयन् द्वितीयसूत्रार्थं संगृह्णाति । अनवशेषेत्यनेन वेदस्यापि ब्रह्मविवर्तत्वं दर्शयन् तृतीयसूत्रप्रथमवर्णकार्थमाह । शास्त्रस्यैकस्यैव तात्पर्यगोचरो न त्वनुमानादिगोचर इति तृतीयसूत्रद्वितीयवर्णकस्य समन्वयसूत्रप्रथमवर्णकस्य [3]वार्थसङ्ग्रहः । अशेषाणां यज्ञादि-

## पूरणी

**मुमुक्षोरिति** । अनवद्यपुमर्थचित्तैरित्यनेन अनवद्यो निर्दुष्टः निरतिशयः पुमर्थो मोक्षः तत्र चित्तं येषामिति व्युत्पत्त्या मुमुक्ष्वभिधानादिति भावः । **स्वरूपाप्रच्युत्येति** । एतच्च प्रपञ्चस्य ब्रह्मविवर्तत्वलाभार्थमिति भावः । **तृतीयसूत्रेति** । ब्रह्मणो वेदकर्तृत्वरूपमित्यर्थः । **समन्वयसूत्रेति** । वेदान्ताः कर्माङ्गभूतकर्त्रादिप्रकाशकाः उपासनाविधिपरा वेत्येवं पूर्वपक्षसमाधानात्मकाद्यवर्णकार्थस्य व्यवहितत्वान्न कर्माङ्गकर्त्रादिप्रकाशकत्वम् । अश्रुतत्वाच्च नोपासनाविधिपरत्वमिति ब्रह्मपरते-

[1] नित्यसिद्धं–घ. च. [2] स्वरूपेण–ख. [3] चार्थ–घ. च.

तुष्यन्त्यव्यक्तमनसो मुग्धस्य पितरो ननु ।
मम त्वत्प्रीतये भूया[1]द्वागियं नरकेसरिन् ॥
क्वाहं महीयसाशास्यं वात्सल्यं क्व गुरोरिदम् :
अपि चण्डालकलशे काशते खलु [2]चन्द्रमाः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीजगन्नाथाश्रमपूज्यपादशिष्य श्रीनृसिंहाश्रममुनिविरचिते तत्त्वविवेके द्वितीयः परिच्छेदः ।

समाप्तश्च ग्रन्थः.

## दीपनम्

विधेयानां जिज्ञासादिद्वारेणाभिव्यङ्ग्यतया ब्रह्म शेषि न तु कस्यचिच्छेष-मिति द्वितीयवर्णकार्थसङ्ग्रहः । श्रेयः परमानन्दः । नरः जीवः मृग्यते अन्विष्यते मुमुक्षुभिरिति मृगः परमात्मा तदाकृति प्रत्यगभिन्नब्रह्मात्मकं श्रीनृसिंहाकारमित्यर्थः । मङ्गलाब्धिः स्वयं श्रेयोरूपमपि श्रेयस्साधनाना-मपि पराकाष्ठेत्यर्थः ॥

स्वकृतिं परमेश्वराय निवेदयते—**तुष्यन्तीति** । स्वस्येदं सामर्थ्यं गुर्वायत्तमिति दर्शयन् गुरुं महीकरोति—**क्वाहमिति** ॥

## पूरणी

वेत्येवंरूपस्येत्यर्थः । **जिज्ञासादिद्वारेणेति** । "तमेतं वेदानुवचनेन" इति श्रुतेरिति भावः । **नृसिंहेति** । तदेव लीलानृसिंहाकृत्युपहित-मित्यर्थः । तथा च नरमृगाकृतिपदस्याभिन्नब्रह्मार्थत्वेऽपि तच्छब्देन तदुपादानं लीलाविग्रहोपहितस्वेष्टदेवतास्मरणार्थम् । एवं चाखण्डानन्दो नोऽभिव्यज्यतामिति प्रार्थनार्थः । परमेश्वरप्रार्थनोक्तिश्च यथाश्रुताभि-प्रायेणेति मन्तव्यम् । **श्रेयस्साधनानामिति** । स्वर्गाद्यनित्यानन्दानां साधनेषु स्वयमतिशयितं साधनं कामिनां कामिनां तत्सम्पादकोऽ-

[1] वाणीयं–ग. [2] भास्करः–ग.

## दीपनम्

यदीक्षणेन सन्नुन्नमायाविक्रीडितं जगत् ।
श्रीनृसिंहस्य तस्यैषा कृतिः कल्याणदास्तु वः ॥
अरुचिरिह न कार्या साधवः साध्वसाधु-
प्रकटनपटुचेतोमत्सरं वो यदि स्यात् ।
न हि कुशलपरीक्षादत्तचित्ताः कथंचि-
च्छतमखमणिमालां [1] काचबुद्ध्योत्सृजन्ति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीजगन्नाथाश्रमपूज्यपादशिष्य श्रीनृसिंहाश्रममुनि-विरचितेऽद्वैतरत्नकोशाख्ये तत्त्वविवेकदीपने द्वितीयः परिच्छेदः समाप्तश्च ग्रन्थः.

---

## पूरणी

पीत्यर्थः। यदीक्षणेनेति । सन्नुन्ना सम्यक्प्रेरिता मायाप्रेरणस्य सम्यक्त्वा कारकान्तरव्यापारनिरपेक्षता अमोघता वा। तादृशमाया-परिणामात्मकं जगदित्यर्थः। यद्वा सन्नुन्ना सदधिष्ठिता। पराभिमतायाः स्वातन्त्र्यनिरासाय सदधिष्ठानत्वोक्तिरिति सर्वं सुस्थम् ॥

गम्भीरभावा टीकेयं व्याख्याता बालभावतः ।
किं चिद्विजृम्भितं चात्र तद्गृह्णन्तु विमत्सराः ॥
मत्कृतिर्दोषकीर्णापि ज्ञानेन्द्रनतिपूर्विका ।
महन्निबन्धनं बद्ध्वा प्राप्स्यति प्रचयं भुवि ॥
कृत्यानया रघुपतिः परात्मा कुलदैवतम् ।
सन्तुष्यतु शुकालापैस्तत्पोषकजनो यथा ॥

इति श्रीज्ञानेन्द्रसरस्वतीचरणारविन्दानिषेविणा श्रीरामान्वयप्रसूतद्वादशाहेज्वसूनुना अग्निहोत्रमनीषिणाविरचितायां तत्त्वविवेकटिप्पण्यां अद्वैतरत्नकोशपूरण्यां द्वितीयः परिच्छेदः समाप्तश्च ग्रन्थः.

---

[1] काचबुद्ध्या त्यजन्ति—क.

# अस्मिन्ग्रन्थे उदाहृतानां प्रमाणवाक्यानामाकरादि-निर्देशपूर्वकमकारादिक्रमेणानुक्रमणिका

| पुटम् | प्रमाणवाक्यानि आकरः |
|---|---|
| 8 | खादिरं वीर्यं ( ? ) |
| 412 | गर्भे एवैतच्छयानः (ऐत. 2-4-1) |
| 79 | गृहस्थः सदृशीं (गौ. ध. 4-1) |
| 377 | घटसंवृतमाकाशं (अमृतबिन्दूपनिषत् 13) |
| 3 | जन्माद्यस्य यतः (ब्र. सू. 1-1-2) |
| 14 | जर्तिलयवाग्वा (तै. सं. 5 4-3) |
| 13 | जातपुत्रः कृष्ण |
| 196 | जीवस्थस्त्वनिरुद्धः |
| 399 | जीवेशावाभासेन (नृ. उ. ता. 9) |
| 437 | ज्ञानाग्निः सर्व (गीता 4-37) |
| 434 | ज्ञानेन तु (गीता 5-16) |
| 75 | ज्योतिष्टोमेन स्वर्ग (आप. श्रौ. सू. 10-2-1) |
| 329 | तत्केन कं (बृह. 4-5-15) |
| 660 | तत्तु समन्वयात् (ब्र. सू. 1-1-4) |
| 601 | तत्त्वमसि (छा. 6-4-7) |
| 540 | तत्सृष्ट्वा (तै. उ. 2-6-1) |
| 436 | तथा विद्वान् (मुण्डक. 3-2-8) |
| 194 | तदात्मानमेवावेत् (बृह. 1-4-10) |
| 536 | तदात्मानं स्वयमकुरुत (तै. उ. 2-7-1) |
| 341 | तदेतत्प्रेयः (बृह. 1-4-8) |
| 505 | तदैक्षत (छा. 6-2-3) |
| 514 | तद्ब्रह्म (तै. उ. 3-1-11) |
| 399 | तद्भावभाव (वि. पु. 6-7-15) |
| 74 | तद्विज्ञानार्थं (मुण्डक. 7-2-12) |
| 82 | तद्विजिज्ञासस्व (तै. उ. 3-1) |
| 266 | तद्यथा महाराजः (बृह. 2-1-18) |
| 16 | तद्यथेषीकातूलं (छा. 5-24-3) |
| 19 | तद्यथेह कर्मचितः (छा. 8-1-6) |
| 384 | तद्यो यो देवानां (बृह. 1-4-10) |
| 332 | तपःप्रभावात् (श्वेता. 6-21) |
| 542 | तम असीत् (ऋ. सं. 8-7-17) |
| 8 | तमेतं वेदानुवचनेन (बृह. 4-4-22) |

पुटम् प्रमाणवाक्यानि आकरः

| पुटम् | प्रमाणवाक्यानि | आकरः |
|---|---|---|
| 81 | द्विजो भूत्वा | (भागवते 10-51-64 अर्थानुवादः) |
| 412 | द्वैपायनाच्छुकः | (कूर्मे 19-25) |
| 7 | धर्मेण पापं | (तै. उ. 4-50) |
| 507 | धाता यथापूर्वं | ( „ 4-1) |
| 576 | न कदाचिदनीदृशं | ? |
| 262 | न कलञ्जं भक्षयेत् | ? |
| 707 | न जीवो म्रियते | (छा. 6-11-3) |
| 498 | न तस्य कार्यं | (श्वेता. 6-8) |
| 408 | न तस्य प्राणाः | (बृह. 4-4-6) |
| 212 | न दृष्टेर्द्रष्टारं | (बृह. 4-3-2) |
| 74 | न म्लेच्छितवै | ? |
| 213 | न विज्ञातेर्विज्ञातारं | (बृह. 4-3-2) |
| 735 | न सन्नासन्न सदसत् | (शास्त्रदर्पणम् 2-2-5) |
| 215 | न हि घ्रातुर्घ्रातेः | (बृह. 4-3-24) |
| 213 | न हि द्रष्टुर्दृष्टेः | ( „ 4-3-23) |
| 638 | नातिरात्रे षोडशिनं | |
| 524 | नान्तः प्रज्ञं | (मण्डूक्य. 7) |
| 204 | नान्योऽतोस्ति | (बृह. 3-7-23) |
| 18 | नान्यः पन्थाः | (श्वेता 3-8) |
| 438 | नाभुक्तं क्षीयते | (बृहन्नारदीये 3-69-70) |
| 537 | नामरूपे व्याकरवाणि | (छा. 6-3-2) |
| 412 | नारायणाद्रुद्रः | (नारायणोपनिषत् 1) |
| 579 | नावेदविन्मनुते | (तै. ब्रा. 3-12-9) |
| 542 | नासदासीन्नोसदासीत् | (ऋ. सं. 8-7-17) |
| 555 | नासद्रूपा न सद्रूपा | ? |
| 580 | नासीद्रजः | (ऋ. सं. 8-7-17) |
| 87 | निष्कलं ध्यायमानः | (मुण्डक. 3-1-8) |
| 517 | निष्कलं निष्क्रियं | (श्वेता. 6-19) |
| 409 | निवृत्तकामकर्मापि | (भर्तृप्रपञ्चः) |
| 68 | नेक्षेतोद्यन्तं | (मनु. 4-37) |
| 164 | नेह नानास्ति | (बृह. 4-4-14) |
| 74 | नैषा तर्केण | (कठ. 2-9) |

पृष्ठम् प्रमाणवाक्यानि आकरः

---

WD 671—GBPM—500—23-8-55.

## मैसूरुप्राच्यविद्यासंशोधनसंस्थायां देवनागराक्षरैर्मुद्रितेषु सम्प्रति विक्रयायोपलभ्यमानानां संस्कृतग्रन्थानां अकारादिसूचनी.

---

| क्रमसंख्या | पुस्तकनाम ग्रन्थश्रेण्यङ्कश्च | | मूल्यम् रू. | आ. |
|---|---|---|---|---|
| १ | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, द्वितीयसंपुटम्. प्रथमपरिच्छेदे असतः साधकत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपपत्तिपर्यन्ता (७८). | .... | ३ | ४ |
| २ | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, तृतीयसम्पुटम्. (प्रथमपरिच्छेदान्ता (८०). | .... | २ | ४ |
| ३ | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् (६९) | .... | २ | ० |
| ४ | अर्थशास्त्रपदसूची प्रथमसंपुटम् (६५) .... | .... | २ | ८ |
| ५ | ,, द्वितीयसंपुटम् (६६)... | .... | २ | ८ |
| ६ | ,, तृतीयसंपुटम् (६८) .... | .... | २ | ० |
| ७ | अलङ्कारमणिहारः, द्वितीयसंपुटम् परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः (५८). | .... | ३ | ८ |
| ८ | अलङ्कारमणिहारः, तृतीयसंपुटम्, सारालङ्कारप्रभृतिहेत्वलङ्कारान्तः (६२). | .... | २ | ८ |
| ९ | अलङ्कारमणिहारः, चतुर्थसंपुटम् रसवदलङ्कारप्रभृति समग्रः (७२). | .... | २ | ४ |
| १० | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम् (७३). | .... | २ | १२ |
| ११ | आपस्तम्बश्रौतसूत्रम् रामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्, प्रथम संपुटम्. (१—५ प्रश्नाः) (८७). | .... | ४ | ० |

| क्रमसंख्या | पुस्तकनाम ग्रन्थश्रेण्यङ्कश्च | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| १२ | आपस्तम्बश्रौतसूत्रम्. रामाग्निचिद्वृत्तिसहित - धूर्तस्वामिभाष्यभूषितम् द्वितीय संपुटम्. (६-८ प्रश्नाः) (९३). | .... | ८ | ८ |
| १३ | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् (६१) | .... | २ | ० |
| १४. | क्रियासारः, श्रीनीलकण्ठशिवाचार्यविरचितः, प्रथमं संपुटम्. (१—४ उपदेशाः) (९५). | .... | ५ | ८ |
| १५ | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् (४१) | .... | १ | ० |
| १६ | तत्त्वमुक्ताकलापः, श्रीवेदान्ताचार्यकृतः, स्वोपज्ञ-सर्वार्थसिद्धि तद्व्याख्यानन्ददायिनीभावप्रकाशैर्युतः, जडद्रव्यसरः, प्रथमं सम्पुटम् (७६). | .... | ४ | ० |
| १७ | तत्त्वमुक्ताकलापः, श्रीवेदान्ताचार्यकृतसर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशैर्युतः, द्वितीयं सम्पुटम् जीवसरे प्रथमभागः. (८१). | .... | ३ | ० |
| १८ | तत्त्वमुक्ताकलापः, श्रीवेदान्ताचार्यकृतसर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशैर्युतः तृतीयं सम्पुटम्, जीवसरे द्वितीयो भागः. (९४). | .... | ६ | १२ |
| १९ | तत्त्वार्थसूत्रं, श्रीमदुमास्वामिविरचितम्, श्रीभास्करानन्दि-विरचितसुखबोधाख्यवृत्तियुतम्. (८४). | .. | २ | ४ |
| २० | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्य-व्याख्यायुतम्, प्रथमसम्पुटम् प्रथमपरिच्छेदः. (७४). | ... | ३ | ० |
| २१ | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्य-व्याख्यायुतम्, द्वितीयसम्पुटम्. द्वितीयपरिच्छेदे विधिवादान्तम् (७७). | .... | २ | ० |
| २२ | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायादीपाख्य-व्याख्यायुतम्, तृतीयसम्पुटम्, द्वितीयपरिच्छेदान्तम्. (७९). | .... | २ | ० |
| २३ | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, चतुर्थसम्पुटम्, तृतीयपरिच्छेदान्तम्. (८२). | .... | २ | ४ |

| क्रमसंख्या | पुस्तकनाम ग्रन्थश्रेण्यङ्कश्च | मूल्यम्—रू. | आ. |
|---|---|---|---|
| २४ | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय-काचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम्. (५७). ... | ३ | ८ |
| २५ | प्रमेयरत्नालङ्कारः अभिनवचारुकीर्तिपण्डिताचार्यविरचितः. (८८). ... | २ | १२ |
| २६ | प्राकृतमणिदीपः, श्रीमदप्पयदीक्षितसुधीप्रणीतः, तिरु तिरु—श्रीनिवासगोपालाचार्यसुधीप्रणीतया प्राकृतमणिदीपदीधित्याख्यया टिप्पण्या समलङ्कृतः. प्रथमसंपुटम् . (९२). ... | ६ | ४ |
| २७ | यादवाभ्युदयकाव्यम्, श्रीवेदान्ताचार्यविरचितं श्रीमदप्पय्यदीक्षितेन्द्रविरचितव्याख्यासमलङ्कृतम्, प्रथमसंपुटम् (१३-१८ सर्गाः). (८६). | ३ | ४ |
| २८ | यादवाभ्युदयकाव्यम्, श्रीवेदान्ताचार्यविरचितम्, श्रीमदप्पयदीक्षितेन्द्रकृतव्याख्यासमलङ्कृतम, द्वितीयसंपुटं (१९-२४ सर्गाः). (८९). ... | ५ | ० |
| २९ | वाक्यार्थरत्नम् , सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम् (८३) | १ | ० |
| ३० | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् प्रथमसम्पुटम, (१–५ अध्यायाः). (६३). .... | २ | ० |
| ३१ | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, द्वितीयसम्पुटम्, (६–१० अध्यायाः). (६७). .... | २ | ० |
| ३२ | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम , तृतीयसम्पुटम्, (११–१५ अध्यायाः). (७०). .... | १ | ८ |
| ३३ | वेदान्ततत्त्वविवेकः, श्रीनृसिंहाश्रमिविरचितः, स्वोपज्ञन.... तत्त्वविवेकदीपनेन अग्निहोत्रयज्वकृतपूरण्याख्यव्याख्यया च समलङ्कृतः. (९६). | १५ | ० |
| ३४ | शैवपरिभाषा शिवाग्रयोगिकृता (९०) ... ... | ३ | ० |
| ३५ | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम, तृतीयसम्पुटम्, प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तम्. (५३). ... | ४ | ० |

| क्रमसंख्या | पुस्तकनाम ग्रन्थश्रेण्यङ्कश्च | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| ३६ | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, चतुर्थसंपुटम्. तृतीयपादे अपशूद्राधिकरणान्तम्. (५९). | .... | ३ | ८ |
| ३७ | सरस्वतीविलासः, व्यवहारकाण्डः (७१) | .... | २ | ८ |
| ३८ | सौन्दर्यलहरी शंकराचार्यकृता, लक्ष्मीधराचार्यकृतव्याख्यायुता. भास्कररायकृतभाष्यसहिता भावनोपनिषत्. कालिदासकृता पञ्चस्तवी च. (तृतीयमुद्रणम्). (९१). | ... | ३ | ० |
| ३९ | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, प्रथमसम्पुटम्, संस्कारकाण्डः (४३). | .... | १ | ८ |
| ४० | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, द्वितीय संपुटम्. आह्निककाण्डः (४४). | .... | २ | ८ |
| ४१ | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, तृतीयसम्पुटम्, व्यवहारकाण्डे प्रथमभागः (४५). | .... | २ | ० |
| ४२ | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता चतुर्थसम्पुटम् व्यवहारकाण्डे द्वितीयभागः (४८). | .... | ३ | ० |
| ४३ | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, पञ्चसम्पुटम् श्राद्धकाण्डः (५२). | .... | ३ | ४ |
| ४४ | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, षष्ठसम्पुटम्, आशौचकाण्डः. (५६). | .... | १ | ८ |

## संकीर्णग्रन्थाः

| | | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| १ | योगरत्नाकरः कर्णाटान्ध्रभाषाटीकायुतः | .... | २ | १२ |
| २ | मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थसूचनी सविवरणा, प्रथमसम्पुटम् वेदाः (संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषत्, मन्त्रसंग्रहश्च). | .... | ३ | १२ |
| ३ | " द्वितीयसंपुटम्–धर्मशास्त्रम् (स्मृतिः) | .... | १ | ४ |
| ४ | मैसूरु प्राच्यकोशागारस्थमुद्रितसंस्कृतपुस्तकानां प्रदर्शिनी. | .... | २ | १२ |